# अभिज्ञानशकुन्तलम्।



महाकवि-श्रीकालिदासकृतम्।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा

श्रीमज्जीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया,

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध-विद्याभूषण-पण्डित-श्रीनित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतया टीकया अभिनव-

समालोचनया च समलङ्कृतम्।

पञ्चमसंस्करणम्।

कलिकातानगरे

वाचस्पत्ययन्त्रे

मुद्रितम्।

इं १९१४

# समालोचितविषयाणां सूची ।

## चित्राणां सूची।



## शुद्धिपत्रम्।

| पृष्ठा | पङ्क्ति: | अशुद्धि: | शुद्धि: |
|---|---|---|---|
| २५ | ६ | व्रीडादि ··· संसृष्टा | व्रीडावहा |
| " | ९ | वस्तनि | वस्तूनि। |
| ७ | ११ | किन्त्वेवंविधस्य | किन्त्वेवंविधस्य। |
| | ४ | प्रदर्शयितुमग्रेसरा | प्रदर्शयितुमग्रेसरा। |
| | १६ | विस्मृत्य | विस्मृत्य |

# कविसमयनिरूपणम् ।

अभिज्ञानशकुन्तलमिति कालिदासप्रणीतमन्यतमं नाटकं संस्कृतभाषायां सर्वोत्तममिति सर्वत्र विदितं बहुभिर्वैदेशिकैरपि पण्डितैः आदृतं सबहुमानं भाषान्तरीकृतञ्च ।

भारतवर्षीयाः पण्डिताश्च नाटकमिदं "कालिदासस्य सर्वस्वम्" इति मन्यन्ते, नाट्यशास्त्रकृद्भिः शाण्डिल्य-धूर्त्तिल-कोहलादिभिः उत्कृष्टस्य नाटकस्य यानि यानि लक्षणानि उक्तानि तानि सर्वाण्येवात्र वर्त्तन्ते । नाटकमिदं भारत्या वृत्त्या लिखितम् ; सा च वृत्तिः सर्वासु नाटकवृत्तिषु प्राञ्जलतमा श्रुतिमधुरतमा अत्यर्थं प्रसादगुणयुक्ता च । इतिवृत्तञ्चास्य महाभारतीयशकुन्तलोपाख्याने वर्त्तते ; तच्चेतिवृत्तं पद्मपुराणे प्रपञ्चितम् ; कालिदासेन तु तत् प्रपञ्चितमुपाख्यानं स्वकीयया प्रतिभया विस्तारितं नाटकोपयोगि च कृतम् ।

कालिदासः स्वजन्मना कं देशमलञ्चकारेति न ज्ञायते । किन्तु तत्प्रणीतेषु पुस्तकेषु अवन्तिदेशस्य बहुधोल्लेखात् विस्तरतो वर्णनाच्च स तद्देशवासीत्यनुमीयते । कालिदासस्य बाल्यकालप्रणीते ऋतुसंहारे विन्ध्यपर्वतस्य द्विरुल्लेखात् विन्ध्यपर्वतस्यावन्तिदेशसन्निहितत्वात् स एव देशस्तस्य निवासभूमिरिति विद्वत्सम्मतं मतम् ।

विदर्भदेशे आयुहोलनामकस्थाने या शिलालिपिर्वर्त्तते, तस्यां कालिदासस्य नामोल्लेखात् स तस्याः लिपेः पूर्ववर्त्तीति अवश्यमेवाभ्युपेतव्यम् । सा च लिपिः खृष्टजन्मनश्चतुस्त्रिंशदधिक-षट्शततमे वर्षे लिखिता । रघुवंशे हूणानां नामोल्लेखात् हूणानाञ्च पञ्चपञ्चाशदधिक-चतुःशततमे वत्सरे अवन्तिदेशा-

क्रमणात् कालिदासः ततोऽर्वाचीन इति प्रतीयते। अनयोः कालयोर्मध्ये यशोधर्म्मनामा कश्चिदवन्तिदेशीयवीरपुरुषः स्वप्रशस्त्यां घोषयति स्म, यत् तेन स्वबाहुबलेन हिमालयस्योभावपि पार्श्वौ सुगमौ कृतौ। कालिदासेन च दुर्गमस्य हिमगिरेः सविस्तरवर्णनायां प्रदर्शितमात्मनोऽद्भुतं नैपुण्यं, तत्प्रदर्शनञ्च कालान्तरे न सम्भवतीति कालिदासः यशोधर्म्मश्च समकालवर्त्तिनाविति सुस्पष्टम्। स च यशोधर्म्मः खृष्टजन्मनोऽर्वाचीनायाः षष्ठशताब्द्याः प्रथमे अर्द्धे प्रादुरासीदिति कालिदासस्यापि स एव समयः। इत्यलमतिविस्तरेण।

महामहोपाध्याय—

श्रीहरप्रसाद-शास्त्रिणाम्।

———

# नवीना समालोचना ।

इह हि जगति ये खलु अत्यल्पीयांसः महीयांसः कवयः, कुन्द-कुमुदक्षीरोदनीरावदाताया: वृन्दारकवृन्दवन्दितपदारविन्दायाः भगवत्याः भारत्याः प्रसादलेशलाभादेव विचित्रमधुरसूक्तयः, लोकातीतकवित्वकीर्त्तिप्रसादैः दासीकृतक्षीराब्धिनीरनीहाराः, जगज्जनाह्लादिनीभिर्विमोहिनीभिः स्वकीर्त्तिविभूतिकौमुदीभि र्लोकमिमं सितीकुर्वन्तः, नाना देशेषु कालेषु चावतीर्य्य महीं महीयसीं पूताञ्च चक्रुः, अकार्षुश्च कविताकोमलावलाविलास-निवासकुसुमितव्रततिव्राताानीतप्रमोदवनोपशोभतुहिनाचलाभ्रं-लिहशिखरं स्वीयमहनीयमहासनावकाशं, संसारकान्तारनियत-सन्तापशतहेतुदवपावकैः रात्रिन्दिवं दन्दह्यमानं सकलसहोदरं मनुजहतहृदयं काव्यकलाकुसुमदामसुरभिस्निग्धसान्द्रपीयूष रुचिररसधाराभिः स्वर्धुनीप्रवाहपावनीभिः प्लावयन्तः पावयन्तश्च तेष्वेव खल्वयमेकतमः कविः कालिदासः ।

यस्यालौकिक-निसर्गसरस-मेदुर-विकच-काव्यकला-नैपुण्य-विन्यासविलासभासाः शीतमान्द्राभिनवप्रीतिरसेनैव सहृदय-हृदयकन्दरं रञ्जयन्तः पूरयन्ति सततम् ; येनैव च ग्रथित-मभिनवनाटकं निसर्गरुचिरसहजशोभोपमितमानवाखिला-चारं सचेतश्चेतोहरसञ्चारिभावापूरशृङ्गारादिरसचयाकरभूमिः, सततप्रवहद्रसमयपरमप्रस्रवणं, निरुपमकाव्यकलाकौशलादर्श-लिपिरित्याख्यायते कविताकमलिनीमकरन्दामन्दास्वादलुब्ध-विमुग्धमधुपैः ; यत्सर्व्वस्वभूतेनाभिज्ञानशकुन्तलाभिधाननाटकेन

विविधदेशविमिते भूमिवलये चैतस्मिन् विभिन्नैः भावैः रुचिभिः रुचिराभिः भाषाभिश्च मण्डितानां मनुजानां विकसितानि चेतांसि पुरेदानीमपि आनन्दसन्दोहसुधारसप्रवाहततिभि-राद्रैताऽनायि ; यो हि लेभे न केवलं परिक्रमणपवित्रीकृतायां स्वभूमौ कविषु वरणीयत्वसम्पदम्, अपि तु पारावारकीलाल-लहरीमालामारुतरम्यपरिसरे विशालेऽस्मिन् वसुन्धरातले ।

कस्यां हि महनीयमनोज्ञगुणसन्ततौ विभ्रियमाणायां काव्यमेवमुत्कर्षातिशायित्वं लभते ?—परिवृत्तौ च सत्यामपि देशकालादीनां तत् कदापि सामाजिकसङ्घाताद्विगोचरान्तरालं न याति ?—निगूहन्ति च काव्यनर्मनिपुणाः सादरं काव्य-कलापसंरक्षणागारेषु ?—वयं तावदिदानीं तदेवापादयितु-मत्र यथामति यतामहे ।

"वाक्यं रसात्मकं काव्यम्" ।

कवयो हि कस्याश्चित् वाग्विषयतामनागतायाः प्रकृति-प्रभावपरम्परापरिप्राप्तायाः मर्त्यमोहोत्पादिकायाः शक्त्याः

कवित्व-महिमा

सम्भूतपरिणतदृष्टेरवदातमहसा स्वतोऽज्ञानान्ध-तमससमङ्कुले अस्मिन् विशाले जगति अति-निगूढं यद्यदेव तत्त्वं निखिललोकलोचनपथान्तरालनिहितं, मानवचरितेषु विश्वस्यास्य हितसाधनविषयेषु सांसिद्धिक-रचनासु च शोभनीयं, निसर्गसुन्दरञ्च, तत्सर्वं सविमर्शमाकृष्य अपसार्य्य च विश्वरहस्यजालं, लोकलोचनगोचरतां नयन्ति ; आप्लावयन्ति च वाह्यमाभ्यन्तरं विष्वग्विस्रस्तसौन्दर्य्यसम-वायमाविष्कृत्य, तत्सम्भूतेनैव हि सान्द्रहर्षरसभरपूतस्रोतसा रसास्वादनिपुणानां सहृदयानां चेतांसि ! तत्त्वस्य सौन्दर्य्य-

राशिश्चैकाधिकरण्यं सन्दर्श्य अपाराच्छब्दपारावारादनुगुण-रसभावाभिव्यञ्जकान् शब्दनिवहान् मौक्तिकानीव शुक्तिकासार-प्रभवाण्यवचित्य विन्यासपाटवविभासिताभिः शक्यलक्ष्यललित-रसानुकूलसप्रसादपदावलीभिः सम्भृतां स्वकृतिं काव्यकादम्बर-रसपानप्रमत्तमानमानां प्रतीतिपथमानयन्ते !! निसर्गसौन्दर्य्य-सन्दर्शनेन, भिन्नरुचिभावविशेषसमन्वितानां मनुजचरितानां सम्यगनुशीलनेन च ये ये रसस्य सुतीव्ररागाः तदनुभूतिसमुत्थाः विविधाः भावाश्च स्वकीयमानसमार्गेषु शश्वत् समुदीयन्ते, तानेव कविताकाननसन्तानप्रसूनसुगन्धविमुग्धधियां मानसेषु भाषाभिः परिणमय्य सुप्रकाशयन्ते !!!

यावती च तस्य कवेः समुज्ज्वलतरा तत्त्वाविष्करणोत्कर्ष-साधिका रसानुगुणभावानुभाविका वा शक्तिः, यावच्च तेन तथा-

कवेः शक्तिः

विधां रससंवादिनीं भावावलीं कोमलवाक्य-व्यूहेन विरचय्य परेषां काव्यरसास्वादनिपुणानां चेतसि लोकातीता प्रीतिधारा प्रतन्येत, यावांश्च तस्य कवित्वकलाकलापमहिमा विश्वेषां मानवानां हृदयपरि-वादिनीषु ताड़नां समुत्पाद्य कोकिलेव कलालापैः मधुरा-रावेण कर्णकुहरपथं सन्तर्पयेत्, यावच्च विश्वेषां मनुजानां चरितं तस्य कवेः स्वहृदयहृद्यसहजसरसवृत्त्या च समं विचरेत्, यावद् वासौ तत् सुस्फुटं समुज्ज्वलञ्च यथायथमङ्कापयितुमीशीत, यावान् वा मानवमनसां देशकालानुकूलभावराजिराजितानां विविधया विचित्रया च अनुभूतिस्रोतस्विनीलहरीलीलया साकं तस्य भावमहोदधिः सुसङ्गतः भवेत्, यावच्च भवेत् तस्य मानसं महोदारं विशालञ्च, तावच्च तस्य कवित्वकीर्त्तिकौमुदीप्रसादः सुधाधवलमिदं वसुधातलं विदधीत, तावच्च तदीयं काव्यं कालस्याखिललोककलनकुशलस्य अप्रतिहतप्रभावमतिक्रम्य,

अभिभूय च तत्करालकवलं नश्वरस्यास्य जगतः नाशधर्म्मात् सुसंरक्षितं सुचिरम् अवतिष्ठेत।

आमनन्ति हि मनीषिणश्चान्यदप्येकं प्रकृष्टतमं सम्प्रदाय-पारम्पर्य्यपरिप्राप्तं सप्रयोजनं सुकवेः काव्यस्य स्वरूपम्। यद्धि

काव्यगुणाः

तावत् काव्यं महनीयमर्होज्ज्वलादर्शं सृजति, जनसमाजेभ्यः महोन्नतशिक्षाञ्च विस्तारयति, द्रष्टॄणां श्रोतॄणाञ्च समुज्ज्वलामभिनवभावोन्मेषशालिनीं धियञ्च विकाशयति, भवति चालं मानुषमानससन्तर्पणं, तदेव हि नूनं साधुकाव्यपदमूर्द्धानमारोहति। यदि हि प्रधानतश्चैतेष्वेव काव्यं नाभिनिविशते, तदा नास्त्यपरं किमपि फलं काव्यरचनायाः कवीनां लोकाचारविचारचतुराणाम्। प्राग्-जनिकर्म्मविपाकवशादेव भगवदनुग्रहसमुद्भूतया महीयस्या समुज्ज्वलतमया स्वसूक्ष्मदृष्टिप्रभया नश्वरस्यास्य जगतः अनृतबहुलात् तत्त्वं निष्कृष्य आदर्शस्वरूपे एव महति विश्व-जनीने काव्ये तदेव तत्त्वं सौन्दर्य्येण भूषयित्वा विकासयितुमेव यतितव्यं वरेण्यपदं समारुरुक्षूणां काव्यकलाकौशललास्य-लीलाविदां कवीनाम्; यदेव हि सत्यं, मेध्यं, विमलं, समुज्ज्वलञ्च भवति, तदेव साधु सम्प्रदर्श्य रसानुगुणञ्च संविधाय, तेनैव च मानवमनांसि समाकर्षणीयम्; आनयनीयञ्च असत्यस्यामेध्यस्य च वस्तुनः नैसर्गिकमाविलत्वं जुगुप्सितत्वञ्च सुपरिस्फुटमेव सामाजिकानां समक्षम्। अथैवं सर्व्वथा समपत्स्यत चेत् कविविनिर्म्मितिः, तदैव ऋषित्वमाप्नुवन्ति कवयः; कवित्वख्यातेः परा काष्ठा तल्लाभस्य चरमं पर्य्यवसानञ्च ऋषित्वसिद्धिरेव। तदानीमेव ते साधारणकविरिव सत्यं हृदि केवलमाभासमान-मेवालब्ध्वा तदेवोन्मेषयन्तः इच्छन्ति, जनानाञ्च प्रतीतिपथमानेतुञ्च तदविरतमेव यतन्ते।

दृश्यते हि यतः महत्सु रामणीयकेषु पदार्थनिचयेषु रतिरेव मनुजानाम् अनादिसिद्धा निसर्गादेवागता वृत्तिः, एतामेव साधारणीं सहजसिद्धाञ्च रतिं कवित्वस्य सौन्दर्य्यस्य च स्वभावरमणीयेन मनोऽभिरामेण महिम्ना समुद्बोध्य मानवमनांसि अजिह्मवृत्त्या सानन्दम्, असत्यात् सत्यस्य, अशिवाच्च शिवस्याभिमुख्यमुन्नेयम्।

काव्यास्वादेन रसास्वादः

श्रूयते हि विश्वस्मिन्नस्मिन् यदेव चरमं परमञ्च सत्यं, तत् सर्व्वमेव सच्चिदानन्दभूतं, श्रुतिरप्येवमेव संवदति—"आनन्दरूपममृतं यद्विभाति" इति। यतः तदेव नूनं सत्यममृतं चित्-स्वरूपञ्च; तद्धि स्वीयया समुज्ज्वलया प्रभया देदीप्यमानं सत् अनारतमेव सुप्रकाशीभूतमास्ते, तदेव नूनमानन्दं रसभूतञ्च भवतीति।

आलङ्कारिकप्रवरः महामनाः विश्वनाथः काव्यरसास्वाद-वर्णनाव्यपदेशेनैवमाह,—

"सत्त्वोद्रेकादखण्डस्व-प्रकाशानन्दचिन्मयः।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥" इति।

काव्यरसास्वादो हि सर्व्वथैव ब्रह्मास्वादादनभिन्नः भवन्नपि तस्मात् अहीन एव मन्ये, गुणप्रधानं सत्त्वं समुद्रेचयतीत्यत एवायमखण्डस्वप्रकाशानन्दचिन्मयभूतत्वमागतः। अत एव काव्यमेवं लोकोत्तरगुणग्रामैरलङ्कृतं विधेयं—यत् तच्छ्रवणसम-कालमेव मानवमानसेषु भवतः रजस्तमसी अभिभूते, विशुद्धः स्वप्रकाशात्मकः सत्त्वगुणश्च समुद्रिक्तो भवतीति।

एवमाहुरिदानीन्तनाः केचन काव्यकलाविलासव्यसनिनः सुधियः, यत्—काव्यानामन्येषाञ्च कोमलकलानां चर्च्चावसरे भूयःसु उपदेशेषु दृष्टिपथमानीतेषु शिल्पिनः कवयश्च संयताः खर्वीभूताश्च भवन्ति; भवति चेदेवं तदा शिल्पानामबाधः प्रसारः

भवितुं नार्हतीति; कविरन्येषु केषुचित् दृष्टीरनिपात्य किमप्यनपेक्ष्य च येनैव हि कमपि सर्वावयवानवद्यं मनोमुग्धकरं विश्वग्विसारिणं पदार्थं स्रष्टुं शक्नोति, तत्र तु तेन स्वयमेव यतितव्यं, लोकशिक्षा तेनैवास्तु माऽस्तु वेति।

अत्र तु वयमेवमेव त्वानुमिनुमः,—यद्धि शिल्पं काव्यं वा सौन्दर्य्येण शुभेन च सममभिन्नमिव न सम्पद्यते, तत् तु कदापि चरमोत्कर्षं न लभते, सौन्दर्य्यस्य पुष्कलं विकाशनञ्च तत्र असम्भवदुक्तिमात्रत्वमेवेति। काव्ये हि प्रकृतिसिद्धं सौन्दर्य्यमाधातुमीहमानस्य सत्यसंयोजनस्यावश्यभाव्यमेव ; तथा च काव्ये सत्येन सुदृढसंयते, श्रोतॄणामध्येतॄणाञ्च हृदि स्वत एव सत्त्वसमुद्रेकेण सम्भाविष्यते ; कविना हि सत्त्वसमुद्रेकः रसास्वादनद्वारतः कान्तासम्मिततया महामनोमम्मटभट्टोक्तदिशैव कारयिष्यते। यदाह आचार्य्यप्रवरः मम्मटः स्वकृतौ काव्यप्रकाशे,— "काव्यं यशसेऽर्थकृते व्यवहारविदे" इत्यादि। तस्यायमेवाशयः, यथा—प्रभुसम्मितं वेदादिशास्त्रं इत्यञ्च करणीयमेवञ्च न विधेयमित्याद्यभिधाय विधिना निषेधेन च लोकान् शासित्वा मानवान् सुपथि एव प्रेरयति, कापथाच्च वारयति। सखिसम्मितञ्च अर्थसम्भारगाम्भीर्य्यादिपूर्णं पुराणेतिहासादिकमपि "एवं क्रियेत चेत् तदा नूनमशुभमेवाधिगंस्यते," इत्थमेव इष्टानिष्टविवेकपरीतवचसा मधुरां वाचमभिदधदभिजातः सुसखा इव कुपथात् विनिवर्त्तयति ; रसस्तु काव्यस्यात्मभूत एव। काव्यञ्च अनुगुणविभावाद्यञ्जितरससमयरुचिरपदभूयिष्ठं भवति ; अतः तस्य बालकिसलयमृदुलकोमलोपदेश एव लाङ्गलप्रभवकठोरेभ्यः वयोतिहासपुराणेभ्यः किञ्चिद्विलक्षण एव ; यथाहि— मञ्जुभाषिणी कामिनी प्रियाय स्वाभीप्सितं सरसमभिधाय तदभिमुखं तं प्रवणयति, तथैव लोकोत्तरवर्णनानिपुणसत्कवि-

भणितिरपि रसोन्मेषं तदास्वादनसमुद्भूतेनानन्दसन्दोहेन चेतांसि विषयान्तरेभ्यः व्यावर्त्त्य स्वाभिमुखमाकृष्य च विविधमुपदेशवादं प्रयुङ्क्ते ; अभिनिवेशयति च सतामनुमतेषु शुभैकनिदानेषु अभ्युपायेषु उन्मनायमानमपि मानसम्। न भवति चेदत्र काव्ये सम्यक् रसविकाशः, तदा सुयत्नप्रसूतं महासमारम्भ-भूयिष्ठमपि तद्धि काव्यं नूनं नीरसं नीतिशास्त्रदेशीयं भविष्यतीति मन्ये ; ततस्तत्तद्गुणगणान्वितं काव्यमहीयस्त्वं साधु संगोप्य रसस्य कथमपि हानिमकृत्वा सौन्दर्य्यं सौकुमार्य्यञ्चाव्याहतं विधाय सत्कविभणितिरभिमता कान्ता इव लोकानुपदेक्ष्यति, काव्ये माधुर्य्यं शुभञ्च समकालमेकीभूय हृदयहारित्वमव्याहतं न करोति चेत् तदा तद्धि काव्यं साधुकाव्यपदभाक् न भविष्यतीति।

वयन्तु कविकुलशिरोमणेः तत्रभवतः कालिदासस्य सर्वस्वभूतं काव्यकाननाभ्यन्तरामोदिप्रफुल्लपारिजाततरुप्रसूनमिव मानस-लोभनीयमभिज्ञानशकुन्तलालोचनावसरे द्वावप्येतौ प्रधानतः परीक्षितुमिच्छामः। प्रथमतश्चासौ देशकाल-नैरपेक्ष्येण समग्रमानवमण्डलीनां हृद्गताखिल-स्वाभाविकभावान् सुविकाशयन् सर्वत्र कियदिव सममन्यत समाद्रियत च ; अपरतश्च कियताऽसौ सत्यं सौन्दर्य्यं शुभञ्च यथायथमेकीकृत्य शिक्षयित्वा च जनान् सुपथि साधु विक्रम-माणान् मानवहृदयेषु स्वकीयं महत्त्वं संसाधयितुमीशाञ्चक्रे।

कवेः प्रतिभा

अत्रभवता महाकविना कालिदासेन स्वदेशे विदेशे च कीदृगलम्भि समादरः, तत्तु विहृत्य प्रदर्शनात् प्रागेव तत्राभि-मतानां कीदृशां सुधियां, कीदृश्येवाभिमतिरस्माकं ग्रहणीया पुरतश्च प्रणिधाय ईषद्विमृश्यैव च तत्पर्य्यालोचना कर्त्तुमुचितेति मन्यामहे। सुधियश्चाहुः,—

"कवितारसमाधुर्य्यं कविर्वेत्ति" इति।

काव्यस्य सम्यक् रसास्वादने कवयः एव कुशलाः। कस्याश्चिद् अतिमानुषिकायाश्च स्वशक्त्याः सहसा कवयः यानि प्रतननि तत्त्वान्यैहिकानि संसारवारिधेरज्ञानान्धतमसराशिपूर्णान्तरालादुद्धृत्य भास्वन्ति रत्नानीवास्माकं समक्षमानयन्ति, तानि तत्समशक्तिसम्पन्नाः किं बहुना तत्सधर्म्माणश्च कवय एव विज्ञातुमीशते। एतदर्थमेव महाकविर्भवभूतिराह,—"उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्म्मा" इति ; तथा हि यदि मे सधर्मा कोऽपि इदानीं कुत्रापि विद्येत, पुरस्ताद्वा अजनिष्यत, स एव मे काव्यस्यास्य रसमास्वादयितुमलम् ; तदर्थं मे एष यत्न इति ; नह्येतत् कवित्वमदोन्मत्तस्य स्वाभिमानविमूढचेतसः कविम्मन्यस्य अहमिकापिशाचीकुहकजालविजृम्भितं प्रलापालापपरं वेदितव्यम्। अस्त्यस्यान्तर्निहितं किमपि निगूढतमं तात्पर्य्यं,—यतः कवयः इह आन्वीक्षिकीप्रभृतिविद्यापारीणाः अपि ऐहिकानि तत्त्वान्याविष्कुर्वन्ति, काव्यसमालोचनशीला अपि तद्रसं सम्यगुपलभन्ते, परन्तु तेषामुपलब्धयः विचारप्रभवाः ; दर्शनशास्त्राभिज्ञाः विचारतर्कपरीक्षादिभिः मननोपायैः नेति नेतीति कृत्वा जागतिकं तत्त्वसङ्घातं प्रत्यक्षीकर्त्तुमिच्छन्ति ; काव्यालोचनशीलाः कवयोऽपि शल्यशालाक्यतन्त्राभिज्ञाः अस्त्रोपचारकुशलाः सुभिषज इव काव्यकायं खण्डशः व्यवच्छिद्य पुङ्खानुपुङ्खं पुष्कलं वा पर्य्यालोच्य सुचिरकालकृतस्यातीव महतः आयासस्य फलभूतं काव्यामृतरसं वहिरानीय काव्यरसिकान् पाययितुं यतन्ते ; अन्यतश्च तेषां जन्मान्तरीणकर्मोद्भूतसंस्कारसम्भूतायाः स्वभाववशादेवागतायाः दिव्यदृष्टेश्च सहसा जगदभ्यन्तरलीनं तत्त्वं काव्यप्राणसम्मितं रसञ्च क्षणेनैकेनात्मनैव पश्यन्ति भुञ्जन्ति च, तद्रसपिपासून्

अपरान् पाययन्ति च; समालोचनकुशलाश्च व्यस्तमेकैकशः विभज्य काव्यरसमधुरिमाणं सुसूक्ष्मतया विभजन्ते; कवयस्तु समस्तमास्वादयन्ति सांशकाव्यकलामृतरसं तदभ्यन्तरनिवेशिताखिलमाधुर्य्यञ्च। किं तर्हि अपरे केऽपि ऋते कविभ्यः नालंभवन्ति पातुं तदीयकाव्यरसम्?—नैतदपि समीचीनम्;—यतो हि रसानुभाविकाः शक्तयः न्यूनाधिकतया सर्वेषामेव श्रोतॄणां हृदयमध्ये यथायथमुच्चावचं विराजन्ते; काव्यरसपीयूषपिपासवः मानवाः मनोहारिणीं तदङ्कितदृश्यावलीं दिदृक्षवश्च कवीनां हृद्भिः स्वहृदयमेकीकृत्य रसास्वादनसमयेषु कवीनां साम्यमाप्नुवन्ति तत्सधर्माणश्च भवन्ति; कविभिः काव्याभ्यन्तरेषु सुनिवेशिताः तत्तद्भावोद्दीपितशक्तयः तत्तद्दृश्यदर्शनसमये तद्धृदयकन्दरान्तर्गोपायितं रसं सुषुप्तं स्थायिभावञ्च उद्बोधयन्ति।

स्वरसानुभूतिं चेत् परेषां हृत्सु नेशते सञ्चारयितुं कवयः; यदि च तदीयकाव्यरसरागः सर्वेषां मानवानां हृदयतन्त्रीषु न संवदति स्वरलयञ्च न प्रतिध्वनयति, यदि च तत्काव्यं विशेषविदामेव केवलं भोगास्पदं भवति, तदा क्व तस्य महीयस्त्वम्?

सर्वैरेवैतत् नूनमङ्गीक्रियते यत् हृद्गतागाधभावगभीरतायाम् अन्येषु नरेषु कविषु चास्ति किञ्चिद्वैशिष्ट्यं भूयस्त्वञ्च; ऐहिकसुषमाणां रसानाञ्चानुभूतयः कवीनां यथा याथार्थ्यनिर्णायिकाः, दूरदृष्टयश्च यथा सुतीव्राः, न तथा परेषाम्; अतः कश्चिदाह,—"कवेरभिप्रायमशब्दगोचरं स्फुरन्तमार्द्रेषु पदेषु केवलम्" इति। कवीनां हृदिशयाखिलभावान् तत्समाः अपरे एव कवयः पुष्कलतया उपलभन्ते, नान्ये। अतश्चापरः कविरेक आह,—

"अयं मे वाग्गुम्फो विशदपदवैदग्धमधुरः
स्फुरद्बन्धो बन्ध्यो जड़हृदि कृतार्थः कविहृदि।

कटाक्षो वामाक्ष्या दरदलितनेत्रान्तर्गलितः
किशोरं निःसारः स तु किमपि यूनः स्थगयति" ॥

श्रीधनदर्देवाश्चाहुः,—

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
न ह्यकूपारवत् कूपाः वर्द्धन्ते विधुकान्तिभिः ॥

अपरञ्च—

"सुकवेः शब्दसौभाग्यं सुकविर्वेत्ति नाऽपरः ।
कलादवन्न जानाति परः कङ्कणचित्रताम्" ॥ इति ।

कविकुलकिरीटहीरस्य तत्रभवतः कालिदासस्याभिज्ञान-शकुन्तलं नाटकाखिललक्षणानुगतं सत् अत्युत्तमकाव्यप्रमोद-काननान्तर-विराजमान-मन्दारतरु-प्रसूनमिव बहुसुभगजनानां कवीनाञ्च कथङ्कारमुपभोग्यमासीत् इति सविशेषं प्रदर्शनात् प्रागेव महाकविरसौ स्वजन्मभूमौ देशान्तरे च कीदृक् समाद्रियत, तदेवादौ प्रदर्शयितुं यतामहे ।

कालिदासस्य समादरः

अग्रतश्चैतदेव दृश्यते—यदस्मद्देशसमुद्भवा बहवः महाकवयः मनीषिणश्च कविगणगणनावसरे अत्रभवन्तं कालिदासमेव प्रशस्यतमपदमध्यासितमकार्षुः । सर्वसुविदितः कविकुलशेखरीभूतः जयदेवः स्वकृतौ प्रसन्नराघवनाटके द्वाविंशसङ्ख्यकश्लोके महाकवीनां नामान्युत्कीर्त्य कालिदासमेव कविकुलगुरुरिति संवद्धयति । यथा,—

"यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः ।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविता-कामिनी कौतुकाय ?" ॥

अपि च,—हरिकृतहरिहारावल्यामुद्धृतः श्लोकः, यथा,—

"पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव॥

अपि च,—

वाल्मीकेरजनि प्रकाशितगुणा व्यासेन लीलावती
वैदर्भी कविता स्वयं वृतवती श्रीकालिदासं वरम्।
याऽसूतामरसिंहमाघधनिकान् सेयं जरा नीरसा
शून्यालङ्करणा स्खलन्मृदुपदा कं वा जनं नाश्रिता?"॥ इति।

तथाहि,—शार्ङ्गधरपद्धतौ कृष्णभट्टः,—

"कवयः कालिदासाद्याः कवयो वयमप्यमी।
पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्॥

अपि च,—

वयमपि कवयः कवयः, कवयोऽपि च कालिदासाद्याः।
दृषदो भवन्ति दृषदश्चिन्तामणयोऽपि हा दृषदः" ॥

महाकवेः कालिदासस्य पीयूषरसप्रवाहस्यन्दिनिकाः माधुर्य्य-प्रसादादिगुणाभिव्यञ्जितकमनीयपदपङ्क्तयः सूक्तयः जनानां हृदि कीदृशीं प्रीतिधारां सञ्चारयाञ्चक्रुः तदधस्तान्न्यस्तेन श्लोकद्वयेन कविद्वयी स्फुटमेवाभिदधाति; तथा हि—हर्षचरिताव-तरणिकायां तत्रभवान् वाणभट्टः;—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते" ॥

यं हि गोवर्द्धनाचार्य्यं गीतगोविन्दे जयदेव उवाच,—
"शृङ्गारोत्तरसत्प्रमेयवचनैराचार्य्यगोवर्द्धनस्पर्द्धी कोऽपि न विश्रुतः" इत्यादि, असावपि गोवर्द्धनाचार्य्यः स्वकृतौ आर्य्यासप्तशत्यामभि-कालिदासमाह, यथा,—

"साकूतमधुरकोमलविलासिनीकण्ठकूजितप्राये ।
शिक्षासमयेऽपि मुदे रतलीला-कालिदासोक्ती" ॥

अपि चाऽखिलबौद्धमतदूषकेण हतप्रायजीवितानामग्निहोत्रादिकर्म्मनिवहानां पुनरनुष्ठानप्रवर्त्तनात् जीवातुभूतत्वमापन्नवता मीमांसकवरेण्येन भगवता भट्टकुमारिलेन स्वरचिततन्त्रवार्त्तिके स्वोक्तसन्दर्भं परिपोषयितुं—

"एवं च विद्वद्वचनाद्विनिर्गतं प्रसिद्धरूपं कविभिर्निरूपितम् ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" ॥

इति श्लोकार्द्धमभिज्ञानशकुन्तलादुद्धृत्य कीदृक् प्रीतिप्रफुल्लचक्षुषा समदृश्यतासौ कालिदासः, तदेतेनैव सम्यगवबुध्यते ।

त्वय्यनुशीलनशिक्षागुरोर्भट्टकुमारिलस्य जनुषः पुरस्तादपि द्वग्रधिकशततमसंवत्सराणाम् आर्य्यावर्त्तपुण्यभूमिमितेऽस्मिन् भारते कियत् समादृतः कालिदास आसीत्, तदस्माभिः पुरतः प्रदर्शितम्,—सामन्तचूड़ामणिचुम्बितचरणयुगलस्य सम्राजः हर्षवर्द्धनस्य सभासदामग्रगण्यः महाकविः वाणभट्टः हर्षचरितकाव्यानुक्रमणिकाश्लोकेन यदभिहितवानिति । तदानीमिव भारतभूमेरर्द्धे दाक्षिणात्ये महाबलस्य नरपतेः द्वितीयपुलिकेशिनः शासनसमये आर्य्यपुराभिधान-संवसथे ( आर्य्यावोला 'ऐहलि' इति भाषा) मेगुटिसंज्ञके कस्मिंश्चिज्जैनावसथे विहारागारकुड्यप्रोथितप्रस्तरफलकोत्कीर्णलिपिदर्शनादेव एतदवगम्यते, यत्—तदानीमपि कालिदासस्य यशःप्रभाविभूतयः सुदूरेऽस्मिन्नपि भूभागे व्यतनिषतेति ।

विहारमन्दिरमेतत् रविकीर्त्तिनाम्ना प्रथितस्य कस्यचित् महात्मनः भूयसा प्रयत्नेन षट्पञ्चाशदधिकपञ्चशततमे शकनरपतेरतीताब्दे जिनेन्द्रदेवायोत्सृष्टमिति वदन्ति नवीनाः प्रत्न-

तत्त्वनिर्णयनिपुणाः। महामतिरसौ रविकीर्त्तिः स्वयमेव लिपिमिमां विरचितवान्; कथितवांश्चात्मनः कवित्वमहिमानं लिपेरस्या रचनाभङ्गिविलासेन—यदसौ प्रथितयशसां कालिदासभारविप्रभृतीनां कीर्त्तिराजिं व्यततेति।

प्रस्तरोत्कीर्णलिपेः सप्तदशाष्टादशपङ्क्तौ अधोलिखितमेतत् विवृतं यथा,—

"येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदास-भारविकीर्त्तिः"॥

स्वभूमाविव भूम्यन्तरेऽपि परकीये कालिदासकाव्यदामकुसुमसौरभं विद्वज्जनमानसं सममेवामूमुदत्। यदा हि तिब्बतीयभूमौ बौद्धधर्म्मः प्राचारि, तदा सर्व्वमेव कवेरस्य काव्यं तद्देशीयविद्वद्भिः स्वभाषयाऽनूदितमकारि, ततश्च सहस्राधिकक्रोशान्तराले सुप्रसिद्धे यूरोपभूमिभागे अत्यल्पीयसा कालेनैव विभिन्नरुचिमतां नराणां हृदयं महाकवेरस्य काव्यमखिलं विशेषतश्च तस्याभिज्ञानशकुन्तलमाक्रष्टुमलं बभूव; दृष्टे चैतस्मिन् जनमनांसि नूनमेव विस्मयरसाप्लुतानि भवन्ति। अत्यल्पीयांस एव कवयः सौभाग्यलक्ष्मीमिवमलप्सत ऐहिके एतस्मिन्नितिहासे; अतीव विस्मयावहमेतत्,—यत् महाकवेः कालिदासस्य कवित्वकीर्त्तिसम्पद्विकासहासप्रसारविवरणविलासः व्यतनिष्ट सुदूरपथावस्थिते यूरोपविभागे शाकुन्तलग्रन्थनायाः द्विसहस्राधिकसंवत्सराणामधस्तात्; नूनमेवैतदेतस्य प्रकृष्टतमं निदर्शनं—यत् देशानां कालानाञ्च भेदेऽपि तस्य महनीयं कवित्वं कीदृक् नराणां मनांसि सममेव रञ्जयामास; अनुमीयते चैवैतेन सहजत एव तस्य कवित्वशक्तिभूतिः कीदृशी महीय्यमाना अनन्यसाधारणा चेति।

पुरा हि इंलण्डदेशवासिभिः वङ्गविजयस्य त्रिंशतः शरदामूर्द्धं विद्यापारावारपारीणः सुविचक्षणोत्साहदः स्यार उइलियम् जोन्स् महोदयः कलिकाताभिधायामस्यां महानगर्य्यां प्रधानतमे धर्म्माधिकरणे प्राड्विवाकवृन्दिष्ठपदमधिष्ठितवान्। असौ हि महामना वयसि स्वदेशीयस्य कस्यचित् परिव्राजकस्य चीनदेशभ्रमणावलीविवृतिमधीत्याज्ञासीत्,—यत् देशे चैतस्मिन् नाटकाभिधेया सन्ति केचन अमूल्या ग्रन्थाः, ततश्चानुसन्धाय अवेदीत् नाटकान्येतानि युरोपीयाणां दृश्यकाव्यचयानां सधर्म्माणि, एवं तेषु चाभिज्ञानशकुन्तलमेव सर्वोत्कृष्टत्वमगमदिति।

स्यार उइलियम् जोन्स्।

असौ हि महाभागः प्रधानतमप्राड्विवेकपदमलङ्कृत्य व्यवहाराजीवतां गतोऽपि कथमेवं काव्यरसपीयूषकूटावगाहने व्यरंसीत्, तद्वीजं प्रतिपादयितुं स्वानूदितग्रन्थस्यावतरणिकायामेवमवोचत्,—यत् विषमं कान्तारोपमं कृत्यवर्त्म विनिश्चेतुं भारतीयानामार्थितनयानां, व्यवहारविधायकानां मन्वादिधर्म्मानुशासनानामभिनवनिबन्धकृत् * महात्माऽतिप्रवीणः विज्ञतमः पण्डिताग्रणीः जगन्नाथतर्कपञ्चाननः षड्धिकाशीतिशततमे खृष्टवर्षे वयोऽतिपाते स्थितोऽपि अभिज्ञानशकुन्तलम् अन्तरान्तरा स्वमुखेनैवोच्चार्य्य तमशिश्रवत्। ततश्चासौ तदभिज्ञानशकुन्तलम् आ समाप्तेः सम्यगधीत्य अहृष्यत्; अन्ववादीच्चाचिरेणैव कालेन स्वभाषया स्वदेशवासिनोऽस्य रसं निरुपममास्वादयितुम्।

* सागरसम्मितादतीव महतीऽस्मात् व्यवहारकर्म्मणः भारतीयानां व्यवहारान् रत्नकल्पान् सुखेनैव विचेतुं शास्त्रवारिधिमुन्मथ्य महामनाः जगन्नाथतर्कपञ्चाननः स्यार् उइलियम् जोन्स् महोदयानुमत्या अभिनवनिबन्धग्रन्थमेकं "विवादभङ्गार्णव"-नामकं व्यरचत्, कोलब्रूकश्च धीमान् इंलण्डीयभाषया तमन्ववादीत्।

शतात् हायनेभ्यः पूर्व्वमपि वङ्गीयानां विपश्चितां समितिः कालिदासकृतिमभिज्ञानशकुन्तलं कियत् समाद्रियत तदित्यनेनैव विज्ञायते सुष्ठुतरम्;—यदा हि पुरा स्यार उइलियम् जोन्स्महोदयेन खृष्टजनुषः उपरिष्टात् एकोननवत्यधिकसप्तदशशततमाब्देऽभिज्ञानशकुन्तलमनूद्य इंलण्डीयभाषया प्राकाशि, दृष्ट्वैवैतद् यूरोपभूमौ फ्रान्स-शर्म्मण्य-( जर्म्मान् )-डेन्मार्क-इटालि-आमेरिकेत्याख्यभूभागनिवासिभिः मनीषिभिः तदतीव साग्रहं सौत्सुक्यञ्च पर्य्यग्राहि। कियता कालेनैव तत्रत्यया विविधयैव भाषया अभिज्ञानशकुन्तलस्यानुवादः प्रकाशतां नीतः। *

तदैव हि यूरोपभुवि शर्म्मण्यदेशजातस्य कविकुञ्जरस्य गेटे इत्याह्वस्य समादरातिरेकात् लोकातीतमहीयस्त्वं शाकुन्तलीयं समन्तात् प्रासरत्। न हि एतत्कालपर्य्यन्तमपि कविषु वरेण्यात् शेक्सपियरात् ऋते अधुनातनेषु कविषु यूरोपभूमिभागमलङ्कुर्व्वाणेषु कोऽपि अनन्यजनकमनीयेन कवित्वकीर्त्तिमहिम्ना तत्प्रतिपक्षः समजनि। असौ हि महामनाः स्वनिबद्धस्य जगति वरणीयताख्यातिमधिगतस्य "फाउष्ट" इति प्रथितस्य महाकाव्यस्य उप-

कविवर गेटे

* पुरा हि नाम स्यार उइलियम् जोन्स् महोदयेनानूद्य स्वभाषया प्रकाशीकृतमेतदभिज्ञानशकुन्तलम्; ततश्चाल्पीयसैव कालेन जर्म्मन्-फ्रान्स्-डेन्मार्क-इटालिदेशीयानां स्वस्वभाषया इंलण्डीयानुवादस्यैवानुवादः प्रकाशयाञ्चक्रे; अथ ग्रजौनाम्ना प्रख्यातेन फ्रान्स्देशीयेन विदुषा अनूदितमिदं पठित्वापि न निर्भरमतृप्यत, तत एवासौ प्रधानतः अभिज्ञानशकुन्तलम् अध्येतुमेव भूयसा आयासेन समधिकां संस्कृतभाषायां व्युत्पत्तिमेत्य तदनुपदमेव सानुवादं सटीकमभिज्ञानशकुन्तलं प्राकाशयत। अथ जर्म्मन् फ्रान्स् इंलण्डीय-भाषया सटीकमेवैतदभिज्ञानशकुन्तलं बहुभिः विद्वद्भिः प्रकाशीकृतमनूदितञ्च बहुधा; सुदूराध्वस्थितायामामेरिकायामपि मूलमेतदीयं प्रकाशितम्; ऋते चैतेभ्यः यूरोपभूमौ आमेरिकाभुवि च नाटकस्यैतस्यानुवादः भूयश्चाभ्यनायि रङ्गमन्दिरेषु इति।

क्रमणिकायामधोलिखितमेकं विद्वत्समाजसमादृतं श्लोकं निबबन्ध ; तदनुवादः हि—

"अभिलषसि द्रष्टुं चेदेकत्रैव अभिनववासन्तीमभिख्यां, समग्रहायणानां वा सुपरिणतानि फलानि, आकाङ्क्षसे चेत् प्राणानां प्रसादसम्पादनं, सिषाधयिषसि चेत् आत्मनः सुतृप्तिं निखिलप्रार्थितसिद्धेः परिपोषणं कृतकृत्यताञ्च, किमनल्पालापेन ?—एकेनैव चेत् निर्ज्जरनिलयानां चौणीसदां सम्मिलनं संविधातुं स्पृहयसि, तदा शकुन्तले ! तत्समग्रसम्पादिकायाः तवैवाभिधानं सुमधुरमहं पुरतः एव कीर्त्तयामि, तर्हि सर्वमेवाभिधानं मे सर्वथा समाप्तिमापत्" । इति ।

एतेनैवैतदनुमीयते, यत् महाकविः गेटे स्वीयप्रतिभायाः सूक्ष्मदृष्टेश्च महसा समग्रस्य शाकुन्तलस्य रसमास्वादयन् स्वकीयरसानुभावज्ञतां प्राचकाशत । तदीया मानुषमात्रालभ्या च कवित्वदीधितिः तावती सूक्ष्मतत्त्वानुशीलनपटुतमासीत् यदमुना काव्यकायं खण्डशः विश्लिष्य विहृत्य च प्रदर्शयितव्यमित्यपि नाऽमानि ; स्वधियैव च तदन्तर्गोपायितमखिलमेव रसादिगतमाधुर्य्यं युगपदेवाकृष्य तन्निपीय चालमतृपत् इति ।

रसविचारः

अस्ति यदिह किञ्चित् विश्वप्रकृतौ मनुजचरिते च निसर्गशोभनं, सुविमले कलुषलेशरहिते साधुचेतसि च माध्वीकरसोत्सप्रवहणं, तान्येवाशकलानि संगृह्य विशदीकृत्य च कविरसौ सप्रसादपटकोरकविकासविलासैः सार्द्धमभिज्ञानशकुन्तलाभिधेयमपूर्व्वमेकं नाटकमालतीदामाग्रथ्नात् सौन्दर्य्यमाधुर्य्यकविः कालिदासः। शाकुन्तले हि भयानक-बीभत्स-रौद्ररसाः न भूम्ना प्रकटीकृताः कुत्रापि कविना ; स हि रञ्जनवर्त्तिकामादाय स्थित्वा

चैवैकान्ते ह्लादमयं चित्रकपुञ्जं मानसोल्लासकरं विश्वमनुज-मोहनञ्च दृश्यसङ्घम् अङ्कयामास ; मृदुलतान्तश्चेतसां सहृदय-व्रातानां मनांसि नाविव्यथत् क्वापि सन्निवेश्यान्योऽन्यप्रतिकूल-तया विसंवदतः स्थायिसञ्चारिभावान् शृङ्गारकरुणादिरसांश्च सम्प्रतिपन्नान् शाकुन्तले ; रसेषु प्रधानस्यैव शृङ्गारस्य सहृदय-हृदयवत् कोमलरुचिराणि विकस्वरभासविसृमराणि विलसनानि प्रधानतया सन्निवेश्य शृङ्गाररसप्रधानमिदं नाटकं न्यवध्नात् ; अनुगुणानपि विभावानुभावान् रसं सुविकाशयितुं परि-पोषयितुञ्च यथायथं सन्निधापयामास ; नाकार्षीच्च परिपन्थिनां शान्तादिरसानुकूलानां विभावादीनां परिग्रहम्। एवमेवाह शृङ्गाररसं भगवान् नाटकीयवस्तुशिक्षादिगुरुः तत्रभवान् भरतः स्वनाट्यशास्त्रे षष्ठाध्याये। तथा हि—

"तत्र शृङ्गारो नाम रतिस्थायिभावप्रभवः उज्ज्वलवेशा-त्मकः। यत्किञ्चित् लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तच्छृङ्गारेणोपमीयते। यस्तावदुज्ज्वलवेशवान् स शृङ्गार-वानित्युच्यते। एष आचारसिद्धः हृद्योज्ज्वलवेशात्मकत्वाच्छृङ्गारो-रसः।" इति।

शृङ्गारैकरसमभिज्ञानशकुन्तलं हि हृद्यमेध्यशुचिसमुज्ज्वलैः दृश्यपदार्थसङ्घैरुपपन्नमेव ; नास्ति हि तत्र क्वापि अहृद्यामेध्य-न्यक्कारग्राम्यदोषादिदुष्टानां पदार्थव्रातानां सन्निवेशः। शृङ्गारे-तरेष्वपि रसेषु अप्रतिकूलान् तांस्तानेव रसान् विमृश्य यथायथं पर्य्यालोच्य चावातीतरत् कविः क्वचित् प्रधानतममिममादिरसं परिपुष्णन्नतितराम्। अतः भगवद्भरतोक्तलक्षणमप्यनाव्याहत-तया नितरां विभाति।

करुणोहि रसः शृङ्गारस्य न प्रतिकूलः, प्रत्युत यथास्थानं सन्निवेशिततया चातिभूमित्वमागच्छति, परिपुष्णाति च

नियतमिमं सुष्ठुतराम् ; अत एवासौ क्वचन करुणविप्रलम्भाख्या-माधत्ते। सत्यमेवोक्तं नवीनैः, यथा हि—

"शोकस्थायितया भिन्नः विप्रलम्भादयं रसः।
विप्रलम्भे रतिः स्थायी पुनःसम्भोगहेतुकः" ॥ इति।

अत एवात्र महाकविना कालिदासेन चतुर्थेऽङ्के शकुन्तलायाः भर्तृगृहगमनसमये, पञ्चमे चाङ्के निराकृतिकाले शोकावेगं सोढुमशक्नुवानायाः शकुन्तलायाः अश्रुवेगविवर्द्धितान् करुण-रसप्रवाहान् समुपस्थाप्य निरमायि एकः अलौकिकः करुण-रसोत्सप्रवाहः,—येन अध्येतॄणां श्रोतॄणाञ्च उपलोपमसारमपि हृदयं स्वप्रवाहधारया आर्द्रतां अनायीति।

हास्यरसस्तु शृङ्गाररसस्य अनुगुण एव; न च अस्य परिपन्थी। भगवान् भरतस्तु—"शृङ्गाराद्धि भवेत् हास्यः" इत्याद्यभिदधत् तमेव शृङ्गाररसप्रभवमभिदधौ। शाकुन्तले अङ्कावतारे षष्ठाङ्क मातलिविदूषकसंवादे च सामान्यत एव हास्यरसमवातो-तरत् कविः। अन्यांश्च करुणाद्भुतभयानकशान्तांश्च रसान् सन्यवीविशच्च यथायथमेतस्मिन्नेव नाटके। तथाहि आ चतुर्थाङ्कात् करुणरसस्य कण्वानसूयाप्रियंवदादिसंवादे, शान्ता-द्भुतयोस्तु मातलिमारीचादिसंवादे, भयानकस्य च प्रथमे तृतीये चाङ्के, गर्जापिशिताशनागमनसूचकेन नेपथ्यभाषितेन कथञ्चिदेवावतारणामकार्षीत् इति।

भारतभुवः विभिन्नविभागेषु काव्यकुसुमदामगुम्फनविधौ, या या रीतयः क्रमात् विरचिताः सत्यः सुविकाशमासततरां,

रीतिः

तासु उपनागरिकाऽपरनामधेयां वैदर्भीं नाम रीतिमवलम्ब्यैव कविरयमभिज्ञान-शकुन्तलम-ग्रन्थीत्। तल्लक्षणकथनप्रस्तावे महामना: मम्मटस्त्वाह,—

"वैदर्भीं कविता माधुर्य्यव्यञ्जकवर्णोपेता" इति।

"श्लेषः प्रसादः समता माधुर्य्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजः कान्तिसमाधयः॥
इति वैदर्भमार्गस्य प्राणाः दशगुणा स्मृताः" ॥

इति काव्यादर्शीयलक्षणे नयनपथमायाते मनस्येवैतत् नूनम् अत्यर्थमाभाति,—यत् शाकुन्तलमेवेदं पुरतः संस्थाप्य आदर्शभूतञ्च विधाय महाकविः दण्डी तल्लक्षणमित्थं प्राणैषीदिति। सहृदयावतामग्रणीः विद्यापतिविह्लनोऽपि तदीये विक्रमाङ्कदेवचरिते वैदर्भीं रीतिमित्थमेवेत्यववर्णत्। तथा हि—

"अनभ्रवृष्टिः श्रवणामृतस्य
सरस्वतीविभ्रमजन्मभूमिः।
वैदर्भरीतिः कृतिनामुदेति,
सौभाग्यलाभप्रतिभूः पदानाम्" ॥ इति।

ऋते च कालिदासात् कस्यापि कवेः काव्यमेवंगुणोपेतमस्तीति नोदेत्यस्माकं मनसि। शाकुन्तलरचना च न कुत्रापि ओजःप्रकाशकवर्णव्यूहसमन्वितसुदीर्घसमासभारालसा, न वा श्रवणकुहरपरुषनिनादिभिः विकटाक्षरशब्दसङ्घातैः परिपूर्णा च; अपि तु—माधुर्य्यव्यञ्जकमञ्जुलैः वर्णपुञ्जैः प्रसादगुणसम्पादकैः रुचिरभङ्गारारावविभिरुपेता।

महाकविकालिदासरचितेषु रघुवंशादिषु इवाभिज्ञानशाकुन्तलेऽपि उपमाप्रयोगबाहुल्यमेवावर्तिष्ठते। ये तु न भवन्ति

*उपमा कालिदासस्य*

महाकवेरस्य मृद्वीकासमरसानां कविताप्रसूनमकरन्दानां पानलोलुपमधुपकल्पाः, अपि तु भूयसैवायासेन उपभुज्यमानान्तर्निहितसुरसाः नारिकेलप्रसवसम्मिताः काव्यकलापा एव कवित्वकीर्त्तिपारं गता, इत्थमभिधातुमिव गृहीतपरिकराः; तेऽप्यनारतं

कालिदासमेव उपमादामविभूतिभूषितम् आमनन्ति। "उपमा कालिदासस्य" इत्यादि सुभाषितमेवात्र पर्य्याप्तं प्रमाणम्।

अशब्दगोचराणां हि कविहृदयान्तर्निहितानां भावानां विवृतिविधायकेषु करणव्यापारेषु उपमा एव प्रधानं साधनम्। स्वभावादेवायातायाः शोभायाः सन्दर्शनात् महतां रुचिराणां वस्तुनां मञ्जुलाभोस्मितभावानां वा परिशीलनात् मनुजमानसेषु काऽपि अविग्रहवती भावसरिल्लहरीलीला समुदेति, का कथा कवीनां हृदयेषु। तामेव सुप्रकाशितामासादयितुं सहस्रेणापि पुरुषायुषैः नालं भवति मर्त्यानां भाषावैभवम्। भाषा हि केवलं केषाञ्चित् प्रथितानां पदार्थानां साम्यं सन्दर्श्य, स्वप्रतिपाद्यवस्तुजातेषु तेषां स्वस्वप्रकृतिपरिप्राप्तवृत्तिविशेषं कथञ्चिदेव प्रकाशयितुमीष्टे; अतः वयं स्वमनोभावान् ज्ञापयितुं साधारणभाषासु अपि भूयसा उपमानं प्रयुञ्ज्महे। यो हि नाम सहृदयाक्षिनिपतितानां पदार्थानां साम्यं सन्दर्श्य केषाञ्चिव ...नां भावानाञ्च तत्त्वं साधारणजनानां प्रतीतिविषयी... शक्नोति, स एव हि तावत् केवलं कविः, त... ...त्मा वा। तत्र तु बिम्बप्रतिबिम्बभावविधया वाग्व्यापाराविषयीभूतमप्यर्थं प्रकाशयितुं कालिदासम् अपहाय अन्यः कोऽपि कविः सम्यक् नेशिष्ट, तत् वक्तुं शक्नुमः वयं सतारम्।

अन्याश्चार्थालङ्कृतयः सर्वा एव प्रायशो बिम्बप्रतिबिम्बभावावबोधमूलिकाः; अतश्चोपमैव सर्वेषामलङ्काराणां समुत्पादहेतुतया उपजीव्या, इतरे चास्या उपजीवकाः, इत्यवगम्यते। भगवान् भरतोऽप्येवमेवाह नाट्यशास्त्रस्य षोड़शाध्याये,—

"यत् किञ्चित् काव्यबन्धेषु सादृश्येनोपमीयते।
उपमा नाम सा ज्ञेया गुणाकृतिसमाश्रया" ॥ इति।

इयानेवात्र विशेषः,—यदसौ महाभागः क्वचिदपि सुदृढ़ाया-

सोपनीतोपमानानि, विसंवादीनि, सूक्ष्मधीमात्रसंवेद्यानि, असमीचीनतयैव सततं स्खलितभावानुबन्धीनि, न प्रायुङ्क्त ; तदीयोपमाऽलङ्कारः सहजधीमात्रगम्यः, प्रसादगुणभूषितश्च। शाकुन्तलस्य यस्मात् कस्माच्चिदप्यंशात् अदभ्रमस्योदाहरणं दर्शयितुमलं भवन्ति तदध्ययनविशुद्धबुद्धयः ; तेषु तेषु स्थलेषु टीकायां पुष्कलतया व्याख्यातम्, अतोऽत्र न विहृतं तन्निदर्शनं किमपि अस्माभिः।

अर्थप्रकृतिभूतानां वीजादीनाम्, अर्थोपक्षेपकानां विष्कम्भकादीनाम्, आधिकारिकप्रासङ्गिकवस्तुषु च पताकास्थानानां, मुख-प्रतिमुखादिपञ्चसन्धीनां रसानुगुणानां चतुःषष्टिविधस्वस्वाङ्गसहितानां, शृङ्गारादि-रसानुकूल--साङ्ग--कैशिक्यादिवृत्ति-चतुष्टयानां, अपि च वीथ्यङ्गानां लास्याङ्गानाञ्च नाट्यभूषणहेतुभूतानां नाट्यालङ्कृतीनां यथायथं रसस्थितिव्यपेक्षया प्रयोगः कृतः। नाटकीयवस्तूनां शोभातिशय्यविधायिनः ये ये विषयाः सन्निवेशनीयत्वेनाभिमताः आलङ्कारिकाणां, तेऽपि सर्वे शाकुन्तलेऽस्मिन् सुसन्निवेशिताः कविना। तत्सर्वमेव यथामति तत्तत्टीकायां यथावसरं प्रदर्शितमस्माभिः। तथापि किञ्चिद् ब्रूमः ;—

नाटकीय वस्तुविचारः

तत्रभवान् कविः कालिदासः स्वयमेव नाटकमभिलक्ष्य कुमारसम्भवकाव्ये एवमभिदधे ; तथा हि,—

"द्विधाप्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन॥
तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्"॥

भगवता भरतेनापि स्वनाट्यशास्त्रे पञ्चसन्धयः विनिर्दिष्टाः ; तथा हि,—

नाट्यशास्त्रे भरत: | "मुखं प्रतिमुखं गर्भो विमर्शश्च तथैव हि ।
तथा निर्वहणं चेति नाटके पञ्च सन्धय:" ॥

वृत्तयश्च चतस्र: उक्ता: तत्रैव । यथा,—

"भारती सात्त्वती चैव कैशिक्यारभटी तथा ।
चतस्र: वृत्तयो ह्येता यासु नाट्यं प्रतिष्ठितम् ॥" इति ।

वृत्तिचतुष्टयस्यास्य उद्भवप्रयोगाङ्गविभागादय: भगवता भरतेन स्वनाट्यशास्त्रे सविस्तारमुपवर्णिता: । अत्र तु केवलं तल्लक्षणचतुष्टयमेवोध्रियते । तथा हि,—

"या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतवाक्ययुक्ता ।
स्वनामधेयैर्भरतै: प्रयुक्ता सा भारती नाम भवेत्तु वृत्ति: ॥
या सात्त्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च ।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्ति: ॥
या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्यगीता ।
कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति ॥
प्रस्तावपातप्लुतलङ्घितानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति" ॥
इति ।

वृत्तीनामेतासां रसानुकूल्यमुद्दिश्य स एव आह, यथा,—

"हास्यशृङ्गारकरुणै: वृत्ति: स्यात् कैशिकी रसै: ।
सात्त्वती यापि च ज्ञेया वीराद्भुतसमाश्रया ॥
रौद्रे भयानके चैव विज्ञेयारभटी बुधै: ।
बीभत्से करुणे चैव भारती सम्प्रकीर्त्तिता" ॥ इति ।

रसानुसारत: रससंस्थितिव्यपेक्षया च स्वर-सङ्गीतादिभेदा एकोनत्रिंशत्तमेऽध्याये भरतोक्तनाट्यशास्त्रे सविस्तृति उपवर्णिता: । विशेषजिज्ञासुभिस्तु तत्र तत्र मृग्यम् ।

अस्माकन्त्वत्रैकस्मिन्नेव वस्तुनि द्वित्रात्मकमेव किञ्चिदस्ति वचनशेषम्। सत्यपि शृङ्गाररसप्रधानेऽस्मिन् नाटके कविः क्वचिदपि व्रीड़ाजुगुप्सादिव्यञ्जकभावनिवहान् अश्लीलतादोषदुष्टान् न प्रादीदृशत्; समरक्षच्च सर्वत्र समधिकतया श्लीलताम्। प्रतीच्यभूभागवासिभिः ग्रथितेषु अधुनातननाटकेषु, तत्कविभिः व्रीड़ादिदोषसंस्पृष्टाः भावसमुदायाः निगूहितव्या इति नान्वमानि। ततस्तत्र तत्र रङ्गागारे तत्तन्निबद्धनाटकविनिवेशितानि चुम्बनालिङ्गनादिवस्तूनि अप्यभिनीयन्ते कौशीलवकुशलैः; परन्त्वस्मद्देशीयाः आलङ्कारिकप्रवराः अधस्तान्निबद्धमेव विधिनिवहं सुदृढ़ं सुमन्यविचन्। तथाहि भगवानाह नाट्यगुरुः भरतः नाट्यशास्त्रे द्वाविंशाध्याये,—

ग्राम्यतापरिहारः

"यदन्तःपुरसंबद्धं काव्यं नाटकसंश्रयः।
शृङ्गाररससंयुक्तं तदाप्येष विधिर्भवेत्॥
न कार्य्यं शयनं रङ्गैर्नाट्यधर्म्मं विजानता।
केनचिद्वचनार्थेन च्छेदमत्र प्रयोजयेत्॥
यदा स्वपेदर्थवशादेकाकी सहितोऽपि वा।
चुम्बनालिङ्गनादीनि रङ्गमध्ये न कारयेत्॥
दन्तं नखक्षतं छेद्यं नीवीस्रंसनमेव च।
स्तनाधरविमर्दञ्च रङ्गमध्ये न कारयेत्॥
भोजनं सलिलक्रीड़ां तथा लज्जाकरन्तु यत्।
एवंविधं भवेद् यद् यत् तत् तद्रङ्गे न कारयेत्॥
पितृ-पुत्र-स्नुषा-श्वश्रू-दृश्यं यस्मात् तु नाटकम्।
तस्मादेतानि सर्वाणि वर्ज्जनीयानि यत्नतः॥" इति।

तत्रभवान् कविः कालिदासः तृतीयाङ्कगतशकुन्तलादुष्मन्त-

सम्मिलनविधौ विद्वत्समाजसमादृतं प्रोक्तभरतानुशासनं कथञ्चि-दपि नाजहात्; तत्तु विशदीकर्त्तुमेवाददर्शत्। यथा—

"मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितन्तु॥" इति।

अत्रास्माभिर्यानि यानि नाटकीयवस्तुप्रमाणानि प्रदर्शितानि, प्रधानतः भगवद्भरतोक्तनाट्यशास्त्रादेव तान्यशकलानि उदाहृतानि; यतः ये नाम ग्रन्थाः इदानीं नाट्यकलानुशासनेषु प्रचरन्ति, तेषु भवत्येकतमः भगवद्भरतविरचितं नाट्यशास्त्रं नामालङ्कारग्रन्थः। तद्धि महाकवेः कालिदासादपि प्राचीनतमम्। महाकविः खलु कालिदासः संवदब्दस्य विक्रमार्कविहितस्य प्रथमशतसमायां षट्शततमशरदि वा आविरासीत् इति नात्र पर्य्यालोचयामो वयम्; परन्त्वत्र पुरातत्त्वविदः सुधियः एवमाहुः यत्—भगवतः भरतादृते अन्ये केऽप्यालङ्कारिकाचार्य्याः अस्य कालिदासस्य जनुषः पूर्वं न हि समजनिषतेति। भवभूतिरचिते उत्तररामचरितेऽपि भगवान् भरत एव आदिनाट्यशास्त्रकृदित्यस्माभिरुपलब्धम्। अतोऽधुनातनेषु आलङ्कारिकप्रवरेषु महर्षेर्भरतस्यैव प्रत्नतमतया, तद्रचितनाट्यशास्त्रादेव कविना कालिदासेन स्वनाट्यकलाकौशलं व्यतायतेति वयमिदानीं वक्तुं शक्नुमः।

---

## शकुन्तला-दुष्मन्तयोः

शाकुन्तले खलु शृङ्गाररसप्रधाने शकुन्तला-दुष्मन्तयोः प्रणयः एव प्रतिपाद्यविषयः। प्रेम्णश्चैतस्य कोटिद्वयी कविना-

प्रेमप्रकृतिः

ऽत्यन्तमच्चमापातिता। तथाहि—प्रथमाङ्के यो हि अस्य प्रणयपादपस्याङ्कुरोद्गमः सुविकाशता-मागात्, स हि तृतीयाङ्के पुष्कलतया पर्य्यणंसीत्; धराधाम-सम्भूतयोर्हि यूनोः शकुन्तलादुष्मन्तयोः परस्परसन्दर्शनजनित-चाञ्चल्यमूलकोऽयं प्रत्यग्रलालसा-पवनललितलीला-वेल्लितकोमल-हृदयतल्लोल्कलिकाकिसलयपरिशोभितः तत्प्रेमाभिनवपादपः, सुरसमञ्जुलप्राज्यफलानि प्रसूय मर्त्यानामिव भोगतृष्णाप्रश-मनाभ्युपायेषु प्रसितः पटीयांश्चाभूत्। किन्त्वेवंविधस्य उद्दामप्रेम्णः यत् अवश्यम्भवनीयं गरलमयं फलं नियतमेवापतति, तदेव नूनं चतुर्थाङ्के वर्द्धनोन्मुखीभूय पञ्चमाङ्के च सम्यक् पूर्णतामा-यातम्। षष्ठाङ्के च, प्रियजनवियोगसमुद्भूताभिः स्मरज्वरानु-शोचनादिर्हेतिततिभिः दाहं दाहं युवानौ तौ पुरटविशुद्धि-न्यायेन विशोधितस्य तयोरेव उद्दामवासनादिप्रसूतस्य तस्य प्रेम्णः परिणतिः। सप्तमे चाङ्के तस्यैवंविशुद्धस्य सुसंयतस्य प्रेम्णः नाकसदीयविभूतिं कैरपि सुभगैरिह भुवि अनास्वादितपूर्व्वां मनुजनिवहानां प्रत्यक्षतामनैषीत् कविकुञ्जरः शाकुन्तलानु-शीलिनां हृदयेषु।

मन्ये, कविरैहिकस्य शरीरिणः प्रेम्णः विकाशं त्रिदिवो-दवसितजनसौभाग्यलक्ष्मीविवर्द्धितया अशरीरिण्या प्रेमप्रवाहा-मृतधारया योजयामासेति। एतस्मिन्नेव हि शाकुन्तलस्य प्रोक्त-शर्म्मण्यभूभागवास्तव्यस्य गेटे-इत्यभिधानस्य कविवरस्य गिरां

स्वर्गवसुधयोरिव सम्मिलनरूपाणां समौचित्यमव्याहतत्वमागतम्; एतस्मिन्नेव हि वसन्तलक्ष्म्याः विविधकुसुमसुषमासम्पदां, हिमागमस्य च सुपरिणतानां चारूणां फलानां पूर्णत्वमायातम्; एतान्येव हि विशदीकृत्य प्रदर्शयितुमग्रेसरा भारतीयाः कवयः नायिकानायकयोः सम्मिलनमेव उपसंहाररूपतया वर्णयन्ति काव्येषु न वियोगमिति।

इदानीमत्र वयमेतत् किञ्चिद्विश्लिष्य बोधयितुं यतामहे।—तत्र तावत् प्रथमतः दृश्यते, यत् शान्तमाश्रमपदमनुप्रविश्यैव नृपतिः आलवालाम्बुपूरणनिरताः तिस्रः तपस्विकन्यकाः समालोकयामास; दृष्ट्वा च तासां निसर्गसुन्दरमङ्गहारम्, आहार्य्यशोभालेशरहितञ्च वपुः, दृढवल्कलपिनद्धमपि अभिनवयौवनोद्भेदरम्यं माधुर्य्यञ्च विलोक्य सपदि सम्यग् मोहमुपागमत्।

राज्ञः पूर्व्वरागः

स खलु स्वस्य सर्व्वभूम्यधीश्वरत्वं, राजासनालङ्करणोचितां कर्त्तव्यबुद्धिं, स्वभावपरिप्राप्तं गाम्भीर्य्यं विनयादिगुणगणञ्च विस्मृत्य, महीरुहान्तरालगोपायितकलेवरः पश्यतोहर इव शुद्धान्तेऽपि सुदुर्लभं तासां सौन्दर्य्यमधुरिमाणं निमेषालसपक्ष्मपङ्क्ति नितरां निपीयावतस्थे। कण्वदुहितुः शकुन्तलायाश्च अव्याजमनोहराम् अभूषणभूषितामभिनवामङ्गयष्टिं, सूक्ष्मग्रन्थिनियतसुदृढवल्कलाच्छादितस्तनयुगपरीणाहं निधुवनविलासनिवाससर्व्वस्वमधरञ्च साभिनिवेशमवलोकमानः विस्मयरसोपहृतचेतनः महाभागः दुष्मन्तः तत्प्रत्यङ्गसम्बद्धं सौन्दर्य्यरसं यौवनप्रसूनसुरभिविकाशरागदर्शं पेपीयमानः इव कुसुमायुधसम्पातप्रक्षीवमानसो बभूव। ततश्चासौ तपोधनतनया शकुन्तलेयम् "असंशयं क्षत्रपरिग्रहक्षमा" इति विमृश्यापि गूढहृदयदरीशयसंशयदोलाधिरूढस्य स्वस्य चेतसः कथमपि

धैर्य्यमनैषीत्, व्याजेन चैकेन तपस्विकन्यकानां समीपमभ्युपागमच्च।

अथ संलापसमकालमेव अप्सरःप्रभवां शकुन्तलां स्वर्गक्षमं रत्नमवधार्य्य लज्जावरणमुन्मुच्यैव हठकामुक इव प्रसभं प्रष्टुमारेभे सखीजनं,—कथमियं वः सखी मदनव्यापारविरोधिनीं वैखानसव्रतचर्य्यामवलम्बितवतीति। एवंविधा खल्ववस्था राज्ञः।

अथ निर्व्विकारे चेतसि च शकुन्तलायाः प्रीतिप्रफुल्लव्रततिप्ररोहविकाशः केन वा प्रकारेण समजायत, तदेवेदानीमालोच्यते। शकुन्तला नाम हि नृपतिरिवाविनीता नासीत्; सर्व्वत्रैव च कविः शकुन्तलाचरितं राज्ञोऽपि महत्तरम् अङ्कापयामास।

शकुन्तलायाः पूर्व्वरागः

सत्यप्येवं राज्ञः सन्दर्शनसमयमारभ्य शान्ता शकुन्तला प्रशान्ताश्रमपदविरोधिभिः कन्दर्पविकारप्रभवैः दोषैश्चाभिभूता सती प्राघुणिकप्रधानम् नरपतिमपि अभ्यागतोचितसत्कारैः पाद्यार्घ्यदानाभिवादनादिभिः न सदकार्षीत्, अपि तु तत्संवर्द्धनालसा अभूत्। कतिसमयसंलापानन्तरमेव "शकुन्तला शृङ्गारलज्जां नाटयति" इत्यभिहितं कविना।

इत्थमेव प्रथमदर्शनात् प्रभृति उभावपि यौवनसुलभरूपजमोहविमोहितौ पञ्चशरैकशरशरव्यभूतावभूतां, ततस्तयोरनुरागाङ्कुरविलासाः स्फुटतयैव विकाशतामापद्यन्त। द्वितीये तृतीये चाङ्के सैषा नवीना प्रेमविलोललहरीलोला परिवर्द्धिता सती धैर्य्यवेलावधिमुल्लङ्घ्य द्वावेव प्रणयविधुरौ अकृत। अन्योऽन्यसमागमौत्सुक्यञ्च प्रणयिजनसमाश्लेषणसुखप्रार्थनालोलुपावपि युवानावधीरतामनैषीत्।

उभयचित्तासङ्गः

सतताखेटनादिवीरभावव्यसनी सन्नपि नरपतिः उन्मनायमानतया शकुन्तलाऽक्षिसाम्यमनुमाय मृगीषु, मृगया-

विलक्षणोऽभूत ; अपि च मातुः शासनमप्युल्लङ्घ्य तपोवनरक्षण-मिषेण अनुपमं शकुन्तलासम्मिलनानन्दम् अमन्दमुपभोक्तुमेव कमप्यवकाशमनुसन्दधद् अवास्थित। प्रियसमागमेषु समुत्सुका नितरामेव व्याकुलहृदया शकुन्तलाऽपि आशीविषविषविषम-विषमचापसायकेन निर्दयमेव मथितस्य स्वहृदयस्यारुन्तुदैः सन्तापैः दग्धीभूय च परं विषादमुपागता, श्वासमारुतान्दोलिता चूतलतिकेव कथंकथमपि शोकशङ्कुसङ्कुलान् प्राणान् विधा-रयन्ती जीवन्मृता इवावतस्थे।

एवंविधस्य खलु नवप्रेमपूर्व्वरागस्य दुर्व्विषहं तेजः द्वन्द्व-मेतदभिलक्ष्य कीदृग्विभिन्नतया प्रतापप्रभावं हृदयदाहकरं स्वकृत्यं व्यतानीत् तदेवेदानीमालोच्यते।

प्रेममाहात्म्यम्

"—पजाअरकिसो विअ लक्खीअदि" एतावत् आकर्ण्यैव नरपतिरन्येषां वचनमनारतमचिन्तयत्, सत्यञ्चैतत्, यतो मम "—मुहुर्मणिबन्धात् कनकवलयं स्रस्तं स्रस्तं पुनः प्रति-सार्य्यते" इति ; सुकुमारहृदयदरीशयकन्दर्पतापानलदाहविधुरा कपटप्रणयलीलाविभङ्गीं कामप्यजानती ऋजुकस्वभावा शकुन्तला कीदृशीं दुर्दशां गता, कठोरशराकर्षिमन्मथशासन-यातनां विषेहे, "किं बोजअन्ति मं पिअसहीओ" इति तस्या एतेनैकेनैव वचसा सम्यगनुमातुं सहजत एव शक्नुयात् ; तस्याः अन्तःसन्तापः एतादृक् मर्म्मस्पृक् प्रबलतरः विरहकृशशरीर-दाहकश्चासीत् यत् का कथा विरहसन्तापप्रशमस्य व्यजन-कमलपत्रमन्दतुषारमारुतसंस्पर्शोऽपि तत्प्रज्ञापथं नागत इति। ततश्च यदा हि निखिले प्राणविगमोपाये समुपस्थिते स्वजीवन-रक्षणोपायभूतं किमप्यदृष्टवती, तदानीमेव व्रीडावनता शकुन्तला मनसि निहितं स्वाभिप्रेतभूतं रोगनिदानं प्रिय-सखीनाम् अभ्यर्णे न्यवोचत्।

इदानीं तयोरुभयोरेव हृदयान्तरस्थितानां प्रेम्णां स्वकार्य्योत्पादं प्रति पार्थक्यहेतुः कश्चित् प्रतिसन्धाय विमृश्यते। एतत्कारणानुशीलनसमये हि प्रथमं तावद् दृश्यते यत्—नारीणां पुरुषाणाञ्च चरित्रगतं किञ्चिदस्ति इतरेतरभेदविधायकं स्वाभाविकमतिनिगूढं स्वातन्त्र्यम्; यतः विलासलीलाकमलाकारं खलु सततं कर्म्मबहुलानां पुरुषाणां प्रेम; नारीणान्तु माधुर्य्यामृतपरिपूरितचेतसां कल्पनामयीनां सर्व्वस्वमेव। एतयोः तदतिरिक्तं किमपि सन्दर्शयामास महाकविः अस्मिन्नेव शाकुन्तले; तथाहि—नवनीतधवलकोमलहृदयाऽनवद्याङ्गी शकुन्तला, आ जन्मनः तपोधनाश्रमपदेऽभिलालिता, अजिह्मस्वभावरुचिरैः मृगपोतैः सह चिरं संवर्द्धिता, अनवगतप्रणयनिष्ठुरपरिणामा; कुलपतेः कण्वस्य अप्रतिमेन अगाधेन च वात्सल्येन, वयस्यानां प्रगुणस्नेहेन, काननैकनिलयानां तिरश्चां वनस्पतीनां लतिकानाञ्च हार्द्देन, पादपाभिनवताम्रकिसलयानां सहकारतरुमञ्जरीणाञ्च सुस्निग्धाभिः हृदयग्राहिणीभिश्छायाभिः, तपोवनसुलभैः शान्तिसुधारसैः परिवारिता च। एतादृश्याः सरलकोमलहृदयायाः नितरां विश्वासमापन्नायाः ऋषितनयायाः हृदयान्तरनुप्रविश्य प्रेम सममेव तस्या मानसं प्राणानात्मानञ्च मुहुः श्वासानिलवेल्लितमकरोत्। अन्यतश्च सद्वीपायाः सागरपरिवारितायाः धरित्र्या एक एवाधीश्वरः भूत्वापि दुष्मन्तः बहुपरिग्रहग्राहग्रस्ततया चिन्तयत्यनारतमेव मनसि "चपलोऽयं ब्राह्मणवटुः, कदाचित् इमामस्मत्प्रार्थनामन्तःपुरिकाभ्यो निवेदयेत्" इति भीतभीत इवावतस्थे। शुद्धान्ते च तदीये कति कति न्यग्रोधपरिमण्डलाः युवजनमोहनविद्याः "हंसवत्यः" "सकृत्कृतप्रणयाः" भुक्तपरिमुक्ताः आसन्; मन्ये, यदि हि नाम राजर्षिः

शकुन्तलां नायथा प्रत्याख्यायात् तदा नूनं कियत्य एव हंसवतीसमाः हंसनादिन्यः तदन्तःपुरमेव समधिकमलङ्कुर्य्युरिति। नह्येतत् तस्य नरपतेः प्रथमाक्षरपरिज्ञानं प्रणयानुशासनस्य, अतः शकुन्तलासङ्गतं प्रेम, च तद्धृदयं न सर्व्वथैवाधिचक्रे। स हि केवलं, तदीयानिन्द्यानवद्यात्दुर्लभरूपविमोहितो भूत्वा—

"अनाघ्रातं पुष्पं किसलयमलूनं कररुहै:
अनामुक्तं रत्नं मधु नवमनास्वादितरसम्।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि" ॥ इति।

एतावदुक्त्वाऽतिवेलम् असाम्यथ्येत शकुन्तलाया रूपं मनसि। क्व चायं कन्दर्पकलाकुशलः प्रेमतत्त्वनिष्णातः प्रणयारविन्दमकरन्दपानाद्वितीयमधुकरः प्रतापनिर्ज्जिताखिलारिमण्डलः नरपतिवर्य्यः, क्व चेयं शिरीषकुसुमपेलवाखिलाङ्गी मधुकरमात्राभिलङ्घनत्रासादेव वेपथुमती सद्भावसुकुमारान्तर्हृदया अनधिगतजानपदजनाविद्धभावा अप्रज्ञातानृजुकप्रणयविषविषमपरिणामा निसर्गसरलस्वभावा शकुन्तला !! ऋषिजनलालिता मृगपोतका इव साऽपि अभाजनमासीत् महासत्त्वस्यास्य नरपतेः निशितनिपातानां दुर्विषह्यशराणां नितरां शरव्योभवितुम्। हरिणतनयाः इव आरण्यका अपि तत्राश्रमपदे प्रशान्ते निर्व्विशेषं सुखेनैवावर्द्धन्त ; सत्यमेतत्, कविः स्वयमेवैतत् पञ्चमाङ्के शकुन्तलावदनतः आह—"दुवे वि तुम्हे आरसकाओ" इति। रूपके हि एतस्मिन् आमुखाभिनयानन्तरमेव मृगयामिषेण राजानमानीय कविः अस्मानेतदेवावाबोधयत् ; अपि चैतदेव भूयः विज्ञापयति स्म, हस्तसमुत्तोलनपूर्व्वकं समुदीरितेन मेघनिनादानुकारितारस्वरेण रुवतां वैखानसानां वाक्येषु ;

यथा,—"भो भो राजन् आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः" इति,—

"न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्व बत हरिणकानां जीवितञ्चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते॥" इति च।

यदा हि तपोवनाधिवासिनः ऋषयः सम्राजः दुष्मन्तस्य आगमनवार्त्ताश्रवणसमकालमेव राजोचिताभिनन्दनविहितातिथ्यसंविधानविव्रस्तहृदया अब्रह्मण्यसन्निभार्त्तरावम् अब्रुवन्, "भो भोः तपस्विनः तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः, प्रत्यासन्नः किल मृगयाविहारी राजा दुष्मन्तः" इति। अहोवत तदानीं ते हि न समविद्रत यत् तपोवनललामभूता नवमालिकाकोमलहरिणायमाना तेषां वैक्लव्यीभवनात् सावधानतायाः प्रागेव राजर्षिणा दुष्मन्तेनाभिधर्षिताऽभूत्। अपि चामी अदम्यः नरपतिः, "गिरिचर इव नागः" "मूर्त्तो विघ्नस्तपस इव" भावितात्मनां तपोधनानां धर्म्मारण्यं समधिकमुद्वेजयन् विरोजयंश्च निसर्गसुलभां सुचिरस्थायिनीमाश्रमपदस्य हिंसाद्वेषादिदोषलेशरहितस्य शान्तिं समूलमुन्मूलितवान्।

शकुन्तला-दुष्मन्तयोश्चरितगतमेतदेव पृथक्त्वं पर्य्यालोच्य मन्यन्ते सुधियः, यत् भाविनः भर्त्तृकृतनिराकरणस्यापि वीजमत्रास्ति निहितमिति।

अथ तयोः रहःसङ्गतस्य प्रणयस्य कियद्विकाश आसीदिति अनुसर्त्तुमिदानीं वयं यतामहे। शाकुन्तले तृतीयाङ्कावसितौ एतदेव दृश्यते यत् तयोः अप्रतिहतप्रसरम् उद्दामोपभोगविवर्द्धितं प्रेममदिरोन्मादकत्वं द्वावेव समं तरलायितजीवितौ कर्त्तव्यपथविच्युतौ

उद्दामप्रेमता

चञ्चलविमुग्धचेतसौ चाकरोदिति; का कथा नरपतेः दुष्मन्तस्य, शकुन्तलाया अपि प्रियसङ्गमस्पृहा कूलङ्कषापगालहरीलीलेव व्रीड़ातटभूमिमुल्लङ्घ्य गुरुजनानां मर्य्यादाविधिमत्यशेत, यतः तयोः कोऽपि न शशाक शालीनतारूपदृढ़बन्धावधिमभिरचयितुम्। अत एवोक्तं,—

"णाविक्खिदो गुरुअणो इमिए, तुए वि ण पुच्छिदो बन्धू।
एक्कक्कस्स अ चरिए किं भणादु एक्क एकस्सिं"॥ इति।

यदा हि प्रियसखीसन्निधौ गान्धर्व्वेण विवाहविधिना शकुन्तलाम् उपायत नरपतिः, तत्प्रणयपावकहेतितिम् आपातनेत्रानन्दकरीमनुप्रविश्यैव तदानीमेवाधाक्षीत् स शकुन्तलाशलभः, चिरादेव विलयपथमन्वसरच्च। पञ्चमाङ्के कविः शकुन्तलावचसा तयोः जायापत्योः प्रत्यग्रप्रणयरसोत्सप्रवाहावगाहस्निग्धविग्रहयोः कियता सुखेन दिनानि व्यतीतानि इति कथञ्चिदेव नः व्यजिज्ञपत्, "णं एक्कदिअहे वेदसलदामण्डवे" इत्यादिना।

एतादृशस्य उद्दामप्रसरस्य रहःसङ्गतिमापन्नस्य प्रेम्णः परिणामदारुणं नियतोत्पादं गरलफलमचिरादेवोदपादि; तपोधनैरभ्यनुष्ठितायाः इष्टेः समापनानन्तरमेव नरपतिस्तु स्वनगरं प्रत्यावर्त्तत; प्रियजनसङ्गमविप्रलब्धा हृदयेनासन्निहिता शकुन्तला नवविरहशोकं सोढुमपारयन्ती, दुष्मन्तनिवेशितैकचेतसा सततमेव समागमसुखोपायं मानससन्तर्पणम् अनुध्यायन्ती अभ्यागतानां सपर्य्यारूपस्वकर्त्तव्यपथस्खलिता सती भीषणमेकमेकदाऽपराधं कृतवती। महर्षिणा कण्वेन अतिथिसत्काराय सम्यगुपदिष्टापि आश्रमपदागतातिथिवर्य्यस्य तपोधनप्रवरस्य दूरतोऽस्तु समुचितसपर्य्यादिभिः संवर्द्धना, स्वप्रणयिजनसंसक्तमानसतया अन्तिकेऽपि तस्य आगमनं नाविदीत्।

दुर्वाससः अभिसम्पातदानव्याजेन कविरस्मानेतदेवावेदयति—यत् निर्बाधं हि प्रेम मनुजानेवमेव विवेकरहितान् स्रस्ताखिलाचारान् उच्चेतायमानान् कर्त्तव्यायनविच्युतांश्च करोति ; ध्रुवं तमनु विधातुरेवमेवातिकठोरतमं शासनमदुर्भेदमभूत्। महर्षेः दुर्व्वाससः अभिशापदानात् पुरस्तादेव परिणामचिन्तापरायणा अनसूयाऽपि मनसा इत्थं बिभेति स्म, यथा,—"सो राएसी···अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इमं जणं सुमरेदि ण वा ?" इति। परन्तु—

"कथां प्रमत्तः प्रथमं कृतामिव
स्मरिष्यति त्वां न स बोधितोऽपि सन्।" इति

महर्षेः दुर्व्वाससः अभिसम्पात एव प्रायः शङ्कायाश्चैतस्या अनसूयागताया उत्तरभूतत्वमागतः इति अनारतमेव मानसेऽस्माकं समुदेति।

पञ्चमाङ्के राजर्षिदुष्मन्तेनायथाप्रत्याख्यातायाः शकुन्तलायाः अप्रतिरुद्धप्रसरस्य रहःसङ्गतस्य उदर्कविषमं दुर्व्विषहोपभोगमेतदेव गरलोपमं फलम्। एवमेव परिणामदारुणं फलं नियतमेव समुत्पत्स्यते, तत्तु पूर्व्वं कथञ्चिदेव वयमवेदयाम। पञ्चमाङ्के आ मुखादेव कविः राजर्षेः दुष्मन्तस्य चरितं सम्यक् विशदीकृत्य प्रधानतश्चैतदेव स्फुटीचकारेति। नेपथ्यविहितया हंसवत्याः सङ्गीतलीलया एतदेव ज्ञायते, यत् नरपतिः मधुकर इव निपीय निखिलविलासिनीकमलिनीकुसुमसुरसम् उद्भ्रान्तीभूय च अनिशमेव नवोद्भिन्नमकरन्दरसपानाशया रणरणकपरीतचेताः समन्तात् सञ्चरतीति ; असौ हि सुषमाऽतिशायिसुरभिप्रत्यग्रप्रसूनरसपिपासार्त्तचेताः पुरस्तादत्याग्रहपरिचुम्बनलालितां चूतमञ्जरीं प्रमत्ततयैव इदानीं विस्मरति; नृपतिः

स्वयमेवैवमाह "सकृत्कृतप्रणयोऽयं जनः" इति, अपि चाह "नागरिकवृत्त्या सान्त्वयैनाम्" इति। नागरिकवृत्तिविभवाभिज्ञस्य, ईदृशमत्त्वस्वभावसम्पन्नस्यामुष्य नरपतेः सविधे सा किमितस्मात् अधिकं याचितुमीष्टे!! महर्षेः दुर्वाससोऽभिसम्पातवृत्तं विन्यस्य कविरस्मानितदेव ज्ञापयति,—यदेतस्य गरलतरोरुद्गमस्य वीजभूतं दुष्मन्तचरितस्य गभीरतमविषमदंशो सुगोपायितमासीत् ; महर्षेरभिशापः अनैसर्गिकं किमपि वृत्तं नाररचत्।

ननु तर्हि कविः कथमिव अभिशापव्यपदेशेन भावविपर्य्ययमित्थमभानत्सीत् ?—अत्रोच्यते, यदि ह्यत्र कविः निसर्गसुलभेन सांसारिकभावेन साकम् इदं सुनिबद्धमकरोत् तत्तत्सहजशोभासन्तानसम्पद्विशोभितञ्चाकरोत् तदा नाटकस्यैतस्य सर्वथा सर्व्वत्र सममेवौचित्यमव्याहतं न स्यात् ; तदा च दुष्मन्तचरितमेतावत्परिहीणं हेयञ्चाभविष्यत्,—यत् तेन सह शकुन्तलायाः उद्वाहविधिः कथमपि कदापि भवितुं न शक्नुयादिति ; अपि च स्वःश्रेयसैकाधारं प्रेम्णां निगूढं तत्त्वं कविः कालिदासः दर्शयितुं यत् यत्नमकरोत् तत् विफलं भवेत्। दुरुदर्कस्य प्रणयपयोधिपयोऽवगाहविप्लवस्यान्तरत एव नाटकायस्य वस्तुनः यवनिकासम्पातः नूनमभविष्यदिति। महाकविः कालिदासः नरपतेः दुष्मन्तस्य विधुरचरिते व्याधिरूपमाविधं समुद्भाव्य किञ्चित् तस्योपरि दुर्व्वाससः अभिसम्पातरूपावरणं सन्निधापितवान् ; तेनैव तद्ग्रथितवस्तुनः रुचिरत्वं सुसंरक्षितमभूत्। स हि कविः तच्चरितसंसक्तस्य रन्ध्रागतदुरितसम्भितव्याधिभेदस्य सज्जनविगर्हितं दुर्विषहं विषमञ्च परिणामं विस्तार्य्य वीभत्सरसभारालसं नाकरोत्। पाश्चात्त्यैः युरोपभूम्यधिष्ठितैः कविभिः यद्यत् वस्तुजातं स्वीयस्वभावपरिप्राप्तेन भावेन विभावितमकारि, तन्निखिलमेव साहजिकैः प्रकृतिपरिणाम-

समुद्भूतैः व्यापारनिवहैः एकीकृत्य भारतीयकाव्यकलानां क्षेममयमुद्देश्यमखिलमिवानुक्षमकरोत्।

यदा हि गौतमीशार्ङ्गरवौ राजानं महर्षेः कण्वस्य निदेशं शाकुन्तलीयं विज्ञापयतः, तदा शकुन्तला त्रस्तहृदया वेपते, "किम्मु क्खु अज्जउत्तो भणिस्सदि?" इति। ततश्च नरपतिः यदा बहून् प्रज्ञावादांश्चाभिधायावोचत्—"चिन्तयन्नपि न खलु स्वीकरणम् अत्रभवत्याः स्मरामि, तत् कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षत्रियं मन्यमानः प्रतिपत्स्ये?" इति, तदा आ जन्मनः स्निग्धस्य तातस्य स्नेहेन संलालिता सरलहृदया शकुन्तला अशनिसमाहता इव विगतचेतना अभवत्। तदैव दुष्मन्तकृतनिराकृतिः तदीयहृदये "तूलराशाविवाग्निः" सुतीव्रां ज्वालां समुत्पादयामास। तदानीमिव, प्रथमाङ्कमारभ्य चतुर्थाङ्कं यावत्, शकुन्तलायाः यादृशीं शिरीषसुकुमारकमनीयां लावण्यघनरसपरिपूर्णां प्रतिकृतिं नानारसभाववर्णकविन्यासैः मृदुलवर्त्तिकाभङ्गैरङ्कयितुमारेभे कविः, सापि सपदि विवर्णेव संच्छिन्नेव चाभवत्। कुतः?—तया पुरा तपोवनैकसुप्रापेण सुविश्वाससनाथसरलचेतसा दुष्मन्तः कन्दर्पश्चोभाविव समं दृढञ्च विशश्वसाते; शङ्के, प्राक् तयेत्थं विचिन्तितं चेतसि, यत्, यादृशं खलु तातस्यागाधं स्नेहपयोधिपानीयम्, ऋजुकमानसानां प्रियसखीजनानां निराविलं निसर्गसिद्धञ्च सौहार्दं, यादृशी च "वनतोषिण्याः" "सहकारस्य" "दीर्घापाङ्गस्य" च मूका चास्फुटा प्रीतिः, अमुष्य राज्ञः प्रणयोऽपि तथाभूतः कालुष्यलेशरहितोऽनाविलश्च; अपि वा एवमेव सुचिरसुखागारम् अविमिश्रः शमामृतपरिपूर्णश्च अधिकारः कामस्य; एतावता कालेन तस्याः तथाविधा भ्रान्तिः विहताभूत्; सा स्वगत-

प्रेमविपाकः

मेवानुदध्यौ—"भग्गा दाणिं दूरारोहिणी आसालदा !!"; अनन्तरञ्च मध्येसभं भर्त्तृमुखविनिःसृता यदा दुर्विषहा निकृतिपरम्परा तदीयं हृदयतलमाहन्ति स्म, राज्ञः सुचिरप्रनष्टां स्मृतिमुद्बोधयितुम् अवगुण्ठनविरहितवदनलावण्यविभूतिः दर्शितापि तत्रभवत्या गौतम्या सा विफलाऽभूत्—नरपतेस्त्वसौ वराकी स्मृतिपथवर्त्तिनी नासीत्; यदा तु कुलपतिशिष्यः शार्ङ्गरवः, घृणारोषकषायितलोचनमुवाच—"शकुन्तले! वक्तव्यमुक्तमस्माभिः" सोऽयम् अत्रभवानेवमाह,—"दीयतामस्मै प्रत्ययप्रतिवचनम्" इत्यादि श्रवणसमकालमेव सा प्रत्याख्यानसमुत्थसन्तापाभितप्ता सती वात्याभिघातविक्षोभिता तटिनीव शालीनताऽवरोधभूमिं न्यभाङ्क्षीत्।

ततश्च कविरस्माकं शकुन्तलाचरितस्य प्रदेशान्तरं नयनपथमासादयति। एतावत्कालमेव वयं तज्जननीप्रसादलब्धम् अप्सरोजनसुलभं सौन्दर्य्यं कमनीयञ्च लावण्यमाधुर्य्यं तापसतापसीनिचयानां सुशिक्षया भूषितं सत्, कीदृशं शान्तिसुधामहोदरमभवत्, तदेव विशदम् अदर्शाम। इदानीञ्चैतन्नैव कदापि मनसा सम्भावयितुमशक्येन अकस्मादेव समुद्भूतेन अभिनवप्रणयाभिघातेन, सतामननुमोदितेन चातुर्य्यपूर्णाऽविचाररूपाऽनृताचरणेन च तज्जन्मदस्य राजर्षेः विश्वामित्रस्य दुर्द्धर्षं यत् क्षात्रं तेजः तच्छोणितान्तर्निगूहितं, तदेव धगधगायमानं जज्वाल; पौरवान्ववायविवर्द्धनम् अगण्यराजन्यमुकुटमणिमरीचिमञ्जरीचयचर्च्चितचरणनलिनं ससागरधराधीश्वरमपि मरीचिमालिनमिव पुरतः देदीप्यमानं राजानं सा नामन्यत; युक्तं ह्येतत्,—का हि नामापांशुला ललना इहास्ति, या कुलस्त्रीसर्व्वस्वभूते सतीधर्म्मरत्ने अयथाकलुषकालिमराशिविलेपनं निर्बाधं सहेत? तदा तु सा क्षोभाविद्धक्रोधपरीतचेतसा

वेपमाना अभाषत—"पौरव, जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तथा समअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चक्खादुम् ?" इति।

अपि च, यदा नरपतिना तस्याः प्रात्ययिकेषु वचनजातेषु कथमपि न विश्वस्से, अन्यतश्चासौ निखिलललनासमाजमभिलक्ष्यायथादोषमुत्पाद्य तां चिरं निर्भर्त्सयितुमारेभे, तदा सा पादाभिहता फणिनीव सुचिरं जगर्ज्ज, उवाच च—"अणज्ज अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि ? को णाम अण्णो धम्मकञ्चुअव्ववदेसिणो तिणच्छण्णकूवोवमस्स तुह अणुआरो भविस्सदि ?" इति। एतावतीभिः वाग्भिः च सा स्वसतीत्वगरिमाणम् अप्रतिहतमकरोत्। एतानि च सहृदयहृदयविद्रावकाणि तेजांसि समक्षमस्माकं समानीय कविः, शकुन्तलाचेतोगतं सांसिद्धिकं पूतत्वं, निसर्गशोभमानमकुञ्चितं प्रेम च उत्फुल्लमकरोत्। नूनमेतद्धि तेजः तस्याः तपोवननिवाससमुद्भूतसारल्यस्य निदर्शनम्। यदि आरण्यका न अभविष्यत् शकुन्तला, तदा पुरनिवासिनीव नूनमेतादृशं नृपमणिमग्रतोऽवलोक्यैव भयाकुलमानसा अभविष्यत् इति मन्यामहे।

शकुन्तलाचरितमालिख्य कविः द्वयोरेवैतयोः भावयोः सत्प्रतिपक्षयोरपि गुणानुरागादिव अन्योऽन्यमविरोधितयैव एकत्रावस्थितयोः समावेशं विदधत् तत्समन्वयमौचित्यञ्चाक्षुण्णमकरोत्। तथाहि तज्जननी परमरमणीयानाम् अप्सरसां शेखरीभूता ; जनकस्तु महातेजाः राजर्षिः विश्वामित्रः ; यदि चासौ व्रतनियमभङ्गादेवादौ उदपादि, तथापि तपोवने चिरं विवर्द्धिता ;—एकतश्च तस्याः अप्सरःसुलभा हावभावलीलाचाञ्चल्यादयः, अपरतश्च तापसकन्यकानां कठोरतपःसंयमनियमपरायणत्वम् ; एकतश्च सा भ्रमराभिलङ्घनभिया वेपथु-

मती, अपरतश्च ससागरधराधीश्वरमपि सज्जनाविगर्हितां न्यायादनपेतवचनावलीं श्रावयितुमपि न लेशतो बिभ्यती; एवमन्योन्यविरोधितया आपाततः प्रतीयमानस्य गुणजातस्य निसर्गसुन्दरं भावनिवहमेकत्र सङ्कलय्य शकुन्तलाचरितं समालिखितं कविना; न ह्यसौ कुत्राप्येतेषामसमीचीनत्वम् अभिदर्शितवान्, प्रत्युत सर्वत्रैवाचतमकरोदिति।

इदानीं तावद्वयं नाटकस्य मूलीभूतं वस्तु प्रथमतश्चानुसर्त्तुमग्रेसरामः। एवमेव कविः प्रेममहीरुहस्य नियतं सहृदयहृदयविद्रावकं परिणामदारुणं फलमस्माकं प्रत्यक्षतामनैषीत्—"इत्थमप्रतिहतं चापल्यं दहति" इत्यभिधाय। एतेनैव विरहजभीषणानलेन शकुन्तलीयं लावण्यं न केवलं विदग्धीभूय परां विशुद्धिम् अगात्, अपि तु पूर्वतोऽपि नितरां देदीप्यमानम् अभूत्। सर्व्वमेवतदुपरिष्टात् यथाऽवसरं वक्ष्यामः।

अथ काव्यता

दुष्मन्तकृतनिराकृतिव्यपदेशेन कविः महत्त्वं शकुन्तलाचरितगतं समधिकतया विकाशयामास। यदि हि शकुन्तला अप्रत्याख्याता सती सादरञ्च राजर्षिणा पर्य्यग्रहीष्यत, तदा शकुन्तलाचरितं समीचीनमुपकरणं नाभविष्यत् अभिज्ञानशकुन्तलवन्महनीयासाधारणसौन्दर्य्यसम्भारैकराशेः रूपकस्य।

बहवः पुनरस्मद्देशीया विशेषतश्च ये खलु पाश्चात्यकाव्यरसरसिकाः, तेष्वेव केचनेत्थं विवदिषन्ते, यदत्रैव अभिज्ञानशकुन्तलस्य समाप्तिः भवितुम् उचिता इति; इदन्तु तेषामाकूतम्,—तथा हि प्रेम्णां सुष्ठु-संफुल्लता एव हि काव्यप्राणोपमरसानुगुणभावाभिव्यक्तिसाधनेषु चरमा एव परिणतिः; सा खलु अत्र रूपकस्य पञ्चमाङ्कसमाप्तिपर्य्यन्तं प्रस्फुटतामायाता। अस्मात्

केषाञ्चित् अभिमतम्

उपरिष्टात् नास्त्यन्यः कोऽपि वक्तव्यशेषः। तदेतस्मादन्यत् सर्वमपि बाहुल्यदोषदुष्टतया भवति चाप्रयोजकमिति।

दृश्यन्ते हि यूरोपभूमिभागप्रसिद्धेषु भूयःसु रूपकेषु इत्थमेव जटिलानि वर्णनीयवस्तूनि आवर्त्तमालासङ्कुलसागरमध्यगत-जलयाननिमज्जनमिव भीषणघटनावलीसमुत्थलहरीलीलाघात-प्रतीघातैः दुर्विषहविरहवेदनां समुत्पाद्यैव विघ्नबहुल-विषमविरहाभिनये एव पर्य्यवसितानि; तथा हि कविकुलशिरोमणेः शेक्सपीयरस्य ग्रथित-वस्तुनि शृङ्गाररसप्रधाने 'रोमियो-जुलियेट्' इत्युदाहृते दृश्यकाव्ये इत्थमेव दुर्विषहं विरहानलजं तेजः क्षणप्रभा इव क्षणं प्रभया समुद्भास्य सभ्यहृदयं नायकद्वयीं सममेव भस्मावशेषामकरोत्। कियताञ्च रसास्वादनिपुणानां यूनां चेतांसि दग्धप्रायाणि च व्यदधात्, तदधुना संख्यातुमशक्यम्। "प्रेम्णां गतिरीदृश्येव,—प्रगाढ़ं विशुद्धमपि प्रेम न सञ्चरति कदाप्यकुटिले पथि", अतश्च द्रष्टॄणां श्रोतॄणाञ्च चेतसि एवमेव संस्कारः समजनि, यत् नूनमित्थमतिघोरजीवनविप्लवमावहति प्रेम, एवंविधं रहसिक्तं दुर्द्धर्षं चापल्यक्षोभमयं हि प्रेम कदापि चिरशान्तिप्रवाहिणीप्रवाहेण युवजनहृदयं नाप्लावयति,—प्रत्युत सञ्जनयति असामञ्जस्यं जगतां सर्व्वेषु विषयेषु इति।

पाश्चात्त्यमत-निदर्शना

भारतीयाः कवयस्तु केवलं प्रेम्णामिव महाविप्लवोत्पादकं जीवननाशकरञ्च परिणामं सन्दर्श्य न न्यवृतन्, प्रत्यग्रप्रणय-सम्भूतम् अप्रतिहतं हि चापल्यं सृजति जीवित-विप्लवम्, उत्पादयति चाशान्तिसन्ततिम्; कैरपि नैतद्धि विभाव्यम् अनृतदोषकवलित-मिति, अपि तु तस्य प्रेमवस्तुनश्चान्तराले अस्ति निहितं किञ्चित् निगूढ़ं गभीरतरञ्च तत्त्वम्। एवं न भवति चेत् तदा नूनमेतद-

भारतीय-कविमतम्

वितथं प्रेम चलाचलादेवास्माज्जगतः अपहृत्य कर्हिचित् लोक-लोचनान्तरालभूमावयासीत्; दृश्यते हि स्वभावस्यैष नियतः, यथा ज्वालामालासङ्कुलोऽनलः अप्रज्ञातदहनधर्म्मणः शिशोरपि चापल्यात् निधापितं करं दहत्येव, तर्हि किं जातवेदाः शुभावहो न भवतीति केनचित् कथयितुं शक्यते? कविना पुनः कालिदासेन उद्धतमप्रतिहतञ्च प्रेम तीव्रेण स्वतेजसा देशकालपात्राणां वैपरीत्यं साधयतीति स्वयं स्वीकृत्यापि तदेवात्र पर्य्याप्तमिति नानुमेने; प्रेम्णामेतदेव पश्चिमं तत्त्वमिति तु कविना वयमत्र नादर्शिष्महि; सत्यं ह्येवैतत्, हार्द्दं न कदापि भवति अशुभप्रसूतिः, प्रत्युत प्रभूतमङ्गलैकनिदानमिति। तत्तु निगूढ़ं सत्यं कविः स्वग्रथिते शाकुन्तले सम्यक् फुल्लम् अकरोदिति।

अकपटेन प्रेम्णा प्रेमिकयोः द्वन्द्वचरयोः सम्मिलनप्रभवाः नासिकाकुञ्चनादयः धर्म्मशास्त्रकृद्भिश्च नानुमोदिताः; "सस्त्रीको धर्म्ममाचरेत्" इत्यादिश्रुतिभिः प्रतिपादितं यज्ञाद्यनुष्ठानं स्वस्वकुलाचारानुपालनञ्च सर्व्वमेवैतत् शास्त्रनिवहैः सभ्यसमाजैश्चानिशमेवानुमोदितम्; वेदार्थतत्त्वज्ञाः मन्त्रद्रष्टारः ऋषयः सदाराश्चासन्। भगवदरुन्धती-वशिष्ठयोः परमं निर्णिक्तं प्रेम सहस्रं युगान्यभिव्याप्य भारतीयनारीणां हृत्सु पातिव्रत्यधर्म्मस्य समुज्ज्वलं ज्योतिः संस्थाप्य जगल्ललामभूतानां कुलस्त्रीणां चेतसि आदर्शभूतं सदवतिष्ठते।

द्वन्द्वचरत्वदोष-क्षालनम्।

अधुनापि नववधूट्यः अरुन्धतीं भगवतीमवलोक्य विशद-प्रेम्णामिन्द्रियादिसंयमानाञ्च निदानं तत्पातिव्रत्यं निखिल-कुलपालिकानामपि ललनाललामभूतानामादर्शीभूतं पुरतोऽवस्थाप्य विषमेऽतिबन्धुरेऽस्मिन् संसारकान्तारे क्रममादधति।

यदा हि भगवान् शङ्कराचार्य्यः तारस्वरेणोवाच—"द्वारं किम्

एकं नरकस्य ?—नारीति" तदेव नूनं बौद्धानां प्रभावविजृम्भितप्रायमेवावगन्तव्यम्; गौतमो हि तदतिकठोरानुशासनात् नारीजनं दूरतोऽवस्थापयितुं सततमेव मनसि निदध्यौ, तत्साधयितुन्तु न शशाक; अपि तु पुरुषसङ्घान् नारीसमूहांश्च विविक्तस्थानमधिष्ठाप्य सर्व्वथा सन्न्यासिनं सन्न्यासिनीं भिक्षुं भिक्षाकीञ्च विधाय बुद्ध्या नानासम्प्रदायञ्च ससृजे; तदपि न सुचिरमस्थात्। खृष्टधर्म्मावलम्बिनः हि यदा तेषां स्वधर्म्माणामभ्युदयं साधयितुमयतिषत, तदा तस्मिन् अतिविस्तृतिमागत्य चरमाभ्युदयमागते सति तैं इत्थं भिक्षूणां भिक्षाकीणाञ्च विविधसम्प्रदायमसृज्यन्त; असावपि सुचिरं स्थिरतां नायासीत्। उभयत्रैव कुतश्चिदेव उदीयमानं नियतं व्यभिचारकालुष्यं सम्प्रदायमिमं विध्वस्तमनियन्त्रितञ्चाकरोत्। अत एव आम्नायोदितमनुशासनं नैसर्गिकीं रीतिमुल्लङ्घ्य नरं नारीञ्च अन्योऽन्यमविच्छिद्य निसर्गसिद्धमकुटिलं तयोः सम्मिलनं संयमशासननियन्त्रितञ्च विदधत् विश्वेषां विधानेन सार्द्धं सामञ्जस्यं संरक्षयितुं यतते स्म।

यावत्कालमेव प्रणयिहृदयं शारीरैः मानसैश्च वृत्तिनिचयैः समुत्पादितम् इन्द्रियनिचयविकाशोपलब्धं सुखमेव लब्धव्यमिति मत्वा तत्रैव नितरामनुरज्यति, अपि च अस्या एव प्रीतेः सुविकाशतां विधाय अन्येभ्यः प्रशस्यतमेभ्यः नैसर्गिकवृत्तिव्यूहेभ्यः आत्मप्रसादप्राप्तिमवधूय निवृत्ततितरां, तावदेवैतद्धृदयमप्रशस्तं महाजनविगर्हितञ्च भवतीति हृदयम्।

यदा हि धर्म्मस्वरूपसुदृढबन्धनेन दम्पतिहृदयम् एकीभूतत्वमाप्नोति, तदा धर्म्मस्य समौचित्येन सौन्दर्य्यं शुभञ्चैतद्धृदयमपि अभेदभावमापद्यते; तदा च प्रेम विश्वमङ्गलैकनिदानं तदीयशान्तिनिकेतनमासाद्य सुचिरं स्थिरं समवतिष्ठते। तदा च तदेव प्रेम

विशुद्धप्रेमधर्म्मः

आघातसम्भूतवीचिमालावत् कासारपातितलोष्ट्रप्रदेशं स्वप्रणयिजनं केन्द्रीकृत्य आवर्त्तनक्रमेण क्रमात् जगति महतीं स्वविस्तृतिमुत्पाद्य स्वबन्धुतासु महिमभूयस्त्वं विस्तारयति ।

यदैव शकुन्तला प्रियसमागमप्रत्याशयैव केवलमभिभूता आसीत्, यदा च सा प्रियसमागमजनितसुखोपभोगमेव नितरामभीप्सितवती, तातनियोगातिथिसत्कारादिकं किमपि अन्यदैहिकं शुभापूर्वसंविधायकं वस्तुजातं मनसः समूलमुन्मूलितवती, तदैव तदुपरि विधातुः केनाप्यनभिलङ्घनीयं भ्रूकुटिकरालमीक्षणम् ऋषेश्चाभिसम्पातः न्यपप्तत् । सा एव हि शकुन्तला पश्चात् तस्यैव यौवनसम्भारस्य गरिमाणं समादायैव राजसभायामुपस्थिता ; तथापि हि अजायत तदुपरि विधातुरविसंवादि विधानं, तद्धि भावि तत्प्रत्याख्यानमिति ।

कर्त्तव्यविच्युति-दोषः

एवमेव हि पुरा सर्वशक्तिस्वरूपा गौरी स्वीयानुपमलावण्यसम्भारमादायैव "पर्य्याप्तपुष्पस्तवकावनम्रा सञ्चारिणी पल्लविनी लतेव" "रतेरपि ह्रीपदमादधाना" सती, पुष्पधन्वनः सुसहायकीभूय तदीयं तदमोघवीर्य्यं वपुर्गुणेन पुनः संधुक्षयन्तीव गिरिशस्य "अनन्यनारीकमनीयमप्यङ्कम्" अलङ्कर्त्तुमीहमानाऽभूत् ; तत्फलन्तु किमासीत् ?—तथा हि—

रूपजप्रभ

"हरस्तु किञ्चित्परिलुप्तधैर्य्यः
चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे विम्बफलाधरोष्ठे
व्यापारयामास विलोचनानि ॥
विवृण्वती शैलसुताऽपि भावम्
अङ्गैः स्फुरद्बालकदम्बकल्पैः ।

साचीकृता चारुतरेण तस्थौ
मुखेन पर्य्यस्तविलोचनेन॥
तावत् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार॥"

न ह्येतावता तत्फलं सम्पूर्णमासीत्, परन्तु—

"तमाशु विघ्नं तपसस्तपस्वी
वनस्पतिं वज्र इवावभज्य।
स्त्रीसन्निकर्षं परिहर्त्तुमिच्छन्
अन्तर्दधे भूतपतिः सभूतः॥"

एतदेव प्रत्याख्यानं हि देवत्वम्। तदानीन्तु गौरी एवं सावमाना सती,—

"————पितुरुच्छिरसोऽभिलाषम्
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित्॥" इति।

शाकुन्तले कुमारसम्भवे च तत्रभवान् महाकविः कालिदासः इत्थमेवाकल्मषं तत्त्वं विकाशयामास, यत् शारीरैः रूपलावण्यादिभिः सुदुर्लभं हार्दं विचिचीषतः जनस्य एवमेव दुर्विषहः विषमः परिणामः आपततीति।

इत्थमेव वितथमनोरथा सती सती "निनिन्द रूपं हृदयेन," मणिमयमपि कण्ठभूषणं दूरतो विससर्ज्ज, अनुपमैः शिरोरुहजालैः जटामबध्नात्, तपस्यया च तथाविधं त्रिभुवनदुर्लभं प्रेम लब्धुं यतते स्म च; तथाहि सुष्ठूक्तं कविना—"अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः" इति। यदा तु तदीयं प्रेमैकप्रवणं मनः सुचिरमाचरितेन तपसैव विशोधितं सत् इष्टजनेषु भावैकरसं स्थितं,

प्रेमसिद्धिः

तदैव तस्याः प्रार्थना पूर्णत्वमागता, तदैव यमिनां वरिष्ठः श्रीकण्ठः परिणेतुकामोऽभूत्। पतिव्रतानां पुरतोऽभिधेयां मूर्त्तिमतीं साध्वीं साक्षात्तपःसिद्धिमिव पत्या सार्द्धं धर्म्माधिष्ठात्रीमरुन्धतीमवलोक्य अवगम्य च धर्म्मचारिणीं विना धर्म्माचारासद्भावं दारानुपायत। यतो हि,— "क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्" इति; तदैव हि अनुश्रूयते—"धर्मेणापि पदं शर्व्वे कारितं पार्व्वतीं प्रति" इति च। एवंविधेनैव अमलेन प्रेम्णा विश्लेषां हितं "कुमारसम्भवत्वं" च साध्यते; न सिध्यति केवलमिन्द्रियचरितार्थतेति। एवं हि सुविमलं तपोऽमृतविधौतं धर्म्यं प्रेम, शिवं निसर्गरुचिरं वस्तुजातञ्चैकत्र संविधाय जगतोऽस्याशेषं शुभं साधयति; एतदेव हि काव्यत्वम् अत्र इति।

इदमेवात्र सचेतसामवगम्यं तत्त्वं,—यद्धि तावत् तत्रभवता महाकविना कालिदासेन कुमारसम्भवे विशदीकृत्य प्रदर्शितं, तत्सर्वमेव केन्द्रीभूय किल शाकुन्तलस्य बीजभूतत्वमायातमिति। वस्तुतस्तु, यो ह्येवं शकुन्तलानिराकृतिव्याजेन मनुजमपि नरपतिं दुष्मन्तं देवदेवोपममङ्कापयामास, धन्यः स कविः कालिदासः! धन्यं हि तदीयं काव्यं शाकुन्तलम्!! धन्याश्च ते एव पाठकाः, ये खलु धन्यममलं तत्पीयूषरसं निपीय आत्मानं पुनन्ति सततम्।

शाकुन्तले प्रथमाङ्के पुरतश्च वयमेतदेव प्रत्यपीपदाम, यत् तरुणयौवनोद्गमाभिरमणीयानाम् ऋषिकन्यकानां कुतूहलो-

नाटकत्वम्

द्दीपकमन्योऽन्यकृतं रहस्यालपनम्; उत्फुल्लप्रसूनस्तवकस्तनभारस्तोकाभिनम्रा वनतोषिणी, आ मूलाम्मुकुलितकिसलयसम्भारसुकुमारप्रावारकावृतशरीरा सहकारतरुं सादरमेव समाश्लिष्यन्ती माधवीलता;

पुष्परसपानलोलुपैः तन्मकरन्दपरागपिशङ्गैः द्विरेफैः ईषदीषच्चुम्बितचारुविकचकुसुममञ्जरी नवमल्लिका; अपि च तत्र तासामनवद्यमाधुर्य्यदर्शनात् विगलितान्तःकरणः ससागरधराधीशः विटपान्तरालनिहितार्द्धदेहः कर्णीसुतायमानः राजर्षिः दुष्मन्तश्च। भो भोः पाठकाः! इत्थमत्र भवद्भिरप्यवश्यमेवाङ्गीकर्त्तव्यं यत्—एवंविधं मानसोन्मादकरं निसर्गसुन्दरं रसभावविभावानुगुणपदार्थजातमेकीकृत्य अस्माकं प्राच्यकविः कालिदासः किमप्यपूर्वं दृश्यकाव्यमेकं जुगुम्फेति।

सप्तमे चाङ्के भगवतः त्रिलोक्येकगुरोः मारीचस्य आश्रमपदमनुप्रविश्यैव दरीदृश्यतां भवद्भिः रसादिभावनाचतुरैः,"—वल्मीकार्द्धनिमग्नमूर्त्तिः······स्थाणुरिवाचलो मुनिरभ्यर्कविम्बं स्थितः" इति। अत्र हि सुरासुरजनकः भगवान् कश्यपः सपत्नीकः तपस्यति, भवति चात्र पतिव्रतापुण्यविषयिणी नाना भारती महर्षिपत्नीगणपरिवारितायाः अदितेः समक्षं, "स्वर्गादप्यधिकतरं निर्वृतिस्थानमेतत्" "अभूमिरियमविनयस्य,"अत्र हि सुरनरसुदुर्लभमैश्वर्य्यजातमयत्नसिद्धं चिरमास्ते; किं बहुना?—विलासोपादानानां मणिकाञ्चनोत्तमाङ्गनादीनां सविधे हि शमदमादीनां चरमश्चोत्कर्षः। तथाहि,—

मारीचाश्रमः

"प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने
तोये काञ्चनपद्मरेणुकपिशे पुण्याऽभिषेकक्रिया।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमः
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी"॥ इति।

आश्रमस्थलीव नैषा भूमिः पुत्रकृतकैः नीवारमुष्टिसंवर्द्धितैः मृगशावैः सङ्कुला,—अपि तु अपत्यनिर्व्विशेषविवर्द्धितैः बालमृगेन्द्रकैः। एषा हि स्थली सुमधुरदर्शनैः अप्रगल्भविचेष्टितैः

बालपादपलतिकानुसेचननिरतैः तारुण्यसुलभचापल्यपूर्णहृदयैः सखीजनैः समन्तात् परिवृता नाम न भवति;—अपि तु वात्सल्यसरसमानमानां चपलैकशिशुसंरक्षणव्यापाररतानां मातृस्थानीयानां तपस्विनीनां परमास्पदम्; अत्र हि वामशीलः शिशुरेकः निसर्गसुलभेन स्वतेजसैव अखिलमेतत् तपोवनं प्रीणयति,—न पुनः यौवनोद्गमसुलभरागमनोहरा लावण्यसिन्धुसुधांशुलेखा कुलपतेः कण्वस्य कन्यका।

सततशमदमाद्यनुशीलनस्य सर्वथा धर्म्मानुपालनस्य च प्रभावात् करुणवात्सल्यादिरसस्य महिम्ना, सुदीर्घकालानुपालितव्रतचर्य्यया च प्रथमसमागमकालीनोद्दामप्रेमरूपमालिन्यं विदग्धीकुर्व्वन्ती चामीकरवत् परां शुद्धिमवाप्य, "वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः" शकुन्तला अजनि; इदानीन्त्वेतस्याः पूतचरितायाः तनयसौन्दर्य्योद्भासिताङ्कायाः भरतप्रसूतेः शकुन्तलायाः या अपूर्व्वा करुणरसोद्भासिका शुभोदर्का च छविरासीत्, कस्तां निग्रहीतुं प्रत्याख्यातुं वा शक्नुयात्? वात्सल्यरसैकभूमेः प्रसूतिधर्म्मस्य समुत्पत्तौ एव नारीहृदयं स्वविषयसीमानमन्तिममधिरोहति; अत एव भगवान् मनुरप्याह "प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः" इति।

शकुन्तलाशुद्धिः

राजर्षेः दुष्मन्तस्यापि अनुतापानलेन दन्दह्यमानस्य चेतसो मलीमसत्वन्तु दग्धीभूय परां पूततामगात्। तस्य च यौवनोद्दामप्रभवः दुर्निवारप्रवृत्तिदावानलः पश्चात्तापानुतप्तचेतसः विरहवेगसमुत्थैः अश्रुप्रवाहवर्षणैः सम्यक् निर्वापितः कविना। यस्मिन्नेव क्षणे तदङ्गुरीयकं पुनर्हस्तगतमासीत्, तदाप्रभृत्येव तस्य अखिलदुरितक्षयकारकं तदनुतापानलप्रायं प्रायश्चित्तं समजनिष्ट; यतः

दुष्मन्तसन्तापः

"तश्श दंशणेण भट्टिणा कोवि अहिमदो जणो शुमरिदो त्ति, जदो मुहुत्तअं प्पहुदिगम्भीरो वि पज्जुश्शुअमणा आशी" इति। तत्परमेवाभूत् तदीयश्चावरोधः प्रगाढ़ान्धतमसराशिसम्पूर्णः,— "णिरुच्छवारम्भं विअ एदं राअउलं"; पुरवासिसमूहैः अत्याग्रहमनुष्ठीयमानोऽपि मन्मथविलासप्रद्योतकः सहकाराशोककुसुमोद्गम--कोकिलकाकलीकलकल--राकानिशाकरप्रसादभ्रमरीरुत-मलयजसारमारुत-सारसकासारसम्पृक्त-विविधकुसुमसुरभि-मृदुशीतनीहारसहचरः वसन्तोत्सवोऽपि सपदि प्रतिषेधितः। वसन्तलक्ष्मीप्रभावसमुद्भूतानां विलासादीनां तिर्य्यञ्चः तरुलतादयश्चापि सम्यक्तया असमार्षुः, का कथा अपरेषाम्; तथा च राजसदनोपवनानां वृक्षवाटिकानामपि चूतमुकुलानि परागं न जनयन्ति स्म; कुरुवकाणि कोरकावस्थायामेवावस्थितानि न फुल्लन्ति स्म; पुंस्कोकिलरुतमपि अर्द्धस्फुटितं सदैव कण्ठे विलीनतामयासीत्; किमधिकं,—निखिलमेव राजपुरं शोकावरणसमाच्छन्नमभूत्। वैमनस्यपरीतः नृपतिरपि निशान्तान्तः "शय्योपान्तविवर्त्तनैः विगमयत्युन्निद्र एव क्षपाः" "प्रकृतिभिर्न प्रत्यहं सेव्यते"; धर्म्मासनसंरोहणं प्रकृतिपुञ्जरञ्जनञ्च तस्य सर्वथैव तदा असम्भावितमासीत्; तदानीमेव निराकरणविक्लवायाः शकुन्तलायाः शोकाश्रुप्रवाहकपिशा दृष्टिः समागत्य स्मृतिपथं सविषशल्यमिव दहतितरां तस्यान्तस्तन्त्वविभेदम्। अधुनाऽसौ न पूर्ववत् "प्पजाअरक्खिसो विअ लक्खीअदि"। तस्य च विषमपरिणामोऽनुशयः कियदेव मर्म्माण्यकर्त्तीत्, आधिश्च कीदृक् सुतीव्रः अभवत्, तत्तु कवेरेकेनैव वचसा सुष्ठु प्रतीयते। यदा तु कश्यपाश्रमसविधे शकुन्तलायाः प्रथमतः दृष्टिपथमागतो नरपतिः, तदा सा तमवलोक्यापि 'अयमेवासौ मत्पतिः नरपतिः दुष्मन्तः' इति प्रथमं

नाभ्यज्ञासीत्; अपि चोवाच सपदि,—"ण क्खु अज्जउत्तो अअं, ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि" इति। नरपतिः तदैव एतावदेव पश्चात्तापविवर्णः समभूत् यत्—सतो सा शकुन्तला तं वेदितुमपि न अशक्नोत्। एतदेव पुटपाकस्येव मर्म्मस्पृशः अन्तस्तलद्रावकस्य तद्धृदयान्तर्निहित-पश्चात्तापस्य पर्य्याप्तं निदर्शनम्। एतेनैवानुतापानलेन राज्ञः प्रकृतिः कीदृक् परिवर्त्तितासीत् तदपि कविः सुस्फुटमेवा-वोचत्; तथाहि—"अससंकन्तहिअओ वि पढमसम्भावणं रक्खदि थिरसोहिदो दाव एसो" इति मिश्रकेशीवाक्यतः अस्मभ्यम् एतदेव व्यजिज्ञपत् कविः, यदधुना नृपतिना शकुन्तलायां सुस्थिरमेव हार्द्दमनुभूयते, न प्रागिवासौ जनः इदानीमपि "सकृत्कृतप्रणयः" इति। अमुष्य मानसम् एतावदेव शकुन्तलासङ्गतमासीत् यदसौ सदैव तां प्रत्यक्षीकरोतीवेति विज्ञायते। तदीयान्यखिलानि अङ्गानि कुसुमसुकुमाराणि, प्रतिप्रतीकञ्च प्रस्फुटितमनवद्यञ्च तदीयं लावण्यं, तस्य स्मृति-पथमनिशमेवोदेति, मूर्त्तिं परिगृह्येव तदनारतमेव तन्मानस-सिंहासनमधिवसति च; सुगभीरानुध्यानेन शकुन्तलायाः यदेवा-निर्व्वचनीयं चित्रमलेखीत् मानसभित्तौ, तेनैवामुना शकुन्तला पुरतो वर्त्तते एवेत्यमानि। यस्यास्तु शकुन्तलाया रूपमनिश-मालोच्य नरपतिः तद्गतचेताः भूत्वा, तामिवेदानीमङ्कभाक्तया न केवलम् अद्राक्षीत्, यतो हि शकुन्तलायाश्चैतदनिन्द्यं वपुः "भोक्तारं कमिह समुपस्थास्यति भुवि" इति नैवासावधुनाऽनु-ध्यायति चेतसि, अपि तु धर्म्मपत्नीं पुरुकुलैकप्रतिष्ठापिकां तदन्ववायसंरक्षणैकनिदानभूतां तामधुना विभावयति। अन-पत्यताशोकसमुत्थाधिश्चाधुना तस्य मर्म्माणि क्रन्तति। अपि च "पिण्डविच्छेददर्शिनः पूर्वपुरुषाः मदावर्ज्जितमुदकं ननं दीर्घं

निश्वस्याश्रूणि मुञ्चन्तश्च कवोष्णमुपभुञ्जते" इति चेतसि नित्यमेव चिन्तयतितराम्। तदवसाने च पौरवाणामिषा चासीमाऽतुलनीया सम्पत् सन्ततिच्छेदेन निरालम्बनीभूता सती अन्यकारकवलिता नूनं भविष्यतीत्यनिशमेव विभाव्य तद्धृदयं शतधा व्यदीर्य्यत्। यदैव हि संरोपितकुलाङ्कुराम् आपन्नसत्त्वाञ्च शकुन्तलाम् अयथा निराकृत्य अप्रार्थितोपनतञ्च श्रेयः स्वयमेवावमेने, ततः प्रभृति आत्मानम् आत्मनैव गर्हयन् निरन्तरमेवानुशोचति नरपतिः। "हद्धी हद्धी, सदि क्खु दीवे व्ववधाणदोसेण अन्धआरं अणुहोदि राएसी" इत्यादिकं वचनजातम् एवात्र प्रमाणम्। इत्थमेवानुशोचनया मर्म्मभिदा स्वकर्म्मणाम्, अनियतमनुभूतेनान्तर्दाहकेनानुतापानलेन च "सर्वथा प्रमार्जितं प्रत्यादेशदुःखं प्रियायाः" इत्यादि श्लोकेषु मन्ये तदन्तर्हृदयसंस्थं मालिन्यं सर्वथैव विधौतमभूदिति। तस्य चानिवार्य्यं यौवनोद्दामप्रभवं प्रागनुभूतं प्रेम इदानीममलं शुभोत्पादनिदानं पुत्रजननफलकं समजनि। मारप्रसार-संवर्द्धिता चेतसः आविलता सपद्येव विलयं गतवती, अत एव शकुन्तलासुताननसुधांशुदर्शनसमकालमेव नरपतेः पारावारगभीरं हृदयं स्फीतोत्तालतरङ्गततिभिरुद्वेलमिवाभूत्। तदा च मरीचिमालिमयूखसन्तप्तं मरुस्थलमिव तस्य अनपत्यताऽनुतापोष्मवितप्तं हृदयतलं द्रवितमभूत्, शकुन्तलासुतश्च नैसर्गिकेण संसर्गजस्नेहरसेन तदीयं हृदयतलमार्द्रतामनैषीत्; दुर्ललितममुमेव शिशुं परिचेतुं चञ्चलचेताः भूपतिरङ्गजन्मनश्चास्य शिशोरङ्गरजसा आत्मानं तत्परागरागरूषितं कर्त्तुञ्च सततमैहिष्ट।

महर्षेः कण्वस्य आश्रमपदे शकुन्तला अलौकिकेन स्वलावण्यस्य महिम्ना तच्चेतसः यदेव स्थानमधिचक्रे, भगवतः मारीचस्य तपोवने तेनैव शिशुना तत् स्थानं समधिकृत्य

सर्व्वमेव तदीयहृदयतलं सममेवाधिचक्रे ; ततश्च यावदेवासौ बालकः शकुन्तलासुत इत्यबोधि, तावदेव चक्रवर्त्तिलक्षणलक्षितस्य पौरवान्ववायाङ्कुरस्यास्य शिशोः प्रसूतेः शकुन्तलायाः अत्यादरः तत्र राजनि सहस्रगुणमेव वहृधे ; तदानीमेव "एकवेणीधरा नियमक्षाममुखी" तपस्विनी शकुन्तला तन्नयनपथवर्त्तिनी बभूव। अत्र तु कविना भूम्नैव स्ववर्णनीयवस्तुनः विन्यासो नाकारि, द्वित्रेण वचसैव किमिव अत्युज्ज्वलमेकमालेख्यमालिख्य सम्मिलनवर्णिकयैव तावत् ऐहिकामुष्मिकयोः सुरभिकुसुममेकत्र विकाशयाञ्चक्रे।

पुरा किल या शकुन्तला स्त्रीजनसदाचारविरोधिनं कर्णकुहरपीड़कञ्च बहुवादमभिधातुं नाऽबिभेत्, पतिमपि "अनार्य्य" इति समाह्वातुञ्च न सङ्कोचममन्यत, साऽसौ

सात्त्विकर्मलनम्

रोषारुणरागरूषितमुखी हृतसिंहीनिकाशा शकुन्तला इदानीं शान्तिसुधारसस्राविणी समजनि, तपस्यर्थ्ययेव च तच्चेतसः मलीमसन्तु कामं विधौतमभूत्, कामः कामजक्रोधाभिमानौ च युगपदेव तिरोदधिरे ; इदानीमेव सा क्षमामयी नाभिमानिनी, मूर्त्तिमती शान्तिरिव अत्यर्थं शुशुभे। असौ शकुन्तला तथाभूतमपि राजानम् अभिज्ञाय नाभिमानाकुलहृदया सती व्रीड़ाभरेण स्वकीयमाननं नापासारयत्, अपि च साग्रहमुवाच—"जअदु जअदु अज्जउत्त" इति। यदा हि बालकः सर्व्वदमनः राजानं सन्दर्श्य स्वमातरमप्राक्षीत्—"अम्ब! को एसो ?" इति, तदा तया "भाअधेआइं पुच्छ" इत्यभ्यधायि, अनिशमरोदि च ; स्वभाग्यविपर्य्ययादेव एतदसम्भावितं दुःखमापतितमिति निश्चित्य सा, राजा एव न स्वदुःखहेतुरित्यनुमाय, तं तदपराधेऽप्यक्षमिष्ट ; प्रागजनिकर्म्मवशादेव सर्व्वमेतत् समजनि इति

प्रबोधितमाम्; परन्तु राज्ञः हृदयान्तर्निहितां तात्कालिकीम् अवस्थां मिश्रकेशीवचसा कथञ्चिदवगत्यापि तया सम्यक् नावेदि; ततः सन्दिह्यैव उवाच, "आत्मनः भागधेयं पृच्छ" इति। यदि हि स्वशुभादृष्टं कदाचित् प्रसीदेत्, तदा चैतस्य समुचितमुत्तरमचिरात् लभेत इति विभाव्य किमपि नोवाच। राजा तु किमत्राभिदधाति इत्याकर्णयितुमेव ससम्भ्रममवतस्थे। मन्ये प्रणयिनः राज्ञः हृदयं तदानीमपि न चरममुत्कर्षमवाप, तत्-प्रेमप्रकाशविधौ कियदेवावशिष्यते; यतो हि स्वार्थपरिहरणपुरःसरं स्वात्मनिवेदनमेव केवलं प्रेम्णः प्रधानतमं निदर्शनम्। यावदेव हि प्रेमनिष्णातः पुरुषः स्वेनैव सार्द्धं प्रेमाधारस्य साम्यं नादधाति, यावदेव च मानसमधिकरोति तदप्यधिकतमत्वधीविषयकं स्वात्मोत्कर्षपरिज्ञानं, यावदेव च किमपि पार्थक्यमवतिष्ठते, तावदेव प्रणयिहृदयं न पूर्णतामायाति। क्व च सार्वभौमः नयाभिज्ञः लोकाचारनिर्णयप्रवीणः नरपतिः, क्व च आ जन्मनः तपोवने तपोधनैः ऋषिभिः अनुलालिता ऋषितनया धूसरवल्कलपिधानेन व्रीड़ां वारयन्ती!! महदन्तरमपीत्थं विस्मृत्य यदैव हि नरपतिः शकुन्तलाचरितमहीयस्त्वं स्वान्ववायाङ्कुरोपजननैकोपादानभूतत्वञ्चावगत्य शकुन्तलाऽङ्घ्रितलमध्यधि स्वसार्वभौमोचितमर्य्यादामभिमानञ्चाखिलं परिहृत्य स्वीयमुच्छ्रितं शिरः अवनिनंसति स्म, तदैव तद्धृदयं पूर्णतामयासीत्; तावदेव च रसभावनिबन्धनी अन्योन्यसंश्रया प्रेमलतिका तनयस्नेहरसेन विवृद्धिं गता परस्परस्योपरि पर्य्यचीयततराम्। एवमेव महाकविः भवभूतिरप्याह, "प्रसवः खलु प्रकर्षपर्य्यन्तः स्नेहस्य। परं चैतदन्योन्यसंश्लेषणं पित्रोः।—

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात्।
आनन्दग्रन्थिरेकोऽयमपत्यमिति बध्यते॥" इति।

इत्यमेव कविना, अनेनैव आनन्दग्रन्थिनाऽपत्यरूपेण संवर्द्धितं मधुरं मङ्गलैकोपादानं तयोरन्योऽन्यसम्मिलनं समपादि।

---

प्रागस्माभिः निसर्गमहनीयौजसः राजर्षेः दुष्मन्तस्य चरितगतं यद्यद् वैशिष्ट्यमदर्शि, तस्मात् ऋते अत्रास्ति अन्यः कोऽपि वचनशेषः, तमिदानीं वयं कथयितुं उद्यच्छामः। पुरा हि वयमदर्शाम, यत् प्रेम्णां पूततायां गभीरतायाञ्चास्माकं युगपत् समक्षमापतितायां सत्यां सततमेवैतत् मानसपथमधिकृत्य समुदेति तावत् राज्ञः दुष्मन्तस्य चरितं न भवति निसर्गतोऽनरालशकुन्तलास्वभावसम्मितं, तस्मात्तु ईषत् परिहीणमेवासीत्; परन्तु कविना तदीयं महोदारचरितं हीनं परिकल्प्य स्वग्रथितवस्तुनि न सन्निवेशितम्; भवति चेदेवं तदाऽसौ न कथमपि शकुन्तलाऽकुटिलप्रणयैकपात्रं भवितुमर्हतीति; तदा चैतन्नाटकं नातिरुचिरं स्यात्, बहुषु स्थलेषु च रसभावविभावादिभिः परिहृतं सदैव सहृदयानां श्रुतिसुखैकभूमिः न स्यात्। महर्षेः दुर्वाससः अभिशापव्याजेन सर्वमेतदव्याहतमकरोत् कविरिति वयं पूर्वमेव ऐचिच्छामहि। ऋते च तेभ्यः बहुषु स्थलेषु एव नरपतेः हृदयस्थलपिहितम् अविवेकोद्भूतकर्म्मफलभूतं पश्चादनुतापं दर्शयित्वा तत्तु कियदेव दोषाभावपरीतमित्येवाख्यत् तन्नताऽदोषत्वं कथञ्चिदेव संररक्ष च। तथाहि कुलपतिकण्वाश्रमपदं नीत्वैव नरपतिं कविस्तस्य हृदयान्तर्लीनं विरोधं वक्ष्यमाणप्रकारेणानेनैव सूचयामास, यथा,—"शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य" इत्यादि। यदा तु शकुन्तलालावण्यमवलोक्यैव नरपतिः तन्नतचेताः विमूढश्चासीत्, तदैव

दुष्मन्तः।

तन्मनसि प्रबलतरः व्याकुलीभावः संशयश्च समुदेति स्म; अचिन्तयच्च मनसि, "अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत्" इति; ततश्च तत्सखीवचसा सम्यगवबुध्य उवाच, "आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम्" इत्यादि। एतेनैव कविः कियदेव तद्धृदयतलं संशयाकुलमासीत् तत्तु स्फुटमेवावोचत्। दुष्मन्तस्तु स्वमुखेनैव आत्मनः यत् महीयस्त्वमुत्कीर्त्तयति नूनं तेन हि तच्चरितस्य माहात्म्यं परं प्रकर्षमागतमिति तु न वयमनुमिन्मः। तथा हि—

"असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥" इति।

अत्र हि महाकविः दुष्मन्तस्य वचसा निगूढ़मेकं तत्त्वमस्माकं प्रत्यक्षतामानिनाय; तत्त्वस्यैवंविधस्याविष्कृतिः नूनं तत्काव्यैकोत्कर्षसाधिका इत्यत्र तु नास्ति सन्देहावसरः। मीमांसाशासनैकगुरवः भट्टकुमारिलपादाः तस्याः कवेर्गिरः याथार्थ्यवस्तुनि यत् स्वाभिमतमवोचन् तद् वयं पुरतः अदीदृशाम; परन्तु राज्ञः स्ववचसि स्वगुणप्रख्यापनमात्मप्रशंसासूचकमेवेति नान्यदेतस्मादपरं किमपि; तथाहि, तदीयं मनः आर्य्यमतीव पूतं दोषलेशविनिर्मुक्तमासीत्, असौ नृपतिः पुनः स्वयमेव महानुभवः विशुद्धसत्त्वस्वभावसम्पन्नश्च बभूव। अतस्तदीया अन्तःकरणप्रवृत्तयः धर्म्माधर्म्मविनिश्चायकत्वेन प्रमाणीभूताः गुणदोषविनिर्णायिकाश्च; इत्थमात्ममुखेनैव स्वगुणोत्कीर्त्तनं न हि तावत् भवति तदीयमहत्त्वसंसूचकम्; स हि यतशः कुसुमशरशरप्रहारभिन्नमर्म्मा शकुन्तलासङ्गतचित्तवृत्तिरपि साधारणपुरुषः यथा यत् यदेव कर्म्म विमुग्धचेताः विलुप्तधैर्य्यश्च कुरुते, स्वाभिलाषानुरूपिकामनुकूलाञ्च विविधां युक्तिं तर्काभासांश्च सृजति, तथैवासौ तदानीमन्वष्ठात्।

सन्दर्भेणामुना नः कविरेतदेव विज्ञापयति, यत् नरपतिरपि दुष्मन्तः साधारणनर इवासीत्, न तु कन्दर्पविजेता हर इव निर्जितेन्द्रियग्रामः देवोपमसौभाग्यभागिति ।

द्वितीये चाङ्के दृश्यते—यदा हि विदूषकः राजानमुपगम्योवाच "लङ्घुं लङ्घुं गच्छदु भवं" इति, तदा असावब्रवीत् "परवती खलु तत्रभवती, न च सन्निहितगुरुजना" इति। एतेनैतदवगम्यते यत् तन्मनः तदानीं महता संशयव्यालेन आकुलीकृतमिति ; तृतीये चाङ्के प्रथमतश्चैतदेव दृश्यते यत् तादृग्व्याकुलीभावश्च तद्धृदयात् तदानीमपि नापासरदिति ; यतश्चेत्थं स स्वगतमेवाभ्यधात् ;—

"जाने तपसो वीर्य्यं सा बाला परवतीति मे विदितम् ।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् ॥" इति ।

अदम्यायाः तदीयसमागमलिप्सायाः प्रभावात् एवंविधा अपि संशयाः तद्धृदयात् सममेव व्यलुपन्, अनुपपत्तिरपि तावती अपासार्षीत् ; यदा हि शकुन्तला आत्मनैवमेव यथायथमुवाच, "ण माणणीयेसु जणेसु अत्ताणं अवराहइस्सं" इति "ण क्खु अत्तणो पहवामि" इति च, तदा तु नरपतिरात्मसंयमने अतीवासमर्थः आसीत् । सत्यप्येवं, तथापि कविरेतदेव नः ज्ञापयति, यत् राजा कामोपहतचेताः सन्नपि निरवच्छिन्नविवेकविरहितः हठकामुक इव नासीत् इति ; तदेव स्फुटीकर्त्तुं शकुन्तलासमागमस्य चैकं धर्म्म्यम् अभ्युपायमुद्भावयन् ब्रवीति स्म ;—

"गान्धर्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः ॥" इति ।

इत्थमेव, गान्धर्वपरिणयेन मिथुनयोस्तयोः दाम्पत्यसम्मिलनं संविधाय कविः शकुन्तलासमागमसम्भूतस्य नरपतेरदम्यस्य

प्रणयस्य यौवनविकारनिसर्गसुलभं सम्मोहविजृम्भितं धर्मेण सतां विदुषां समाजेन च सार्द्धं सङ्गमय्य अन्योन्याविरोधित्वम् अक्षतमकरोत्; यदि ह्ययं गान्धर्वोद्वाहः न भवेत्, तदा हि भारतीयानामार्य्याणां मनुप्रभृतीनां धर्मानुशासनकृताञ्च शास-मानुसारतः तद्ग्रथितमेतत् नाटकमतीव विदुषां हेयं भवेत्; अपि चैतत् प्रेमानार्य्याणां विवेकविज्ञानविरहितानां जुगुप्सित-लालसापरितृप्तिमात्रपर्य्यवसायि सञ्जायेत। एवमेव निन्दित-पदार्थोपवर्णनं न हि भवति काव्यकलाविधिविज्ञानकुशलानां सभ्यानां सम्मतम्; अतः हि कविनाप्यमुना काव्यकौशलसौन्दर्य्यं सुसंरक्षितुमन्योऽन्यमविरोधित्वञ्च प्रतिपादयितुमाभ्यन्तरिक-विधिनिवहानां सम्यक् विन्यासोऽकारि। तेषु च पञ्चमाङ्क-गतमेतदेव प्रधानमन्तर्विरोधकारकं शकुन्तलाप्रत्याख्यान-प्रसञ्जनम्। तत्र चैतदेव दृश्यते यत् शकुन्तलायाः प्रथम-दर्शनात् प्रभृति राज्ञः चेतसि एवंविधान्तःसन्देहसन्दोहः समुपास्थित; तथा हि—नरपतिः कण्वशिष्यपरिवृतां शकु-न्तलामवलोक्याह;—

"केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम्॥"इति।

शकुन्तलामवलोक्यैव सपदि तद्धृदयं राकाचन्द्रोदयमाकाङ्क्ष-माणः रत्नाकर इव वेलावलयभूभागमभ्यरुणत्; तथाप्यसौ सहजधीरतया तथाभूतमपि चाञ्चल्यं स्थिरधिषणया झटित्येव न्यवारीत्; आह च,—"अनिर्वर्ण्यं खलु परकलत्रम्" इति। ततश्च यदा पुनस्तदवबोधनाय गौतमी शकुन्तलाऽवगुण्ठन-मपासीसरत्, तदा हि नरपतिः तस्या अनिर्वचनीयं लावण्यं निर्वर्ण्य किं कर्त्तव्यविमूढः विमुग्धश्चाभूत्; स्वगतमभिदधे च;—

"इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिग्रहीतं स्यान्नवेत्यध्यवस्यन्।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्॥" इति।

ततश्च यदा शकुन्तला असम्भाविताकस्मिकावमाननोपहतबुद्धिः सती तारस्वरेण निर्भर्त्स्य उवाच राजानं, तदानीमप्यसौ अलौकिकं तदीयं रोषकषायिताच्छामाननसौन्दर्य्यमवलोक्यैव मुमुदेतराम्; अभिदधे च स्वयमेव,—

"मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताच्या
भग्नं शरासनमिवातिरुषा स्मरस्य॥" इति।

अभितस्तु तद्विवेकः प्रबलतमश्चाभूत्; एकतश्च ऋषेरभ्यनुज्ञा, अपरतश्च निरूपमा वरवर्णिनी युवती तदङ्कमधिरोढुं स्वयमेव याचते, अन्यतश्च परपरिग्रहसमाश्लेषकिल्बिषभीरुत्वम्; ईदृशे तुमुले मानसैकनिकायसंशयसंग्रामे समुपस्थिते, तदीया विवेकधीरेव सर्वं जिगाय। ईदृगन्तःसङ्गतविरोधानां महता रभसैवोपचितानां दुष्मन्तचरितनिहितानां गुणदोषाणां सुस्फुटमेव विवृतिरधुना प्रदर्श्यते, यदसौ नृपतिः लावण्यवत्या अस्या वरवर्णिन्या आलोकनात् प्रभृत्येव दोलाचलचित्तवृत्तिरभूत्। ईदृशीमेव विषमामवस्थामुपगत्यापि नरपतिः तादृशचाञ्चल्येनाभिभूतः नाभूत्; तदीयश्च यथाकालोचितं कर्त्तव्यज्ञानं विवेकधीरपि न्यूनाधिकतया अप्रतिहते एवास्तामिति। कविः हि दुष्मन्तं प्रमापुरुषमिव निखिलसज्जनाग्रगं लोकैकादर्शभूतं विधाय नास्राक्षीत्, तथैव च नाववर्णत्; असौ एव हि न आदर्शभूतः अमलः प्रणयिपुरुषप्रधानतमः, तथाभूतः, पतिः,

तथाविध एव नरपतिवरेण्यः इति। स तु एतावदेव दर्शयति,—विद्यते यदि हि एतस्मिन् मानवस्वभावसुलभं साधारणं दौर्बल्यं, विद्यते च सामान्यपुरुषस्य इवास्य विकारवश्यतागमनं, तथापि तस्मिन् राजोचितमहत्त्वं वर्त्तते। ईदृशे हि अन्योऽन्यापातविरुद्धे दुर्बलत्वमहत्त्वे मनुजत्वदेवत्वे च युगपदेकीकृत्य नृपमणिं दुष्मन्तं सततमेव अपरूपहृदयग्राहिचरितं व्यधित कविः। यद्यप्येवं, तथाप्यसौ महोन्नतगुणग्राममयोगात् सतामनुशीलितं आ मनोः क्षुस्रं सुपन्थानं विक्रममाणः सदाचारपूतोन्नतं, कियदपि अनुपमः साधुचरितोऽपरिमिताऽवदाताशयः सभ्यहृदयतोषकरचरितश्च आसीदित्यत्र नास्ति कोऽपि सन्देहलेशः।

पञ्चमाङ्कस्य प्रथमतः एव हंसवतीसङ्गीतमाकर्ण्य राजा यत् किमप्येकं वचनमुवाच, तेनैव तस्य भाविनः मानसस्थलमारूढस्यान्तःस्थद्वैधीभावस्य वीजमुप्तमासीदित्यनुमीयते। स हि उवाच, "किं नु खलु गीतमेवंविधमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि ;—

"रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्व्वं
भावस्थिराणि जननान्तरसौहृदानि॥" इति।

अनुपमस्तावदेषः श्लोकः ; यतश्चात्र कविः मनुजानां हृदयकन्दराभ्यन्तरनिहितवृत्तिं सुविश्लिष्यैव, अन्तर्हृदयमधिशयानञ्च सुगभीरं सत्यमेतदाविष्कृत्य समक्षमस्माकं तदनैषीदिति। न ह्येतत् विचित्रं यत् मनोहराणि दृश्यानि दृष्ट्वा, मधुरञ्च सङ्गीतमाकर्ण्य, रसविदां विशेषज्ञानां मनसि इत्थमेव भावः सततं समुदेतीति। एवं लोचनान्तरालनिहितं सत्यमाविष्कृत्य सर्वेषामेव मनुजानां तदेव प्रज्ञापथमानयतः कवेः कालि-

दासस्य अलोकसामान्यकवित्वकीर्त्तेः एतदेव पर्य्याप्तं निदर्शनम्। तत् यदेवास्तु, प्रकृतमिदानीमनुसरामः।

यद्यपि हि पुरा दुर्वाससः अभिशापप्रभावादेव तस्य कियदेव स्मृतिशक्तिविकाशव्याघातः व्यजायत, तथापि तस्य शकुन्तलाप्रणयरसोपभोगजहर्षानुभवेन जायमानः संस्कारः तदानीं प्राक्तनः संस्कारः इव नातिविलुप्तः नातिस्फुटश्चाभूत्। मधुरगीतश्रवणसमकालमेवासावेव संस्कारः कथञ्चिदेवोद्‌बोद्धुमुद्‌युङ्क्ते, तथापि सुविकाशमासादयितुञ्च न शक्नोति, केवलमनिशमेव हृदयमाकुलीकरोति। पञ्चमाङ्कावसाने हि शकुन्तलेरितं वचः कथमपि राजानं तद्धृदयदरीशयसन्दोहमपाकृत्य प्रत्याययति तदन्तर्निहितसंस्कारोद्बोधम्। स तु महतायासेनापि तादृशोद्बोधकसमवधानाभावात् कथञ्चिदेव तत् स्मर्त्तुमपि न शशाक। तथाहि,—

"कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम्।
बलवत्तु दूयमानं प्रत्याययतीव मे हृदयम्॥" इति।

कविना कालिदासेन एवम्भूतानामन्तर्विरोधानां परस्परव्यवहारपरम्पराहतिप्रभावसमुत्थानां विविधानां विधानात् शाकुन्तले सम्यक् समुत्कर्षं साधितवान्।

नाट्योत्कर्ष-विचारः

कविः स्वनाटके मानवहृदयस्थविसंवादिवृत्तिनिवहानां वैषम्यं प्रदर्श्य नाटकस्य मूलीभूतमाख्यानं प्रवर्द्धयितुं शक्नोति; अथवा अवान्तरविषयाणां नानावैचित्र्यं प्रदर्श्य तेषां घातप्रतिघातेन नाटकं ग्रन्थयितुमीष्टे। यत्र च नाटके द्वयोश्चैतयोः नाट्यकलापाटवयोः यावानेव अन्तर्विरोधः प्रबलीभूतश्च तिष्ठति, तावदेव नाटकम् अन्येभ्यः ख्यातिभाजनं भवति, तावतैव मनुजमानसवृत्तिनिवहं लोकस्वभावञ्च सुविकाशं यथायथञ्चोपवर्णयितुमेवासौ समीचीन-

मवसरं लभते। इदानीन्तने नाटकीयवस्तुनीव अभिज्ञान-शकुन्तले कविः कालिदासः विविधानां वृत्तान्तानां वैचित्र्यं प्रदर्शयितुं न हि यतते स्म। स हि मानसवृत्तिव्यूहानां परस्परं विरुध्यमानानाम् ऐकाधिकरण्येन चरितानि विकाशयामास। दुष्मन्तचरिते इव शकुन्तलाचरितेऽपि एवंविधानां मानस-भावानां भूयसामन्योन्यविरोधः अस्माभिः यथायथमदर्शि बहुषु स्थलेषु।

राजर्षेः दुष्मन्तस्य कांश्चित् वहिश्चरान् राजोचितान् शौर्य्य-गाम्भीर्य्यस्वकर्त्तव्यप्रियत्वप्रजारञ्जकत्वादिगुणसङ्घान् कविरस्माकं प्रत्यक्षं पातयामास, तद्वीरत्वनिदर्शनं किमपि कार्य्यतः न विकाशयाञ्चक्रे, किन्तु केवलमव-वर्णत्; यथा हि प्रथमाङ्के सूतः,—

राज्ञो वीरत्व-वर्णना

"कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्म्मुके।
मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम्॥" इति।

द्वितीयाङ्के सेनापतिः,—

"अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा
रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति॥" इति।

तृतीयाङ्के यजमानशिष्यवचने यज्ञविघ्नसमुत्पादकानां राक्षसानाम् अपसारणवर्णने,—

"का कथा बाणसन्धाने ज्याशब्देनैव दूरतः।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति॥" इति।

षष्ठाङ्के मातलिरिन्द्रसूतः अतीव दुर्द्धर्षान् वृत्रघ्नोऽपि अवध्यान् दनुजान् निहन्तुं तमममन्यत; अत्र हि कविः सुकौशलमास्थाय उपमामहिम्ना महेन्द्रस्यापि महीयस्त्वम्

अव्याहतमकार्षीत्, असुरानेव निहन्तुं राज्ञः दुष्मन्तस्य प्रयोजनमपि भवतीति व्यजिज्ञपत्। तथा हि मातलिः,—

"सख्युस्ते स किल शतक्रतोरबध्यः
तस्य त्वं रणशिरसि स्मृतो निहन्ता।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः॥" इति।

ततश्च सप्तमाङ्के मातलेर्वचसा चैतदेव ज्ञायते, यत् नृपतिः आनतपर्वणा आत्मसायकेन त्रिदिवलोकमुद्धृतदानवकण्टकं कृत्वा प्रत्यावर्त्तत इति। गतं तावत् तद्वीरत्वनिदर्शनम्।

तदीयं स्वकर्त्तव्यानुपालनञ्च कविः एवमङ्कापयामास। तथाहि, वैखानसप्रतिषेधमात्रत एव नृपतिः आश्रममृगमभिलक्ष्य शरमनुसन्दधदपि तस्मात् प्रत्यावर्त्तत।

कर्त्तव्यनिष्ठा

तृतीयाङ्के च यदाऽसौ कामोपहतचेताः विलुप्तधैर्य्यश्च शकुन्तलाविप्रयोगातिव्याकुलहृदयः पुनरपि तत्समागमोत्कमनाश्वासीत्, तदैव नेपथ्यभवनात् याज्ञिकानां भीतिविह्वलानामार्त्तनिनाद उदियाय। यथा हि,—

"सायन्तने सवनकर्म्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम्॥"

इति श्रुतिसमकालमेव नृपतिः "मा भैष्ट मा भैष्ट, अयमहमागत एव" इत्यभीक्ष्णं ब्रुवन्, द्राक् तदनुसरणक्रमेण चलितः।

यदा तु षष्ठाङ्के मातलिः देवकृत्यसम्पादनाय नरपतिं स्वर्लोकमानेतुं राजपुरमायातः, तदा कविना तावत् साहजिकमभ्युपायमादाय नियतशकुन्तलागभीरानुध्यानोद्विग्नमानसस्य नरपतेः प्रज्ञा पुनर्नहि समपादि। शकुन्तलाऽयथाप्रत्याख्यान-

जनितानुतापेन अतीव तीव्रेण च अरुन्तुदेन तद्विरहजसन्ताप-वह्निना तद्धृदयमेतावदभिभूतमकारि, यत् सहजतः एव तन्मोहकलिलं शोकान्धतमसं नापसरिष्यति इत्यनुमितं मातलिना। अतः सम्यक् समालोच्य मानसं प्रकृतिस्थमापादयितुमेव तं विदूषकस्योपरि सः सहसा शिरोधराप्रत्यामोड़न-रूपम् उत्पीड़नमापातयामास। तथाहि,—

"ज्वलति चलितेन्धनोऽग्निः विप्रकृतः पन्नगः फणां कुरुते।
तेजस्वी संक्षोभात् प्रायः प्रतिपद्यते तेजः॥" इति।

अनेनैवात्यल्पव्यापारेण कविरस्मानेतदेवादर्शयत् यत् कुसुमायुध-प्रभावजचापल्येन तदीयं मानसं यावदेव विकलमभूत्, शकुन्तलाप्रत्याख्यानजानुशयजनितं दैन्यं तदवसादश्च ततोऽपि प्रबलतमः आसीदिति। तथापि राजकर्माणि पर्य्यवलोकितुमसौ नरपतिः कृतप्रयत्नः स्वकर्त्तव्यपराङ्मुखश्च न बभूव। पञ्चमाङ्के कविः कञ्चुकिवचसा तदेव प्रतिपादयति ; यथा,—

"प्रजाः प्रजाः स्वा इव तन्त्रयित्वा
निषेवते श्रान्तमना विविक्तम्।
यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः॥" इति।

एतस्मादेव विज्ञायते यत् भूपतेः ऋतुपर्णस्येव दुष्मन्तस्य निखिलानि कर्माणि न विलाससागरसलिलनिमग्नान्यासन्निति, स स्वयमेव राज्ञः कर्त्तव्यत्वेन मन्वादिभिः परिकीर्त्तितं प्रजानां विनयाधानं परिपालनं भरणादिकं सर्वमेव साधयति। मागधद्वयो तु स्तुतिवादव्यपदेशेन राज्ञः तथाविधामेव प्रजा-पालनानुरक्तिम् उदबोधयत्। तथाहि,—

"नियमयसि विमार्गप्रस्थितानात्तदण्डः
प्रशमयसि विवादं कल्पसे रक्षणाय।

अतनुषु विभवेषु ज्ञातयः संविभक्ताः
त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् ॥" इति ।

नरपतिरात्मनैवैतदभिधत्ते, यदसौ "स्वहस्तधृतदण्डमिवात-पत्रं राज्यं" संपाल्य श्रान्तोऽभवदिति । शकुन्तलाविरहेण प्रियाप्रत्याख्यानजनितानुतापानलेन च यदा खिन्नः किमपि राजकार्य्यं पर्य्यालोचयितुं सम्यगसमर्थश्चासीत्, तदानीमपि मन्त्रिषु कुलक्रमागतेषु वृद्धतमेषु अपि राजकार्य्याणि सम्यक् सन्न्यस्य न स्थिरचेताः अभूत् । तादृशावस्थामापन्नेन नरेन्द्रेण मन्त्रिप्रवरोऽभिदधे,—"यत् प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत् पत्रमारोप्य प्रस्थाप्यताम्" इति ; ततश्चामात्यप्रवरेण पत्रा-रोपितं नौव्यसनविपन्नस्य अतुलविभवशालिनः धनिकधनवृद्धेः अधिकारिविनिरूपणविधायकं पौरकर्म पर्य्यालोच्य विविधं वादमाकर्ण्य विनिरणायि नरनाथेन, यदमुष्य धनवृद्धेः अनेक-कोटिसंख्यातं वसु समादाय सचिवानुमोदितं धनलुब्धजनोचितं चापररिक्थापहरणानुरूपं कृत्यमविधेयम्, अतः आपन्न-सत्त्वायाश्चास्य वणिजः पत्न्या गर्भः एव पित्र्यरिक्थमर्हतीति । सन्ततिरनवाप्तिदशायान्तु परलोकं प्रयातस्य पुरुषस्य रिक्थ-ञ्चेदन्यैरधिकृतं स्यात् तदा तदतीव सुदुःसहं भवेत्, इत्थमेवानिशं विचिन्त्य प्रकृतिषु नितरां प्रेमवतः पितुरिव तस्य दयार्द्रं हृदयं तदानीमतीव प्रणयप्रवणमभूदिति । तेन प्रजानामाकस्मिके कस्मिंश्चिद् दुःखे, परिजनानां बन्धुसङ्घानाञ्च असम्भाविते विप्रयोगे समागते सति तेषामिव तस्यापि हृदि सहजधीरे सहानुभूतिसैतवाहिनीपूरः उद्वेलितश्चाभूत् । अत एवोवाच नरपतिः,—

"येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् ॥" इति ।

एतेनैतत् प्रतिभाति,—यदपुत्रस्य नरपतेः अपत्यावाप्तिनिबन्धनं शोकं सम्यक् संधुक्षयितुमेव विपन्नस्य धनवृद्धेः व्यवहारः विनिवेशितः कविना ; अपि च अचिरकालेनैव नरपतेः समालब्धतनयाननसुधांशुसुधापानं न ह्यसम्भावितमित्यस्य बीजमत्रास्ति निहितमिति।

अनपत्यता

भगवता नाट्यगुरुणा भरतेन स्वनाट्यशास्त्रे नायकस्य यानि यानि लक्षणानि विनिर्दिष्टानि, कविना कालिदासेन प्रायशः तानि सर्वाण्येव दुष्मन्तभूमिकायाम् अक्षतान्यकारिषत। यथाहि नाट्यशास्त्रे चतुर्विंशाध्याये ;—

नायकलक्षणम्

"शीलवान् बुद्धिसम्पन्नः सत्यवादी जितेन्द्रियः।
दक्षः प्रगल्भः स्मृतिमान् विक्रान्तो धृतिमान् शुचिः॥
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवागपि।
लोकपालव्रतचरः शूरो धीरः क्षमान्वितः॥
उत्थितश्चाप्रमत्तश्च वृद्धः स्मृत्यर्थशास्त्रवित्।
नानानाट्यप्रचारज्ञ ऊहापोहविचक्षणः॥
परभावेङ्गितज्ञश्च षाड्गुण्येनाप्यलङ्कृतः।
नानाशास्त्रार्थतत्त्वज्ञो नानाशिल्पप्रयोजकः॥
स्थानवृद्धिक्षयज्ञश्च परराष्ट्रविचक्षणः।
कृतज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः॥" इति।

महाकविः तत्रभवान् कालिदासः स्वप्रणीते नाटकत्रये राजानमेव नायकमकरोत्, नान्यम् ; प्रायशः संस्कृतभाषया रूपकरचयितृभिः भूरिषु स्थलेषु एवमेवाकार्य्यत ; तत्रेदमाकूतं मन्वादिभिस्तु भगवद्भिः धर्म्मसंहिताकृद्भिः,—

"महती देवता ह्येषा नररूपेण तिष्ठति।"
"अष्टानां लोकपालानां मात्राभिर्जायते नृपः।" इति।

यतो ह्यसौ नरपतिः लोकसमाजानां नियन्ता धर्मस्य च संरक्षकः, अत एव काव्यानां महीयस्त्वमक्षतं विधातुं ते एव नृपाः कविभिः नायकभूमिकासु अध्यारोपिताः ।

नाटकसधर्मसु प्रकरणेषु अन्यविधेषु च रूपकेषु मृच्छकटिके मल्लिकामारुतादौ च प्रकरणे विप्रामात्यवणिक्प्रभृतीनां राजेतरनायकानां विविधाः कथा अनुश्रूयन्ते ; नाटकेषु हि केवलं प्रख्यातवंश्यानां राजर्षीणां नायकभूमिकास्ववतरणम् आलङ्कारिकादीनां सम्मतम् ।

अधुनातनेषु पाश्चात्त्यदेशप्रसिद्धेषु नाटकेषु अल्पीयःसु एव राजानः नायकभूमिकामधिरोहन्ति, इति दृश्यते । यतः

पाश्चात्य नायकरीतिः

तत्रत्याः भूमानो हि कवयः मनुजचरिते यदेव स्वभावसुन्दरं जुगुप्सितं, मेध्यममेध्यं, उज्ज्वलमनुज्ज्वलं, रुचिकरं न्यक्कारसूचकं, महद्गुणभूतञ्च, तत् सर्वेषां विच्छेदं सविमर्शञ्च प्रदर्शनमेव उद्देश्यीभूतं मन्यन्ते ; तदर्थमेव हि ते सर्वमेवैतत् काव्यस्याङ्गीभूतं भवितुमर्हतीत्यङ्गीकुर्वन्ति ; अतो हि ते प्रतीच्याः कवयः हीनचरितमपि पुरुषं नायकत्वेन जगृहुः स्वस्वग्रथितवस्तुनीति ।

यतो ह्यसौ नरपतिः लोकसमाजानां नियन्ता धर्म्मस्य च संरक्षकः, अत एव काव्यानां महीयस्त्वमक्षतं विधातुं ते एव नृपाः कविभिः नायकभूमिकासु अध्यारोपिताः ।

नाटकसधर्म्मसु प्रकरणेषु अन्यविधेषु च रूपकेषु मृच्छकटिके मल्लिकामारुतादौ च प्रकरणे विप्रामात्यवणिक्प्रभृतीनां राजेतरनायकानां विविधाः कथा अनुश्रूयन्ते ; नाटकेषु हि केवलं प्रख्यातवंश्यानां राजर्षीणां नायकभूमिकास्ववतरणम् आलङ्कारिकादीनां सम्मतम् ।

अधुनातनेषु पाश्चात्यदेशप्रसिद्धेषु नाटकेषु अल्पीयःसु एव राजानः नायकभूमिकामधिरोहन्ति, इति दृश्यते । यतः

पाश्चात्य नायकरीतिः

तत्रत्याः भूमानो हि कवयः मनुजचरिते यदेव स्वभावसुन्दरं जुगुप्सितं, मेध्यममेध्यं, उज्ज्वलमनुज्ज्वलं, रुचिकरं न्यक्कारसूचकं, महदणुभूतञ्च, तत् सर्वेषां विच्छेदं सविमर्षञ्च प्रदर्शनमेव उद्देश्यीभूतं मन्यन्ते ; तदर्थमेव हि ते सर्वमेवैतत् काव्यस्याङ्गीभूतं भवितुमर्हतीत्यङ्गीकुर्वन्ति ; अतो हि ते प्रतीच्याः कवयः हीनचरितमपि पुरुषं नायकत्वेन जगृहुः स्वस्वग्रथितवस्तुनीति ।

## अनसूया-प्रियंवदे ।

महाभारतान्तर्निहितायामाख्यायिकायां शकुन्तलाप्रियसख्योरनसूया-प्रियंवदयोर्नास्ति संवादः । पद्मपुराणान्तर्गत-

पौराणिकोपाख्यानम् ।

मुपाख्यानान्तरमेकमस्ति ; तत्र बहुकुमारीजनान्तर्वर्त्तिनीं कैरविणीपरिवृतां मरालिकामिव शकुन्तलामद्राक्षीत् नरपतिरिति । प्रियंवदेति नाम काचिदालिः तदीया आसीदित्यपि तत्रोल्लिखितमस्ति, तदीयं चरितन्तु सुविश्लिष्य किमपि न दर्शितं

तद्गतवैचित्र्यं वा तत्र कविना। अनसूयायास्तु तत्र नामापि नास्ति, का कथा तच्चरितोपवर्णनस्य। ततश्चैतत्सखीजनयोः चरितसर्ज्जनं महाकविना कालिदासेनैव स्वप्रतिभाशक्त्या विसृष्टाकारीति मन्यामहे। द्वयोरेवैतयोः तद्वदुद्भिन्ननवयौवनयोः वयस्ययोः मध्यगताम् उपवर्ण्य शकुन्तलां कविः प्रकामं सहृदयहृदयग्राहिणीमकार्षीत्। ताभ्याञ्च सार्द्धं विविधानाम् अन्योन्यहार्द्दसूचकानां मनुजमानसविद्राविणां भावानां व्यतीहारात् नर्म्मोपहास-बहुलालाप-चपाकरकराभिमर्षाच्च शकुन्तलाचरितमुकुलं सुविकस्वरमकरोत्। प्रथमाङ्के हि राज्ञा यदा शकुन्तला प्रथममालुलोके, तदानीमसौ न केवलं शकुन्तलाम्, अपि तु प्रियसखीद्वयपरिवृतां तामालोक्यैव नितराममोदिष्ट। यदा ह्यसौ रुचिरदर्शनानां तपस्विकन्यकाजनानां शुद्धान्तदुर्लभानुपमलावण्यभूषितानिन्दनीयवपुरवलोकनादेव सपदि विमुग्धः सन् सुजनोचितं विनयं सदाचारांश्च विहाय तस्करायमाणः विटपान्तरितकायः ताः साग्रहं शश्वत् निरीच्यालमत्यपत्; तदानीमप्यसौ सखीजनपरिवृतां शकुन्तलां पृथक्कारं न हि तूष्णीमैच्छिष्ट; तत्सखीजनसमाजमवलोक्य स्थाने खलु हर्षसागरनिर्भरनिमग्नोऽभूत्; नवयौवनोद्गमस्य निरुपमेण विद्युद्विलोलमनोरमेण रामणीयकेन तत्सखीद्वितयं शकुन्तलां तावत् तथाविधसहृदयहृदयतलान्तःस्पर्शिनीमकार्षीत्; प्रारभ्य तपोवनावस्थानम् आ भर्त्तृगृहगमनात् शकुन्तलाचरितं यावदेवास्मभ्यमदर्शि कविना, तावत् तु प्राधान्येन सखीजनैरितवचोनिचयात् विकसितम्; शकुन्तलायाः वचसा स्तोकश एव विवृतम्; अन्तरान्तरा च शकुन्तला केवलं कदापि स्वाकारेङ्गितादिभिः द्वित्रेण वचसा च स्वमानसामोदिसुकुमारकुसुमान्तरनिर्गतं भावसौरभं व्यक्तीकृतवती।

प्रथमे तृतीये चाङ्के नृपेण साकं मिथः सम्भाषणं समधिकं स्निग्ध-सखीद्वयानुकूलप्रणयसमीरसमुद्देल्लितकालोचित-सदालाप-प्रवालसञ्चालनबहुलं समपद्यत। एतौ हि सखीजनौ अमलं विलासैकरसं हार्दमानीयेतरेतरप्रियतापथं पातयित्वा च शकुन्तला-दुष्मन्तौ प्रेमदाम्ना दृढ़संयतावकार्ष्टाम्। शकुन्तलाविरहानलवितप्तचेता नरपतिः यदा हि षष्ठाङ्के शकुन्तलामालेख्यार्पितामकरोत्, तदानीमप्यसौ सखीद्वयीं परिहाय शकुन्तलामेकाकिनीमेव नालिखीत्, किन्तु विन्यासाच्चक्रे तत्सखीद्वितयीपरिवृतां तामालेख्यपटे; असौ हि सखीजनान्तःपातिनीं शकुन्तलामेतादृशीमेवालिलेख, यत् विदूषकः प्रागवलोक्य तामन्योन्यमविसंवदन्तीनामाकृतित्रयीणां तासां का शकुन्तलेति यथायथं वेदितुमपि न शशाकेति। अथ संशयसमाकुलमानसः बहुधा वितर्क्य विदूषकः तमप्राक्षीत्, "भो तिस्सिओ आइदिओ दीसन्ति, सव्वाओ ज्जेव दंसणीआओ, ता कदमा एत्थ तत्तभोदी सउन्तला?" इति। नूनं हि शकुन्तलां विज्ञातुं किमप्यायासभूयिष्ठं तस्य नासीत्, सहजतः सः त्वरितमेव तां वेदितुमैशिष्ट; तथापि अनयैव प्रसङ्गसङ्गत्या कविरेतदेव व्यजिज्ञपत् नः, यत् सखीत्रयमेव अन्योन्यसाम्यं शुद्धधियैकगम्यं कियदेवादत्ते इति।

सौन्दर्यसमता

तृतीये चाङ्के सखीद्वयी यदा प्रणयाकुलाक्षीं शकुन्तलां विशाम्पतेः सविधे संस्थाप्य कर्म्मान्तरव्याजेन तद्देशादपासरत्, तदानीन्तु सा प्रियजनविरहिततया किंकर्त्तव्यविमूढ़ाऽभवत्। शङ्के तदानीं कविरपि सखीजनविनाकृतां शकुन्तलामादाय अतीव विह्वलः दौर्बल्योपहतचेताश्चाभवत्; कथमपि गौतमीं तत्र समुपस्थाप्यासौ समाश्वस्तः समजनि, सामाजिकसमूहाश्च कथञ्चित्समुच्छ्वस्य अनुज्ञान्ता बभूवुः। मन्ये एतस्मिन्नेव अंशे

सखीजनविरहिता शकुन्तला तथाविधसामाजिकहृदयग्राहिणी नाभूत्, कियदपि नाटकीयसौन्दर्य्यपरिहीणा शालीनताद्युन्मुक्ता चाभवदिति। स्थले चैतस्मिन् शकुन्तलाचरितमधिकृत्य सज्जनाविनिन्दितां महीयसीं काव्यलावण्यविकाशपद्धतिं सुसंरचितुं कविः नाशकदिति, इत्यमस्माकं मानसपथमनिशमेव समुदेति। गौतमीसमुपस्थितिसमयात् स्वत एव साधूनां सहृदयानां हृदि अनिर्वचनीयैका शान्तिमन्दाकिनीसुधा-सलिलपूरधारा प्रवहति।

अनसूयां प्रियंवदाञ्च कविरेवं शकुन्तलया कुसुमितलतानु-कल्पया विजड़ितां गाढ़समाश्लिष्टाञ्चाकरोत्; यथा असौ कामिनीललामभूता ललनात्रयी एव सम्मिल्य एकीभूताऽभव-दिति, का कथा अन्येषां प्रतीकानाम्; हृदयमपि तासां विधिना एकोपादानसामग्रीविधिनैव निरमायीति।

शङ्के चेदियं सखीद्वयी राजकृतप्रत्याख्यानावसरे तत्र सन्निकृष्टा भवेत्, तदा राज्ञः तथाविधः स्मृतिविभ्रमः न हि जायेतेति; एकतश्च महर्षेः दुर्वाससः अप्रतिहतप्रसरः अभि-सम्पातः, अपरतश्च असन्निहितप्रियसखीजना शकुन्तला, अतो हि न निखिलावयवसम्पन्ना; सखीजनविरहिततयैव ईदृशी-मसम्पूर्णाखिलाङ्गीम् अप्रार्थितोपनतां तपोवनसुलभवेशभावादि-विहीनां कण्वाश्रमे प्रागवलोकितां नवमालिकासेचनव्यस्त-मानसां सरलहृदयां शकुन्तलां नृपमणिः कथं ज्ञातुमीष्टे!! तयोश्च प्रीतिप्रवाहिणी शतपूरधारया तस्या उपरि अभीक्ष्णमेव प्रवहन्ती इत्यदर्शि। वनतोषिणीनां लतिकानामपि तस्या उपरि सान्द्र-स्नेहरसस्रुतिः नितरामभूदिति। एवमेव निराविलमकपटं सुस्निग्धमन्योन्यदृढ़संयतं प्रेमसौरभं न हि सुप्रापं भवति इह भुवि कुत्रचित् काव्यकुसुमदाम्नि प्रथितकविगणविग्रथिते।

कविरेतयोरलौकिकीं चरित्रचित्रावलीं चित्रयित्वा अनिर्वचनीयां स्वकवित्वकीर्त्तिं प्रख्यापयामास ; स्वयशःकुसुमसुरभिमदेन च ककुभमखिलां व्यामामुन्मादिताञ्चाकरोत्। असौ हि द्वावप्येतौ सखीजनौ एकेनैव नैसर्गिकमानसधर्मेण उपलक्षितौ विधाय न हि यथायथमज्ञापयामास ; यथा हि निखिलजगन्निर्म्माणकुशला इयं प्रकृतिः धर्म्मैक्यं संवदन्तीं पदार्थद्वयीं न सृजति, तथा अन्येऽपि कवयः प्रतिचरितं किमपि स्वातन्त्र्यं संरक्ष्य स्वप्रतिपाद्यस्य समुपन्यस्य काव्यकुञ्जे अनुपमं सौन्दर्य्यराशिमालिखन्ति।

अनसूया-प्रियंवदयोः चारित्रे सम्यक् पर्य्यालोचिते इदमेव पार्थक्यमवाप्यते यत् प्रियंवदा चपला रसिका परिहासप्रिया प्रगल्भा हावभावादिनर्मक्रियाकुशला, अनसूया च सुगभीरप्रकृतिः मेधाविनी निसर्गसरलस्वभावा धीमानुध्यानरता चिन्ताचलचेता आसीत् ; वसन्तशोभासमागमात् प्रकृतिलक्ष्म्या इव नवयौवनोद्भेदात् तयोः हृदयं मनः शरीरञ्च लावण्यलीलासलिलतरङ्गायितं चञ्चलञ्चासीत् ; प्रियंवदा शकुन्तला चैतत् सम्यक् वेदितुं शक्नुयात् ; तेनैव हि तयोः चेतः नियतं प्रफुल्लं चकितं प्रेक्षणीयञ्चाभूत्, न त्वनसूयायाः ; यदा हि शकुन्तला अतिदृढपिनद्धं वल्कलं शिथिलयितुमयाचत, तदैवानसूया सरलहृदया किमप्यभाष्य तत् त्वरितमेव अशश्लथत्, प्रियंवदा तु तदेवावलम्ब्य तस्याः "पओहरवित्थारइतुअं अत्तणो जोव्वणारम्भं उवालहस्स" इत्यादिकां विविधां नर्महासावलीं विन्यासाञ्चक्रे। अथ सहकारतरोरधः शकुन्तलां क्षणमवस्थातुमभिधाय "लदासणाधो विअ अअं चूअरुक्खओ परिहादि" एतावत् बहुवादं हासं हासमवोचत् प्रियंवदा ; तदैव पुनः शकुन्तलाऽपि, अतिमुक्तकलतामालोक्याह "हला रमणीओ क्खु कालो इमस्स

पादवमिहुणस्स रदिअरो संवुत्तो, जेण इयं णवकुसुमजोब्बणा णोमालिआ, अअं पि बहुफलदाए उअभोअक्खमो सहआरो" इति। न हि अनसूयायाः अमुं यौवनारम्भमभितः कदापि दृष्टिरासीत्; यदि हि कोऽपि कर्हिचित् व्याजेन केनापि तां नर्म्महासं भाषते, तदाऽपि सा तत्र मास्म मुह्यत्; तावती एव सा अनाविद्धहृदया अभूत्,—यत् कदाप्यसौ आहार्य्यशोभां मायापरीतपरोहासं रसभावावेदनञ्च हृदि मा आधितेति। एकदा तु प्रियंवदा परिहासव्यपदेशेन तामप्राक्षीत् "अणसूए! जाणासि किं णिमित्तं सउन्तला वणदोसिणीं अदिमेत्तं पेक्खदि त्ति"? नायकश्चैतदपि रहस्यजालं भेत्तुं नूनमनसूया, न हि तदभ्यन्तर प्रवष्टुमपीशाञ्चक्रे; उवाच च नाहं किमप्यवबुध्ये, स्फुटमभिधेहि किं कथयसीति। इमन्तु व्यापारमवलम्ब्य शकुन्तला प्रियंवदा च नाव्यलीलामनाटयत्। एतेनैव वाक्प्रसरेणानुमीयते यत् तयोरुभयोः हृदि वनतोषिणीवदनुरूपेण वरेण साकं समागमाभिलाषः तदानीमेवोदियायेति। यासु चान्योन्यप्रासङ्गिकसंकथासु शकुन्तला प्रियंवदा च वैलक्ष्यनिमीलितपक्ष्मलाक्षी भवति तत्रापि अनसूया कामपि शङ्कां मनसि नाधत्ते; आर्त्तसंरक्षणव्यपदेशेन यदा हि विशाम्पतिराश्रमपदमविक्षत् तदा चाजायत तथागतं नृपमणिमालोक्य तदालिङ्गितयी तु रणरणकाकुला। प्रथमं तावत् अनसूया कामपि क्रियमक्लवैव उवाच यत् "ण किम्पि अच्चाहिदं, इअं पिअसही दुट्ठमहुअरेण आउलीकिअमाणा कादरीभूदा" इति। यदा पुनः राज्ञः विवृतिं सम्यक् वेदितुं सर्वा वयस्यः समं समुत्कलिकाकुलाः कुतुकोद्दीप्तकायाश्च समभूवन्, तत्क्षणमेव हि शकुन्तला प्रियंवदा चापत्रपया आस्थमप्युत्सोत्थाभिभाषितं तत्परिचयञ्च प्रष्टुं सहसा हि नायकतां, तत्रा-

नसूयैवाग्रेसरा भूत्वा अप्राक्षीत्। शकुन्तलायाश्च जन्मत एवाखिलमितिहासं सा हि पुरतः सोत्साहं स्वयमेव वर्णयितुमारेभे। परन्तु सा चातीव ऋजुकस्वभावतया कुञ्चितमभिधातुं भ्रूकुटिकुटिलं सेङ्गितञ्चावेदयितुमनभ्यस्ततया हि सर्वमेव विश्वामित्रतपोभङ्गसम्भूतव्यापारं संक्षेपतोऽभिधातुमुद्यताऽपि सपदि न्यवर्त्तिष्ट। यदा तु तयोः नवद्वन्द्वयोरभिनवप्रणयाङ्कुरोद्गमः अभिव्यक्तोऽभवत्, तदा अनसूया अपरां कामपि कथां कथयितुं नाशकत्; प्रियंवदा तु तदा तयोरनतिप्रवीणप्रणयप्रसरमेधितुं कति साहायकान्यकरोत्। प्रेमविकाशविधायिनीं भाषावलीं तदुद्दीपिकाञ्च हावभावावलीं चातुर्य्यलीलाञ्चाधिगत्य अनसूया तु कमपि मारविकारजं चेतोनिकारं नाधिचकार, नातिविह्वला चाभूत्; प्रेमप्रसूनविकाशनपद्धतौ प्रियंवदा एवाग्रणीरभूदिति। सहजतः हि सा प्रेम्णां भावविकारान् तदङ्गीविलासांश्च पर्य्याप्तं वेदितुमक्षमिष्ट; प्रियताञ्च सर्वातिशायिनीं विधातुं, विविधव्यङ्गविव्वोकैः परीहासभूयिष्ठविलासैः नर्म्महासप्रसादैश्च समेधयितुञ्चाशक्नोत्; सैव हि केवलं रतनर्म्माणि अत्यर्थं निपुणा बभूव। यदा तु शकुन्तला तद्वचसि नातिरुष्टा प्रीता च मनसि नितरां कृत्रिमं कोपं परिकल्प्य स्थानात् तस्मादपसर्त्तुमैषीत्, ज्ञापयितुमिच्छन्तीव कियदासीत्, तदानीमनसूयायाः मनसि एतदुदियाय, यत् सा शकुन्तला सत्यं हि तत् स्थानं विहातुमिच्छतीति; तत एव सा तदा त्वरितमुवाच "ण जुत्तं अस्समबासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं" इति; परन्तु सा प्रियंवदां तदा एवंविधेन सहजेनाभ्युपायेन वञ्चयितुं न हि शशाकेति; अतः यदा सा प्रियंवदा किमपि रहस्यमाख्यातुमिव सकैतवमभिहितवती,—

"किं दाणीं ण गच्छीअदि?" इति; तदा तु शकुन्तला किमिदानीं कथयामीति विमृश्य, सर्वथा मनसि अनुध्याय च किमप्यन्यदाविष्कर्त्तुं न हि ऐशिष्टेति। अथ सा अन्यत् किमपि अनीक्षमाणा कृतककोपं प्रदर्श्य उवाच—"दाणीं किं तुह्म आअत्तह्मि? जदो मे रोअदि तदो गमिस्सं" इति। यदा च शकुन्तला अनङ्गशराभिघातव्यथितमर्मा राजर्षेः दुष्मन्तस्याचिर-समागमादृते नियतमेवाहं कीनाशनिकेतनातिथिर्भविष्यामीति व्यजिज्ञपत्, तदानीमेवानसूया आकर्ण्यैव तत् अतिव्याकुला इत्यमभीक्ष्णमनुदध्यौ "को णु उवाओ भवे, जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेह्म?" इति। तदा तु प्रियंवदया अभाणि "णिहुदं त्ति चिन्तणीअं सिग्घं त्ति ण दुक्करं" इति। तथा हि राज्ञा सह चास्याः समागमः अचिरेणैव कालेन सम्पत्स्यते, न चैतदिदानीमस्माभिः सुदुष्करं भविष्यति इति, भणित्वैतत् प्रियंवदा अनसूयां सम्यक् सान्त्वयितुमारेभे; कथञ्चिच्च तन्मानसं चिरध्वस्तां शान्तिमनैषीत्;—यथा हि शकुन्तला राजनि अतीवानुरक्ता, नृपतिरपि तथैवाजायत, तस्य चेक्षणेङ्गितादिभिः तत् व्यक्तीभूतमभूत्; परिज्ञातञ्चास्माभिः स शकुन्तलायामतिमात्रमनुरक्तोऽभवदिति। कथं हि एवं राजा इदानीं विज्ञापनीयो भविष्यति, शकुन्तला चाधुना ईदृशीं दशां गता इत्यालोच्य सा किमप्येकं कौशलं स्वधिया समुद्भावयामास; उवाच च शकुन्तलां,—"अत्तणो उवस्सासाणुरूअं चिन्तेहि ललिदपदाबलिबन्धं" इति; लिपिसाधनाऽभावमवलोक्य तदुपायं कमपि अन्वतिष्ठिपत्। अत्र हि कविः कालिदासः किमपि लिखनसाधनान्तरमनवलभ्य अभिनवनलिनीदलेषु प्रणयगीतिकां लेखयित्वा स्वकीयं नवनीतकोमलं कवित्वकृतित्वं सौन्दर्य्यमाधुर्य्यसम्भारपूर्णमपूर्वमक्षतमकार्षीत्। तथा हि

शकुन्तला तद्गता प्रियता च यादृशी सुकोमला स्वभावसुमधुरा चासीत्, शुकोदरसुकुमारं सुनीलं विसिनीदलमपि तथैव सुयोग्यं मदनलेख्यं पर्य्यवसितमिति।

यस्मिन्नेवावसरे प्रणयलिपिविन्यासनिरतां शकुन्तलामधिगतः नरपतिः, तदा हि अनसूया भूभुजममुं तां सखीमध्यासितुमादिश्यैव तूष्णींबभूव; किमपि च तत्कालोचितमभिभाषितुं न तावत् अलमासीत्।

तर्थीश्वार्थनिर्णय-नैपुण्यम्

प्रियंवदा तु तदा स्वभावसुलभवाङ्नैपुण्यमहिम्ना मह्णीपतये शकुन्तलागतं सर्वमेव दशाविशेषं व्यजिज्ञपत्। भवति हि अभिनवप्रेम्णां कीदृशी गतिः, तत्तु प्रियंवदा विवेदतराम्; यथा हि अन्योऽन्यप्रेम सुविकाशमासाद्य परिपोषणीयतां परितृप्तिञ्च समधिकां जनयति, तदर्थं सा साधु सयत्नाऽभवत्। अनसूया तु केवलं नर्म्महाससम्भाषणविधौ नात्यर्थं निपुणासीत्, परं तु सज्जनसमाजोचिताचारं लोकव्यवहारविधिञ्चातितरां जानाति स्म। यथा हि शकुन्तला विप्रलम्भावर्त्तमालासङ्कुलां कूलङ्कषां प्रणयग्रैवलिनीलहरीलीलामन्तरा निमज्जनोन्मज्जनानिशमेव प्लवमाना सज्जनसमादृतं लोकहितकरं समाजमैहिकं गार्हस्थ्यसुलभममलं सुखञ्च नावसादयति, विवशहृदया उत्कलिकाकुला च न भवति, तत्र सा सततमेव समवहिताऽऽसीत्; अतो हि तया भूमिपतये भणितम्,—"बहुवल्लहा क्खु राआणो सुणीअन्ति, ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि, तधा करिस्सदि" इति। तदाकर्ण्य तु नरपतिः तदपि प्रत्यशृणोत्; यथा,—

"परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररसना चोर्व्वी सखी च युवयोरियम्" ॥ इति।

अथ स्वपुरे प्रत्याहृत्यैव विशाम्पतिः शकुन्तलायामितावत् रंस्यते मोहिष्यति, स्मरिष्यति च तां न वेति नियतमनुध्यायन्ती अनसूया दारुणदरपरीतान्तरा आसीत्। प्रियंवदा तु राज्ञः तथाविधे प्रगाढ़े प्रेम्णि स्थिरतरं प्रत्ययमापत्; यतः—"ण हि तादिसा आकिदिविसेसा गुणविरहिणो होन्ति" इति अभीक्ष्ण-मनुध्याय सुस्थिरा अभूत् इति। प्रेम्णां गतिं परीक्षितुं प्रियंवदा एवाग्रणीः; अनसूया तु शुभोदर्के गृहस्थजनोचिते व्यापारे एव प्रवीणा आसीत्। यदा हि सुलभकोपः महर्षिः दुर्वासाः शकुन्तलामभिशप्तमग्रतोऽसरत्, अशपत् च रोषरभसं सोढु-मशक्नुवन्, तदा हि अनसूया अविरलपादत्वरया गत्वा तं महर्षिं तस्य क्रोधञ्च कथमपि कथञ्चित् शमयति स्म। तदानीं तु प्रियंवदा तां सावधानामकरोत् यदसौ कदापि प्रकृतिपेलवां शकुन्तलामिमं वृत्तान्तं निवेद्य न व्यथयेदिति।

चतुर्थेऽङ्के भूरिषु स्थलविशेषेषु कविः युगपदेव सखीद्वयीं समानीय विविधां कथां प्रस्तौति स्म। प्रथमे तृतीये चाङ्के

तयोरभ्यानाव-तारणे कवित्वक्रामः

अन्तरान्तरा इत्थमेव कियदुपवर्णितम्; दृष्टे चैतस्मिन् मन्ये, स्थलेषु एवंविधेषु सखीद्वयो-मन्तरा किमपि पार्थक्यं स्वातन्त्र्यञ्चास्तीति कविना न हि अमानि; अथवा स्थलेषु तादृशेषु सखीजनवचसां किमपि स्वातन्त्र्यं विकाशयितुं संरक्षितुञ्च न हि प्रभवामीति विभाव्य कविना स्वधिया विमृश्येत्थमक्रियतेति। नाटकेषु कुत्रचित् स्थलविशेषेषु कदाचित् हि हर्षविस्मयरतिभीति-भावान् शृङ्गारादिरसानुकूलानुद्बोधयितुं भूरीणामेव जनानां युगपत् विविधा एवालापाः दृश्यन्ते; परन्त्वत्र सखीनां संवादेषु तथाविधं किमपि पार्थक्यं न दृश्यते। अस्माकन्तु नैतदनुमतं यत् वचोनिचयानां नटनिवहैः युगपदेवाभिहिता-

नामिकाव बहुलतया समावेशनम् ; यतो हि तेषु तेषु स्थलेषु काव्यदामगुम्फनविधौ कवीनां कियच्च दौर्बल्यं परिलक्ष्यते। रङ्गेषु अभिनयविधौ इत्थमेव आम्रेडितं सचेतसां न भवति नूनं श्रवणकुहरतर्पणम् ; अपि तु श्रुतिकठोरारावि भवति। मन्यामहे, अवाङ्मनसगोचरप्रभावविशुद्धधियः महाकवयः कालिदासप्रभृतयः यत्नवन्तश्चेत् अल्पेनैव आयासेन दोषानिमान् समूलमुन्मूलयितुम् अशकन्, तत्र तु नास्ति सन्देहः।

चतुर्थेऽङ्के कविः सखीजनौ चिरादेव शकुन्तलातः वियुक्तावकरोत्। यदा हि सुचिरमध्युषितात् तपोवनात् चिरायैव भर्त्तृगृहमभियातुमनुमतिमलब्ध शकुन्तला, तदा सा मनस्येवमेवाचिचिन्तत, यत् प्रियसखीजनावपि तस्या अनुपदमनुगमिष्यतः ; तद्विरहिता च कदाचित् भविष्यतीति अनुध्यातुमपि न शक्नुयादिति। यदा तु महर्षिः कण्वः उवाच "वत्से एहि, परिष्वजस्व मां सखीजनञ्च", तदा पुनः सा केवलमबुद्ध यत् प्रियसख्यौ तत्सहचारिण्यौ न भविष्यत इति ; अतश्चोवाच तदा, "ताद ! इदो ज्जेव किं पिअसहीओ णिउत्तिस्सन्ति ?" इति। पद्मपुराणे तु प्रियंवदा नाम सखी तस्याः भर्त्तृगृहं प्रति गच्छन्त्याः अनुगामिनी बभूवेति वर्णितमस्ति। कविस्तु सखीजनं शकुन्तलाऽनुगतमविधाय, तयोः मर्य्यादाविधिं समादरञ्चाव्याहतमकरोत्। लौकिकं नैतिकञ्च सज्जनसमाज-सम्मताचारं विविधं सुरंरच्य आत्मनः व्यवहाराभिज्ञतां प्रख्या-पयामास। अत एव हि तदानीं कण्वः उवाच, "वत्से ! इमे अपि प्रदेये, तन्न युक्तमनयोस्तत्र गन्तुम्" इति। यावदेवासौ शकुन्तला, तयोः तरलायितायताश्रुललोलविलोचनानन्तराल-वर्त्तिनी नाभूत् तावदेव निमिषालसपक्ष्मपङ्क्ती सखीजनौ सतृष्णं

शकुन्तलायाः सखीजनविरहः

लोचनानि तस्यां पातयामासतुः ; तदवलोकनपथाच्च कियदपि नान्तर्दधाति। यदा च सा वनराजिभिः सम्यक् तिरोहितावयवाऽभवत्, तदैव तं केवलं शकुन्तलाविरहिते शून्यमनसा तपोवनाभिमुखं प्रतस्थाते। अत्रैव कविः सखीद्वयस्य अभिनयव्यापारं परिसमाप्तिमगमयत्; चिरादेव नाटकीयवस्तुनः तं अपासीसरत्, अचिचिन्तच्च इदानीं रूपकस्य रसोत्कर्षमापादयितुं न हि अतः परं तयोः किमपि प्रयोजनमिति। परन्त्वधुना द्रष्टॄणामध्येतॄणाञ्च सचेतसां चेतः विशिष्य तयोस्तदानीन्तनीमवस्थां वेदितुं समाकुलं न भवति किम्? यत् कविना असमये समुपेक्षितं तापसकन्यकयोः मृणालपेलवचेतसोः, सख्याः शकुन्तलाया इतरत् किमप्यजानत्योः, भविष्यत् जीवनं कीदृक् समजनि, कियता सुखेन क्लेशेन वा ताभ्यां दिनानि अन्तिमानि अतिवाहितानीति।

दृश्यते हि कवयः नायिकानायकयोश्चरितं विकाशयितुं विशदीकर्त्तुञ्च सम्यक् कतिचिदवान्तरचरितानि स्वधिया समुद्भावयन्ति ; सत्याञ्च तत्तदर्थसंसिद्धौ तानि सपदि एव विजहति, तथापि एतत् स्वभावरमणीयं रमणीप्रतिमाद्वयमवान्तरमपि एतावत् सहृदयचेतोहरमभूत्—यत् तयोरभ्यासात् त्वरितमपसर्त्तुं कस्यापि सचेतसो मानसं नालं भवतीति। महाकविभवभूतिरचिते उत्तररामचरिते नाटके, विदेहराजतनयायाः जनस्थानमध्युषितायाः प्रियसखीं तमसां मुरलाञ्च परिहरतां द्रष्टॄणां चेतः न भवति तथाविधमाकुलाकुलं सोत्सुकं कातरञ्च, यथा अनसूयां प्रियंवदाञ्च मूर्त्तिमतीं प्रणयप्रतिकृतिं विसृजताम्। मन्ये, एवंविधां निराविलां मूर्त्तिं निर्म्माय कविः चेत्, तयोः सुखजीवनं केनापि कैतवेन प्रकटीकुर्वन् बाल्यान्तिमामवस्थामानन्द-

अवान्तरचरित-स्वीकारः

जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा" ॥ इति।

एतावदुक्तिभिः महाकविः कालिदासः महर्षेः कण्वस्य सांसारिकभावेषु कियत् वैराग्यं प्राकटीत्। मन्ये, अप्सरःकुल-

महर्षेः शान्तिलाभः

शेखरभूतायां मेनकायां प्रसूय सद्यः शकुन्तलामाश्रमपदादपसृतायां, यदा असहायां शकुन्तपरिरक्षितां तां प्रथमतः प्रत्यचीचकार महर्षिः, तदा प्रभृति एव तेन मुनिना तपः निर्बाधं नान्वतप्तेति। यथाहि पुरा राजर्षिणा भरतेन स्वखेलवागुरासंयतं मृतमातृकं सद्योजातमृगपोतकं प्रति विततकारुण्यरसेन सम्पृक्तचेतसा अभावि, तथैवामुना एतावत्कालं शकुन्तलासङ्गतजीवितेनाभूयत। शकुन्तलां विसृज्य अधुना पतिगृहाय, तस्य तद्धि प्रशान्तममलं मानसं स्वास्थ्यमवापत्, ज्योतिष्मतीं चेतोवृत्तिश्च विकाश्य तदीयश्चान्तरात्मा इदानीं पूर्वतोऽपि अवदातः सुचिरमास्ततमामिति।

## अनसूया-प्रियंवदे ।

पौराणिको-पाख्यानम् ।

महाभारतान्तर्निहितायामाख्यायिकायां शकुन्तलाप्रियसख्योरनसूया-प्रियंवदयोर्नास्ति संवादः। पद्मपुराणान्तर्गतमुपाख्यानान्तरमेकमस्ति ; तत्र बहुकुमारीजनान्तर्वर्त्तिनीं कैरविणीपरिवृतां मरालिकामिव शकुन्तलामद्राक्षीत् नरपतिरिति। प्रियंवदेति नाम काचिदालिः तदीया आसीदित्यपि तत्रोल्लिखितमस्ति, तदीयं चरितन्तु सुविश्लिष्य किमपि न दर्शितं

लोचनानि तस्यां पातयामासतुः ; तदवलोकनपथाच्च कियदपि नान्तर्दधाति। यदा च सा वनराजिभिः सम्यक् तिरोहितावयवाऽभवत्, तदैव तं केवलं शकुन्तलाविरहिते शून्यमनसा तपोवनाभिमुखं प्रतस्थाते। अत्रैव कविः सखीद्वयस्य अभिनयव्यापारं परिसमाप्तिमगमयत्; चिरादेव नाटकीयवस्तुनः तं अपासीसरत्, अचिचिन्तच्च इदानीं रूपकस्य रसोत्कर्षमापादयितुं न हि अतः परं तयोः किमपि प्रयोजनमिति। परन्त्वधुना द्रष्टृणामध्येतृणाञ्च सचेतसां चेतः विशिष्य तयोस्तदानीन्तनीमवस्थां वेदितुं समाकुलं न भवति किम्? यत् कविना असमये समुपेक्षितं तापसकन्यकयोः मृणालपेलवचेतसोः, सख्याः शकुन्तलाया इतरत् किमप्यजानत्योः, भविष्यत् जीवनं कीदृक् समजनि, कियता सुखेन क्लेशेन वा ताभ्यां दिनानि अन्तिमानि अतिवाहितानीति।

दृश्यते हि कवयः नायिकानायकयोश्चरितं विकाशयितुं विशदीकर्त्तुञ्च सम्यक् कतिचिदवान्तरचरितानि स्वधिया समुद्भावयन्ति ; सत्याञ्च तत्तदर्थसंसिद्धौ तानि सपदि एव विजहति, तथापि एतत् स्वभावरमणीयं रमणीप्रतिमाद्वयमवान्तरमपि एतावत् सहृदयचेतोहरमभूत्—यत् तयोरभ्यासात् त्वरितमपसर्त्तुं कस्यापि सचेतसो मानसं नालं भवतीति। महाकविभवभूतिरचिते उत्तररामचरिते नाटके, विदेहराजतनयायाः जनस्थानमध्युषितायाः प्रियसखीं तमसां मुरलाञ्च परिहरतां द्रष्टॄणां चेतः न भवति तथाविधमाकुलाकुलं सोत्सुकं कातरञ्च, यथा अनसूयां प्रियंवदाञ्च मूर्त्तिमतीं प्रणयप्रतिकृतिं विसृजताम्। मन्ये, एवंविधां निराविलां मूर्त्तिं निर्म्माय कविः चेत्, तयोः सुखजीवनं केनापि कैतवेन प्रकटीकुर्वन् बाल्यान्तिमामवस्थामानन्द-

अवान्तरचरित-स्वीकारः

सन्दोहवतीं पुनराङ्कयिष्यत्, तदा नूनं द्रष्टृणां पाठकानाञ्च चेतः सुचिरां शान्तिं प्रेष्ठसुखाभिव्यक्तिसम्मितामलप्स्यतेति ।

## शार्ङ्गरव-शारद्वतमिश्रौ ।

शार्ङ्गरव-शारद्वतमिश्रौ नाम महर्षेः कण्वस्य प्रियशिष्यौ कविः रङ्गभूमिमवतारयामास अत्यल्पमेव कालमभिनेतुम् । महर्षेः प्रसाधितायाः शकुन्तलायाः भर्त्तृगृहगमनोचितकृत्य-नियोगावसरे चतुर्थे, पञ्चमे चाङ्के राजकृतशकुन्तलानिराकृति-कालमेव एतौ हि कियन्ति निसर्गपरिपूततपोधनोचितानि वचांसि अभाणिष्टाम्। तेषु तेषु च नातिविस्तरेषु किमपि पार्थक्यं स्वातन्त्र्यञ्च तदुभयचरितवैषम्यसम्पादकं विशदीकृत्य प्रकटीकृतं कविना । तथा हि तयोः स्वल्पवाक् प्रशान्तप्रकृतिः सुमधुरभाषी शारद्वतः, श्लक्ष्णेनैव सारवता अर्थगाम्भीर्य्यपूर्णेन वचसा प्रकृतार्थानुकूलमभिदधत् सभ्यानां मनसि शान्तिसलिलधारा-माततान । शार्ङ्गरवश्चातीव तेजस्वी समुद्धतप्रकृतिः वाग्मी यथाकालोचिताभिभाषी आसीत् ; काले समुचितमभिधातुं महर्षिं कण्वमप्यभिमुखं न शङ्कितममुना । यदा हि महर्षिः कण्वः प्रियदुहितुः शकुन्तलायाः वियोगजं शोकावेगं सोढु-मशक्नुवन् कथमपि तदनुगमनात् न निवर्त्तते, तदानीमेवासौ महर्षिमपि धर्मशास्त्रकृतां संवादं श्रावयन् तदनुगमनव्यव-सायात् तं निवर्त्तयामास । उवाच च,—"भगवन् ! ओदकान्तं स्निग्धोऽनुगम्यते इति श्रूयते, तदिदं सरसीतीरमत्र नः सन्दिश्य प्रतिगन्तुमर्हसि" इति। एवं सागरवेलावप्रवलयवेष्टितायाः भुवः अधीश्वरं कर्त्तव्यपथात् भ्रश्यन्तमवलोकयन् तदीयावसथ-

मधिवसन्नपि ह्रितेन वचसा निर्भर्त्सयितुं न बिभेति; अशङ्कितेनैव चेतसा राजानमुवाच तदा "मूर्च्छन्त्यमी विकाराः प्रायेण ऐश्वर्य्यमत्तानाम्" इति। तथैव यदा हि राजा तूष्णीम्भूय कियत्कालमवतस्थे, स्वगतमनुध्यातुञ्चारेभे, तदापि असौ राजानं तारस्वरेणाह, "भो राजन्! किमिति जोषमास्यते?" इति। ततश्च नृपः यदा शकुन्तलामयथाप्रत्याख्याय, महर्षिं कण्वमपि अवज्ञातुमुत्सहते स्म, तदानीमेवासौ तेजसा दावानल इव निर्दहन् अखिलं लोकारण्यं तूर्णम् उवाच;—

"कृतावमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन"॥ इति।

अथ तदा शारद्वतः निभालयते स्म, यत् शार्ङ्गरवः विगर्हितेन राजकृताचरणेन विव्यथितचेताः सन् सज्जनशीलितसत्सरणीसीमानमुल्लङ्घयति, तत एवासौ शार्ङ्गरवं धीरवचसा सान्त्वयितुमारेभे; स्थिरतरमनसा च कर्त्तव्यार्थविनिर्णयाय शकुन्तलां प्रादिशत्;

शारद्वतकृत कर्त्तव्यनिर्णयः

यथा "शार्ङ्गरव! विरम त्वमिदानीम्; शकुन्तले! वक्तव्यमुक्तमस्माभिः, सोऽयमत्रभवानेवमाह, दीयतामस्मै प्रत्ययवचनम्" इति; नास्त्येतस्मिन् शारद्वतवचसि किमपि कुञ्चितत्वं दम्भातिशय्यञ्च; अणीयानपि क्रोधो हि नैवात्र परिलक्ष्यते। असौ हि अविचलितेन चेतसा यदेवाचरितमत्र उभयोः पक्षयोः शोभनमविसंवादि च भवति, तदेव सर्वथा निर्मलं माध्यस्थ्यमवलम्ब्य विनिरदिचत्। अपरञ्च यदा शार्ङ्गरवः राजोचितमर्य्यादावधिमुल्लङ्घ्य "विनिपातः नूनं भविष्यति" इत्यनिश-

मभिदधत् तारस्वरेणाचकथत्, अयथातिरस्कृतायां प्रतारिता-याश्चाजिह्ममानसायां शकुन्तलायां नूनमेव अधःपातो लप्स्यते इति। तदानीं हि शारद्वतेन निरधारि यत् विवद-मानयोरेतयोः क्रमेणैव कोपजं तेजः वर्द्धमानं सत् नूनम् अस्माकं मानसं सन्तापयिष्यति इति। इत्यञ्च समीक्षमाणः कोमलाभिः हिताभिश्च वाग्भिः परिसान्त्वयन्नेनं, निश्चलेनानाविलेन च मनसा विनिर्णयार्थं सर्वेभ्यः सुनिरूपयितुं शशंस,—यथा, "शार्ङ्गरव! किमत्रोत्तरैः? अनुष्ठितः गुरुनियोगः, सम्प्रति प्रतिनिवर्त्तामहे वयम्;—

तदेषा भवतः पत्नी त्यज वैनां गृहाण वा।
उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी॥

गौतमि! गच्छाग्रतः" इति। इत्थं हि सर्वे एव शारद्वतवादाः परिसमाप्तिमागताः। अमुना केवलं राजसामीप्यमेत्य हिरेव मुखं प्रासीसरत् सन्देशबहुलां वाचमभिधातुम्। सर्वथैव हि स्तोकेन सारवता नैरपेक्ष्यसमन्वितेन अकुटिलेन स्थिर-प्रतिभोत्थेन वचसा स्वविज्ञप्तिमभिदधानः किं कर्त्तव्यमिदानी-मिति स्वधियैव निर्णीतवान्।

राजधानीमनुप्रविश्यैव एतयोः ये च विभिन्नाः भावाः मनसि उदीयुः, तेषु पर्य्यालोचितेषु तयोः चारित्रवैशद्यविधायकं स्वस्वमनसः पृथक्त्वं स्फुटं प्रतीयते।

शिष्ययोः मानसा-वस्थाभेदः

द्वावेव संसारविरक्तौ विशुद्धाशयौ ऋषिकुमारावास्ताम्। यदा हि तौ राजधानीमनुप्रविविशतुः; तदैव विकलमानसौ, विमोहम् आत्मनश्चाशान्तिं सममेवान्वभूताम्। परन्तु शार्ङ्गरवस्य, वैराग्यं वहिश्चरैः विषयव्यावृत्तैरुदासीनैः चक्षुरादिकरणग्रामैरनायि; शारद्वतस्य तु आध्यात्मिकभावाधारया विमलहृदयतलमधिशयानया

ज्योतिष्मत्या विकस्वरचित्तवृत्त्यैव समुद्भावितं परिपूरितञ्चाभूत्। तथा हि शार्ङ्गरवः,—

"महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चित् वर्णानामपथमपकृष्टोऽपि भजते।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव"॥

तदैव शारद्वतः,—

"अभ्यक्तमिव स्नातः शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि"॥ इति।

व्यञ्जयच्चैतत् नहि केवलं शारद्वतः सततंतपोऽनुशीलनात्, अपि तु अस्यामेव पुरि पार्थिवमनित्यमकिञ्चित्करसुखमनिश-मुपभुञ्जानानां जानपदानामेतादृशीं समवस्थामवलोकयन्, तेषाञ्चाध्यात्मिकविवेकरहितानां दुःखोपहतचेतसां मनसि कालुष्यम्, अमेध्येषु अघपूरितेषु वस्तुषु निरतिशयां प्रीतिं, मोहान्धतमसेन समाच्छन्नं ज्ञानप्रदीपप्रकाशं, संसारकुहक-जालजटिलानि मायामयपाशबन्धनानि च पश्यन्, कृपार्हेषु तेषु कारुण्यपूर्णमानसः इत्थमनारतमेवाचिचिन्तत; अतो हि मन्ये, तद्धृदयं शार्ङ्गरवादपि अधिकमुदारम्, अन्तर्दर्शनाभ्या-सावदातं गाम्भीर्य्यपरीतं विवेकख्यातिभूषितञ्चासीदिति।

## कण्वः।

शमदमतितिक्षास्थैर्य्यादितपोधनोचितगुणग्रामाणामुपवर्णनं महर्षेः कण्वस्य नाकारि श्लोकाद्विवरणात् किमप्यन्यत् कविना।

अपि तु तपस्तेजःसमुद्भूतं किमप्यमानुषिकमैशिकं तेजःपुञ्जमिव तपोधनं कण्वं सहृदयसमक्षमानीय शाकुन्तलं चरितं सुविकस्वरमकारि। येन एव हि सुतदुहितृप्रभृति-परिजनमङ्गलसम्पालनभारातिशयोद्विग्नमानसानाम् अपि सांसारिकपौरजानपदानां निरुपमवात्सल्यरसाश्रयापत्यस्नेहसन्तति-रसधाराप्रवाहेण हृदयं सार्द्रं, शतधा प्लावितं समुच्छलितञ्च भवति, तथैव च तदीयमपि हृदयतलं यथा वात्सल्यरसाधारं मूर्त्तिमदनिर्वचनीयं करुणरसप्रवहणमिव शकुन्तलास्नेह-भारालसं समभूत्। तथाभूतं महर्षिं कण्वं कविः नाट्यभूमिका-मानिनाय। यावद्दूरं हि तच्चरितमवलोकयितुमग्रेसरामः, तावदेव तत् शकुन्तलासङ्गतं समोचामहे। ऋते चैतस्मात् किमपि तच्चारित्र्यांशान्तरमसभ्यं न प्रदर्शितं कविना। प्रथमाङ्के तु दृश्यते स सोमतीर्थं गत इति, तदपि हि केवलं शकुन्तलायाः हितानि साधयितुम्; एतदेवाह वैखानसः यथा,—"इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय आदिश्य, दैवमस्याः प्रतिकूलं शमयितुं सोमतीर्थं गतः" इति। सांसारिकभावनिवहेषु मोहजालावर्त्तसुदुस्तरेषु विषमेषु पारा-वारप्रतीकाशेषु कृत्यरत्नौघान् कर्त्तव्यार्थान् विनिर्णेतुं पटीयसीं महर्षेः तावतीमभिज्ञतां दूरदर्शिताञ्च कविरसम्यमशंसीत्; अभिव्याञ्जीच्च एतत् महर्षिः स्वमुखेनैव, यत्—"वनौकसोऽपि वयं लौकिकज्ञा एव" इति। चतुर्थाङ्के तु दृश्यते यत् महर्षिः निशाऽवसाने सोमतीर्थात् प्रत्यावृत्य अग्निशरणं सम्प्रविश्यैव अशरीरिणीं छन्दोमयीं वाणीमशृणोत्, यथा,—

"दुष्मन्तेनाहितं तेजः दधानां भूतये भुवः।
अवेहि तनयां ब्रह्मन्! अग्निगर्भां शमीमिव"॥ इति।

वृत्तान्तमिममाकर्ण्यैवासौ महर्षिरतीव दूरदर्शी लोकाखिल-

चरितवित् कन्याभिजनेष्वभिभावकभूमिकामधिकृत इव सप-दीत्थं स्थिरीचकार यत्—आपन्नसत्त्वामिमां शकुन्तलां दिनमेकमप्यत्रावस्थापयितुं नोचित-मिति ; तत् तदैव प्रत्यूषसि शकुन्तलामाभा-

महर्षेः लोकाचाराभिज्ञता।

ष्योवाच,—"वत्से ! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता, सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता, अद्यैव त्वाम् ऋषिपरिरक्षितां कृत्वा भर्त्तुः सकाशं विसर्जयामि" इति। तदानीमेव गौतमीमादिदेश,—"आदिश्यन्तां शार्ङ्गरव-शारद्वतमिश्राः वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्तः" इति। असौ पुनः महर्षिः शकुन्तला-मधिकृत्य शार्ङ्गरवेण महीपतये यान् यानेव सन्देशविशेषान् प्रैरयत्, ते सर्व्वे एवासन् सूक्ष्मया दूरदृष्ट्यैवोद्भाविताः। तथाहि—

"अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मनः
त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम्।
सामान्यप्रतिपत्तिपूर्व्वकमियं दारेषु दृश्या त्वया
भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते" ॥ इति।

शकुन्तलाञ्चापि भर्त्तृगृहाय गन्तुमनुमोद्य ततः तस्यै यादृक् भर्त्तृकुलेषु व्यवहर्त्तुमुपादिशत् तदपि स्वात्मनः लौकिकसदा-चाराभिज्ञतायाः प्रशस्यतमं निदर्शनम्। तथाहि,—

"शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने, भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः" ॥ इति।

तेषु तेषु च भूरिषु उपदेशेषु प्रत्येकमपूर्व्वभावपूरितं, सर्व्वमेत-दक्षतं विधाय अनुपालयितुमुपदिशति कविः ललना-रत्नेषु

स्त्रीजनेषु उपदेशः

आदर्श-नारीजन-सदाचार-पूतं कृत्यम्। अतो हि सर्वमेतत् सर्वथाऽनुपालयन्त्यः कुलपालिकाः ललनाललामभूताः सतीनां धुरि कीर्त्तनीयाः भवन्ति। एकस्मिन्नेव श्लोके विविधानि सारवन्ति सदाचरणानि प्रदर्शितानि कविना, यथा हि—पूज्येषु समुचितः सत्कारः, सम्भ्रमप्रदर्शनञ्च, गर्वेण च कदापि तेषां मर्य्यादाऽनुल्लङ्घनं, सपत्नीजनेषु च ईर्ष्याविद्वेषबहुलं घृणाव्यञ्जकाचारं परिहाय स्निग्धप्रियसखीसमुचितव्यवहारः, पतिकृतां दुःसहामवमाननां लब्ध्वापि रोषकषायितमुखमकृत्वैव तूष्णीमवलम्ब्य सहिष्णुता, परिजनसङ्घेषु स्वगर्वितभावं हीनत्वधियञ्च विहाय, प्रत्युत भूयसीं दक्षिणतां स्नेहाभिव्यक्तिञ्च सन्दर्श्य सखीसम्मितप्रीति-प्रदर्शनं, विद्यमानेऽतुलैश्वर्य्ये सुखानुभवसौभाग्यलक्ष्म्याञ्च सत्या-मपि, केष्वपि मदान्धवदव्यवहरणम् ; एते कुलस्त्रीसहजगुणाः येषु येषु हि रमणीरत्नेषु समासते, ता एव हि गृहिणीपद-भाजः, ऐहिकमकल्मषं सुखमुपभुञ्जानाः पूतं पातिव्रत्यधर्म्मं ख्यापयन्त्यः नारीजनकमनीयां भूमिमधिकुर्वन्ति। अत्र हि कविना नम्रता, गभीरहृदयता, सहजसहिष्णुता, अस्वतन्त्रता, दया, धीरता, एता एव गुणराजयः आदर्शगृहिणीगणानां लक्षणरूपतया निर्दिष्टाः।

कविः करुणरस-वर्णननैपुण्यम्

दृश्यते हि कण्वचरिते एकतश्चैषा लौकिकव्यवहाराभिज्ञता, अपरतश्च तदीयाऽनुपमा वात्सल्यरसाभिव्यक्तिः। शकुन्तलां भर्त्तृगृहगमनोचितवसन-भूषणादिभूषिताऽखिल-लावण्यवामवलम्ब्य कविः यदनिर्वचनीयं कारुण्यरसप्रवाहमवीवहत, विविधदुःखपरीत-चेतसां नियतवितप्तानां सांसारिकाणामूषरसन्निभहृदयभूमौ असौ निरुपम आभ्यन्तरानुशयविघटनपटीयानभूत्। अथ

महाकविः भवभूतिरपि करुणरसोपवर्णनविधौ परां कीर्त्ति-काष्ठामधिगतः; तदुपवर्णितस्तु करुणो रसः विलापसम्बंधित-दैन्योक्तिभूयिष्ठः, दारुणानुतापबहुलश्च, श्रूयमाणः सन् निरतिशयमेव सन्तापयति मानसम् अश्मसारसारकठिनमपि; परन्तु यद्वस्तुवर्णने यत्र तावत् कविः कालिदासः वाचैवात्यल्पो-यस्या हृदन्तरधिशयानां सुतीव्रां संवेदनामभिव्यनक्, तत्र हि कविः भवभूतिः सुपरिणतसमुद्बोधतया करुणं सम्मूर्च्छयितु-मेव तद्व्यञ्जकाभ्युपायानां भूयसामनुशोचना-हाहेत्यादिविविध-वादमयानां चरमोत्कर्षमदर्शत्।

पुरस्तात्तु वयमेतदेव प्रादोदृशाम, यत् महर्षिः कण्वः एकतः महोदाराभिजनसदाचारविचारवरीयान् आसीत्, तत एवासौ लौकिकीं सज्जनपरिशीलितां शैलीं संरक्ष्य शकुन्तलां पतिगृहाय गन्तुं त्वरितमेवाचेष्टिष्ट। अन्यतश्च शकुन्तला-वियोगजा सुतीव्रा मर्म्मभेदिका वेदना स्मृतिपथोदिता क्रकच-धारेव कठोरां सुदुःसहां क्लेशपरम्परां जाजायते स्म। कन्य-कायामस्यां शकुन्तलायां महर्षेरपारमकपटं वात्सल्यमेवमेव तात्त्विकतया कविना विनिवेशितं शाकुन्तले, यदद्यापि भारतभूमौ सर्वेषु जनपदेषु कन्यागुरवः नूनं तथैव अनु-भवन्ति। एषा हि मर्त्त्यमानसेषु चिरन्तनी निसर्गसिद्धा सदैव विलसति वृत्तिः। तत्र प्रथमतश्चैतदेवास्माभिर्द्रक्ष्यते, यदसौ महर्षिः शकुन्तलां तत्सखीसमाजञ्च सज्जीभवितुमादिशन् स्नातुं गत इति। अवगाह्य च सुखावगाहं तटिनीतोयं समुत्-सुकमनाः व्याकुलीभूय इतस्ततः परिक्रमितुमारेभे; उवाच च सहसा,—

"यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
अन्तर्वाष्पभरोपरोधि गदितं, चिन्ताजड़ं दर्शनम्।

वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः,

पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ?" ॥ इति ।

ततः सयत्नपरिवर्द्धितानाम् आश्रमस्थानां पादपानां व्रततीनाञ्चोपरि दृष्टिं ददतः महर्षेर्मनसि सपद्येतत् समुदियाय, या हि शकुन्तला तान् सहोदरनिर्विशेषं पुरा पर्य्यपीपलत, असावधुना तान् परिहाय पतिगृहमभिगच्छति ; प्रियतमवस्तूनामालोकनाद्धि विप्रयोगजशोकावेगप्रवाहः भृशं विवर्द्धते, पिनष्टि हृदयतलं, रुणद्धि च विवेकम् । अत एव महर्षिः तदा तपोवनपादपानाह्वत्, शकुन्तलां भर्त्तृगृहगमनाय अनुमोदयितुं तानयाचत च । तेऽपि शकुन्तलां यथोचितया आशिषा सम्बर्द्ध्य अभ्यवर्न्दिषत । तपोवनपथेन गच्छन् माधवीलतां मृगपोतकमन्यानि च तानि तानि प्रीतिवर्द्धितवस्तूनि अश्रुपूर्णचक्षुषा निरीक्षमाणः, तेषां शकुन्तलावियोगजवेदनां नितरां मानसं निर्दहन्तीमत्यर्थमवीवृधत् । यदा हि शकुन्तला महर्षिं गाढमाश्लिष्य व्याकुला विवशा च सती चिरं रोदिति स्म, तदा कण्वः सकरुणमुवाच,—

महर्षेः वात्सल्यम्

"अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि" ॥ इति ।

एतदतीव अन्तर्विदारकं मर्मोत्पीड़कं वचनम् ; सभ्यानां चेतसि यदा हि तत् समुदेति, तदैव नूनं तेषां मानसं व्याकुलीकरोति द्रावयति च । अन्तःसन्तापञ्च तदीयं भगवान् कण्वः कियता उपशमयितुं सान्त्वयितुञ्च अधस्तान्निरस्तामितां वाचमभिदधे समु-

महर्षेराशिषा संवर्द्धनम्

हिश्य शकुन्तलाम्; तथाहि,—तव भर्त्ता सागरपरिवृताया: भूमेरधीश्वर:, तस्यैव त्वं गृहिणी भवसि, तव कत्यतिगुरूणि सन्ति कृत्यानि, अपि च त्वं पुत्रं प्रसविष्यसे, तेषु तेषु च महत्सु कर्म्मसु भृशं निरता त्वं मदीयं विरहजं शोकं कदापि नानुस्मरिष्यसि इति। शङ्के एतत्कथनसमकालमेव तद्धृदयतलमसिपत्रधाराभिरिव विपाटितमभूत्। एतदाकर्ण्यैव च सा तारं निर्भरञ्च रोदितुमारब्धा, उवाच च सकरुणं,—"ताद! कदा णु क्खु भूओ तवोवणं पेक्खिस्सं" इति, तच्छ्रुत्वा तु महर्षिरभ्यधित,—"वत्से!—

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन्" ॥ इति।

सुचिरमादावमलं राज्यसुखमुपभुज्य यौवनदशायां, पश्चात् पश्चाशदूर्द्ध्वे वयसि स्थिता स्वपुत्रञ्च स्वराज्यं परिरक्षितुमभिषिच्य भर्त्तृद्वितीया वानप्रस्थाश्रमं परिग्रहीतुं शान्तमिदमाश्रमपदं समेष्यसि; उपभोगक्षमे वयसि स्थिता, संसारसुखोपभुक्तये तपोवनमिदमायान्ती किं करिष्यसि वत्से! आश्रमपदं नैव हि भवति राजपत्नीनां सुयोग्यमवस्थानोचितं स्थानम्;—इत्थं वचोनिवहेन महर्षिभाषितेन, तस्य संसारेषु अनास्थाया: आभास: कियानेवात्रोपगम्यते। कविना च तावतैव वचसा तत्सांसारिकी विरक्तिश्च कियती विवृता।

तदीया शुभाशंसा सान्त्वना च

ततश्च गौतमी अदर्शत् यत् पिता दुहिता चोभावपि अन्योऽन्यं विहाय गन्तुं न शक्नोते इति, ततश्चादित एवासौ शकुन्तलां

शकुन्तलायाः पतिगृहं चिराय विसर्ज्जनम्

सम्बोध्याह—"जादे! परिहीअदि दे गमणवेला ता णिउत्तावेहि पिदरं"। तदानीञ्च शकुन्तलायाः तत्कर्त्तुमपि शक्तिर्नास्तीति विभाव्य महर्षिमाह,—"अथवा चिरेण वि एसा ण णिउत्तइस्सदि, ता णिउत्तदु भवं" इति। तदानीञ्च महर्षिः तपश्चर्य्यायाः कालमुपस्थितं तस्याश्चानतिक्रमणीयतां कैतवेनाविद्यावोचत्,—"वत्से! उपरुध्यते मे तपोऽनुष्ठानम्" इति। तदाकर्ण्यैव शकुन्तला साश्रुगद्गदकण्ठी अभिदधे,—"तपश्चरणवावारेण निरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता" इति। वचनमेतत् निरतिशयमन्युसमुद्दीपकं, मानसोन्माथि चेति तत्र तु नास्ति सन्देहः। यथाहि पूर्वं महर्षिः कण्वः, शकुन्तलां 'त्वमभिजनवतः भर्त्तुः श्लाघ्यं गृहिणीपदमधिरूह्य मद्वियोगप्रभवं दुःखसन्तानं विस्मरिष्यसि', इत्युक्त्वा निर्वाचामकरोत्, तथैव साऽपि यथोचितमिदानीं तदुत्तरं तस्मै अभ्यधात्, तदाकर्ण्य महर्षिः क्षणं तूष्णीमासीत्, सा उवाच—तपश्चर्य्यया तातस्य उत्कण्ठा व्यपगमिष्यति, अहन्तु चिरमुत्कण्ठाभागिनी भवामि; मम तु एतादृशी उत्कलिका कथमपसरिष्यति?—इति श्रुत्वा व्याकुलमनाः कण्वः किमपि समुचितं तदुत्तरं दातुं न हि अलमासीत्। ततश्चेषत् संयम्य मानसं तेनाभाणि,—"वत्से! मामेवं जड़ीकरोषि, अपयास्यति मे शोकः कथं नु वत्से! त्वया रचितपूर्वमुटजद्वारविरूढ़ं नीवारवलिं विलोकयतः" इति। अथासौ चिराय भर्त्तुः गृहाय गन्तुमनुमोद्य शकुन्तलां साश्रुनयनामभिदधे स्वगतम्, "हन्त, भोः! शकुन्तलां पतिगृहे विसर्ज्य लब्धमिदानीं स्वास्थ्यम्; कुतः,—

अर्थो हि कन्या परकीय एव,
तामद्य संप्रेष्य परिग्रहीतुः।

सखीभावं विशदीकृत्य प्राकटीत्, सा एव हि महीयसी निराविला च सखिलदार्ढ्यसंविधानपद्धतिः; अत्यल्पेषु एव संस्कृतनाटकेषु पुंचरित्रमधिकृत्य तथाविधः याचनादिदोषात् निर्विशेषीकृतः मित्रभावः संदृश्यतेऽस्माभिः; सम्पश्यन्ति तु काव्यकलाऽनुशीलिनः भवभूतिविरचिते मालतीमाधवनाटके मकरन्दमाधवयोः तादृशमेव मञ्जुलममलञ्च मित्रत्वं कविना कियदेव प्रकटीकृतमिति। काव्यामृतरसधारापानोत्कमानसैः सुरसिकैरनिशमेवादीयते सैषा सज्जनानुशीलिता शैलीति।

## विदूषकः ।

दृश्यते हि विविधेषु संस्कृतेषु रूपकेषु, हास्यरसोद्दीपकवचननिबन्धमभीक्ष्णमेवाभिदधतः वाचालस्याऽविबुधेः विचित्रप्रतिभोद्भासितधियः नर्मकर्मसाहाय्यकमनिशमेव कुर्वतः, कविभिरालङ्कारिकैश्च विदूषकेत्याख्यया परिचायितस्य कस्यचित् द्विजातिप्रवीणस्य लोकविस्मायकं चरितोपवर्णनम्। प्रतीच्यैरन्यदेशीयैश्च बहुभिः कविभिः निबद्धेषु तेषु तेषु च नाटकसधर्मसु कृति-

“फूल्”भूमिकायां विदूषकसादृश्यम्

जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा" ॥ इति।

एतावदुक्तिभिः महाकविः कालिदासः महर्षेः कण्वस्य सांसारिकभावेषु कियत् वैराग्यं प्राकटीत्। मन्ये, अप्सरःकुल-शेखरभूतायां मेनकायां प्रसूय सद्यः शकुन्तलामाश्रमपदादपसृतायां, यदा असहायां शकुन्तपरिरक्षितां तां प्रथमतः प्रत्यक्षीचकार महर्षिः, तदा प्रभृति एव तेन मुनिना तपः निर्बाधं नान्वतप्तेति। यथाहि पुरा राजर्षिणा भरतेन स्वस्नेहवागुरासंयतं मृतमातृकं सद्योजातमृगपोतकं प्रति विततकारुण्यरसेन सम्पृक्तचेतसा अभावि, तथैवामुना एतावत्कालं शकुन्तला-सङ्गतजीवितेनाभूयत। शकुन्तलां विसृज्य अधुना पति-गृहाय, तस्य तद्धि प्रशान्तममलं मानसं स्वास्थ्यमवापत्, ज्योतिष्मतीं चेतोवृत्तिञ्च विकाश्य तदीयश्चान्तरात्मा इदानीं पूर्वतोऽपि अवदातः सुचिरमास्ततमामिति।

महर्षेः शान्तिलाभः

## विदूषकः।

दृश्यते हि विविधेषु संस्कृतेषु रूपकेषु, हास्यरसोद्दीपक-वचननिवहमभीक्ष्णमेवाभिदधतः वाचालस्याऽऽविद्धबुद्धेः विचित्र-प्रतिभोद्भासितधियः नर्म्मकर्म्मसाहायकमनिशमेव कुर्वतः, कविभिरालङ्कारिकैश्च विदूषकेत्याख्यया परिचायितस्य कस्यचित् द्विजाति-प्रवीणस्य लोकविस्मायकं चरितोपवर्णनम्। प्रतीच्यैरन्यदेशीयैश्च बहुभिः कविभिः निबद्धेषु तेषु तेषु च नाटकसधर्म्मसु कृति-

"फूल्"भूमिकायां विदुषकसादृश्यम्

समूहेषु विदूषकस्य तत्सजातीयस्य कस्यापि च चरितविशेषस्य समावेशः स्फुटतया नैवहि तावदवलोक्यते ; परन्तु प्राक्तनैः सेक्सपीयरसमकालीनैः पाश्चात्यविद्वद्भिरङ्कित अभिनेयवस्तुनि "फूल्" इत्याख्यानां केषाञ्चित् अभिनेतृविशेषाणां अभिनयविधौ विदूषकसौसादृश्यं कियदेवोपलभ्यते। ते हि नर्म्मसचिवोपमाः हास्यरसानुकूलं विविधं वादं वदन्तः सम्यक्तया विदूषक-साम्यमादधति। तद्देशीयनाट्यकाङ्किस्तु ते हि नटाः फूलित्या-ख्यया परिभाषिताः; यद्यपि हि तेषां रङ्गभूमौ अवतारणं केवलं हास्यरसमेव परिपोषयितुं, तथापि प्राच्यनाटकीयभूमौ विदूषकस्यावतारणं राज्ञः नर्म्मसाचिव्यमेव सम्पादयितुं, हास्य-रसाऽनुकूलवाग्विन्यासेन च सहृदयहृदयोत्फुल्लतामेधयितुम् ; इयानेव चात्र विशेषः यदेको हि नटः प्रोक्तद्विविधमेव कर्म्म साधयति। नृपतेः नर्म्मकर्म्मसचिवं अमुमेव प्रियवयस्यं विदूषकं शुद्धान्तचारिण्यः ललनाललामभूताः युवतयः अपि प्रीति-स्निग्धेन चक्षुषा पश्यन्तितमाम्। असौ हि नितरां शृङ्गाररस-विकाशनपटीयानपि, आकारेङ्गितवसनभूषणादिभिः भोजन-प्रियताप्रकाशनकौशलहास्यरसानुगुणैश्च वचोभिः हास्यरसो-द्दीपनाय नाटकीयभूमौ अवतरति। नटेषु को हि नाम पुरुषः विदूषकभूमिकां ग्रहीतुमीष्टे? तमेवाधिकृत्य महर्षिः भगवान् भरत इदमाह यथा,—चतुर्विंशाध्याये नाट्यशास्त्रस्य,—

"वामनो दन्तुरः कुब्जो द्विजन्मा विकृताननः।
खलतिः पिङ्गलाक्षश्च स विधेयो विदूषकः" ॥ इति।

एतदेवात्र चित्रं यत् सर्व्ववर्णेषु वरेण्याय विप्रवराय एव विदूषकभूमिका प्रादायीति। इयानेव विशेषोऽत्राध्यवसीयते, अनुमीयते च यत् विदूषकभूमिकामधिष्ठितस्य भूसुरस्य शुद्धान्तगतिः निर्व्वाधा एव ; अपि चासौ का कथा परेषां,

राजानं सेनापतिमपि वा यथेच्छं निर्भर्त्सयितुं प्रभवति; नो चेदेवं, तथा सति ब्राह्मणेतरैः अन्यैश्च कैरपि तत्तद्देशकाल-विहिता तादृश्येवावमानना कटूक्तिः वा यदि स्यात्, तदा नहि तैरवाक्प्रसरं विषह्येत; दर्शकैः सामाजिकैरपि नूनं तद्गतं किमपि असामञ्जस्यं कियद्धि परिलक्षितं स्यात्। यथा हि सेनापतिं निर्भर्त्सयन्नाह विदूषकः,—"अवेहि रे उच्छाअहेतुअ! अत्तभवं पइदिं आवस्सो। तुमं दाव दासीए पुत्तो अड़इदो अड़इं आहिण्डन्तो जाव णरणासिआलोलुअस्स कस्स वि जिसरिच्छस्स मुहे णिवड़िदो होहि"। इति।

यदा हि नरपतिः वेलावनालिनीलवसनायाः भुवः भर्त्ता अखिललोकपालकः दुष्मन्तः तपोवनमध्यासितैः यायजूकैः ऋर्षिभिः वैखानसैश्च रक्षोभयोद्विग्नमानसैः तत्कृताऽनिष्टाचरणादात्मानं संरक्षितुं समाहूतोऽभवत्, तदानीमपि विदूषकः राजानमाह—"एस दाणिं भअदो अणुऊलो गलहत्थो" इति। एतच्च भवति अतीव क्षुद्रतमं चूर्णकम् अनुपमरहस्यलीला-विद्योतकम्। समीक्षामहे एतद्धि नूनं कविकुलनिकषाय-माणस्य काव्यकारुनैपुण्यनिर्म्माणदक्षस्य कवेः कालिदासस्यैव समुचितलेख्यं भवितुमर्हतीति। इदानीन्तु वयं तदेव विनिर्णेतुं यथामति यतामहे, यत्—नृपविदूषकयोरविसंवादि सखित्वप्रकटनाय कविः, कियद्दूरमग्रेऽसरदिति। अङ्के द्वितीये नृपमणिः दुष्मन्तः स्वमुखेनैवमुवाच यत्—राजजननी माधव्यं पुत्रकल्पमेव मन्यते, ततो हि असावाह—"सखे माधव्य! त्वमपि अस्माभिः पुत्र इव गृहीतः; स भवानितः प्रतिनिवृत्य तपस्विकार्य्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति" इति। अनेनैव सन्दर्भेण राजजननी कियत्स्नेहमयेन चक्षुषा पुत्रदेशीयं तमैक्षत तत्तु व्यक्तमेव

विज्ञायते ; द्वितीये तु अङ्के नृपतिः शकुन्तलामधिकृत्य यान् यानेव हि विषयानप्राक्षीत्, तत्र तु माधव्यः तस्मै यथायथं समीचीनमेव उत्तरजातमदित ; तत् सर्वमेव हि अतीवान्तरङ्गमिवोचितमिवाभाति नः।

नरपतिः प्रथमतश्च यदा मुनिदुहितुः शकुन्तलायाः निरुपमलावण्यशृङ्खलेन निरुद्धगतिरासीत्, तदानीश्च तस्य

विदूषकनृपयो-र्योऽन्यं सखि-भावः

तथाविधामवस्थामालोकमानः विदूषकः ऋषि-कन्यकासु धर्मशासनकृतामननुमतः चत्रस्य नरपतेरनुरागः कथमपि उचितः न भवति, इत्यमनिशमेवान्वध्यासीत्, सर्वथैवैतदकृत्यमिति च स्वगत-मचीकथत् ; यथा—"भोदु ण से प्पसम्भं वड्ढइस्सं" इति, अपि च तदा प्रकाशं ब्रूते स्म,—"भो जइ सा तवस्सिकस्सआ अणब्भत्थणीआ, ता किं ताए दिट्ठआए ?" इति। अथ कियत्-कालानन्तरं विदूषकः स्वस्य स्वाभाविकीं स्वादुरसवद्भोजन-प्रियतामुल्लिख्य निरुपमयैकयोपमया निसर्गरुचिरया सौन्दर्य्य-मखिलमुद्भाव्य च राज्ञः शकुन्तलायां सुदृढप्रीतेः निदर्शन-मेकं विसृष्यादर्शयत्, यथा—"भो जधा पिण्डखज्जूरेहिं उब्वे-जिदस्स तिन्तिड़ीए सद्धा भोदि, तधा अन्तेउरइत्थिआरअण-परिभोइणो भअदो इअं पत्थणा" इति।

पञ्चमाङ्के तु नरपतिः शुद्धान्तविलासिन्यै हंसवत्यै प्रणयसन्देशं तद्गताश्च सुदृढां स्वप्रियतामनेनैव विज्ञापयति ;

तस्मिंस्तु राज्ञः सुदृढविश्वासः

षष्ठाङ्केऽपि पुनरेवासौ यदा शकुन्तलाविप्रयोग-विह्वलविग्रहः बभूव, तदैव हि विदूषकः प्रीतियुक् सुसखेव असमान्वत् ; आह च-

"भो वअस्स ! किं एदं तुह उववसं ? ण कदावि सप्पुरिसा सोअचित्ता होन्ति, णं पवादेवि णिक्कम्पा ज्जेव गिरिओ"

इति। ततश्चासौ आलेख्यगतां शकुन्तलां राज्ञः स्मृतिपथं पातयित्वा, तदीया प्रतिकृतिरेव त्वच्चित्तविनोदनपटीयसी, साम्प्रतं चरमः मानससन्तर्पणोपायः इत्युपदिश्य, कियत्कालात् परञ्च ते भूयः शकुन्तलया समागमो भविष्यतीत्युद्भावयन् कथमपि तच्चेतसः स्थैर्य्यं समपीपदत्। यथा हि—"ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति" इति।

एतादृक्षु दुःखायमानेषु विषमेषु दशाविपर्य्ययेष्वपि शकुन्तलाप्रणयास्पदानि हितानि अन्तस्तोषकराणि नर्म्म-वचनान्याभाष्य नियतोद्दामानुध्यानदामदृढ़निबद्धं शकुन्तला-सक्तं चेतस्तदीयं कथञ्चित् शिथिलतामनयत्, विरहजदाह-सन्तापश्चापनेतुं भूयोऽयतिष्ट च। यदा हि नरपतिः वसन्त-सुषमासमागमसमये, "मनसिजेन सखे! प्रहरिष्यता धनुषि चूतशरश्च निवेशितः" इति विनिगद्य कामदेवं दूषयितुमारेभे, अपि चानिमित्तनिराकृता शकुन्तला स्मृतिपथसमुदीयमाना अहर्न्निशमेव तन्निराकरणप्रभवं सन्तापमुद्बोधयति, माधव्यः तदानीं केवलं तदीयस्वभावसुलभं विदूषकजनोचितं प्रत्यग्र-विकस्वरं कमनीयं रहस्यभाषणमाख्याय नृपं शकुन्तलाऽनुशयं व्यसस्मरत्, भूयसा नर्म्मबहुलवचसा च हासयित्वा राज्ञः चेतसि समुत्फुल्लतामाधातुमसावशकत् इति। आह च,—"भो वअस्स! चिट्ठ दाव जाव इमिणा दण्डकट्ठेण कन्दप्पबाणं णासेमि" इति; दण्डकाष्ठञ्चोद्यम्य तदा चूताङ्कुरं पातयितुं न्ययुङ्क्त; राजा तु तदानीं—"भवतु दृष्टं ब्रह्मवर्च्चसम्" इत्यभिधाय क्षणमहासीत्।

अथ यदा नृपतिः सुतीव्रशकुन्तलाऽनुध्यानेन तन्मयचेताः समजनि, तदा हि तत्कृतं तथाविधं रहस्यसमाख्यानमपि

सम्पूर्णमेव विफलतामयासीत्। यदा तु नरपतिः "उपालप्स्ये तावदिदमङ्गुरीयकम्" इत्यभिधाय अङ्गुलीयकं भर्त्सयितुमारब्ध, तदैव च विदूषकः तं प्रोत्फुल्लयितुं बहुधा अयतिष्ट; अतश्चोवाच,—"भो अहं पि दाव एदं दण्डकट्ठं उवालहिस्सं, कधं उज्जुअस्स मे कुडिलं तुमं सि त्ति" इति; तत्र तु लीलालापे नरपतिः स्वश्रुतिमपि नापातयदिति। ततश्च यदा पुनरुवाच विदूषकः,—"भो! सव्वधा अहं बुभुक्खाए मारिदव्वो" इति, तदानीमप्यसौ महीमहेन्द्रः साग्रहं न समशृणुत; सत्यं हि एतत् सुगभीरायां मर्म्मस्पृशि च दुःखसन्ततौ समापतितायां विभ्रमलसत्प्रोद्भिन्नप्रसूनमेदुररहस्यालापाः रुचिरा अपि हृदयाकर्षकाः न भवन्ति, प्रत्युत विरागमेव समधिकमादधति; वयमत्रेत्थं समविद्महि।

महाकविः कालिदासः स्वग्रथिते वस्तुनि शाकुन्तले सभ्यजनसमाजरञ्जनहास्यरसोद्दीपनानुकूलवाग्मितां सखिताञ्च द्वे अपि एते समं संविधाय विदूषके, नाटकमिदं चरमोत्कर्षपदवीमारूरुपत्। परन्त्वालङ्कारिकगणानुमतविधानमनुसृत्य मोदकादिभोज्यनिचयेषु तदीयामतिप्रणयितां विन्यस्य स्निग्धसखीजनोचितव्यवहारैः सुदृढसखिभावसंगठनविधौ कथञ्चित् विदूषकं परिहीणमकार्षीत्; एतेषान्तु हास्यरससाधकत्वात् आलङ्कारिकसमयसुप्रसिद्धतया न हि तावत् तथाविधा मोदकादियाचना दूषणग्रस्ता इति विभावयामः। अत्रामुष्य सखिभावः न हि तथाविधः अपुस्फुटत, यथा हि इह समप्राणसखिजनसदाचारः प्रचरति इति।

कवेरालङ्कारिकानुमतविदूषकचरितसर्ज्जनम्।

अथ शकुन्तलां तदन्तरङ्गसखीजनञ्चाधिकृत्य कविः यादृशमनुपमं माधुर्य्यं गाम्भीर्य्यञ्च प्रदर्श्य तासामन्योऽन्यानुरागसमेधितं

## अवान्तर-क्षुद्रचरितानि ।

कवेः क्षुद्रमह-चरितोपवर्णने समं नैपुण्यम्

न हि खलु महतामनुपमगुणवतामुदारभावापूरितानां वा पदार्थानामुपवर्णनमेव केवलं काव्यस्योद्देश्यीभूतत्वसरणिमारोहति ; बहिःप्रकृतौ मानवप्रकृतौ यत्र कुत्रापि वा भवतु, यदतीव सूक्ष्मं साधारणञ्च भवति, विशदीकृत्य पुष्कलतया समीचीनतया च तत्प्रदर्शनं, तस्य चान्तर्गोपायितं किमपि अनुभवमात्रैकवेद्यं सौन्दर्य्यमाविष्कृत्य हृदयग्राहिणीभिः तत्तद्भावसमुदयोपवर्णनाभिः सभ्यजनानां त्रिविधतापतप्तमानसस्वस्त्ययनमपि काव्यानुशीलनस्य च विषयान्तरमेकमसेचनकं वेदितव्यम् ; अपि चात्र महत्याः कवित्वनिर्णायकशक्तेः सत्तमः परिचयोऽपि सुखेनैव लभ्यते धीमद्भिः गवेषणाविशुद्धबुद्धिभिरिति ।

शाकुन्तले महामनाः कविकुञ्जरायमाणः कालिदासः महतां नायकादीनां चरितमङ्कापयितुं यादृशीमनन्यसाधारणीं महनीयां विधीतां कवित्वशक्तिं प्राचकाशत ; तथाविधा-

मेवाभिज्ञताम् अपृथ्लानामवान्तरचरितानां वर्णनावसरेऽपि। तत्र प्रतिचरितमेवासौ कविः वैशिष्ट्यविकाशककौशलेन काममपि स्वीयामसामान्यां प्रतिभां प्रादीदृशत्, कुत्रापि च चरितद्वयी नैकरूपतामापादिता। समाङ्गप्रस्तुतमभिज्ञानशकुन्तलं नाम नाटकमेतत् परिपोषयितुम् असौ अलङ्कारशासनसमयसिद्ध-मधोल्लिखितमवान्तरपात्रनिचयमवतारयामास।—स्त्रीषु प्रति-हारिणी वेत्रवती, शुद्धान्तचर्य्यः चेट्यः, परभृतिका मधुकरिका चतुरिका इत्यादि; पुरुषेषु च विदूषकः, भद्रसेनः, सशिष्यः वैखानसः, करभकः, रैवतकः, मागधौ, अशीतिवर्षवयाः कञ्चुकी पार्वतायनः, वेत्रयष्टिरेवाधुना तदीयमवलम्बनमजनि, प्रतिक्षण-मेव हि तदीया स्मृतिरभ्रशत्, अबोधि च; राजनि तस्या-ऽकल्मषा अजिह्मा स्नेहसन्ततिः कर्त्तव्यनिष्ठा च यथासीत् तथैव द्वित्रेण वचसा कियत् सुस्फुटं प्राकाटि कविनेति। राजपुरोधाः मनस्वी क्रियाकलापनिष्णातः धीमान् सोमरातः देशकालो-चिताचारनिर्णयकुशलः राजनि च विशुद्धवात्सल्यवान्, इति कविरदर्शयत्; अराजत च राज्ञः स्यन्दनाधिभूः सूतः।

पुरा किल सारथिपदम् इदानीमिवानुच्छ्रितं हेयञ्च नासीत्, असौ तु गीर्वाणवाण्या राज्ञा समं प्रीतियुक् सखेव सन्ततमालापीत्; राजानन्तु जैवातृकायुष्मदित्यादिकमभिधाय सततमेव तं समबुद्ध; नरपतिरपि तस्मिन् सम्भ्रमेण प्रेम्णा च सार्द्धं स्निग्धमाचरति स्म। वैयासिके भारते तु सव्यसाचिस्यन्दने क्षत्तृत्वभूमिकामध्यारूढं भगवन्तं वासुदेवं विलोक्यैतदेवाव-गम्यते यत्—सारथ्यं पुरा नीचजनोचितं कर्म्म इति कैरपि नान्वमानि इति।

नीचताविकाशनाय कविः कुशीलकादीन् धीवरभूमिका-मजिग्रहत्; वेपमानकायप्रतीकानां त्रस्नूनां मत्स्यजीविनामुपरि

इतरचरित-वर्णनम्

नागरिकश्यालकस्य तत्सहचारिणोः राजपुरुषयोश्च क्रूरं निकारबहुलं तद्दर्शनं, ततश्च तेषां जघन्यजनोचितरहस्यभाषणं, कश्मलं प्रमोदादिकं, राजपुरुषत्वेन नगरपालकानामहङ्कारव्यञ्जकव्यवहारादिकञ्च, सर्वमेवैतत् देशकालोचिततया सुष्ठु अचित्रि कविना। जालिकस्तु प्रसादप्राप्तपारितोषिकार्द्धम् अङ्गुलीयकमूल्यसम्मितं रक्षिद्वयाय दातुं प्रतिश्रुत्य कथञ्चिदेव तद्धस्तादात्मानमगौप्सीत्। तत्तद्व्यवहृतौ सम्यक्पर्य्यालोचितायामेतदवगम्यते यत्—तदानीमपि सामान्यनगररक्षकपुरुषाणामुत्कोचसङ्ग्रहप्रणयित्वमासीदिति। धीवरस्य राजपुरुषयोश्च भाषासु विशिष्य परिशीलितासु दृश्यते एतत्, यत्—तैरभिहिता प्राकृतभाषा राक्षसी पैशाचीव नीचजनोचिता श्रुतिपरुषा, अपरेषां पात्राणामुक्तिरिव न रुचिरा न वा सद्भिः समादृता चेति।

अवान्तर-चरितावतारणम्

कुलपतेः महर्षेः कण्वस्याश्रमपदे शार्ङ्गरव-शारद्वत-हारीत-प्रभृतयः बहवः शिष्याः आसन्; अपि च स्थविरा तापसी कण्वभगिनी गौतमी। जन्मतः प्रभृति उद्यानपालिकयेव स्वमात्रा परिहृताऽपि अस्या एव अप्रतिमस्नेहसलिलेन अकपटयत्नेन च परिवर्द्धिता किल शकुन्तलाव्रततिः। मन्ये, कथञ्चिदेव तत्रैव तापसीशुद्धाङ्के मातुरनुपमं निराविलं प्रेमपयः पातुं सा ऐशिष्टेति। एतदन्यत्, भर्त्तृगृहगमनवेलायां शकुन्तलामाशिषा संवर्द्धयितुं तापस्यश्च सर्वाः समवेताः आसन्। भगवतः मारीचस्याश्रमपदेऽपि एवमेव तपस्विनीसङ्घसमागमः दृश्यते स्म।

दिविषदः देवयोनिविशेषांश्चापि कविरत्र नाट्यभूमौ अभिनेतुमवातीतरत्। महेन्द्रसूतः मातलिः, स्वारूपाजीवायाः

मेनकायाः प्रियसखी अप्सराः मिश्रकेशी, सुराऽसुरगुरुः भगवान् कश्यपः, भगवती सुपर्वव्रातप्रसूतिरदितिश्च। एतेषाञ्च चरितेष् किमपि प्रशान्तमुदारं पूतं सुगभीरञ्च ज्योतिरदीपि। शकुन्तलासुते सर्वदमने शिशुजनदुर्लभं किमपि शौर्य्यं सम्यक् सम्फुल्लमास्त इति।

## प्रकृतिः।

बभूव किल तत्रभवान् महाकविः कालिदासः मनुजचरितमनुकुर्वाणानां नैसर्गिकभावसमुदयानामुद्घाटने अतीव निपुणः। न ह्यस्ति इह भुवि कोऽपि तादृक्प्राकृतगुणोपवर्णनविधौ तत्प्रतिपक्षः। यथैव हि सूक्ष्मधिया प्रोत्युत्फुल्लचक्षुषा च कविना प्राकृतिकदृश्यसङ्घः तत्तत्काव्येषु उपावर्णि, नास्ति तत्प्रतिमा इह जगति कुत्रापि काव्यनिचये। अमुना प्रायशः प्रतिश्लोकं यानि हि असंख्येयानि उपमानानि प्रायोक्षत, तैरेव तस्य चमत्कारातिशयसुसूक्ष्मप्राकृतिकभावपर्य्यालोचनायाः सुपरिचयः सुखेन लभ्यते काव्यकलालापचतुरैः। अपि चासौ कविः गुणत्रयमयीं प्रकृतिं येन खलु महानुभूति-प्रीतिमयेक्षणेनापश्यत्, तदनिर्वचनीयम्। दृश्यते हि यादृशी प्रकृतौ प्रीतिः प्राच्यकवीनां साहजिकी, प्रतीच्येषु कस्मिंश्चिदपि कवौ तस्यामतिविरला खलु तादृशी स्वाभाविकी प्रियता; ते तु प्रकृतौ प्रकृतित्वेन श्रद्दधानाः तस्यामतितरामनुरक्ताः भवितुं नूनं न शक्नुवन्ति; अपि तु तां मनुजशीलूषाणां पारिपार्श्विकरूपत्वेनेच्छन्ते। तादृशवैषम्याणां विधायकः अस्त्यत्र कश्चित् निगूढतमः भेदः उभयदेशीयानां जनानां

मेनकायाः-प्रियसखी अप्सराः मिश्रकेशी, सुराऽसुरगुरुः भगवान् काश्यपः, भगवती सुपर्वव्रातप्रसूतिरदितिश्च। एतेषाञ्च चरितेषु किमपि प्रशान्तमुदारं पूतं सुगभीरञ्च ज्योतिरदीपि। शकुन्तलासुते सर्वदमने शिशुजनदुर्लभं किमपि शौर्य्यं सम्यक् सम्फुल्लमास्ते इति।

## प्रकृतिः ।

बभूव किल तत्रभवान् महाकविः कालिदासः मनुजचरित-मनुकुर्वाणानां नैसर्गिकभावसमुदयानामुद्घाटने अतीव निपुणः। न ह्यस्ति इह भुवि कोऽपि तादृक्प्राकृतगुणोपवर्णन-विधौ तत्प्रतिपक्षः। यथैव हि सूक्ष्मधिया प्रोत्फुल्लचक्षुषा च कविना प्राकृतिकदृश्यसङ्घः तत्तत्काव्येषु उपावर्णि, नास्ति तत्प्रतिमा इह जगति कुत्रापि काव्यनिचये। अमुना प्रायशः प्रतिश्लोकं यानि हि असंख्येयानि उपमानानि प्रायो-ज्यत, तैरेव तस्य चमत्कारातिशयसुसूक्ष्मप्राकृतिकभाव-पर्य्यालोचनायाः सुपरिचयः सुखेन लभ्यते काव्यकलालाप-चतुरैः। अपि चासौ कविः गुणत्रयमयीं प्रकृतिं येन खलु महानुभूति-प्रीतिमयेक्षणेनापश्यत्, तदनिर्वचनीयम्। दृश्यते हि यादृशी प्रकृतौ प्रीतिः प्राच्यकवीनां साहजिकी, प्रतीच्येषु कस्मिंश्चिदपि कवौ तस्यामतिविरला खलु तादृशी स्वाभाविकी प्रियता; ते तु प्रकृतौ प्रकृतित्वेन अश्रद्दधानाः तस्यामतितरा-मनुरक्ताः भवितुं नूनं न शक्नुवन्ति; अपि तु तां मनुजशीलु-षाणां पारिपार्श्विकरूपत्वेनेच्छन्ति। तादृशवैषम्याणां विधायकः अस्त्यत्र कश्चित् निगूढतमः भेदः उभयदेशीयानां जनानां

मेनकायाः प्रियसखी अप्सराः मिश्रकेशी, सुराऽसुरगुरुः भगवान् कश्यपः, भगवती सुपर्वव्रातप्रसूतिरदितिश्च। एतेषाञ्च चरितेषु किमपि प्रशान्तमुदारं पूतं सुगभीरञ्च ज्योतिरदीपि। शकुन्तलासुते सर्वदमने शिशुजनदुर्लभं किमपि शौर्य्यं सम्यक् सम्फुल्लमास्त इति।

## प्रकृतिः।

बभूव किल तत्रभवान् महाकविः कालिदासः मनुजचरितमनुकुर्वाणानां नैसर्गिकभावसमुदयानामुद्घाटने अतीव निपुणः। न ह्यस्ति इह भुवि कोऽपि तादृक्प्राकृतगुणोपवर्णनविधौ तत्प्रतिपक्षः। यथैव हि सूक्ष्मधिया प्रोत्युत्फुल्लचक्षुषा च कविना प्राकृतिकदृश्यसङ्घः तत्तत्काव्येषु उपावर्णि, नास्ति तत्प्रतिमा इह जगति कुत्रापि काव्यनिचये। अमुना प्रायशः प्रतिश्लोकं यानि हि असंख्येयानि उपमानानि प्रायोक्षत, तैरेव तस्य चमत्कारातिशयसुसूक्ष्मप्राकृतिकभावपर्य्यालोचनायाः सुपरिचयः सुखेन लभ्यते काव्यकलालापचतुरैः। अपि चासौ कविः गुणत्रयमयीं प्रकृतिं येन खलु महानुभूति-प्रीतिमयेक्षणेनापश्यत्, तदनिर्वचनीयम्। दृश्यते हि यादृशी प्रकृतौ प्रीतिः प्राच्यकवीनां साहजिकी, प्रतीच्येषु कस्मिंश्चिदपि कवौ तस्यामतिविरला खलु तादृशी स्वाभाविकी प्रियता; ते तु प्रकृतौ प्रकृतित्वेन श्रद्दधानाः तस्यामतितरामनुरक्ताः भवितुं नूनं न शक्नुवन्ति; अपि तु तां मनुजशैलूषाणां पारिपार्श्विकरूपत्वेनेच्छन्ति। तादृशवैषम्याणां विधायकः अस्त्यत्र कश्चित् निगूढतमः भेदः उभयदेशीयानां जनानां

स्वभावसिद्धः, विषयस्य तस्यैवात्र गौरवलाघवविचारविधौ यत् कथञ्चित् पुरस्तात् संक्षेपतः न्यस्तं तत् वयमिदानीं विशदीकृत्य कौतुकात् सविस्तरमालोचयितुमिच्छामः।

प्राच्य प्रतीच्यानां सौन्दर्य्योपभोगः

प्रतीच्यास्तु किल स्वकीयभोग्यवस्तुत्वेनाद्रियन्ते प्रकृतिमित्याहुः केचन ; तथा हि—भुवि मानवा एव जीवेषु प्रधानाः, सर्वेभ्यः सुधियः विवेकवन्तश्च, अन्यत् यदिहास्ति किञ्चित् तत्सर्वमपि प्रायः तेषां भोगायैव विहितं विधिना, इत्येव तेषामान्तराशयः सुस्थिरः सिद्धान्तश्च। वस्तुतस्तु यूरोपीयाः प्रकृतिसौन्दर्य्यं निरीक्ष्य यत् विमुह्यन्ति, तत् स्वीयां परकीयाञ्च भोगवासनापरितृप्तिं साधयितुमेव। शवलानि अनिर्वचनीयपेशलतानिधानानि शुक्लनीलपीतप्रसूनानि संदृश्य प्राच्याः प्रतीच्याः सर्वे हि युगपत् प्रीणन्ति विमुह्यन्ति चेति सत्यम्। परन्तु प्राच्याः विद्वांसः तानि अवचित्य स्वाभीष्टदेवं समर्चयन्ति; प्रतीच्यास्तु तेषां सौन्दर्य्येण सौरभेण चातिथिपरितृप्तये स्तवकांश्च विरचय्य तैः हर्म्म्याणि सुशोभितानि सुगन्धीनि च कुर्वन्ति। भारताधिवासाः कोविदास्तु प्रकृतेः सौन्दर्य्यं गाम्भीर्य्यञ्चावलोक्य तस्याः वहिर्द्दृशावरणभूतं कुसुमादिकमन्तरा अखिलसौन्दर्य्यस्य मूलाधारभूताः याः परमाः देवताः निगूहिताः तिष्ठन्ति, तासामेवानारतमनुध्यानेन तद्गतहृदयाः अत्यर्थम् आनन्दविह्वलाः भवन्ति। अपि च यत्र प्रकृतेः मानसोन्मादकरं सौन्दर्य्यं समधिकं सुविकाशितं पश्यन्ति, तत्रैव देवमन्दिरं निर्म्माान्ति ; यूरोपीयास्तु पुनः तदेव स्थानं मानसपरितृप्तये अधिकतरनयनाद्यानन्दकरान् व्यापारनिचयाननुष्ठाय पूर्वतोऽपि रमणीयतमं कुर्वन्ति। भारतीयास्तु परिव्राजकाः हिमाचलस्य अभ्रभेदितुषारविमण्डितं शिखरं

समतिक्रम्य कैलासगिरिमेत्य तमध्यासितं देवादिदेवं शङ्करं तत्त्वमन्वैरुपतिष्ठन्ते; तेनैव हि स्वं धन्यं कृतार्थञ्च मन्यन्ते। यूरोपीयास्तु "आल्प्स्" शैलस्याभ्रंलिहकूटमारुह्य तदन्तर्निहितं सौन्दर्यं केवलं स्वयमेवानुपभुज्य जगति अपरेषां नयनविषयीभूतं विधातुं सततमेवेहन्ते। यानि चादृष्टचराणि दृश्यानि केऽपि वा कदाचिदपि पूर्वमधुना वा नावालोकन्त, यावन्ति चान्तराणि, यति वा दूरान् पथः ऊर्द्ध्वमुत्थातुं प्रायः मानवानां शक्तयः प्रकृतिप्रतिहताः तस्याः विनिवर्त्तन्ते, तत ऊर्द्ध्वमप्यधिकमुत्थाय प्रकृतेरुपरि स्वेषां विजयवैजयन्तीं स्थापयितुं विश्वजनीनं कृत्यञ्च साधयितुमेव साग्रहाः सोत्सुकाश्च भवन्ति; एवं नवतत्त्वाविष्करणप्रवृत्तयः केवलमनिशं तानुन्मादयन्ति। भारतीयैरार्य्यसूनुभिः सा एव प्रकृतिः सादरं कीदृशमन्वबोधि,— कथं वा सा एवं परमदेवता इवान्वमानि,—तदेवादौ विशदीकृत्य दर्शयितुमिच्छामः।

वेदाचारानुशीलनशीलाः आर्य्यसूनवः जरायुजादिजीवसङ्घसमाकुलानि सशैलकाननपूरितानि रत्नाकरवेलावप्रवलयानि तरुलतागुल्माद्योषधिसमन्वितानि ग्रह-ऋक्षादिज्योतिश्चक्रोद्भासितानि अपरिमेयाणि एतानि समष्टिव्यष्टिभूतानि जगन्ति, केवलमेकस्मिन् सनातने पूर्णे चिन्मयेऽवाङ्मनसगोचरे ब्रह्मणि प्रतिष्ठितानीति सततमनुध्यायन्ति; समस्तानि चैतानि अखण्डस्यास्य ब्रह्मणः विराड्रूपतया स्थितानीति विभावयन्ति; तदर्थमेव ते आर्य्यसन्तानप्रसूताः, देवाः मनुष्याः पशवः पक्षिणः कीटाः पतङ्गाः वृक्षाः व्रततयः गुल्माः ओषधयः धातवः पाषाणाश्च ये केऽपि वा भवन्तु, सर्वे तस्यैकस्यैव भगवतः आनन्दरूपिणः सत्तया ज्योतिषा च देदीप्यमानाः चिरं चकासति इति अनारतमेव नितरां

चिन्तयन्ति। ते च एतेष्वेवायं हि महान्, एतच्च परिहीणं तुच्छं गर्हणीयञ्च भवति इति न कदापि मनसि कुर्वन्ति ; अपि च सर्वत्र सर्वथा समदर्शिन: एव भवन्ति। तथैव श्रुतिरप्याह,—"यो देवोऽग्नौ, योऽप्सु, यो विश्वं भुवनमाविवेश, य ओषधिषु यो वनस्पतिषु तस्मै देवाय नम:"। अपरञ्च, ईशोपनिषदि—

"तदेजति तन्नैजति तद्दूरे तद्वदन्तिके।

तदन्तरस्य सर्वस्य तदु सर्वस्यास्य वाह्यत:॥" इति।

तथा हि, यदेव चलति, अर्थत: जङ्गमभूतमित्याख्यायते, यदेव हि गन्तुं न शक्नोति स्थावरभूतमिति, यच्च दूरत: निकषा च तिष्ठति, यच्च अन्त: वाह्यतश्चास्ते, तत्सर्वमेव तदीयं रूपमिति। सर्वं हि तदात्मकं तदंशभूतं वा ; एतदेवात्र तत्त्वं यत्—सर्वत्रैव तदीयं पूर्णत्वं समतया विद्यते इति। तथाह—वाजसनेयसंहिता,—

"पूर्णमद: पूर्णमिदं पूर्णात् पूर्णमुदच्यते।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते"॥ इति।

तरुलतादिस्थावरजङ्गममयेषु भूतसङ्घेषु पटवयनसम्मितेन ओतप्रोतमहिम्ना रसात्मिका देवता पूर्णतया सर्वत्रैव सममास्ते ; तथा हि श्रुति:—"रसो वै स:" इति ; अपि च मुण्डकोपनिषत्,—"आनन्दरूपममृतं यत् विभाति" इति ; अत: तत्र तत्र या या एव देवता: प्राच्यकवीनां प्रत्यक्षवद्दृश्यमाना: लक्ष्यीभूतास्तिष्ठन्ति, ता: रसरूपा: आनन्दरूपाश्च सर्वत्र समभावेन सुचिरं सुविकाशमासते, तेषाञ्च हृदि विश्वोद्भवेषु वस्तुनिचयेषु प्रत्येकमपि सममिव प्रीतिमुत्पादयति ; जगदाधारकस्य विराड्ब्रह्मण: रूपविभवेन अणोरपि अणीयस्यां महतोऽपि महीयस्यां द्रव्यसन्ततौ पूर्णतया तुल्यतया च स्थीयते ; अत एव नि:श्रेयसमीप्सून् जनान् सम्बुध्य श्रुतिरेव-

माह,—"मा हिंस्यात् सर्वाभूतानि" इति। एवमेव हि श्रुतिषु बहुशः प्रतिपादिता, प्रत्नकालात् प्रभृति विद्वद्भिरनुस्मृता च तुल्या प्रीतिः श्रद्धा भक्तिश्च पुरा तु समधिकतया अचकात्; का कथाऽपरेषामेकं स्कन्दपुराणमधीत्यैव सम्यगवबुध्यते यत् भारतेऽस्मिन् नास्ति एवं क्वापि स्रोतस्विनी सिकतामयी, क्ष्माभृद् उपलविषमः, अम्भःपूर्णः ह्रदः, कमलाकरः कासारः, निकुञ्जवती अटवी वा यत् न हि सर्वत्रानुस्यूतया श्रद्धया भक्त्या प्रीत्या च सह पूततमतीर्थभूतत्वमागतमिति; भवन्तु वा स्थितिशीलाः ग्रावाणः, अथवा उद्भिदः द्रुमवल्ल्यादयः, पशवः पक्षिणश्च, सर्वस्मिन्नपि वस्तुनि अविशेषेणैव भारतीयानामार्य्यसूनूनां निरा-विला श्रद्धा प्रीतिश्च तिष्ठति। दृश्यते हि भूयसा पुराणेषु न्यग्रोध-पिप्पलपिचुमर्द्दमालूरतुलसीप्रभृतयः पादपाः यस्यैकस्यापि देवस्य पादार्पणानुग्रहपूतकायाः सिंहशार्द्दूलमार्ज्जारमूषिकादयः पशवः, मरालशुकमयूरादयश्च पतत्त्रिणः, धर्म्मानुशासनशासि-तानां जनानां हृदि अपूर्वामिव श्रद्धाधारामादधति।

या किल पीनोध्नी गौः प्रपायिणः जनसङ्घान् स्वस्तन-निःसृतां क्षीरपीयूषधारां प्रपाय्य अखिलमेतद्भूमिवलय-मध्यासितानां नराणां नारीणाञ्च सर्वथैऽनुपमं मातीयम् अवश्यकार्य्यं सम्पादयति, भारतवर्षादन्यत्र कुत्र हि तदीयं तथाविधं मातृत्वगौरवं सुसंरक्षितं सदैवास्ते? जगत्प्रीणयित्र्यः गावश्च तावत् न भवन्ति केवलमेवमेव कल्पनामय्यः; कार्य्यतश्च ताः कियद्दूरं हि पूजास्थानानि, तत्तु पुनः सर्व एव आर्य्यवंशविवर्द्धनाः भारतवर्षवासिनः जानन्तीति। अत्र धर्म्मपरायणाः वेदा-नुध्यानरताः मातृभावं समर्चयन्ति, माता मानवी तदि-तरा वा, न हि ते तत् विचारयन्ति। दृश्यते च यैषा

गोपूजा

जागतिकवस्तुनिचयं प्रति अकपटा सहजसिद्धा प्रीतिः श्रद्धा च। एतदेव हि नूनं भारतवास्तव्यानामार्य्यसुतानां वैशिष्ट्यं विद्वन्मतमिति।

धर्म्मकर्म्मक्रियाकलापाः व्रतानुष्ठानानि सद्विचारभूयिष्ठ-शिल्पसाहित्यादिशास्त्राणि च सर्वाण्येव हि निसर्गसिद्धैः द्रव्य-निचयैः पशुभिः पक्षिभिः उद्भिद्भिश्च सार्द्धं विशेषतः मिलि-तानि इति, सूचयन्ति सर्वेष्वेव समदर्शित्वं न हि वैषम्याव-गाहिनीं कर्हिचित् उच्चावचबुद्धिम्।

पुरा हि द्विसहस्राद्प्यधिकमूर्द्ध्वं महाराजाधिराजे मौर्य्य-वंशीयसार्वभौमनरपतौ महीमशोके शासति, तदनुपदन्त्वत्यल्प-

बौद्धभावः

कालात् परमेव नृपासनमलङ्कुर्वाणेषु नरपतिषु, ये च कीर्त्तिस्तम्भप्रस्तरोत्कीर्णाः गिरिगात्रत्तोदि-ताश्च लेखनविशेषाः आसन्, ते नः महामतिसम्राजां रक्षण-प्रयासेन क्षयक्रतः कालस्य ध्वंसधर्म्मित्वप्रभावमभिभूय इदानी-मपि प्रत्यक्षीभूततया राजन्ते। तेषु सम्यक्पर्य्यालोचितेषु एत-दवगम्यते, यत् एकतः देवाः मनुष्याः नागसङ्घाः बोधिद्रुमादयः अपि उपबौद्धधर्म्मचक्रं भक्त्या विनीततया च पूजोपहारसम्भार-हस्ताः उपतस्थिरे इति; अपि च तत्र मृगाः हस्तिनश्चागत्य तत्पुरतः प्राणंसिषुः। अतो हि भगवतो बुद्धस्यादिमं धर्म्मचक्र-प्रवर्त्तनस्थानं मृगदाव इत्याख्यायते। अत एव मन्ये, मृग-समजः तद्धर्म्मचक्रेण सह सविशेषं न्ययुक्तेति। महाराजा-ऽशोकनिर्म्मापितस्य त्रिलोकीविश्रुतस्य अवष्टम्भसमूहस्य शिरसि सिंहवृषभाश्वादिपशूनां प्रतिमूर्त्तयः विशेषतः निखाताः अशुभन्; कारवोऽपि हि तदा पद्मानि कियता प्रीतिचक्षुषा समद्राक्षुः, नास्ति ह्येवं किमपि वचनं, येन तदद्यापि वक्तुं शक्यते इति; तथा हि—महोत्पलं, तत्कोरकं, मृणालं,

विकमितताम्ररसं, क्षुद्रतरं बृहत्तमञ्च विविधं विसप्रसूनं, नानारूपैः विविधाभिः भङ्गीभिश्च शिल्पिभिः समन्तात् विन्यस्तम्। मन्ये, तैस्तैः सम्यगालिखितैः न ते कारवोऽवाप्सिसुः। तथा काव्यनिचयेषु तैस्तैश्च जीवैः सह त्रिगुणमय्याः प्रकृतेः नैसर्गिकं सम्मिलनं दृश्यते; सर्वेषु प्राणिषु अपि कवीन्द्राणां तदितराणाञ्च निर्विशेषा अकल्मषा समा दृष्टिरस्तीत्यनुमीयते। वेदानां पुराणानाञ्च विविधवादं विनापि अतिविशालेषु बौद्धजातकग्रन्थेषु पञ्चतन्त्रे हितोपदेशे च समधीते ज्ञायते एतत्, यत्—प्राणिपूर्णमेतदखिलं जगत् भारतीयाः कोविदाः कीदृशयैवाभेदधिया प्रीतिसान्द्रदृष्ट्या चैक्षिषतेति; एतेषामेव काव्यचयानां प्रतिकृतिमवलम्ब्यैव यूरोपभुवि ईषपकवीन्द्रेण नीतिकथा, अन्याश्च बह्व्यः कथाः निरमायिषत इतरैश्च विद्वद्भिः। तानि तानि च केवलं तावतीनां भारतीयकथानामुपाख्यानानाञ्च प्रतिध्वनिभूतानि इति मन्ये; पञ्चतन्त्रेष्विव अन्येषु विविधेषु संस्कृतकाव्येषु, अस्यामेव प्रकृतौ नैसर्गिकी सहजस्नेहजा प्रीतिरीदृशी सुविकस्वरा अस्तीति दृश्यते, प्रकृतेरभेदबुद्ध्यैव दर्शनं, देवबुद्ध्या च तासां तथाविधमर्चनं ध्रुवं भारतीयानां स्वभूतमिति।

इदानीं वयमुभयोरेव प्राच्यप्रतीच्यदेशयोः नैसर्गिकपदार्थनिचयेषु कवीनां कीदृशी समा विषमा वा दृष्टिरासीत् तत्सम्यगुपलब्धौ अग्रेसरामः। पाश्चात्त्याः किल कवयः प्रायशः मानवानां मनोभावान् प्रकृतावेवारोपयन्ति। ते हि यदा यान् यानेव भावान् वर्णयन्ति, तदा तैस्तैश्च स्वोद्भावितभावसमुदायैः सह प्रकृतिरनुप्राणितेति वर्णयन्ति। यथा हि—काव्यनायकहृदि तुमुलः अन्तर्विद्रोहः उपतिष्ठते, तथैव वहिःप्रकृतावपि तुमुलानि स्थितिविपर्य्ययकराणि आन्दोलनानि

भीतिप्रदाः दुरम्मदोत्पाताः आवर्त्तबहुलवात्यादयश्च अवा-तारिषुः ; भारतीयाः कवयस्तु कुत्रापि नैवमववर्णन्त। यद्यपि कियच्च कुत्रचित् दृश्यते तद्वर्णितवस्तुजातेषु, तथापि ते बहुषु एव स्थलेषु प्रकृतौ मानवहृदयभावाध्यासं सम्यगविधाय प्रकृतिं स्वस्वरूपतयैव वर्णयन्ति, इतीयानेवात्र विशेषः।

पाश्चात्त्यकविषु वरीयान् सेक्सपीयरः यत्र कुत्रचित् प्रकृतिं यथायथमुपाववर्णत्, तत्र चातीवसुदच्चायाः आत्मनः सूक्ष्मपर्य्यवेक्षणशक्तेः सुपरिचयः प्रादायि ; तथाप्यसौ प्रधानत एव मानवान्तर्हृदयानां कविरित्याख्यायते। यतश्चामुना घातप्रतिघात-वशात् नेमिवत् परिवर्त्तिनां मानवान्तर्मनसामवस्थाविशेषाः स्वकाव्येषु स्फुटमेवालिखिताः, तान् तानेव भावान् विशदी-कृत्योपवर्णयितुं यासां यासामेव निसर्गसिद्धानां पदार्थावलीना-मुपवर्णनं तदनुकूलं भवति, तावन्मात्रमेव तेनैवोपावर्णि। एवंविधतद्ग्रथितवस्तुवर्णनदर्शनात्, प्रकृताविव तस्य निसर्गा-गता तादृशी प्रीतिः, सम्यान्तस्तत्राकर्षिका सहजसिद्धवस्तूप-वर्णनशक्तिश्च तथा नैवालोक्यते। परन्तु कवेः कालिदासस्य यस्मिन्नेकस्मिन्नपि दृश्ये श्रव्ये वा काव्ये स्फुटमेवैतदवगम्यतेतरां, यत् नायिकानायकादीनां हृद्गतभावैः विविधाभिः मनोवृत्ति-भिश्च सार्द्धं तत्प्रकृतिप्रीतिप्रवाहिणी प्रवाहधाराशतैः कियच्च प्लाविता आसीदिति। परन्त्वेतेनैवासौ कविः केवलं प्रकृतिवर्णनपटुः, तत्प्रियस्तु नासीदित्यपि वक्तुं न शक्यते। त्रिगुणमय्याः प्रकृतेः नानामानवचरितस्य च पुङ्खानुपुङ्खशः सुतीव्रानुशीलिनो तदीयाऽनिर्वचनीया कवित्वशक्तिः ; काव्य-स्वरूपालेख्यभूमौ अपूर्वभावेण तच्चित्राङ्कनरीतिश्च तस्मिन् युगपदेव समवेता तमिह जगति कविषु वरणीयत्वपदवी-

सेक्सपीयर-कालिदासौ

मधिगमिता ; अतो हि असौ अतुलनीयोऽभूत्। यथा हि रसविश्लेषणशास्त्रवित् विभिन्नगुणानां वस्तूनां संयोगेनैव अभिनवगुणशालिनं द्रव्यनिवहं सृजति, तस्य तस्य च उपादान-सङ्घस्यान्योऽन्यगतवैषम्यं पृथगस्तित्वञ्च नवाविष्कृतपदार्थे प्रत्यक्षत: नानुभूयते, तादृशरासायनिकवत् विश्लेषणसंयोगात्मिका द्विविधा एव शक्ति: महाकवे: कालिदासस्य कृतौ एकीभावत्व-मागतेति।

यथा हि, मेघदूतं नाम खण्डकाव्यं पूर्वोत्तररूपांशद्वयेन विभक्तम्, एतदंशयुगले एव सप्रणिधानमालोचिते, दृश्यते यत्— पूर्वमेघे कविना केवलं प्रधानत: प्राकृतिकवस्तुनिचयानां सौन्दर्य्यमुपवर्णितम् ; एवं तेन साकं सुखदु:खादिविषयिका मानवहृदयानुभूति: वसनस्यूतिरिव ओतप्रोतभावेन एकत्वमा-पादिता। अपि च उत्तरमेघे मानवमानसवृत्तिसमूहोप-वर्णनमेव प्रधानम् ; परन्तु कविरत्र गिरिनदीप्रभृतिप्राकृतिक-द्रव्यसङ्घातस्य सौन्दर्य्यवर्णनव्यपदेशेन मनुजचेतसां विविधं चित्रमङ्कापितवान्, एतावन्मधुरं द्वयोरेव भावयो: समसन्निवेश: अकारि तेन, यत् विमृश्यापि क एष भाग: उत्कर्षमागत: कस्य वापकर्ष: इति नैव कैश्चिदपि विचार्य्य वक्तुं संशक्यते। यूरोपीया: कवय:, विंशतितमशताब्द्यामपि अस्यां यानि यानि तत्त्वानीदानीमपि बोद्धुमनीशा:, तानि तानि हि तत्त्वानि सुचिरातीते तस्मिन् कालेऽपि भारतीयाचार्य्यसुशिक्षागुणानां महिम्ना कवे: दृष्टिपथं नात्यक्रमिषु:। तेन हि पुरैतत् साधु स्वधिया समुपालम्भि, यत् धात्रा क्षोणीतलमेतत् केवलं मानवानां सुखविलासोपभोगाय नासर्ज्जि, परन्तु समत्वबुद्धये। यदा हि ते प्राकृतिकपदार्थचयेषु यथायथम् असुष्मां मर्य्यादां, समुचितां श्रद्धां, निरतिशयाञ्च प्रीतिं प्रदर्श्य वहिर्लोकेन सार्द्धं

## शकुन्तलाप्रकृतिः ।

अभिज्ञानशकुन्तलं नाम नाटकं सप्ताङ्काङ्कितमपि तत्र खलु तावत् पञ्चाङ्कगतेतिवृत्तयः अतिदूरमवास्थित लोकालय-

तपोवनम्

सङ्कुलेभ्यः जनपदेभ्यः जनकोलाहलमुखराय-माणेभ्यः। अत्र तूपवर्णितं प्रशान्तैः मृणाल-धवलकोमलाशयैः तपस्विनिचयैः समध्यासितं निसर्गामल-सौन्दर्य्यलीलालास्यरङ्गस्थलं आम्नायाभ्यसनशान्तकल्मषब्रह्म-चारिसङ्घसेवितं हिंसाऽसूयाद्वेषादिदोषविनाकृतं भगवद्-वासुदेवचरितमिव तपोवनम्। अत्र हि वातमजाः कुरङ्गाः शाद्वलेषु स्वच्छन्दं विचरन्तः निर्भीकेण मनसा शष्पाणि उप-भुञ्जते ; ऋषिपत्नीभिरपत्यस्नेहेन विवर्धिताः कृष्णसाराश्च पुनः छायातरूणामधस्तात् विश्वस्तं रोमन्थायन्ते ; फलभरावनतकायः कूजद्विविधविहगकाकलीमुखरीकृतविशालवनस्पतिस्तोमैर्विरा-जिततया, मृदुलमारुतमन्दान्दोलितकुसुमकोरकस्तनस्तवका-नर्त्तितकिसलयशयाशाः मुग्धा इव व्रततिततयः आनयन्ते खलु निरुपमां विबुधकदम्बसञ्चारसुभगसततषड्तुशोभमान-सुरालयकाननसुषमाम्। अत्र हि—

"नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः" ॥

# शकुन्तलाप्रकृतिः।

तपोवनम्

अभिज्ञानशकुन्तलं नाम नाटकं समाङ्काङ्कितमपि तत्र खलु तावत् पञ्चाङ्कगर्तैनिहत्तयः अतिदूरमवास्थिषत लोकालय-सङ्कुलेभ्यः जनपदेभ्यः जनकोलाहलमुखराय-माणेभ्यः। अत्र तूपवर्णितं प्रशान्तैः मृणाल-धवलकोमलाशयैः तपस्विनिचयैः समध्यासितं निसर्गामल-सौन्दर्य्यलीलालास्यरङ्गस्थलं आम्नायाभ्यसनशान्तकल्मषब्रह्म-चारिसङ्घसेवितं हिंसाऽसूयाद्वेषादिदोषविनाकृतं भगवद्-वासुदेवचरितमिव तपोवनम्। अत्र हि वातमजाः कुरङ्गाः शाद्वलेषु स्वच्छन्दं विचरन्तः निर्भीकेण मनसा शष्पाणि उप-भुञ्जते ; ऋषिपत्नीभिरपत्यस्नेहेन विवर्द्धिताः कृष्णसाराश्च पुनः छायातरूणामधस्तात् विश्वस्तं रोमन्थायन्ते ; फलभरावनतकायः कूजद्विविधविहगकाकलीमुखरीकृतविशालवनस्पतिस्तोमैर्विरा-जिततया, मृदुलमारुतमन्दान्दोलितकुसुमकोरकस्तनस्तवका-नर्त्तितकिसलयशयाभाः मुग्धा इव व्रततिततयः आनयन्ते खलु निरुपमां विबुधकदम्बसञ्चारसुभगसततषड़ृतुशोभमान-सुरालयकाननसुषमाम्। अत्र हि—

"नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः" ॥

सन्दर्भस्यामुष्य नायिकायाः शकुन्तलायाः चरितं सुविशद-मङ्कापयितुमिवैतादृशतपोवनस्य रामणीयकमीदृशं विशेषतः सुसहायकीकृतं कविना।

प्रथमत एवैतदस्माभिर्दृश्यते यत् शकुन्तला, तदीया च सख्यौ, आश्रमस्थैः बालसहकारतरुभिः माधवीलतिकाभिः, मृगपोतकैश्च आत्मजनिर्विशेषं परिलालिता

आश्रमपदे विशुद्धा प्रीतिः

समस्नेहञ्च विवर्द्धिता; तपोवनेऽध्यासितैः सरलाशयजनसङ्घैः सह सा शकुन्तला यथा सुचिरं दृढ़बद्धस्नेहपाशेन संयताङ्गी, अपि च आरण्यकैः सार्द्धं यथा तैः तस्याः पिताभ्रातृसखित्वादिबन्धनं दृढ़मासीत्, तथैव वृक्षवल्लीभिश्च सह स्वभावसिद्धः स्नेहः प्रणयश्चाकृत्रः अराजत। अतश्च शकुन्तला आह,—"ण केवलं तादस्स णिओओ, मम वि एदेसु सहोअरसिणेहो" इति। तपोवनपादपेषु तस्याः सहोदरसम्मितस्नेहः, नवकुसुमोद्गमयौवनाभिरामायां वयसि वपुःश्रियामिव वनतोषिण्यां नवमालिकायां तदीयममलं सखित्वं, तातकण्वस्य स्वहस्तसयत्नसंवर्द्धितायां माधवीलतायां स्वसृसमप्रणयित्वञ्च दृश्यते। सा तु अतिमुक्तकलता आकालिक्या आ मूलान्मुकुलोद्गमप्रवृत्त्या किमप्येकं तज्जीवनस्य निगूढ़तमं रहस्यमुद्वाहबन्धपिशुनं निर्भराह्लादकरं मानसमोहनं सूचयति। सहकारतरुस्तु तां वातेरितप्रबालकोरकाङ्गुलिभिः प्रियमाख्यातुमिवार्तिमात्रमाकारयति; द्विरेफाश्च सद्यः विकसितां विकचसप्तलाप्रसूनवल्लरीं विहाय अरविन्दगन्धि तद्वदनमाघ्रातुमिवाक्रामन्ति। न हि शकुन्तला तदीयौ च सखीजनौ पादपवीरुद्वल्लरीणां प्रसूनानि प्रसवांश्चोपभोक्तुमिव केवलं तां सेवन्ते, अपि च तेषां जलसेचनानि अनभिसन्धिगुरूणि कामनालेशविनाकृतानि च। अन्यच्चापि

दृश्यते, प्रणयिनः स्वजना यथा अभिमतजनान् देशान्तर-प्रयाणोन्मुखान् अनुमोदयितुं सुयोग्योपायनेनैव प्राययन्ति, तथा वनाधिदेवतानुमताः वनस्पतयोऽपि शकुन्तलां सुस्निग्ध-प्रीतिनिदर्शनभूताभिः शोभनालङ्कृतिततिभिः पिप्रियिरे। तथा हि,—

"क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं,
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।
अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैः
दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः॥" इति।

तपोवनान्तर्वर्त्तिनीषु तरुव्रततिषु न केवलं शकुन्तलायाः, महर्षेः कण्वस्यापि सुगभीरः स्नेहः समासीदेव। अश्राविष्महि वयमेतत् कविना पुरतः अनसूयासम्भाषणमिषेण यत्—नवमालिकाकुसुमपरिपेलवाऽपि सखी शकुन्तला तातकण्वेन आलवालपरिपूरणाय नियुक्तेति; असौ हि प्राणेभ्योऽपि प्रियतमां शकुन्तलामालवालमापूरयितुं नियुज्यैव न तावत् तस्मात् न्यवृतत्, स हि माधवीलतां स्वहस्ताभ्यामेव संवर्द्धयामास। तरुलतिकासु तथा शकुन्तलायामपि महर्षेः निर्विशेषाशेषप्रणयः आसीत्; शकुन्तलायां भर्त्तृगृहं प्रति प्रस्थितायां तद्धृदि स्थिता निरतिशया प्रीतिप्रवणता कीदृक् मर्म्मस्पृक् मानसोन्मादकरी चासीत्, तत्कविना स्फुटमेव तत्र तत्राभिहितम्। तदानीमसौ तपोवनतरुराजिं वनदेवताश्च समाहूयाब्रवीत्। यथा,—

"पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्।
आद्ये वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं, सर्वैरनुज्ञायताम्॥" इति।

एतानि वचांसि न हि पुनः भावुकतासौभाग्यविलसितानि ; किन्तु विश्वप्रकृतिषु यदेव सच्चिदानन्दभूतं चैतन्यं पटतन्तुवदनुस्यूतमस्ति तेनैव साकमेतत् निसर्गसिद्धं भावजातं दृढ़मसम्बद्धमिति तावत् कविना विशदीकृत्याभिदर्शितम्। तपोवनाधिभुवः स्वजनस्निग्धाः वनदेवताः अपि अशरीरया गिरा भर्त्तृगृहगमनोन्मुखीं शकुन्तलामनुरूपया प्रीतिस्निग्धया आशिषा च समवीवृधन् ; तासान्तु तदानीमशरीरिवचःस्तोमः अन्वश्रावि। यथा,—

"रम्यान्तरः कमलिनीहरितैः सरोभिः
छायाद्रुमैः नियमितार्कमरीचितापः।
भूयात् कुशेशयरजो मृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः॥" इति।

तपोवनतरवः अपि पुंस्कोकिलरुतेन महर्षिं कण्वमभिसम्बोध्य प्रत्यूचुः ; तदावेदयति शार्ङ्गरवः, यथा,—"भगवन्!—

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यतः
प्रतीवचनीकृतमेभिरात्मनः॥" इति।

आश्रमपदपरिहाणावसरे शकुन्तला यथा तपोवनविरहविवशहृदयाऽभवत्, तपोवनपादपाः पशुपक्षिणश्चापि तथैव शकुन्तलाविप्रयोगमसहिष्णवः आसन्। तथाहि,

तिरश्चाम्
अकपटा प्रीतिः

मृगो अपि शकुन्तलाविप्रयोगजशोकेन अर्द्धावलीढ़दर्भकवला, नर्त्तनानिपुणा मयूरी अपि परिहृतलास्यविलासा अभवत् ; अपहृतपाण्डुपत्रा ललिता लतिकाऽपि अश्रूणि अमुञ्चदिव ; रथाङ्गनामा स्वप्रियां चक्रवाकीं कमलपत्रान्तरितगात्रीमनाहूय निमेषालसपक्ष्मपङ्क्त्या

दृष्ट्या अनिशमेव पश्यति स्म शकुन्तलाम्। भर्त्तृगृहगमनवेलायां शकुन्तला गुरुजनानभ्यर्च्याभिवन्द्य च सखीसङ्घान् समाश्लिष्य प्रगाढ़ं यथा समवीवृधत्, तथैव तपोवनाधिदेवताः समुद्दिश्य प्रणनाम, स्वहस्तमस्मितां व्रततिं समाश्लिष्याभीष्टां तामपिप्रिणञ्च; वासन्तीं लताम् अपि भृशमाश्लिष्य उवाच—"लदाबहिणि! पच्चालिङ्गस्स मं साहामएहिं बाहुहिं, अज्ज प्पहुदि दूरवत्तिणी क्खु दे भविस्सं। ताद! अहं विश्र इमं तुए चिन्तणीआ" इति। प्रकृतिप्रीतौ तु पिता दुहिता च उभावपि सममेवा-भिन्नमानसावास्ताम्—द्वयोरपि हृदि समैवैषा प्रीतिरासीत्। बालायाः शकुन्तलाया इव वर्षीयसः निगमपारङ्गतस्य कण्वस्यापि मानववत् तरुलतिकादिषु इतरप्राणिषु अपि स्वभावादेव वात्सल्यं भृशं चकासाञ्चकार। असौ हि अब्रवीदनुमोद्य शकुन्तलेरितं वचः, यतो हि, भवती स्वानु-रूपं भर्त्तारमलब्ध, अत एवाहमिदानीमन्तिकस्थमिमं सहकार-तरुं ते लताभगिन्या सह उद्वाहदामदृढ़नियतं करिष्यामि; तथैवाह — "कान्तं समीपसहकारमिमं करिष्ये" इति। बधूवरौ एतौ नवमालिका-सहकारौ शकुन्तला सहसा सखी-हस्ते निक्षिप्य कियच्छान्तिसौख्यमन्वभवत्। लताभगिनीमिवं व्यवस्थाप्य आश्रमस्थितां सुतानिर्विशेषमनुपालितां मृगी-मवलोक्याह—"ताद! एसा उडअपज्जन्तचारिणी गब्भहार-मन्थरा मिश्रवहू जदा सुहप्पसवा भविस्सदि, तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि, मा एदं विसुमरिस्ससि" इति, अपि च कियत् गच्छन्ती पन्थानमपश्यच्छकुन्तला—यत् पृथुकः यथा स्वमातरं पद्भ्यामनुपदं सञ्चरते तदीयप्रावारकशेषञ्च समाचरीकृष्यते तथैव—"अभी! को णु क्खु एसो पदक्कन्तो विश्र मे पुणो पुणो वसणन्ते सज्जदि?" इति।

तदाकर्ण्य महर्षिरभिदधे,—"वत्से !

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते ॥" इति ।

इमं हि मृगपोतमवलोक्य तदा शकुन्तला अश्रूण्यपि संवरितुं नाशक्नोत्; उवाच च—"वच्छ ! किं मं सहवासपरिच्चाइणीं अणुवन्धेसि ? णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए बड्ढिदोसि तधा दाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि, ता णिउत्तस्स" इति । एवमभिदधती रोरुद्यमाना प्रास्थित । एतेन कविरस्मभ्यमनसूयामुखतः एतदेवावीविदत्, यदाश्रमपदे मृग-मानव-तरु-लतिकासु एवं कोऽपि सुदृढ़चेताः सुधीरश्च नासीत्, यः तदानीं शकुन्तला-विप्रयोगेण विमुग्धः नाभवदिति ; इत्थञ्च पुनरेतदेव तत्त्वं स्फुटं विकाशयामास ; समस्तमेतत् स्थावरजङ्गमरूपनिखिल-प्राणिपरिपूरितं यद्धि तपोवनम्, अत्र मानवानां तदितरेषां वा कोऽपि भेदो नास्तीति ; सर्वाण्येव हि एतानि अन्योऽन्य-स्नेहगुणेन ग्रथितानि, प्रकृत्यङ्गनाग्रैवेयकाणीव तिष्ठन्ति ; स्नेहेषु चैतेषां कियत्यपि कृत्रिमता कठोरता वा लेशतः न वर्त्तते । एतेषु मानवेतरप्राणिषु तरुलतिकादिषु च केवलमेव मानवमनसां भावसमुदयं समारोप्य तरुलताद्यारोपितान् तान् तान् च भावान् मानवमानसोत्थसम्मितान् विधाय, काल्पनिकमेकं भावुकताव्यञ्जकं दृश्यमङ्कयित्वा अभिनवमेकं नाट्यं किमपि नाभ्यरचि कविना । यथा हि पञ्चतन्त्रे हितोप-देशे च काव्ये पशवः पक्षिणश्च मनुजा इव अन्योऽन्यमाभाष्य

कर्म्माण्यनुतिष्ठन्ति न तथैतत्; परन्तु मृगैः पक्षिभिश्च साकं सरलमानसाः मानवाः कीदृशं साहजिकमभेदभावं संस्थापयन्ति, तदेवासौ कविः स्वकृतौ प्रदर्शयति स्म।

मृगाः तरवः लतिकाश्च प्रत्येकमपि स्वेषां सहजातं प्रकृतिप्राप्तं स्वभावमपरित्यज्य मृगतरुभावेनैव स्वस्वभावं संरक्ष्यापि कथमिव ऐक्यं मानवैः सह संस्थाप्य संमिलितुम्, अपि चान्योऽन्यं सद्भावप्रीतिमयतन्तुना सुदृढं नियन्तुं च शक्नुवन्ति, तदेवात्र कविना विशदीकृत्य व्यक्तीकृतम्। एतैश्च तपोवनतरुप्रभृतिभिः सार्द्धं शकुन्तलाया अस्ति कोऽपि तथाविधः स्वाभाविकः सम्बन्धः। पुरतश्च वयमेतदेवादीदृशाम,—यथा हि अनसूया प्रियंवदा च शकुन्तलया सह सम्मिल्य तदीयचरितं सुविकस्वरमकरोत्, तथैवेयं वहिःप्रकृतिरपि शकुन्तलाचरितं पुष्पितं सुसम्पूर्णञ्चाकार्षीत्। यथा च लीलालापनिपुणे सखीजने विसृष्टे शकुन्तलाचरितमसम्पूर्णं स्यात्, तथैवेमां मूकां वहिःप्रकृतिमपि विजहासि चेत्, तदा शकुन्तलाचरितनिहितसौन्दर्य्यमसम्पूर्णमिव तिष्ठेत्; तर्हि च तद्गतं तथाविधं माधुर्य्यं करुणभावञ्च न सम्यगुपालभेत। प्रागस्माभिः भूयसाऽदर्शि,—यदादावेव नवकुसुमसम्भारोद्गमपूर्णयौवनभराभिरामा नवमल्ला, प्रसवस्तवकावनम्रः सहकारतरुः, आ मूलान्मुकुलिता पुण्ड्रकलता, रमणीयलावण्यलक्ष्मीपरिवृद्धये शकुन्तलां वेष्टयन्ती भूषयन्ती च स्थिता; तयैव नूनं शकुन्तलाया अभिनवयौवनश्रीः अपूर्वलावण्यविद्योतकञ्च रूपमाहृत्य विदिशमप्यभिव्यद्योतिष्ट। विष्वग्विसारिणा वासन्तप्रकृतिसुभगसुषमाविलासेन तारुण्यलीलया च एकीभूय शकुन्तलायाः यया अपूर्वया वपुःश्रिया विचकाशे,—तयैव अब्धिप्रशान्तमपि दुष्मन्तस्मरहरमानसं समाकृष्यत तल्लोकर्त्तुञ्चालमभूयत।

अतो हि कविना शकुन्तलाप्रतिप्रतीकं प्रकृत्यैव सार्द्धमभिन्नतयैवावर्णि ; तथा हि,—

"अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।

कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥" इति।

अत्र हि वयमेतदेव पश्यामः,—यदेतेन वाग्विभवमनाप्नुवता प्राकृतिकपदार्थसङ्घातेनापि कविः तन्नाटककायं कियदेव अवीवृधदिति। अपि चैतद् पेचिच्चामहि,—यदनेनैव वहिः प्रकृतिसुमहायकेन समुद्बोधितां करुणरसस्यापूर्वां वियद्गङ्गाप्रवाहधारां कियन्तीमिवास्राचीत्। अस्या एव पुरुषं जुषमाणायाः प्रकृतेः शुभशंसि आशीर्वचः वियोगविधुरायाः शकुन्तलायाः करुणं सुतीव्रं मर्म्मनिकृन्तनञ्च वेदनाजातम्, अभिजनवतां तत्स्वजनानाञ्च वियोगजवेदनया साकं सम्भूय अत्यल्पेऽपि परिसरे एकं विमलं हृदयग्राहकमरुन्तुदञ्च करुणरसमयं चित्रमचिचित्रत्। एतस्मात्ते इयं सरला अकपटा वहिःप्रकृतिरपि तदीयां सरलतामकल्मषाञ्च रमणीयतां स्वस्नेहमयैर्दामभिः निगड़यित्वा सौन्दर्य्यं महिमानञ्च भूयसा समैदिधत। मन्ये, सा हि तपोवनाधिदेवतायाः निसर्गश्रियाः एव दुहिता। असौ हि निसर्गलक्ष्मीर्विहीयते चेत्, तदा शकुन्तलाचरितश्रियापि परिहृत्यतेतराम्।

पञ्चमाङ्के तु शकुन्तला तपोवनविनाकृता राजपुरं प्रविश्य एकमभिनवजगदन्तरा न्यविक्षत। नह्यत्र चक्रवाकवधूः अनरालहृदयान्तरालं स्वप्रियं जीवनचिरसहचरं निभालयितुं प्रीतिमञ्जुलामलहृदयमञ्जूषान्तर्निहितेन वचसां चयेन सततं सादरमाकारयति ; शुद्धान्तमध्युषिता विरहविधुरवितसश्वासानिलाघातवेपथुमती हंसवती करुणगीतिकारागरभसा विनोदयति ऊषरायितं स्वचित्तम्।

नागरिक सन्दर्भः

नास्त्यत्र हि तपोवननिवाससुलभमृजुकत्वं सहृदयत्वञ्च; अत्र तु नागरिकजनसुप्रापः अतिजिह्मचेतोविकारः मादयति सततमेव मनः प्रमोदकाडम्बररसरागभरालसम्। न ह्यत्र कुसुमपादपानां छायातरुणाञ्च रसप्रसूनगन्धिषु सुशीतलस्निग्धशिलातलेषु तितिक्षोः महर्षेः कण्वस्य मेध्यं प्रशान्तमाश्रमपदम्, आविद्धधीभिः परीततया हुतवहपरीतं गृहमिवाखिलमेतत् राजपुरं भीषयतं-तरां नियतं धार्म्मिकप्रवरावदातमानसम्। क्व तावत् धर्म्मप्राणाः संसारविरज्यमानाः नियततपश्चर्य्यानिरताः तापससङ्घाः?—क्व च मोहमदिरोन्मदायमानमानसा मानवनिवहाः? इदं कल-कलरवापूरितमप्रतनं जगत् तत्प्रकृतेः सर्वथैव विसदृशम्; स्थाने खलु स्थानमेतदभिनिविशमानायामेव तस्यां तदशुभानि भूयांसि पिशुनयति स्म। अपि चाचिरेणैव कालेन तज्ज्वालामयदह-नेनासावधीरा सती तत् स्थानं परिहृत्य अन्यत्र यातुं काल-मागमयते स्म।

तपोवनोपवनोत्फुल्लकुसुमं नृपपुरमाविश्यैव सैतावत्कालात् परमेव पर्य्यम्लासीत्। कविनाऽपि चामुना तदीयमवदात-मनाविलं लावण्यं पूतत्वं महत्त्वञ्च सम्यगक्षतं विधातुं तदानी-मसौ ततः स्थलतः एव त्वरितमपासार्य्यत; न पुनरिमां महर्षेः कण्वस्याश्रमपदं प्रत्यावर्त्तत। एतद्धि केवलं तदीयमनन्य-साधारणं महाकविसुलभं प्रतिभावैभवं तत्पर्य्यालोचनिदर्शनञ्च। नृपकृततन्निराकृतेश्च पश्चात् तस्याः पुनः कण्वाश्रमप्रत्यावर्त्तनं न हि सम्भवति स्म।

चतुर्थाङ्कावसाने तपोवनेन सह शकुन्तलायाः शारीरिकः एव वियोगः व्यजनि; प्रत्याख्यानसमये तु तेनैव सह सम्यक्

कवेर्नैपुण्यम्

मानसिकः आध्यात्मिकश्चापि विरहः समज-निष्ट। क्षणेनैकेनैव तु प्रबलवात्याविघातेन

तदीयं वहिरन्तस्तलमपि युगपत् विपर्य्यासग्रस्तमभूत्। महर्षे-राश्रमपदमधिशयानानां तरुलतामृगविहङ्गमाणामुपरिष्टात् तस्याः यत् प्रीतिमयं मधुरं सुखकरञ्च स्नेहसंयमनमभूत्, तत् युगपदेव शैथिल्यमागतम्। अवस्थायामितस्यां हि शकुन्तलायां प्रकृष्टश्रममूहमध्यं नीतायाञ्च सत्यामतीवासामञ्जस्यमापद्येत ; एतदर्थं तु कविः सहसा तां लोकलोचनान्तरालनीतामकरोत् ; शकुन्तलामस्खलितव्यापारवर्णनविधौ सर्वथा मौनीभाव-मादद च।

चतुर्थाङ्कशेषे तु तावत् वयमेतदैचिष्यामहि, यद्यपि कविः शकुन्तलासखीद्वयीं चिरादेव नाटकभूमिकातः निरवीवसत्, तथापि प्रकृत्यभिधेयामपरां प्रशस्यतमां तत्सखीं स्निग्धप्रियं तपोवनं सहजत एव विस्रष्टुं नाशकिष्ट। ततः तावत् सप्तमाङ्के पुनरेवासौ कविः तामेव प्रकृतिं तपोवनञ्च सुसहायकीकृत्य शकुन्तलाचरितमपुस्फुटत्। पूर्वरागः प्राथमिकमिलनञ्च यथा तपोवने एव समपादि, अन्तिममिलनञ्च तथैव तपोवने समाधित। परन्तु प्रथमाङ्कमारभ्य आ चतुर्थाङ्कात् विवृतस्य महर्षेः कण्वस्य तपोवनस्य, सप्तमाङ्के वर्णितस्य भगवतः मारीच-स्याश्रमपदस्याहो कियदेवान्तरम्!! प्रेमतत्त्वविश्लेषणप्रसङ्गतः प्राग् वयमदीदृशाम,—यत् महर्षेः कण्वस्याश्रमपदे यथा कोमलत्वं माधुर्य्यं चाञ्चल्यञ्चासीत्, तथैव तान्यपहाय भगवतः मारीचस्याश्रमपदे शूरत्वं धीरत्वं गाम्भीर्य्यञ्चैतानि कण्वाश्रम-गुणविसंवादीनि अव्यभिचारितया समं चकासति। यथा हि नाटकस्य प्रधानप्रतिपाद्यविषयः प्रागदर्शितं तथाविधं कोमलत्वं परिहृत्यान्तिमभागे गाम्भीर्य्यमवललम्बे, तपोवन-निसर्गलक्ष्मीरपि तथैव पेशलतामपहाय कठोरा गम्भीर-भावाभिव्यञ्जिका चाभवदिति। अत्र तु कविः शकुन्तला

दुःखसन्ततिमधिकृत्य अधिकां वाचम् अनुक्त्वा तपोवन-निसर्गोद्भूतया कठोरतया नीरवतया गम्भीरतया च तस्याः अपरिमेयं दुःखं मर्म्मभेदिकाञ्च हृदयवेदनामवष्टम्भमयीं घनीकृत्यास्माकं पाठकानां समक्षमनैषीत्। पश्यामः वयमेवमेव यदभिज्ञानशकुन्तलमादितः अन्ते च वहिःप्रकृत्या सुनिविड़ितयैव सन्दानितमिति।

षष्ठाङ्केऽपि पुनरवलोकामहे,—यदेतामेव वहिःप्रकृतिं सुसहायकत्वेन समादाय कविनैकेन श्लोकेन शुद्धान्तसङ्गतं विषादान्धतमसं स्तोमीभूतमदर्शि। तथा हि,—

"चूतानां चिरनिर्गताऽपि कलिका बध्नाति न स्वं रजः,
सन्नद्धं यदपि स्थितं कुरुवकं तत् कोरकावस्थया।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम्॥" इति।

अनयैव वहिःप्रकृत्या सार्द्धमेतादृशी सुदृढ़ा सहानुभूतिः; अपि च वहिःप्रकृतिं प्रकृतिमिव विधाय तदात्मस्वभावं कथमप्यपरावर्त्त्य तयैव च काव्यस्य प्रधानप्रतिपाद्यवस्तुनः तावद्दूरमेव विकाससाधनं तथाविधं पूर्णत्वापादनञ्च अन्येषां केषाञ्चिदपि देशीयानां काव्ये अतिविरलमेव। यतो हि प्रतीच्याः पुमांसः नार्य्यश्च इमामेव वहिःप्रकृतिं केवलम् उपभोगसाधकत्वेन उपलभन्ते, अतस्तस्यामेतादृशी सहृदयप्रीतिः सहानुभूतिश्च सर्व्वथैवासम्भवित्वमागच्छति।

कवेः कालिदासस्य निसर्गसम्भूतपदार्थप्रकृतिवर्णनविधौ अनन्यसाधारणमलौकिकं वैशिष्ट्यमाविर्वेदयिषवः वयमत्र विषयद्वयीं प्रेक्षावतां पुरतः समुपस्थाप्य प्रबन्धमिममुपसञ्जिहीर्षामः। एका च तदीया प्रकृतिसिद्धव्यापारवर्णनसाधिका सूक्ष्मतत्त्वपर्य्यवेक्षणक्षमा असामान्या कवित्वशक्तिः, अपरा च

क्षुद्रं महत् साधारणं सुगभीरम् असामान्यं वा भवतु वस्तुजातं तावतीनामुभयविधानामेव प्राकृतिकदृश्यावलीनां वर्णने दक्षता सिद्धहस्तता ख्यातिमत्ता च इति।

प्रथमाङ्कस्य प्रथमत एव नरपतेः शरापातभिया पलायमानस्य मृगस्य उत्प्लवनादिगतिविशेषवर्णनमेव कवेः सूक्ष्मपर्य्यवेक्षणशक्तेः प्रकृष्टतमं प्रमाणम्। तथा हि,—

"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयात् भूयसा पूर्वकायम्।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥" इति।

श्लोकस्यैतस्य द्वितीयपादे कवेः सूक्ष्मदर्शित्वं विशेषत एव विकाशमासम्; सूचयति च तथाविधामसीमां कवित्वशक्तिं स्यन्दनधौरेयाणां वाजिनां वर्णनविधौ। यथा,—

"मुक्तेषु रश्मिषु निरायतपूर्वकायाः
स्वेषामपि प्रसरतां रजसामलङ्घ्याः।
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते॥" इति।

द्वयोरेतयोः श्लोकयोः दृश्यते—यत् कविरत्र केवलं त्वरितामेव गतिं वर्णयति; तत्र तु तदीयं पटुत्वमतुलनीयमासीत्; रथगतिवर्णनावसरे च तस्य स्फुटमेव प्रमाणम् अस्माभिरुपलभ्यते। तथा हि,—

"यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोः
न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात्॥" इति।

अभिज्ञानशकुन्तलस्य सप्तमाङ्के अस्या एव द्रुतगतेरतीव

विस्मयावहमेकं वर्णनमस्ति। पूर्वोल्लिखिते च श्लोकत्रये समतल-भूमावेव द्रुतगतिः कविनोपवर्णिता ; तत्तु कवेः स्वीयाभिज्ञ-तायाः प्रकृतिसूक्ष्मानुशीलनशक्तेश्च समीचीनं निदर्शनम्। परन्तु सप्तमाङ्के यत्र कविः राजर्षेः दुष्मन्तस्य वेगात् नाक-भूमितः अवतरणम् अववर्णत्, तत्र नूनममुना कल्पयित्वा ऊर्द्ध्व-भूमेरधोऽवतरणमालिखितम् ; तथापि एतदतिरमणीयमनु-पमञ्च ; यथा हि,—

"शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।
सन्धानं तनुभावनष्टसलिलव्यक्त्या व्रजन्त्यापगाः,
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते॥" इति।

श्लोकश्चैषः कवेः महागम्भीरभावाभिज्ञात्वमभिव्यनक्ति ; अत्रा-प्यन्यस्मिन् श्लोके तस्येत्थं वर्णनाशक्तेः सुपरिचयोऽप्यस्माभिरुप-लभ्यते ; तथा हि,—

"त्रिस्रोतसं वहति यो गगनप्रतिष्ठां,
ज्योतींषि वर्त्तयति चक्रविभक्तरश्मिः।
तस्य व्यपेतरजसः प्रवहस्य वायोः
मार्गो द्वितीयहरिविक्रमपूत एषः" ॥ इति।

भगवतः मारीचस्याश्रमपदेऽपि तपस्यतः ऋषेः "वल्मीकार्द्ध-निमग्नमूर्त्तिः" इत्यादिना यथायथमुपवर्णनमपि गभीरमुच्चै-स्तरञ्च भावमावेदयति।

---

वयन्तु पुरतः काव्योत्कर्षविचारावसरे यौ द्वावेव नियमौ समतिष्ठिपाम, तदनुसारतः अभिज्ञानशकुन्तलमत्युत्कृष्टरूपक-

उपसंहारः

मेवेति प्रतिपादयितुं तावदयतिष्महि। रुचीनां कालानां जातीनाञ्च भेदेऽपि निर्विशेषतः अभिज्ञानशकुन्तलमेतत् कवेः कथंकारं हि महीयसीं कवित्वकीर्त्ति-वैजयन्तीं वितत्य परितः विजयतेतरामिति। कथञ्च कविना कालिदासेन प्रेम्णामतिगभीरं गूढ़ञ्च तत्त्वं समं संस्थाप्याभिज्ञान-शकुन्तलं सम्यगच्छतञ्च कृत्वा स्वस्यालोकसामान्यायाः कवित्व-प्रतिभायाः सुपरिचयो नोऽदायीति। अपि चैतदपि वयं दर्शया-मासिम, यत्,—अतिप्रत्नतमानामलङ्कारशास्त्राणां विधानानु-सारतः, आधुनिकानां काव्यकलाविदां समालोचकसमूहाना-मनुमतपद्धत्यनुसारतश्च विशिश्लिक्षसि चेत्,—तदेतत् तावत् सर्वस्यां दिशि सर्वोत्कृष्टं काव्यलक्षणलक्षितं भवति। नाटकीय-वस्तुषु प्रधानमप्रधानं महत् क्षुद्रञ्च यद्भवति, तत्समुदयचरिता-नामप्यङ्कनविधौ कवेः कालिदासस्यासामान्यं विविधजन-चारित्राभिज्ञानं सूक्ष्मदर्शित्वञ्च कीदृक् सुप्रस्फुटितमस्ति तद्वयं विश्लिष्य प्रादीदृशाम। तभ्यश्च ऋते कविः कियता असामान्य-कृतित्वमहिम्ना वहिःप्रकृतिं मानवप्रकृतिञ्च सूत्रेणैकेन ग्रथ्नन् द्वयोः सामञ्जस्यं सुसंरक्षन् किमप्यपूर्वं सौन्दर्य्यमस्राक्षीत्, तदस्माभिः सुप्रकटयितुं साध्यानुसारतश्चाऽयाति। चराचरेऽस्मिन् असीमां ख्यातिमधिजग्मुषः अद्वितीयस्य कवेः कालिदासस्य महीयसीभिः कवित्वविभूतिकौमुदीभिः धवलीकृताखिलविकासितविद्वन्मानस-कुमुदमुकुलस्य अत्यल्पपरिचयः सुधियः निकषा प्रादायि; अस्माकन्तु इयान् प्रयासः कियदेव फलवान् अभूत् तत् धीमन्तः दोषज्ञाः विचारयन्तु; इत्यलमनल्पजल्पनेन।

# शकुन्तलासन्दर्भोपोद्घातः।

इदानीं हि वयं महाभारतगतं पद्मपुराणसंस्थितञ्च शकुन्तलेतिवृत्तं क्रमेण यथायथं सन्निवेश्यामहे। महाभारतन्तु प्रसिद्धमेव; अभिज्ञानशकुन्तलनाटकं हि तद्गत शकुन्तलोपाख्यानं न सर्वथाऽनुकरोति, परन्तु कियच्च वैषम्यमालोक्यते, नास्त्यतोऽस्माकमत्र किमपि वचनशेषम्।

पद्मपुराणं हि वैयासिकाष्टादशपुराणेष्वन्यतमम्। मुम्बय्यान्तु नगर्य्यां यद्धि पद्मपुराणं पुरा प्रकाशितमासीत्, तदीयं श्लोकसंख्यानम् अष्टचत्वारिंशत्सहस्रचतुःशताधिकद्वापञ्चाशत्तमं यावत्, परन्तु तत्र शकुन्तलोपाख्यानं न दृश्यते। अस्य तु पद्मपुराणस्य आदिखण्डस्य प्रथमतः ऋषीणामूर्द्ध्वरेतसामभ्यर्णं यां किल प्रस्तावनामदित सूतः, दृष्टाया श्चैतस्यां विनिर्णीयते यत् तद्गता श्लोकसंख्या पञ्चपञ्चाशत्सहस्रपरिमितेति। एतद्धि केवलमादि-भूमि-ब्रह्म-पाताल-क्रियोत्तरभेदेन षड्भिः खण्डैः विभक्तीकृतम्। एवं हि मत्स्यपुराणगतत्रयःपञ्चाशत्तमाध्याये पद्मपुराणसङ्क्षिप्तेतिवृत्तौ पञ्चपञ्चाशत्सहस्रसंख्यकाः श्लोकाः दृश्यन्ते। तथा हि,—

"एतदेव यदा पद्ममभूद्धैरण्मयं जगत्।

तद्वृत्तान्तश्च यत् तद्वत् पाद्ममित्युच्यते बुधैः।

पाद्मं तत् पञ्चपञ्चाशत्सहस्राणीह कथ्यते"॥ इति।

अहो चित्रमेतत्, यथा शिवपुराणे कुमारसम्भवकाव्यसम्मितार्थकाः बहवः श्लोकाः दृश्यन्ते, पद्मपुराणोत्तरभागेऽपि तथैव रघुवंशकाव्यस्य द्वितीयसर्गवर्णितदिलीपवृत्तान्तविवृत-

श्लोकानां सम्यक् सौसादृश्यं संदृश्यते ; अपि च वङ्गदेशमुद्रित-पद्मपुराणस्य स्वर्गखण्डेऽपि एवमेव कालिदासकृताभिज्ञान-शकुन्तलस्य समप्रतिच्छायामतः उपाख्यानस्य भावसाम्य-मुपलभ्यते ।

दृष्टे चैतस्मिन् केचनैवमनुमिन्वन्ति, यत् महाकविः तत्र-भवान् कालिदासः किल भारतप्रोक्तोपाख्यानभागमनवलम्ब्य पद्मपुराणप्रोक्तोपाख्यानमादायैव पुनः अभिज्ञानशकुन्तलं नाम नाटकं प्रणिनायेति । अपरे च केचनैतत् पद्मपुराणगतं शकुन्तलोपाख्यानं प्रक्षिप्तमित्यभिदधति विवदन्ते च इति ।

महाभागानामस्मन्नाटकपाठकानां कौतूहलं गवेषणा-प्रवृत्तिञ्च कथञ्चिदिवोपशमयितुमस्माभिः यथायथमुद्धृत्यैतत् यथास्थानं सुसन्निवेशितम् । प्रवीणाः सुधियस्तदिदमृश्य निभृत-मवधारयन्तु, तत एव हि सुदृढं विप्रवदतां निपुणानां स्थूल-हस्तावलेपशङ्कायाः अवसरोऽपि नोदेष्यतीति ।

---

# महाभारतीयं शकुन्तलोपाख्यानम्।

[ आदिपर्वान्तर्गत-सम्भवपर्वणि १६८—१७४ अ: ]।

जनमेजय उवाच।

त्वत्तः श्रुतमिदं ब्रह्मन्! देवदानवरक्षसाम्।
अंशावतरणं सम्यग् गन्धर्वाप्सरसां तथा॥
इमन्तु भूय इच्छामि कुरूणां वंशमादितः।
कथ्यमानं त्वया विप्र! विप्रर्षिगणसन्निधौ॥

वैशम्पायन उवाच।

पौरवाणां वंशकरो दुष्मन्तो नाम वीर्य्यवान्।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम!॥
चतुर्भागं भुवः कृत्स्नं सोऽभुङ्क्त मनुजेश्वरः।
समुद्रावरणांश्चापि देशान् स समितिञ्जयः॥
आम्लेच्छाटविकान् सर्वानभुङ्क्त रिपुमर्द्दनः।
रत्नाकरसमुद्रान्तांश्चतुर्वर्णसमावृतान्॥
न वर्णसङ्करकरो न कृष्याकरकृज्जनः।
न पापकृत् कश्चिदासीत् तस्मिन् राजनि शासति॥
धर्म्यां रतिं सेवमाना धर्मार्थावभिपेदिरे।
तदा नरा नरव्याघ्र! तस्मिन् जनपदेश्वरे॥
नासीच्चौरभयं तात! न क्षुधाभयमण्वपि।
नासीद् व्याधिभयञ्चापि तस्मिन् जनपदेश्वरे॥
स्वैर्धर्मै रेमिरे वर्णा दैवे कर्मणि निस्पृहाः।
तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः॥

कालवर्षी च पर्जन्यः शस्यानि रसवन्ति च।
सर्वरत्नसमृद्धा च मही पशुमती तथा।
स्वकर्मनिरता विप्रा नानृतं तेषु विद्यते॥
स चाद्भुतमहावीर्य्यो वज्रसंहननो युवा।
उद्यम्य मन्दरं दोर्भ्यां वहेत् सवनकाननम्॥
चतुष्पथगदायुद्धे सर्वप्रहरणेषु च।
नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठितः॥
बले विष्णुसमश्चासीत् तेजसा भास्करोपमः।
अक्षोभ्यत्वेऽर्णवसमः सहिष्णुत्वे धरासमः॥
सम्मतः स महीपालः प्रसन्नपुरराष्ट्रवान्।
भूयो धर्मपरैर्भावैर्मुदितं जनमादिशत्॥

इति ६८ अध्यायः

जनमेजय उवाच।

सम्भवं भरतस्याहं चरितञ्च महामतेः।
शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः॥
दुष्मन्तेन च वीरेण यथा प्राप्ता शकुन्तला।
तं वै पुरुषसिंहस्य भगवन्! विस्तरं त्वहम्।
श्रोतुमिच्छामि तत्त्वज्ञ! सर्वं मतिमतांवर!॥

वैशम्पायन उवाच।

स कदाचिन्महाबाहुः प्रभूतबलवाहनः।
वनं जगाम गहनं हयनागशतैर्वृतः॥
बलेन चतुरङ्गेण वृतः परमवल्गुना।
खड्गशक्तिधरैर्वीरैर्गदामुषलधारिभिः।
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः॥
सिंहनादैश्च योधानां शङ्खदुन्दुभिनिस्वनैः।
रथनेमिस्वनैश्चापि सनागवरबृंहितैः॥

नानायुधधरैश्चापि नानावेशधरैस्तथा ।
क्ष्वेडितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः ।
आसीत् किलकिलाशब्दस्तस्मिन् गच्छति पार्थिवे ॥
प्रासादवरशृङ्गस्थाः परया नृपशोभया ।
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् ॥
शक्रोपममित्रघ्नं परवारणवारणम् ।
पश्यन्तः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे ॥
अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ।
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ॥
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपम् ।
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्द्धनि ॥
तत्र तत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ।
निर्ययौ परमप्रीत्या वनं मृगजिघांसया ॥
तं देवराजप्रतिमं मत्तवारणधूर्गतम् ।
द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे ॥
ददृशुर्वर्द्धयानास्ते आशीर्भिश्च जयेन च ॥
सुदूरमनुजग्मुस्तं पौरा जानपदास्तथा ।
न्यवर्त्तन्त ततः पश्चादनुज्ञाता नृपेण ह ॥
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ।
महीमापूरयामास घोषेण त्रिदिवं तथा ॥
स गच्छन् ददृशे धीमान् नन्दनप्रतिमं वनम् ॥
बिल्वार्कखदिराकीर्णं कपित्थधवसङ्कुलम् ।
विषमं पर्वतप्रस्थैरश्मभिश्च समावृतम् ॥
निर्जलं निर्मनुष्यञ्च बहुयोजनमायतम् ।
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ॥
तद्वनं मनुजव्याघ्र ! सभृत्यबलवाहनः ।

लोड़यामास दुष्मन्तः सूदयन् विविधान् मृगान् ॥
बाणगोचरसम्प्राप्तांस्तत्र व्याघ्रगणान् बहून् ।
पातयामास दुष्मन्तो निर्बिभेद च सायकैः ॥
दूरस्थान् सायकैः कांश्चिदभिनत् स नराधिपः ।
अभ्यासमागतांश्चान्यान् खड्गेन निरकृन्तत ॥
कांश्चिदेणान् समाजघ्ने शक्त्या शक्तिमतांवरः ।
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ॥
तोमरैरसिभिश्चापि गदामुषलकम्पनैः ।
चचार स विनिघ्नन् वै वन्यांस्तत्र मृगद्विजान् ॥
राज्ञा चाद्भुतवीर्य्येण योधैश्च समरप्रियैः ।
लोड्यमानं महारण्यं त्यजन्ति स्म मृगाधिपाः ॥
तत्र विद्रुतयूथानि हतयूथपतीनि च ।
मृगयूथान्यथौत्सुक्याच्छब्दांश्चक्रुस्ततस्ततः ॥
शुष्काश्चापि नदीर्गत्वा जलनैराश्यकर्षिताः ।
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ॥
क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि ।
केचित् तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः ॥
केचिदग्निमथोत्पाद्य संसाध्य च वनेचरान् ।
भक्षयन्ति च मांसानि प्रकुट्य विधिवत् तदा ॥
तत्र केचिद्गजा मत्ताः बलिनः शस्त्रविक्षताः ।
सङ्कोच्याग्रकरान् भीताः प्रद्रवन्ति स्म वेगिताः ॥
शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ।
वन्या गजवरास्तत्र ममृदुर्मनुजान् बहून् ॥
तद्वनं बलमेघेन शरधारेण संवृतम् ।
व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥

( इति ६९ अध्यायः । )

वैशम्पायन उवाच।

ततो मृगसहस्राणि हत्वा सबलवाहनः।
राजा मृगप्रसङ्गेन वनमन्यद् विवेश ह॥
एक एवोत्तमबलः क्षुत्पिपासासमन्वितः।
स वनस्यान्तमासाद्य महच्छून्यं समासदत्॥
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम्।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च॥
शीतमारुतसंयुक्तं जगामान्यन्महद्वनम्।
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम्॥
विपुलं मधुरारावैर्नादितं विहगैस्तथा।
पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितम्॥
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम्।
षट्पदाघूर्णितलतं लक्ष्म्या परमया युतम्॥
नाऽपुष्पः पादपः कश्चिन्नाऽफलो नापि कण्टकी।
षट्पदैर्नाप्यपाकीर्णस्तस्मिन् वै काननेऽभवत्॥
विहगैर्नादितं पुष्पैरलङ्कृतमतीव च।
सर्वर्त्तुकुसुमैर्वृक्षैरतीव सुखशाद्वलम्।
मनोरमं महेष्वासो विवेश वनमुत्तमम्॥
मारुताकलितास्तत्र द्रुमाः कुसुमशालिनः।
पुष्पवृष्टीर्विचित्रास्तु व्यसृजंस्ते पुनःपुनः॥
दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वनैः।
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः॥
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु।
रुवन्ति रावान् मधुरान् षट्पदा मधुलिप्सवः॥
तत्र प्रदेशांश्च बहून् कुसुमोत्करमण्डितान्।
लतागृहपरिक्षिप्तान् मनसः प्रीतिवर्द्धनान्।

स पश्यन् सुमहातेजा बभूव मुदितस्तथा ॥
परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः ।
अशोभत वनं तत् तैर्महेन्द्रध्वजसन्निभैः ॥
सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं वनमत्यर्थं मत्तवानरकिन्नरैः ॥
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः ।
परिक्रामन् वने वृक्षानुपैतीव रिरंसया ॥
एवं गुणैः समायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भवं कान्तमुच्छ्रितध्वजसन्निभम् ॥
प्रेक्षमाणो वनं तत्तु संप्रहृष्टविहङ्गमम् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥
नानावृक्षसमाकीर्णं सम्प्रज्वलितपावकम् ।
तं तदाऽप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥
यतिभिर्वालिखिल्यैश्च वृतं मुनिगणान्वितम् ।
अग्न्यागारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च ।
मालिनीमभितो राजन् नदीं पुण्यां सुखोदकाम् ॥
नैकपक्षिगणाकीर्णां तपोधनमनोरमाम् ।
तत्र व्यालमृगान् सौम्यान् पश्यन् प्रीतिमवाप सः ॥
तच्चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत ।
देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिणीम् ।
सकिन्नरगणावासां वानरर्क्षनिषेविताम् ॥
पुण्यस्वाध्यायसंघुष्टां तापसैरुपशोभिताम् ।

मत्तवारणशार्दूल-भुजगेन्द्रनिषेविताम् ॥
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ।
आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥
नदीमाश्रमसम्बद्धां दृष्ट्वाश्रमपदं तथा ।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥
मत्तबर्हिणसङ्घुष्टं प्रविवेश महद्वनम् ।
तत् स चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥
अतीवगुणसम्पन्नमनिर्देश्यस्य वर्चसा ।
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥
ध्वजिनीमश्वसम्बाधां पदातिगजसङ्कुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोवनम् ।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः ।
क्षुत्पिपासे जहौ राजा हर्षं चावाप पुष्कलम् ॥
सामात्यो राजलिङ्गानि सोऽपनीय नराधिपः ।
पुरोहितसहायश्च जगामाश्रममुत्तमम् ।
दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् ॥
ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह ।
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् ॥
ऋचो बह्वृचमुख्यैश्च प्रेर्य्यमाणाः पदक्रमैः ।
शुश्राव मनुजव्याघ्रो विततेष्विह कर्म्मसु ॥
यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम् ।
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः ॥

भारुण्डसामगीताभिरथर्व्वशिरसोद्गतैः ।
यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥
अथर्व्ववेदप्रवराः पूगयज्ञीयसामगाः ।
संहितामीरयन्ति स्म पदक्रमयुतान्तु ते ॥
शब्दसंस्कारसंयुक्तैर्ब्रुवद्भिश्चापरैर्द्विजैः ।
नादितः स बभौ श्रीमान् ब्रह्मलोक इवापरः ॥
यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः ।
न्यायतत्त्वार्थविज्ञान-सम्पन्नैर्वेदपारगैः ॥
नानावाक्यसमाहार-समवायविशारदैः ।
विशेषकार्य्यविद्भिश्च मोक्षधर्म्मपरायणैः ॥
स्थापनाक्षेपसिद्धान्त-परमार्थज्ञतां गतैः ।
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥
द्रव्यकर्म्मगुणज्ञैश्च कार्य्यकारणवेदिभिः ।
पक्षिकीशरुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥
नानाशास्त्रेषु मुख्येषु शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥
तत्र तत्र च विप्रेन्द्रान् नियतान् संशितव्रतान् ।
जपहोमपरान् सिद्धान् ददर्श परवीरहा ॥
आसनानि विचित्राणि रुचिराणि महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागतः ॥
देवतानामृषीणाञ्च प्रेक्ष्य पूजां कृतां द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नाऽतृप्यत् प्रेक्षमाणो वै तपोबलगुणैर्युतम् ॥
स काश्यपस्यायतनं महाव्रतै-
र्वृतं समन्तादृषिभिस्तपोधनैः ।

विवेश सामात्यपुरोहितोऽरिहा
विविक्तमत्यर्थमनोहरं शुभम् ॥

इति ७० अध्यायः ।

वैशम्पायन उवाच ।

ततो गच्छन् महाबाहुरेकोऽमात्यान् विसृज्य तान् ।
नाऽपश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तमाश्रमम् ।
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ।
निश्चक्रामाश्रमात् तस्मात् तापसीवेशधारिणी ॥
सा तं दृष्ट्वैव राजानं दुष्मन्तमसितेक्षणा ।
"स्वागतं ते" इति क्षिप्रमुवाच प्रतिपूज्य च ॥
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि ।
पप्रच्छानामयं राजन् ! कुशलञ्च नराधिपम् ॥
यथावदर्च्चयित्वा सा पृष्ट्वा चानामयं तदा ।
उवाच स्मयमानेव किं कार्य्यं क्रियतामिति ॥
तामब्रवीत् ततो राजा कन्यां मधुरभाषिणीम् ।
दृष्ट्वा चैवानवद्याङ्गीं यथावत् प्रतिपूजितः ॥
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ।
क्व गतो भगवान् भद्रे ! तन्ममाचक्ष्व शोभने ! ॥

शकुन्तलोवाच ।

गतः पिता मे भगवान् फलान्याहर्त्तुमाश्रमात् ।
मुहूर्त्तं सम्प्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥

वैशम्पायन उवाच ।

अपश्यमानस्तमृषिं तया चोक्तस्तथा च सः ।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥

विभ्राजमानां वपुषा तपसा च दमेन च।
रूपयौवनसम्पन्नामित्युवाच महीपतिः॥
काऽसि कस्याऽसि सुश्रोणि! किमर्थं चागता वनम्।
एवं रूपगुणोपेता कुतस्त्वमसि शोभने!॥
दर्शनादेव हि शुभे! त्वया मेऽपहृतं मनः।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने!॥
एवमुक्ता तु सा कन्या तेन राज्ञा तदाश्रमे।
उवाच हसती वाक्यमिदं सुमधुराक्षरम्॥
कण्वस्याहं भगवतो दुष्मन्त! दुहिता मता।
तपस्विनो धृतिमतो धर्मज्ञस्य मनीषिणः॥
दुष्मन्त उवाच।
ऊर्द्ध्वरेता महाभागो भगवान् लोकपूजितः।
चलेद्धि वृत्ताद्धर्मोऽपि न चलेत् संशितव्रतः॥
कथं त्वं तस्य दुहिता सम्भूता वरवर्णिनि!।
संशयो मे महानत्र तं मे छेत्तुमिहार्हसि॥
शकुन्तलोवाच।
यथाऽयमागमो मह्यं यथा चेदमभूत् पुरा।
शृणु राजन्! यथातत्त्वं यथाऽस्मि दुहिता मुनेः॥
ऋषिः कश्चिदिहागम्य मम जन्माभ्यनोदयत्।
तस्मै प्रोवाच भगवान् यथा तच्छृणु पार्थिव!॥
कण्व उवाच।
तप्यमानः किल पुरा विश्वामित्रो महत् तपः।
सुभृशं तापयामास शक्रं सुरगणेश्वरम्॥
तपसा दीप्तवीर्य्योऽयं स्थानान्मां च्यावयेदिति।
भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत्॥
गुणैरप्सरसां दिव्यैर्मेनके! त्वं विशिष्यसे।

श्रेयो मे कुरु कल्याणि ! यत् त्वां वक्ष्यामि तच्छृणु ॥
असावादित्यसङ्काशो विश्वामित्रो महातपाः ।
तप्यमानस्तपो घोरं मम कम्पयते मनः ॥
मेनके ! तव भारोऽयं विश्वामित्रः सुमध्यमे ! ।
संशितात्मा सुदुर्द्धर्ष उग्रे तपसि वर्त्तते ॥
स मां न च्यावयेत् स्थानात् तं वै गत्वा प्रलोभय ।
चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् ॥
रूप-यौवन-माधुर्य्य-चेष्टितस्मित-भाषितैः ।
लोभयित्वा वरारोहे ! तपसस्तं निवर्त्तय ॥

मेनकोवाच ।

महातेजाः स भगवांस्तथैव च महातपाः ।
कोपनश्च तथा ह्येनं जानाति भगवानपि ॥
तेजसस्तपसश्चैव कोपस्य च महात्मनः ।
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥
महाभागं वशिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् ।
क्षत्रजातश्च यः पूर्वमभवद् ब्राह्मणो बलात् ॥
शौचार्थं यो नदीञ्चक्रे दुर्गमां बहुभिर्जलैः ।
यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥
बभार यत्रास्य पुरा काले दुर्गे महात्मनः ।
दारान् मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥
अतीतकाले दुर्भिक्षे यत्रैत्य पुनराश्रमम् ।
मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ॥
मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयम् ।
त्वं च सोमं भयाद् यस्य गतः पातुं सुरेश्वर ! ॥
चकारान्यञ्च लोकं वै क्रुद्धो नक्षत्रसम्पदा ।
प्रतिश्रवणपूर्वाणि नक्षत्राणि चकार यः ॥

गुरुशापहतस्याऽपि त्रिशङ्कोः शरणं ददौ॥
एतानि यस्य कर्म्माणि तस्याऽहं भृशमुद्विजे।
यथाऽसौ न दहेत् क्रुद्धस्तथाज्ञापय मां प्रभो!॥
तेजसा निर्द्दहेल्लोकान् कम्पयेद्धरणीं पदा।
संक्षिपेच्च महामेरुं तूर्णमावर्त्तयेद्दिशः॥
तादृशं तपसा युक्तं प्रदीप्तमिव पावकम्।
कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत्॥
हुताशनमुखं दीप्तं सूर्य्यचन्द्राक्षितारकम्।
कालजिह्वं सुरश्रेष्ठ! कथमस्मद्विधा स्पृशेत्॥

यमश्च सोमश्च महर्षयश्च
साध्या विश्वे बालिखिल्याश्च सर्वे।
एतेऽपि यस्योद्विजन्ते प्रभावात्
तस्मात् कस्मान्मादृशी नोद्विजेत॥
त्वयैवमुक्ता च कथं समीप-
मृषेर्नगच्छेयमहं सुरेन्द्र!।
रक्षान्तु मे चिन्तय देवराज!
यथा त्वदर्थं रक्षिताहं चरेयम्॥
कामन्तु मे मारुतस्तत्र वासः
प्रक्रीड़िताया विवृणोतु देव!।
भवेच्च मे मन्मथस्तत्र कार्य्ये
सहायभूतश्च तव प्रसादात्॥
वनाच्च वायुः सुरभिः प्रवायात्
तस्मिन् काले तमृषिं लोभयन्त्याः।
तथेत्युक्त्वा विहिते चैव तस्मिं-
स्ततो ययौ साश्रमं कौशिकस्य॥

इति ७१ अध्यायः।

कण्व उवाच ।

एवमुक्तस्तया शक्रः सन्दिदेश सदागतिम् ।
प्रातिष्ठत तदा काले मेनका वायुना सह ॥
अथाऽपश्यद्वरारोहा तपसा दग्धकिल्बिषम् ।
विश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥
अभिवाद्य ततः सा तं प्राक्रीड़दृषिसन्निधौ ।
अपोवाह च वासोऽस्या मारुतः शशिसन्निभम् ॥
माऽगच्छत् त्वरिता भूमिं वासस्तदभिलिप्सती ।
स्मयमानेव सव्रीड़ं मारुतं वरवर्णिनी ।
पश्यतस्तस्य तत्रर्षेरप्यग्निसमतेजसः ॥
विश्वामित्रस्ततस्तान्तु विषमस्थामनिन्दिताम् ।
गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः ।
अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥
तस्या रूपगुणं दृष्ट्वा स तु विप्रर्षभस्तदा ।
चकार भावसंसर्गं तया कामवशं गतः ।
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ॥
तौ तत्र सुचिरं कालमुभौ व्याहरतां तदा ।
रममाणौ यथाकामं यथैकदिवसं तथा ॥
स मुनिर्जनयामास मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्य्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात् पर्य्यवारयन् ॥
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ।
पर्य्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ॥

उपस्पृष्टुं गतश्चाहमपश्यं शयितामिमाम् ।
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ॥
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥
शरीरकृत् प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥
निर्जने तु वने यस्मात् शकुन्तैः परिवारिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततो मया ॥
एवं दुहितरं विद्धि मम विप्र ! शकुन्तलाम् ॥
शकुन्तला च पितरं मन्यते मामनिन्दिता ।

शकुन्तलोवाच ।

एतदाचष्ट पृष्टः सन् मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ! ॥
कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन् ! यथावृत्तं श्रुतं मया ॥

इति ७२ अध्यायः ।

दुष्मन्त उवाच ।

सुव्यक्तं राजपुत्री त्वं यथा कल्याणि ! भाषसे ।
भार्य्या मे भव सुश्रोणि ! ब्रूहि किं करवाणि ते ॥
सुवर्णमालां वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥
आहरामि तवाद्याहं निष्कादीन्यजिनानि च ।
सर्वं राज्यं तवाद्यास्तु भार्य्या मे भव शोभने ! ॥
गान्धर्वेण च मां भीरु ! विवाहेनैहि सुन्दरि ! ।
विवाहानां हि रम्भोरु ! गान्धर्वः श्रेष्ठ उच्यते ॥

शकुन्तलोवाच ।

फलाहारो गतो राजन् ! पिता मे इत आश्रमात् ।
मुहूर्त्तं त्वं प्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥

दुष्मन्त उवाच ।

इच्छामि त्वां वरारोहे ! भजमानामनिन्दिते ! ।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्त्तुमर्हसि धर्म्मतः ॥
अष्टावेव समासेन विवाहाः धर्म्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ॥
तेषां धर्म्यान् यथा पूर्वं मनुः सायम्भुवोऽब्रवीत् ।
प्रशस्तांश्चतुरः पूर्वान् ब्राह्मणस्योपधारय ॥
षड़ानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ! ।
राज्ञान्तु राक्षसोऽप्युक्तो विट्शूद्रे चासुरः स्मृतः ॥
पञ्चानान्तु त्रयो धर्म्या द्वावधर्म्यौ स्मृताविह ।
पैशाचश्चासुरश्चैव न कर्त्तव्यौ कदाचन ॥
अनेन विधिना कार्य्यो धर्म्मस्यैषा गतिः स्मृता ॥
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ।
पृथग्वा यदि वा मिश्रौ कर्त्तव्यौ नात्र संशयः ॥
सा त्वं मम सकामस्य सकामा वरवर्णिनि ! ।
गान्धर्वेण विवाहेन भार्य्या भवितुमर्हसि ॥

शकुन्तलोवाच ।

यदि धर्म्मपथस्त्वेष यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ ! शृणु मे समयं प्रभो ! ॥

सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः ।
मयि जायेत यः पुत्रः स भवेत् त्वदनन्तरम् ।
युवराजो महाराज ! सत्यमेतद्ब्रवीमि ते ॥
यद्येतदेवं दुष्मन्त ! अस्तु मे सङ्गमस्त्वया ॥

वैशम्पायन उवाच ।

एवमस्त्विति तां राजा प्रत्युवाचाऽविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ! ।
यथा त्वमर्हा सुश्रोणि ! सत्यमेतद्ब्रवीमि ते ॥
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ॥
जग्राह विधिवत् पाणावुवास च तया सह ॥
विश्वास्य चैनां स प्रायादब्रवीच्च पुनःपुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ।
तया त्वां नाययिष्यामि निवासं स्वं शुचिस्मिते ! ॥
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ! ।
मनसा चिन्तयन् प्रायात् काश्यपं प्रति पार्थिवः ॥
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
एवं सञ्चिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥
मुहूर्त्तयाते तस्मिंस्तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥
विज्ञायाथ च तां कण्वो दिव्यज्ञानो महातपाः ।
उवाच भगवान् प्रीतः पश्यन् दिव्येन चक्षुषा ॥
त्वयाऽद्य भद्रे ! रहसि मामनादृत्य यः कृतः ।
पुंसा सह समायोगो न स धर्मोपघातकः ॥
क्षत्रियस्य हि गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ॥
धर्मात्मा च महात्मा च दुष्मन्तः पुरुषेश्वरः ।

अभ्यगच्छः पतिं यं त्वं भजमानं शकुन्तले ! ॥
महात्मा जनिता लोके पुत्त्रस्तव महाबलः ।
य इमां सागरापाङ्गीं कृत्स्नां भोक्ष्यति मेदिनीम् ॥
परश्चाभिप्रयातस्य चक्रं तस्य महात्मनः ।
भविष्यत्यप्रतिहतं सततं चक्रवर्त्तिनः ॥
ततः प्रक्षाल्य पादौ सा विश्रान्तं मुनिमब्रवीत् ।
विनिधाय ततो भारं सन्निधाय फलानि च ॥

शकुन्तलोवाच ।

मया पतिर्वृतो योऽसौ दुष्मन्तः पुरुषोत्तमः ।
तस्मै ससचिवाय त्वं प्रसादं कर्त्तुमर्हसि ॥

कण्व उवाच ।

प्रसन्न एव तस्याहं त्वत्कृते वरवर्णिनि ! ।
गृहाण च वरं मत्तस्त्वं शुभे ! यदभीप्सितम् ॥

वैशम्पायन उवाच ।

ततो धर्म्मिष्ठतां वव्रे राज्याच्चास्खलनं तथा ।
शकुन्तला पौरवाणां दुष्मन्तहितकाम्यया ॥

इति ७३ अध्यायः ।

वैशम्पायन उवाच ।

प्रतिज्ञाय तु दुष्मन्ते प्रतियाते शकुन्तला ।
असूयत च वामोरूः कुमारममितौजसम् ॥
त्रिषु वर्षेषु पूर्णेषु दीप्तानलसमद्युतिम् ।
रूपौदार्य्यगुणोपेतं दौष्मन्तिं जनमेजय ! ॥
जातकर्म्मादिसंस्कारं कण्वः पुण्यकृतां वरः ।
विधिवत् कारयामास वर्द्धमानस्य धीमतः ॥
दन्तैः शुक्लैः शिखरिभिः सिंहसंहननो महान् ।

चक्राङ्कितकरः श्रीमान् महामूर्द्धा महाबलः ।
कुमारो देवगर्भाभः स तत्राशु व्यवर्द्धत ॥
षड्वर्ष एव बालः स कण्वाश्रमपदं प्रति ।
सिंहान् व्याघ्रान् वराहांश्च महिषांश्च गजांस्तथा ।
बबन्ध वृक्षे बलवानाश्रमस्य समीपतः ॥
आरोहन् दमयंश्चैव क्रीड़ंश्च परिधावति ।
ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ॥
अस्त्वयं "सर्वदमनः" सर्वान् हि दमयत्यसौ ॥
स सर्वदमनो नाम कुमारः समपद्यत ।
विक्रमेणौजसा चैव बलेन च समन्वितः ॥
तं कुमारमृषिर्दृष्ट्वा कर्म्म चास्यातिमानुषम् ।
समयो यौवराज्यायेत्यब्रवीच्च शकुन्तलाम् ॥
तस्य तद्बलमाज्ञाय कण्वः शिष्यानुवाच ह ।
शकुन्तलामिमां शीघ्रं सहपुत्रामितो गृहात् ।
भर्त्तुः प्रापयतागारं सर्वलक्षणपूजितम् ॥
नारीणां चिरवासो हि बान्धवेषु न रोचते ।
कीर्त्तिचारित्रधर्म्मघ्नस्तस्मान्नयत मा चिरम् ॥
तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः ।
शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम् ॥
गृहीत्वाऽमरगर्भाभं पुत्रं कमललोचनम् ।
आजगाम ततः शुभ्रूर्दुष्मन्तं विदिताद्वनात् ॥
अभिसृत्य च राजानं विदिता च प्रवेशिता ।
सह तेनैव पुत्रेण बालार्कसमतेजसा ॥
निवेदयित्वा ते सर्वे स्वाश्रमं पुनरागताः ।
पूजयित्वा यथान्यायमब्रवीच्च शकुन्तला ॥
अयं पुत्रस्त्वया राजन्! यौवराज्येऽभिषिच्यताम् ।

त्वया ह्ययं सुतो राजन् ! मय्युत्पन्नः सुरोपमः ॥
यथासमयमेतस्मिन् वर्त्तस्व पुरुषोत्तम ! ।
यथा मत्सङ्गमे पूर्वं कृतो यः समयस्त्वया ।
तं स्मरस्व महाभाग ! कण्वाश्रमपदं प्रति ॥
सोऽथ श्रुत्वैव तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्'न स्मरामी'ति कस्य त्वं दुष्टतापसि ! ॥
धर्म्मकामार्थसम्बन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥
सैवमुक्ता वरारोहा व्रीडितेव तपस्विनी ।
निःसंज्ञेव च दुःखेन तस्थौ स्थाणुरिव निश्चला ॥
संरम्भामर्षताम्राक्षी स्फुरमाणौष्ठसम्पुटा ।
कटाक्षैर्निर्दहन्तीव तिर्य्यग्राजानमैक्षत ॥
आकारं गूहमाना च मन्युना च समीरिता ।
तपसा सम्भृतं तेजो धारयामास वै तदा ॥
सा मुहूर्त्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्त्तारमभिसंप्रेक्ष्य क्रुद्धा वचनमब्रवीत् ॥
जानन्नपि महाराज ! कस्मादेवं प्रभाषसे ।
न जानामीति निःशङ्कं यथाऽन्यः प्राकृतो जनः ॥
अत्र ते हृदयं वेद सत्यस्यैवानृतस्य वा ।
कल्याणं वद साक्ष्येण मा ऽऽत्मानमवमन्यथाः ॥
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ? ॥

एकोऽहमस्मीति च मन्यसे त्वम्
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्म्मणः पापकस्य
तस्यान्तिके त्वं वृजिनं करोषि ॥

मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति।
विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः॥
आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम्॥
यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम्।
हृदिस्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति॥
न तु तुष्यति यस्यैष पुरुषस्य दुरात्मनः।
तं यमः पापकर्माणं वियातयति दुष्कृतम्॥
योऽवमन्यात्मनात्मानमन्यथा प्रतिपद्यते।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम्॥
स्वयं प्राप्तेति मामेवं मावमंस्थाः पतिव्रताम्।
अर्च्चार्हां नार्चयसि मां स्वयं भार्य्यामुपस्थिताम्॥
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि।
न खल्वहमिदं शून्ये रौमि किं न शृणोषि मे॥
यदि मे याचमानाया वचनं न करिष्यसि।
दुष्मन्त! शतधा मूर्द्धा ततस्तेऽद्य स्फुटिष्यति॥
भार्य्यां पतिः सम्प्रविश्य स यस्माज्जायते पुनः।
जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः॥
यदागमवतः पुंसस्तदपत्यं प्रजायते।
तत् तारयति सन्तत्या पूर्वप्रेतान् पितामहान्॥
पुन्नाम्नो नरकाद् यस्मात् पितरं त्रायते सुतः।
तस्मात् पुत्त्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥
पुत्त्रेण लोकान् जयति पौत्त्रेणानन्त्यमश्नुते।
अथ पौत्रस्य पुत्रेण मोदन्ते प्रपितामहाः॥

सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रजावती ।
सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥
अर्द्धं भार्य्या मनुष्यस्य भार्य्या श्रेष्ठतमः सखा ।
भार्य्या मूलं त्रिवर्गस्य भार्य्या मूलं तरिष्यतः ॥
भार्य्यावन्तः क्रियावन्तः सभार्य्या गृहमेधिनः ।
भार्य्यावन्तः प्रमोदन्ते भार्य्यावन्तः श्रियान्विताः ॥
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्म्मकार्य्येषु भवन्त्यार्त्तस्य मातरः ॥
कान्तारेष्वपि विश्रामो जनस्याध्वनि कस्य वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः ॥
संसरन्तमपि प्रेतं विषमेष्वेकपातिनम् ।
भार्य्यैवान्वेति भर्त्तारं सततं या पतिव्रता ॥
प्रथमं संस्थिता भार्य्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वं मृतञ्च भर्त्तारं पश्चात् साध्व्यनुगच्छति ॥
एतस्मात् कारणाद्राजन् ! पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्य्यामिह लोके परत्र च ॥
आत्मात्मनैव जनितः पुत्त्र इत्युच्यते बुधैः ।
तस्माद् भार्य्यां नरः पश्येन्मातृवत् पुत्रमातरम् ॥
भार्य्यायां जनितं पुत्रमादर्शेष्विव चाननम् ।
ह्लादते जनिता प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥
दह्यमाना मनोदुःखैर्व्याधिभिश्चातुरा नराः ।
ह्लादन्ते स्वेषु दारेषु घर्मार्त्ताः सलिलेष्विव ॥
सुसंरब्धोऽपि रामाणां न कुर्य्यादप्रियं नरः ।
रतिं प्रीतिञ्च धर्मञ्च तास्वायत्तमवेक्ष्य हि ॥
आत्मनो जन्मनः क्षेत्रं पुण्यं रामा सनातनम् ।
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजाः ॥

परिपत्य यदा सूनुर्धरणीरेणुगुण्ठितः।
पितुराश्लिष्यतेऽङ्गानि किमस्त्यभ्यधिकं ततः॥
स त्वं स्वयमभिप्राप्तं साभिलाषमिमं सुतम्।
प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे॥
अण्डानि बिभ्रति स्वानि न भिन्दन्ति पिपीलिकाः।
न भरेथाः कथं नु त्वं धर्म्मज्ञः सन् स्वमात्मजम्॥
न वाससां न रामाणां नापां स्पर्शस्तथाविधः।
शिशोरालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः॥
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठश्चतुष्पदाम्।
गुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः॥
स्पृशतु त्वां समाश्लिष्य पुत्रोऽयं प्रियदर्शनः।
पुत्रस्पर्शात् सुखतरः स्पर्शो लोके न विद्यते॥
त्रिषु वर्षेषु पूर्णेषु प्रजाताहमरिन्दमम्।
इमं कुमारं राजेन्द्र! तव शोकविनाशनम्॥
आहर्त्ता वाजिमेधस्य शतसङ्ख्यस्य पौरव!।
इति वागन्तरीक्षे मां सूतके ह्यवदत् पुरा॥
ननु नामाङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः।
मूर्द्धि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः॥
वेदेष्वपि वदन्तीमं मन्त्रजातं द्विजातयः।
जातकर्म्मणि पुत्राणां तवापि विदितं यथा॥
अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे।
आत्मा वै पुत्रनामासि स जीव शरदां शतम्॥
जीवितं त्वदधीनं मे सन्तानमपि चाक्षयम्।
तस्मात् त्वं जीव मे पुत्र! सुसुखी शरदां शतम्॥
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात् पुरुषोऽपरः।
सरसीवामलेऽऽत्मानं द्वितीयं पश्य वै सुतम्॥

यथा ह्याहवनीयोऽग्निर्गार्हपत्यात् प्रणीयते ।
तथा त्वत्तः प्रसूतोऽयं त्वमेकः सन् द्विधाकृतः ॥
मृगावकृष्टेन पुरा मृगयां परिधावता ।
अहमासादिता राजन् ! कुमारी पितुराश्रमे ॥
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥
तासां मे मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः सम्प्राप्य जगतीं विश्वामित्रादजीजनत् ॥
सा मां हिमवतः प्रस्थे सुषुवे मेनकाप्सराः ।
अवकीर्य्य च मां याता परात्मजमिवासती ॥
किन्नु कर्म्माशुभं पूर्वं कृतवत्यस्मि जन्मनि ।
यदहं बान्धवैस्त्यक्ता बाल्ये सम्प्रति च त्वया ॥
कामं त्वया परित्यक्ता गमिष्यामि स्वमाश्रमम् ।
इमं तु बालं सन्त्यक्तुं नार्हस्यात्मजमात्मना ॥

दुष्मन्त उवाच ।

न पुत्रमभिजानामि त्वयि जातं शकुन्तले ! ।
असत्यवचना नार्य्यः कस्ते श्रद्धास्यते वचः ? ॥
मेनका निरनुक्रोशा बन्धकी जननी तव ।
यया हि हिमवत्पृष्ठ निर्माल्यमिव चोज्झिता ॥
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामवशं गतः ॥
मेनकाऽप्सरसां श्रेष्ठा महर्षीणां पिता च ते ।
तयोरपत्यं कस्मात् त्वं पुंश्चलीव प्रभाषसे ॥
अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ? ।
विशेषतो मत्सकाशे दुष्टतापसि ! गम्यताम् ॥
क्व महर्षिः स चैवाग्र्यः काऽप्सराः सा च मेनका ।

क्व च त्वमेवं कृपणा तापसीवेशधारिणी ॥
अतिकायश्च ते पुत्रो बालोऽतिबलवानयम् ।
कथमल्पेन कालेन शालस्तम्भ इवोन्नतः ॥
सुनिकृष्टा च ते योनिः पुंश्चलीव प्रभाषसे ।
यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥
सर्वमेतत् परोक्षं मे यत् त्वं वदसि तापसि ! ।
नाहं त्वामभिजानामि यथेष्टं गम्यतां त्वया ॥

शकुन्तलोवाच ।

राजन् ! सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ? ॥
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म दुष्मन्त ! तव जन्मतः ॥
क्षितावटसि राजेन्द्र ! अन्तरीक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥
महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ! ॥
सत्यश्चापि प्रवादोऽयं यं प्रवक्ष्यामि तेऽनघ ! ।
निदर्शनार्थं न द्वेषात् श्रुत्वा त्वं क्षन्तुमर्हसि ॥
विरूपो यावदादर्शे नात्मनः पश्यते मुखम् ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तमम् ॥
यदा तु मुखमादर्शे विकृतं सोऽभिवीक्षते ।
तदेतरं विजानाति सोत्मानं नेतरं जनम् ॥
अतीव रूपसम्पन्नो न किञ्चिदवमन्यते ।
अतीव जल्पन् दुर्वाचो भवतीह विहेठकः ॥
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव शूकरः ॥

प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥
अन्यान् परिवदन् साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यान् हृष्टो भवति दुर्ज्जनः ॥
अभिवाद्य यथा वृद्धान् सन्तो गच्छन्ति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥
सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यत्र वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥
अतो हास्यतरं लोके किञ्चिदन्यन्न विद्यते ।
यत्र दुर्ज्जन इत्याह दुर्ज्जनः सज्जनं स्वयम् ॥
सत्यधर्म्मच्युतात् पुंसः क्रुद्धादाशीविषादिव ।
अनास्तिकोऽप्युद्विजते जनः किं पुनरास्तिकः ? ॥
स्वयमुत्पाद्य वै पुत्त्रं सदृशं यो न मन्यते ।
तस्य देवाः श्रियं घ्नन्ति न च लोकानुपाश्नुते ॥
कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ।
उत्तमं सर्वधर्म्माणां तस्मात् पुत्रं न सन्त्यजेत् ॥
स्वपत्नीप्रभवान् पञ्च लब्धान् क्रीतान् विवर्द्धितान् ।
कृतानन्यासु चोत्पन्नान् पुत्रान् वै मनुरब्रवीत् ॥
धर्म्मकीर्त्त्यावहा नृणां मनःसम्प्रीतिवर्द्धनाः ।
त्रायन्ते नरकाज्जाताः पुत्त्रा धर्म्मप्लवाः पितॄन् ॥
स त्वं नृपतिशार्दूल ! पुत्रं न त्यक्तुमर्हसि ।
आत्मानं सत्यधर्म्मौ च पालयन् पृथिवीपते ! ॥
नरेन्द्रसिंह ! कपटं न वोढुं त्वमिहार्हसि ॥
वरं कूपशताद्वापी वरं वापीशतात् क्रतुः ।
वरं क्रतुशतात् पुत्त्रः सत्यं पुत्त्रशताद्वरम् ॥
अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम् ।

अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥
सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
सत्यञ्च वचनं राजन् ! समं वा स्यान्न वा समम् ॥
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं किञ्चिदनृतादिह विद्यते ॥
राजन् ! सत्यं परं ब्रह्म सत्यञ्च समयः परः ।
मा त्याक्षीः समयं राजन् ! सत्यं सङ्गतमस्तु ते ॥
अनृते चेत् प्रसङ्गस्ते श्रद्दधासि न चेत् स्वयम् ।
आत्मना हन्त गच्छामि त्वादृशे नास्ति सङ्गतम् ॥
त्वामृतेऽपि हि दुष्मन्त ! शैलराजावतंसिकाम् ।
चतुरन्तामिमामुर्वीं पुत्त्रो मे पालयिष्यति ॥

वैशम्पायन उवाच ।

एतावदुक्त्वा राजानं प्रातिष्ठत शकुन्तला ॥
अथान्तरीक्षाद्दुष्मन्तं वागुवाचाऽशरीरिणी ।
ऋत्विक् पुरोहिताचार्य्यैर्मन्त्रिभिश्च वृतं तदा ॥
"भस्त्रा माता पितुः पुत्रो येन जातः स एव सः ।
भरस्व पुत्रं दुष्मन्त ! माऽवमंस्थाः शकुन्तलाम् ॥
रेतोधाः पुत्त्र उन्नयति नरदेव ! यमक्षयात् ।
त्वञ्चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥
जाया जनयते पुत्त्रमात्मनोऽङ्गं द्विधाकृतम् ।
तस्माद्भरस्व दुष्मन्त ! पुत्त्रं शाकुन्तलं नृप ॥
अभूतिरेषा यत्त्यक्त्वा जीवेज्जीवन्तमात्मजम् ।
शाकुन्तलं महात्मानं दौष्मन्तिं भर पौरवम् ॥
भर्त्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ।
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः" ॥

तच्छ्रुत्वा पौरवो राजा व्याहृतं त्रिदिवौकसाम्
पुरोहितममात्यांश्च सम्प्रहृष्टोऽब्रवीदिदम् ॥
शृण्वन्त्वेतद्भवन्तोऽस्य देवदूतस्य भाषितम् ।
अहञ्चाप्येवमेवैनं जानामि स्वयमात्मजम् ॥
यद्यहं वचनादेव गृह्णीयामिवमात्मजम् ।
भवेद्धि शङ्को लोकस्य नैव शुद्धो भवेदयम् ॥

वैशम्पायन उवाच ।

तं विशोध्य तदा राजा देवदूतेन भारत ! ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥
ततस्तस्य तदा राजा पितृकार्य्याणि सर्वशः ।
कारयामास मुदितः प्रीतिमानात्मजस्य ह ॥
मूर्द्ध्नि चैनमुपाघ्राय सस्नेहं परिषस्वजे ।
सभाज्यमानो विप्रैश्च स्तूयमानश्च वन्दिभिः ।
स मुदं परमां लेभे पुत्रसंस्पर्शजां नृपः ॥
ताञ्चैव भार्य्यां दुष्मन्तः पूजयामास धर्म्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥
कृतो लोकपरोक्षोऽयं सम्बन्धो वै त्वया सह ।
तस्मादेतन्मया देवि ! तच्छुद्ध्यर्थं विचारितम् ॥
मन्यते चैव लोकस्ते स्त्रीभावान्मयि सङ्गतम् ।
पुत्रश्चायं वृतो राज्ये मया तस्माद्विचारितम् ॥
यच्च कोपितयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षि ! तत् क्षान्तं ते मया शुभे ॥
तामेवमुक्त्वा राजर्षिर्दुष्मन्तो महिषीं प्रियाम् ।
वासोभिरन्नपानैश्च पूजयामास भारत ! ॥
दुष्मन्तस्तु ततो राजा पुत्रं शाकुन्तलं तदा ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥

तस्य तत् प्रथितं चक्रं प्रावर्त्तत महात्मनः ।
भास्वरं दिव्यमजितं लोकसन्नादनं महत् ॥
स विजित्य महीपालांश्चकार वशवर्त्तिनः ।
चचार च सतां धर्म्मं प्राप चानुत्तमं यशः ॥
स राजा चक्रवर्त्त्यासीत् सार्वभौमः प्रतापवान् ।
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ॥
याजयामास तं कण्वो विधिवद्भूरिदक्षिणम् ।
श्रीमान् गोविततं नाम वाजिमेधमवाप सः ।
यस्मिन् सहस्रं पद्मानां कण्वाय भरतो ददौ ॥
भरताद्भारती कीर्त्तिर्येनेदं भारतं कुलम् ।
अपरे ये च पूर्वे वै भरता इति विश्रुताः ॥
भरतस्यान्ववाये हि देवकल्पा महौजसः ।
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ।
येषामपरिमेयाणि नामधेयानि सर्वशः ॥
तेषान्तु ते यथा मुख्यं कीर्त्तयिष्यामि भारत ! ।
महाभागान् देवकल्पान् सत्यार्जवपरायणान् ॥

( इति ७४ अध्यायः )

इति श्रीमहाभारते आदिपर्वणि सम्भवपर्वणि शकुन्तलोपाख्यानम् ।

---

सूत्र। आर्य्ये! साधु गीतम्। अहो! रागापहृतचित्तवृत्तिरालिखित इव (विभाति) सर्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्य एनमाराधयामः? (१९)

नटी। णं पढमं ज्जेव्व अज्जेण आणत्तं अहिण्णाणसउन्तलं णाम अउव्वं णाड़अं अहिणीअदु त्ति। (क)

सूत्र। आर्य्ये! सम्यक् अनुबोधितोऽस्मि (२०)। अस्मिन् क्षणे खलु विस्मृतं मयैतत्। कुतः?—

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा (२१) ॥५॥

[इति निष्क्रान्तौ। प्रस्तावना। (२२)]

(क) ननु प्रथममेव आर्य्येणाज्ञप्तम्—अभिज्ञानशकुन्तलं नाम अपूर्वं नाटकम् अभिनीयतामिति।

गरवी द्विपदी तु सा। शृङ्गारे करुणे हास्ये योज्या चोत्तममध्यमैः॥" इति। अत्र पूर्वार्द्धे इङ्कार-हिङ्कारयोः लघुत्वं ज्ञेयम्॥ ४॥

(१९) अहो—विस्मये। रागेति।—रागेण स्वरविशेषेण, अपहृता आकृष्टा चित्तवृत्तिर्मनोवृत्तिर्यस्य सः तथोक्तः सन्, आलिखित इव चित्रार्पित इव, निश्चलत्वादिति भावः। उत्प्रेक्षालङ्कृतिः। रङ्गः—नाट्यसभा। एनं—रङ्गम्। आराधयामः—अनुरञ्जयामः।

(२०) अनुबोधितः—स्मारितः। त्वयेति शेषः।

(२१) अस्मिन् क्षणे विस्मृतं मयैतदित्युक्तं, तत्र विस्मृतेः कारणमाह, तवेति।—अतिरंहसा अतीव वेगगामिना सारङ्गेण मृगेण "चातके हरिणे पुंसि सारङ्गः" इत्यमरः। एष इति आमुखनिर्व्वाहार्थं, पुरतो निर्दिष्टः राजा दुष्मन्त इव हारिणा मनोहारिणा चित्ताकर्षकेणेति यावत्, मृगपक्षेऽपि विशेषणमेतत् योज्यम्; तदर्थश्च—हर्त्तुं शीलमस्य तेन, अत एव अतिरंहसा इति हेतुः। तव गीतरागेण गीतस्वरेण अहं प्रसभं बलात्, हृतः अपहृतचित्तवृत्तिः अस्मि। नृपतिपक्षे—हृतः—सुदूरं प्रापितः। [अत्रोपमालङ्कारः स्फुट एव। ईशौसि इत्यादितः एतच्छ्लोकपर्य्यन्तं भारतीनामकवृत्तेः तुरीयमङ्गं प्रस्तावनाऽपरनामकम् आमुखं प्रदर्शितम्। पथ्यावक्त्रं वृत्तम्॥५॥

(२२) प्रस्तावना—प्रस्तुतोद्भावनम्। तल्लक्षणं यथा,—"नटी विदूषको वाऽपि पारि-

[ ततः प्रविशति रथारूढ़ः सशरचापहस्तो मृगमनुसरन् राजा सूतश्च । (२३) ]

सूतः । [ राजानं मृगञ्चावलोक्य । ] आयुष्मन् !— (२४)

**कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके ।**
**मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम् (२५) ॥६॥**

पार्श्विक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत् तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥" इति । सा चात्र अवलगिताख्या विश्वनाथादीनां सम्मता । यदुक्तं दर्पणे—"यत्रैकत्र समावेशात् कार्य्य-मन्यत् प्रसाध्यते । प्रयोगे खलु तज् ज्ञेयं नाम्नाऽवलगितं बुधैः ॥" इति । उदा-जहार च एतदेव पद्यम् । एतन्मते सादृश्योद्भावनात् यत्रान्यप्रयोगः तत्रैवेयम् ; प्रयोगातिशये न सादृश्योद्भावनम् इत्यभिप्रायः । प्राचीनाः खलु प्रयोगातिशयमत्रा-चक्षते, इति दिक् ।

(२३) सशरचापहस्तः—शरेण सह वर्त्तमानः सशरः ; सशरः चापः हस्ते यस्य स तथोक्तः, धृतधनुर्वाणः । सूतः—सारथिः । "सूतः चक्ता च सारथिः" इत्यमरः । तथा च मत्स्यपुराणम्—"निमित्तशकुनज्ञानी हयशिक्षाविशारदः । स्वामिभक्तो महोत्-साहः सर्वेषां च प्रियंवदः । शूरश्च कृतविद्यश्च सारथिः परिकीर्त्तितः ॥" इति ।

(२४) आयुष्मन्—आयुः प्रशस्तिः तदस्यास्ति, इति तस्य सम्बोधने । रथिनं प्रति सम्बोधनमेतत् । तथा च दर्पणे,—"आयुष्मन् रथिनं सूतः" इति ।

(२५) कृष्णसार इति ।—(कृष्णश्चासौ सारः शबलश्च "वर्णो वर्णेन" इति कर्मधारयः ।) कृष्णसारे मृगविशेषे, तथा अधि अधिगता अधिरोपिता इत्यर्थः, ज्या यस्मिन् तत् तथाभूतं कार्मुकं यस्य तस्मिन् त्वयि, चक्षुः नयनं ददत् पातयन् अहं, मृगमनुसरतीति तं, धृतमृगरूपं यज्ञम् अनुसरन्तं, साक्षात् प्रत्यक्षं पिनाकिनं पिनाकनामधनुर्धारिणं हरमिव पश्यामि अवलोकयामि । कृष्णसारमनुगच्छन्तं धृत-कार्मुकं त्वां विलोक्य [ धृतमृगरूपं यज्ञमनुसरन्तं ] हरं स्मरामीत्यर्थः । [ अत्र मृग विशेषवाचक कृष्णसारोपादानात् मृगयाऽपि तस्य राज्ञः देवपितृसमभ्यर्चनार्था, न तु व्यसनितया इति धर्मनिष्ठताऽस्य व्यज्यते ।

पुरा किल संप्रवृत्ते दक्षयज्ञे श्रुतपतिनिन्दायाः भगवत्याः देहत्यागमाकर्ण्य भगवान् महेश्वरः कुपितः स्वकार्मुकं पिनाकमादाय तत्र सङ्गतः, दृष्ट्वा च तं क्रतुरसौ

राजा । सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः (२६)। सोऽयमिदानीमपि (२७)।—

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति (२८) ॥७॥

धृतस्वरूपः पलायितुमारेभे ; सोऽपि तम् अनुससार, इति काशीखण्डादिकथाऽवानुसन्धेया। तथा च,—"यज्ञः पलायितो दृष्ट्वा केनचित् मृगरूपधृक्। शिरोविरहितः चक्रे तेन चक्रेण दूरतः ॥" इति।

अत्र प्रकृताप्रकृतयोः दुष्मन्त-पिनाकिनोः तादात्म्यसम्बन्धस्य सम्भाव्यमानत्वात्, साधारणधर्मोपादानात्, क्रियानन्तरेवशब्दसद्भावाच्च उत्प्रेक्षालङ्कारः । नेयमुपमा ; तथा च भामहः,—"नोपमानं तिङन्तेन" इति। भूतस्य यज्ञमृगानुसारिणः हरस्य प्रत्यक्षायमाणत्वात् भाविकालङ्कारश्च, इत्यनयोः साङ्कर्य्यम् ॥ ६ ॥

(२६) दूरम् आकृष्टाः—दूरमानीताः ।

(२७) इदानीमपि—दूरमाकृष्यापि साम्प्रतमेवं प्रयातीत्यर्थः ।

(२८) तदेव मृगप्रयाणं प्रकाशयन्नाह, ग्रीवेति ।—अनुपतति पश्चादागच्छति. स्यन्दने रथे, ग्रीवायाः कन्धरायाः, भङ्गेन परिवर्त्तनेन, अभिरामं रमणीयं यथा तथा मुहुः पुनःपुनः, दत्तदृष्टिः निक्षिप्तनयनः। "दृष्टिः ज्ञानेऽक्ष्णि दर्शने" इत्यमरः । तथा शरपतनभयात् बाणापातत्रासात् पश्चार्द्धेन अपरम् अर्द्धम् पश्चार्द्धं ["अपरस्यार्द्धे पश्चभावः" इति वार्त्तिकात् अपरशब्दस्य पश्चादेशे पश्चार्द्धमिति सिद्धम् ] तेन, देहस्य पश्चाद्भागेन करणेन पूर्वकायं देहस्य पूर्वार्द्धं भूयसा बाहुल्येन [ प्रकृत्यादित्वात् तृतीया ] प्रविष्टः ; भयात् लाङ्गूलान्तभागं सम्मुखीनचरणद्वयान्तिकमानीतवान् इत्यर्थः । श्रमेण भयात् द्रुतगतिजनितया क्लान्त्या, विवृतात् व्यात्तात्, मुखात् भ्रंशिभिः पतद्भिः अर्द्धावलीढैः अर्द्धजग्धैः, शष्पैः बालतृणैः,"शष्पं बालतृणम्" इत्यमरः । कीर्णं व्याप्तं वर्त्म पन्थाः येन, स तथोक्तः सन्, उदग्रम् उच्चम् "उच्चप्रांशून्नतोदग्र" इत्यमरः । प्लुतं यस्य सः तथाभूतत्वात् वियति आकाशे, बहुतरम् अधिकतरम् उर्व्यां भुवि, स्तोकं स्वल्पं, प्रयाति गच्छति पश्य ।

अत्र भयविप्लुतमृगस्वभाववर्णनात् स्वभावोक्तिरलङ्कारः । तथा च दर्पणे,—"स्वभावोक्तिः दुरूहार्थस्वक्रियारूपवर्णनम्" इति । तेन च भयानको रसः

[सविस्मयम्।] कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः (२८) संवृत्तोऽयं मृगः?

सूतः। उद्घातिनी भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेगः, तेनैष मृगो विप्रकृष्टः संवृत्तः। सम्प्रति हि समदेशवर्त्ती न ते दुरासदो (३०) भविष्यति।

राजा। तेन हि मुच्यन्तामभीषवः (३१)।

सूतः। यथाज्ञापयति आयुष्मान्। [इति भूयो रथवेगं रूपयित्वा।] आयुष्मन्! पश्य पश्य। एते हि,—

मुक्तेषु रश्मिषु निरायतपूर्वकायाः
स्वेषामपि प्रसरतां रजसामलङ्घ्याः।

व्यज्यते। तत्र मृगगतं भयं स्थायिभावः, स्यन्दनालोकनम् आलम्बनविभावः, तदनुपतनशरपतनौत्सुक्यादीनि उद्दीपन-विभावाः, ग्रीवाभङ्ग-ग्रीवाभङ्गार्द्धजग्धतृण-मोचनप्लवनादयः अनुभावाः, त्रास-श्रम-शङ्का-वेगादयः व्यभिचारिभावाः, कम्पादयश्च सात्त्विका इति निपुणैरूह्येयम्। नेदं मृगगुणाख्यानात् विलोभनं नाम मुखनामकसन्ध्यङ्गम्, अस्य सन्धौ बीजार्थाप्रदर्शनेन उपकारकाभावात् इति। स्रग्धरा वृत्तम्॥ ७॥

(२९) प्रयत्नप्रेक्षणीयः—कष्टनिरीक्षणीयः।

(३०) उद्घातिनी—उद्घातयति पादस्खलनं जनयतीत्युद्घातिनी निम्नोन्नता, उन्नतावनतत्वात् पादस्खलनयोग्या इत्यर्थः; "उद्घातः कथ्यते पादस्खलने समुपक्रमे" इति विश्वः। [उत्खातिनीति पाठे तु—उत्खननवती, विदारवतीत्यर्थः]। रश्मि-संयमनात्—प्रग्रहाकर्षणात्। "किरणप्रग्रहौ रश्मी" इत्यमरः। विप्रकृष्टः—दूरवर्त्ती। समदेशवर्त्ती—समतलभूमिवर्त्ती। दुरासदः—दुष्प्रापः। [ते इति सम्बन्धविवक्षया षष्ठी; "न लोक—" (२।३।६९ पा०) इति खल्योगे कर्त्तरि षष्ठीप्रतिषेधात्।]

(३१) अभीषवः—प्रग्रहाः, रश्मय इत्यर्थः [अभि सम्यक् सुन्वन्ति पीडयन्ति अश्वम् इति अभि + षु-कर्त्तरि क्विप्, ततः "उपसर्गस्य दीर्घत्वं क्विब् घञादौ क्वचिद्भवेत्" इति नियमात् उपसर्गस्य दीर्घता,] "अभीषुः प्रग्रहे रश्मौ" इत्यमरः।

(३२) द्रुततरमश्वसञ्चारं प्रदर्शयन्नाह, मुक्तेष्विति।—रश्मिषु प्रग्रहेषु मुक्तेषु शिथिलीकृतेषु सत्सु निरायतः अतिदीर्घः, पूर्वकायः देहपूर्वभागः येषां ते तथोक्ताः। प्रसरतां

निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते (३२) ॥८॥

राजा । [सहर्षम्] । नूनमतीत्य हरिणं हरयो (३३) वर्त्तन्ते । यतः,—

उड्डीयमानानां, स्वेषां स्वखुरोत्थानां रजसां पांशूनामपि अलङ्घ्याः अनतिक्रमणीयाः, नेम्युत्थितानान्तु सुतरामेव इति भावः । एतेन वातातिशायी वेगः, तथा अनुकूलवायु-वशादेव वाजिनां रजोऽलङ्घनीयत्वं सम्भवति इति शुभशकुनमपि सूक्ष्ममाख्याय शकुन्तलाऽवाप्तिरूपोऽभीष्टलाभोऽपि सूचितः ; तथा च,—"वामे मधुरवाक्पक्षी वृक्षः पल्लवितोऽग्रतः । अनुकूलो वहन् वायुः प्रयाणे शुभशंसिनः ॥ इति । तथा निष्कम्पाः वेगातिशयात् निश्चलाः चामराणां भूषणार्थं विन्यस्तानां चमरीपुच्छनिर्म्मितव्यजनानां शिखाः अग्राणि येषां ते तथोक्ताः, च्युताः अपगताः कर्णानां भङ्गा अवनतयो येषां ते तथोक्ताः, निश्चलोर्द्ध्वकर्णा इत्यर्थः ; ते तव वाजिनः अश्वाः वर्त्मनि पथि धावन्ति, नु अथवा तरन्ति प्लवन्ते ? पश्येति पूर्व्वेणान्वयः । [ अत्र तुरगाणां द्रुतगमन-स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः । श्लोके चात्र मुक्ष्व्यादिमुद्रितपुस्तके द्वितीयपादे "आत्मोद्धतैरपि रजोभिरलङ्घनीयाः" इति पाठान्तरं, तथा तृतीये "च्युतकर्णभङ्गाः" इत्यत्र "निभृतोर्द्ध्वकर्णाः" इति, तुरीये तु "धावन्त्यमी मृगजवाक्षमयेव रथ्याः" इति च पाठान्तरम् अस्ति । तत्र क्रमेण प्रथमे—आत्मोद्धतैः आत्मना स्वकीयेन स्वखुरैः उद्धतैः उत्क्षिप्तैः रजोभिः धूलिभिः । द्वितीये—निभृतोर्द्ध्वकर्णाः निश्चलोद्गतकर्णाः इत्यर्थः । तृतीये—रथ्याः रथवाहाः चत्वारः अश्वाः [उद्वहति रथयुगप्रासङ्गम्" (४।४।७६ पा०) इति सूत्रेण रथशब्दात् यत् प्रत्ययः ] "रथ्यो वोढा रथस्य यः" इत्यमरः । मृगस्य जवः वेगः, तं सोढुम् अशक्नुवन्त इव धावन्ति द्रुतं गच्छन्ति, इति पश्य इत्यन्वयः । अत्र च तुरगाणां जवाक्षमत्वसम्भावनात् उत्प्रेक्षालङ्कारः ; स च हेतुत्वेन निर्देशात् हेतूत्प्रेक्षा-ऽलङ्कारः । स्वभावोक्तिश्च पूर्व्ववत् । तत्र "एते हि" इति चूर्णके पाठाभावात्, "अमी" इति च श्लोके उपादानात् न पौनरुक्त्यदोषावकाशः ] । वसन्ततिलकं वृत्तम् ॥ ८ ॥

(३३) अतीत्य—अतिक्रम्य । हरयः—अश्वाः । हरिणं—लक्षितं मृगम् । [अत्रापि पुस्तकान्तरे "हरितः हरींश्च वर्त्तन्ते वाजिनः" इति पाठान्तरम् । तत्र च हरितः सूर्य्याश्वान्, हरींश्च इन्द्राश्वान्, अतीत्य अतिक्रम्य, वेगेन इत्यर्थः, वर्त्तन्ते वाजिनः नूनम् । एतेन गत्यतिशयो ध्वन्यते । नूनमित्युत्प्रेक्षा । ]

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत्।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोः
न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् (३४) ॥९॥

सूतः। पश्यैनं व्यापाद्यम्। (३५)

[राजा शरसन्धानं नाटयति।]

(३४) गमनातिशय्यप्रदर्शनार्थं गमनजनितकार्य्यमाह, यदालोक इति।—रथजवात् रथवेगात्, यद्वस्तु आलोके प्रथमदर्शने "आलोकौ दर्शनोद्योतौ" इत्यमरः। सूक्ष्मम् अतिदूरतया सूक्ष्मत्वेन प्रतीयमानं, तत् सहसा क्षणादेव तस्मिन्नेव क्षणे इत्यर्थः, विपुलतां स्थूलतां व्रजति प्राप्नोति, सामीप्यात् यथावत् दृश्यते इत्यर्थः। अत्र आलोकि इति मुख्यक्रियाऽपि सम्भवति ; तत्र यद्वस्तु सूक्ष्ममालोकि पश्यामि अहमिति शेष इत्यर्थः। यत् वस्तु अर्द्धे अर्द्धभागे विच्छिन्नं विभक्तं, तत् कृतसन्धानमिव कृतसंयोगमिव भवति, यत् पूर्वे विभक्तं तत् तस्मिन् एव क्षणे एकमिव दृश्यते इत्यर्थः। [अत्र यदद्धा इति पाठे—यद्वस्तु अद्धा सत्यं, यथार्थमित्यर्थः ; विच्छिन्नम् इत्यनेनान्वयः। अव्ययमेतत्।] यदपि प्रकृत्या स्वभावतः वक्रं तदपि समरेखं—समा सरला रेखा आभोगः यस्य तादृशं, सरलप्रसरं,—"रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपि" इति हेमः। भवतीति शेषः। तथा किञ्चिद्वस्तु क्षणमपि स्वल्पकालमपि व्याप्य, मे मम नयनयोः चक्षुषोः दूरे न पार्श्वे सन्निधाने च वर्त्तते इति शेषः।

अत्र प्रथमपादत्रये प्रकृतान्यथासम्भावनात् उत्प्रेक्षा, तत्र द्वितीयपादे इवशब्दसद्भावात् वाच्या, अन्ये प्रतीयमाने। वेगजवस्तु-स्वभाववर्णनात् स्वभावोक्तिश्च ; अनयोः साङ्कर्य्यम्। भोजराजस्तु अत्र हेत्वलङ्कारमप्याह, रथजवादिति हेतुनिर्द्देशात्। तदुक्तं कण्ठाभरणे,—"क्रियायाः कारणं हेतुः कारको ज्ञापकश्च सः" इति। अत्र च कारको हेतुः। तुरीये तु—विरोधाभास इति केचित्। तथाऽत्र "कृष्णसारे" इत्यादितः एतदन्तेषु भूषणं नाम आद्यं नाटकलक्षणं प्रदर्शितं, विविधालङ्कारगुणगणसन्निवेशात्। उक्तं हि भरतेन,—"अलङ्कारैः गुणैश्चैव बहुभिः समलङ्कृतम्। भूषणैरिव विन्यस्तैस्तद्भूषणमिति स्मृतम्॥" इति।] शिखरिणी वृत्तमेतत्॥ ९ ॥

(३५) व्यापाद्यम्—बध्यम्। [अत्र 'व्यापाद्यमानम्" इति पाठान्तरम्। तत्र च हन्यत एवेति निश्चितत्वेनाध्यवसानात् अतिशयोक्तिः]।

[ नेपथ्ये ] भो भो राजन्! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः (३६)।

सूतः। [ आकर्ण्य अवलोक्य च।] आयुष्मन्! अस्य खलु ते बाणपातपथवर्त्तिनः (३७) कृष्णसारस्य अन्तरायौ तपस्विनौ संवृत्तौ।

राजा। [ ससम्भ्रमम्।] गृह्यन्ताम् अभीषवः। (३८)

सूतः। यथाज्ञापयति आयुष्मान्। [ इति तथा करोति ]।

[ ततः प्रविशति सशिष्यो वैखानसः।] (३९)

वैखा। [ हस्तमुद्यम्य।] भो भो राजन्! (४०) आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः;—

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः।
क्व वत हरिणकानां जीवितञ्चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते (४१) ॥१०॥

(३६) नेपथ्ये—यवनिकाभ्यन्तरे इत्यर्थः। आश्रममृगः—तपोवनमृगः। अनेन हिंसा-रहिते स्थाने मृगव्यापादनम् अत्यन्तमनुचितम् इति दर्शितम्।

(३७) बाणपातपथवर्त्तिनः—बाणपातस्य शरपतनस्य पथि वर्त्तते यः स तस्य। एतेन नैकट्यं सूचितम्।

(३८) गृह्यन्ताम्—आकृष्यन्ताम्। अभीषवः—रश्मयः। वाजिनः इति पाठान्तरम्।

(३९) वैखानसः—तपस्वी; "वैखानसो वनेवासी वानप्रस्थश्च तापसः" इति वैजयन्ती।

(४०) "राजन्" इति नृपसम्बोधनम्। "राजन्नित्यृषिभिः वाच्यः" इति भरतोक्तिः।

(४१) शमप्रधाने आश्रमे हिंसा न विधेया इत्याह, न खल्विति।—तूलराशौ अग्निरिव (अनेन तापसाश्रमे अनलतूलप्रभृतीनां यज्ञसाधनभूतानामेव दृष्टचरत्वात् तदेवात्र दृष्टान्तीकृतम् इति सुष्ठु तापसचरितमुद्घाटितं कविना।) मृदुनि कोमले अस्मिन् मृगशरीरे अयम् उद्धृतः बाणः न खलु न खलु सन्निपात्यः न निक्षेपणीयः। [ खलु अनुनये; सम्भ्रमात् द्विरुक्तिः ]। तयोर्महद्वैषम्यं दर्शयति क्वेति।—वत खेदे; हरिणकानां क्षुद्रमृगाणाम् [ अल्पार्थे कन्प्रत्ययः, अनुकम्पार्थे वा। एतेन तापसानां

**तदाशु कृतसन्धानं प्रतिसंहर सायकम् ।**
**आर्त्तत्राणाय वः शस्त्रं न प्रहर्त्तुमनागसि (४२) ॥११॥**

राजा । [ सप्रणामम् । ] **एष प्रतिसंहृत एव ।** [ इति यथोक्तं करोति । ]

वैखा । [ सहर्षम् । ] **उचितमेवैतत् पुरुवंशप्रभवस्य नरेन्द्र-दीपस्य ( ४३ ) भवतः ।—**

**जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।**
**पुत्रमेवंगुणोपेतं चक्रवर्त्तिनमाप्नुहि ( ४४ ) ॥१२॥**

---

सर्वप्राणिषु दयासद्भावः सूचितः । ] अतिलोलम् अतिचञ्चलं लघुकारणापायीति यावत्, जीवितं जीवनं क्व ? निशिताः तीक्ष्णाः, दुःसह इति यावत्, निपाताः येषां ते तथा, वज्रवत् सारः स्थिरांशः, काठिन्यमिति यावत्, येषां ते, [अत एव उपमालङ्कारः, तेन च वासवसदृशोऽयं राजा इत्युपमा गम्यते, इत्यलङ्कारेणालङ्कारध्वनिः । ] अति-कठिनाः ते तव शरा बाणाश्च क्व ? क्वद्वयं महदन्तरं सूचयति । [ अत एव विरूपयोः संघटनात् समुच्चयालङ्कारभेदः । वज्रसारा इत्यत्र उपमा, तथा पूर्व्वार्द्ध तूल-राशाविवाग्निरित्यत्र च सैव, इति परस्परं संसृष्टिः । ] मालिनी वृत्तम् ॥ १० ॥

(४२) तदिति ।—तत् तस्मात् सायकस्य कुलिशकठोरत्वात् कृतं सन्धानं यस्य तं धनुषि आहितं सायकं शरम् आशु तूर्णं प्रतिसंहर प्रत्यावर्त्त्य तूणीरं प्रापयेत्यर्थः । [आशु इत्यत्र साधु इति पाठे—साधु विषदिग्धत्वादिदोषशून्यमित्यर्थः । तेन चास्य चातानुवर्त्तनं सुतरां ध्वन्यते । ] प्रतिसंहारे अन्वयव्यतिरेकौ दर्शयन्नाह, आर्त्तेति !—वः युष्माकं शस्त्रम् आर्त्तानां विपन्नानां त्राणाय उद्धाराय [ तुमर्थे चतुर्थी ], अनागसि निरपराधे, "आगोऽपराधो मन्तुश्च" इत्यमरः । प्रहर्त्तुं न अर्हमिति शेषः । [ "शक-धृष" ( ३।४।६५ पा० ) इत्यादिना तुमुन् । अत्र परार्द्धे पादद्वयस्थवाक्यद्वयस्य अन्वय-व्यतिरेकाभ्यां क्रमेण पूर्व्वार्द्धं प्रति हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । ] पथ्यावक्त्रं वृत्तम् ॥ ११ ॥

(४३) पुरुवंशप्रभवस्य नरेन्द्रदीपस्य—पुरुवंशजातस्य नृपतिश्रेष्ठस्य ।

(४४) जन्मेति ।—पुरोः तदाख्यस्य प्रख्यातकीर्त्तेः राज्ञः वंशे यस्य जन्म, तस्य तव इदं निवारणमात्रेणैव बाणप्रतिसंहरणं युक्तरूपम् अनुरूपं ["प्रशंसायां रूपप्" इति रूपप्-प्रत्ययः । ] तादृशवंशोद्भवस्य तव ईदृगाचरणं सर्वथा वंशानुरूपमित्यर्थः । एवंगुणोपेतम् एवंविधविनयादिसर्वगुणयुक्तं चक्रवर्त्तिनं मण्डलेश्वरं सार्वभौमम् इत्यर्थः, "चक्रवर्त्ती सार्वभौमः" इत्यमरः । पुत्रम् आप्नुहि लभस्व । [अत्र च युक्तरूपत्वे पुरुवंशजन्मनः हेतुत्वात्

[ इतरोऽपि हस्तमुद्यम्य । ] सर्वथा चक्रवर्त्तिनं पुत्त्रमाप्नुहि ।

राजा । [ सप्रणामम् । ] प्रतिगृहीतं ब्राह्मणवचः ( ४५ ) ।

वैखा । राजन् ! समिदाहरणाय प्रस्थिता वयम् ( ४६ ) ।
एष च अस्मद्गुरोः ( ४७ ) कण्वस्य कुलपतेः ( ४८ ) साधिदैवत
एव शकुन्तलया (४९) अनुमालिनीतीरम् आश्रमो दृश्यते (५०)।

---

काव्यलिङ्गमलङ्कारः। अनेन च मुखनाम्नः प्रथमसन्धेः उपक्षेपकरूपमङ्गं प्रदर्शितम् । तथा च दर्पणे,—"काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः"] पथ्यावक्त्रं वृत्तम् ॥ १२ ॥

(४५) प्रतिगृहीतम्—स्वीकृतं, शिरोधार्य्यमिति यावत् । ब्राह्मणवचः—विप्रवाक्यम् ; अत्र ब्राह्मणपदोपादानात् राज्ञः ब्राह्मणेषु भक्त्यतिशयसूचनेन नायकगतमौचित्यं ध्वन्यते ।

(४६) यस्य कस्यचित् अतिथिः सत्कारः विधेयः, किमुत राज्ञः ? इत्यत आह, राजन्निति ।—समिदाहरणाय समिधां यज्ञियकाष्ठानाम् आहरणाय आहर्त्तुं [तुमर्थे चतुर्थी] प्रस्थिता वयम् । अवश्यकर्त्तव्ये यज्ञियकाष्ठाहरणे व्यापृता वयम्, अतः आतिथ्यं नैव कर्त्तुं शक्नुमः इति हृदयम् ।

(४७) ननु यादृच्छिकसङ्गतमपि आगन्तुकं सम्भावयति जनः, भवद्भिस्तत् कथं नानुष्ठीयते ?—इत्यत आह, अस्मद्गुरोरिति ।—तथा च वयं गुरोरधीनाः, नास्ति चास्माकं किमपि प्रभुत्वं, तदेतत् क्षन्तव्यमित्युक्त्यभिप्रायः ।

(४८) कुलपतेः—"मुनीनां दशसाहस्रं योऽन्नपानादिपोषणात् । अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः ॥" इत्युक्तलक्षणस्य ।

(४९) "ननु भवत्सकाशे इव तत्रापि नास्ति मे सत्कारलाभसम्भावना", इति नृपस्याशङ्कां निराकर्त्तुमाह, साधिदैवत एव शकुन्तलया इति ।—शकुन्तलयैव साधिष्ठातृजनः । ततश्च तव आतिथ्यक्षमा अस्मद्गुरुसमा अस्ति तद्दुहिता, अतः गमनयोग्यमेतत् इति भावः । [ साधिदवत इत्यनेन शकुन्तलैव सर्व्वजननिग्रहानुग्रहक्षमा, नास्ति तस्या उपरि कोऽपि गुर्व्वतिरिक्तः प्रभुरिति दर्शयित्वा राज्ञः प्रच्छन्नविहारोऽपि सुलभ इति ध्वनितः ] ।

(५०) अनुमालिनीतीरम्—मालिन्यास्तीरे इति अनुमालिनीतीरं, [ विभक्त्यर्थे अव्ययीभावः । एतेन मृगयां पर्य्यटतः राज्ञः मालिनीशीकरशीतलवातेन श्रमापनोदः, विहारयोग्यञ्चैतत् स्थानमित्यपि व्यज्यते ] । "दृश्यते" इत्यनेन समीपे एव तत् स्थानं, गमनश्रमोऽपि नैव भवति इत्यपि गूढ़मुद्घाटितम् ।

न चेदन्यकार्य्यातिपातः तदत्र प्रविश्य प्रतिगृह्यताम् अतिथि-सत्कारः । (५१) अपि च,—

धर्म्यास्तपोधनानां प्रतिहतविघ्नाः क्रियाः समवलोक्य ।
ज्ञास्यसि कियद्भुजो मे रक्षति मौर्वीकिणाङ्क इति (५२)॥१३॥

राजा । अपि सन्निहितोऽत्र (५३) कुलपतिः ?

(५१) अन्यकार्य्यातिपातः—कर्मान्तरातिक्रमः । अत्र "राजन्नित्यादिना...अतिथि-सत्कारः" इत्यन्तेन उल्लेखनामा नाट्यालङ्कारः विन्यस्तः । तथा च दर्पणे— "कार्य्यग्रहणमुल्लेखः" इति ।

(५२) धर्म्या इति ।—तप एव धनं येषां ते तपोधनाः तपस्विनः, ( एतेन नितान्त-विषयविलक्षणा सूचिता । ) तेषां, प्रतिहता अपगता विघ्ना यासां तास्तथोक्ताः, (एतेन राज्ञः प्रतापातिशयः ध्वन्यते । ) धर्म्याः [ "धर्मपथ्यर्थन्यायादनपेते" ( ४।४।९२ पा० ) इति सूत्रेण धर्मशब्दात् यत्प्रत्ययः ] । धर्म्मादनपेताः क्रियाः आरम्भ-प्रभृतीनि नवधा विहितकर्माणि [अत एव "क्रियाः" इत्यत्र बहुवचनम्] । तथा च—"आरम्भो निष्कृतिः शिक्षा पूजनं सम्प्रधारणम् । उपायः कर्म्मचेष्टा च चिकित्सा च नव क्रियाः ॥" इत्यमरः । समवलोक्य सम्यग् दृष्ट्वा मौर्व्याः गुणस्य यः किणस्तदाघातजनितः शुष्कव्रणः स अङ्कश्चिह्नं यत्र स तथाभूतः ; अथवा किणः चिह्नं तत् अङ्कः भूषा यस्य सः । ["अङ्को भूषणलक्ष्मसु" इति हैमः । अत एव पुनरुक्तवदाभासालङ्कारः, द्वयोः पुनरुक्त-वदाभासमानत्वात् । ] मे भुजः बाहुः ( राजानं विहाय भुजस्य अचेतनस्य कर्त्तृत्व-करणात् राज्ञः अन्यनिरपेक्षित्वं ध्वनितम् ; तत्रापि एकवचनोपादानात् भुजान्तरनिरपेक्षित्वमपि । ) कियत् रक्षति इति ज्ञास्यसि अनुभविष्यसि । ['धर्म्याः' इत्यत्र 'रम्याः' इति पाठे—वेदबोधितकर्म्मानुष्ठानेन रमणीया इत्यर्थः । अनेन च राज्ञः प्रभावातिशयः ध्वन्यते । ] तपोधनानां निर्विघ्नं तपश्चरणं दृष्ट्वा आत्मनो भुजवीर्य्यं ज्ञास्यसीत्यर्थः । [अत्र साभिप्रायविशेषणैः उक्तत्वात् परिकरालङ्कारश्च । ] आर्य्या वृत्तम् ॥ १३ ॥

(५३) अपि इति प्रश्नसूचकमव्ययम् ।—"गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि" इत्यमरः । सन्निहितः—अवस्थितः ।

वैखा । इदानीमेव दुहितरं शकुन्तलामतिथिसत्काराय आदिश्य दैवमस्याः प्रतिकूलं (५४) शमयितुं सोमतीर्थं गतः ।

राजा । भवतु, तामेव द्रक्ष्यामि । सा खलु विदितभक्तिः मां महर्षये (५५) निवेदयिष्यति ।

वैखा । साधयामः । (५६) तावत् । [ इति सशिष्यो निष्क्रान्तः । ]

राजा । सूत ! नोदयाश्वान् । पुण्याश्रमदर्शनेनात्मानं पुनीमहे । ( ५७ )

(५४) शकुन्तलामिति—अत्र च अपरान् शिष्यादीन् विहाय शकुन्तलायाः आतिथ्ये नियोगः, अस्य खलु कण्वस्य जीवितसर्व्वस्वत्वं ध्वनयति । अस्या इति ।—अस्याः—शकुन्तलायाः, प्रतिकूलं—विरुद्धं, परिणयप्रतिबन्धकमिति भावः । एतेन शापान्तरूपं वस्तु अपि ध्वन्यते ।

(५५) विदितभक्तिः—कण्व प्रति ज्ञातानुराग इति यावत् । [ विदितभक्तिरित्यत्र विदिता भक्तिः यया, इति विग्रहे—"स्त्रियाः पुंवत्"—( ६।३।३४ पा० ) इत्यादिना पुंवद्भावो दुर्घटः ; तत्र "अपूरणीप्रियादिषु" इति निषेधात् भक्तिशब्दस्य प्रियादिषु पठितत्वात् । अतः—"दृढभक्तिरित्येवमादिषु स्त्रीपूर्व्वपदस्य अविवक्षितत्वात् सिद्धमिति समाश्रेयम्" इति काशिकावचनात्, "दृढं भक्तिः यस्य सः दृढभक्तिः" इति सिद्धान्तकौमुद्युक्तत्वाच्च—"विदितं भक्तिः यया" इति 'दृढभक्तिवत्' नपुंसक-पूर्व्वपदो बहुव्रीहिः इति समाश्रयम् । तेन—"अतो दृढं भक्तिरस्येति नपुंसक-पूर्व्वपदो बहुव्रीहिः" इति गणव्याख्यानं सङ्गच्छते । न्यासकारोऽपि—एवमेव अनुमनुते । वृत्तिकारस्तु—"दीर्घनिवृत्तिमात्रपरो दृढभक्तिशब्दो लिङ्गविशेषस्य अनुपकारत्वात् स्त्रीत्वमविवक्षितमेव" इत्याह । भोजराजस्तु—"कर्म्मसाधनस्यैव भक्तिशब्दस्य प्रियादिषु पाठात् 'भवानीभक्तिः' इत्यादौ कर्म्मसाधनत्वात् पुंवद्भाव-प्रतिषेधः ; 'दृढभक्तिः' इत्यादौ भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्व्वपदस्य ।" इत्युक्तवान् । तेन—भावविहिते भक्तिशब्दे नैव पुंवद्भावनिषेध इति विभावनीयम् ] । [महर्षये इति ।—क्रियाग्रहणात् चतुर्थी ] ।

(५६) साधयामः—गच्छामः । "प्रायेण ण्यन्तकः साधिः गमेः स्थाने प्रयुज्यते" इति दर्पणोक्तिः ।

(५७) नोदय—प्रेरय, चालयेत्यर्थः । पुनीमहे—पवित्रं कुर्मः ।

सूतः । यदाज्ञापयति आयुष्मान् [इति भूयो रथवेगं निरूपयति । ] (५८)

राजा । [ समन्तादवलोक्य । ] सूत ! अकथितोऽपि ज्ञायत एवायम् आभोगः ( ५९ ) तपोवनस्य ।

सूतः । कथमिव ? ( ६० )

राजा । किं न पश्यति ( ६१ ) भवान् ? इह हि ;—

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।

---

(५८) निरूपयति—दर्शयति, नाट्येन इत्यर्थः, इति कविवाक्यम् ।

(५९) समन्तात्—चतुर्दिक्षु । अकथितोऽपि—केनापि तपोवनमिदमिति अनुक्तोऽपि । आभोगः—परिपूर्णता, विस्तारः, सीमेति यावत् ।

(६०) अध्वनः समानदृष्टिविषयत्वेऽपि सूतस्य कथमिवेति प्रश्नः, राज्ञः ततः ज्ञानप्रकर्षसूचनार्थं कविना दर्शितम् । अत एव चरित्रवैषम्यं दर्शयता चातुरीक्षतं नाट्यम् ।

(६१) न पश्यति—दृष्ट्वा न बुध्यते इत्यर्थः ।

(६२) तपोवनमिदमिति विशेषचिह्नं प्रदर्शयितुमाह, नीवारा इति ।—शुकानां पक्षिविशेषाणां कोटरेषु वृक्षस्थगह्वरेषु ये अर्भकाः शावकाः, तेषां मुखेभ्यः भ्रष्टाः विच्युताः नीवाराः शूकधान्यविशेषाः, तरूणाम् अधः तलेषु इत्यर्थः, दृश्यन्ते इति शेषः । [अत्र च सोपस्कृतान्वये नास्ति न्यूनपदतादोषः । "शुकगर्भकोटरमुखभ्रष्टाः" इति पाठान्तरं—तत्र शुका गर्भे येषां, तानि कोटराणि, तेषां मुखेभ्यो भ्रष्टाः च्युताः इत्यर्थः, अत एव मुखशब्दोपादानात् नीवाराणां बाहुल्यं सूचितम् । शुक नीवाराद्युद्दीपनविभावप्रदर्शनात् राज्ञोऽत्र रतिः सूचिता । नीवारभोज्यत्वात् तापसानाम्, अत्रापि नीवारसत्त्वात् तपोवनमिदमिति प्रतिपादितम् ] । दूरतोऽपि तदानयनं सम्भवति शुकानां, तत् कथमाभोगः तपोवनस्य ? इति सूतसंशयं निराकर्तुं धर्मान्तरं दर्शयन्नाह ।—प्रस्निग्धा इति ।—क्वचित् [इति पदं सकलवाक्यान्वयि] प्रदेशविशेषे प्रस्निग्धाः प्रकृष्टाः स्निग्धाः तैलाक्ताः चिक्कणा इत्यर्थः, [ अनेन अभिनवत्व व्यज्यते ] उपलाः प्रस्तराः, इङ्गुदीफलानि तापसतरुबीजानि भिन्दन्तीति तथोक्ताः, सूच्यन्ते लक्ष्यन्ते, ( इङ्गुदीफलपेषणेन तापसास्तैलं निष्पादयन्तीति प्रसिद्धिः ; अत एव तस्य तापसतरुरिति नामान्तरम् ) । तदपि भिन्नदेशसमागतानां सम्भवति इत्यरुच्या आह, विश्वासेति ।—मृगाः हरिणादयः, विश्वासः हिंसा अत्राक्रमत न केनापि क्रियते इत्येवंरूपः दृढः प्रत्ययः,

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः(६२)॥१४

अपि च,—

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन।
एते चार्वागुपवनभुवि च्छिन्नदर्भाङ्कुरायाम्
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति (६३) ॥१५

तस्य उपगमात् लाभात् अभिन्ना अस्खलिता अचकिता इति भावः, गतिः सञ्चारः येषां तथाभूताः सन्तः शब्दं सहन्ते, शब्दं श्रुत्वा न पलायन्ते इति भावः। [न हि ब्रह्मप्रधानात् तपोवनादन्यत्र कुत्रापि ईदृशः सार्वजनीनः अहिंसाभावः परिलक्ष्यते; अतोऽयम् आश्रम इत्यवेहि इति नृपाभिप्रायः]। अत्रापि व्यभिचारमाशङ्क्याह, तोयेति।—तोयाधाराणां जलाशयानां पन्थानश्च ["ऋक्पूरब्धू" (५।४।७४ पा०) इति अच्प्रत्ययः समासान्तः] वल्कलानां या शिखा अग्राणि, तासां निष्यन्दरेखाभिः गलितजलधाराभिः अङ्किताः चिह्निताः; वल्कलानां निर्मज्जनासम्भवात् सुष्ठु रेखाङ्कनं सम्भवति इति भावः। [अत्र बहुव्रीहि-समासे तदर्थलाभे अङ्कितेति-पदोपादानात् आश्रमस्य सरसत्वं प्रदर्शयन् नृपस्य अभिरुचिं ध्वनयति। एतेनास्य तपोवनाभोगत्वं सुव्यक्तमेवेति भावः। अत्र बहुक्रियाणां समुच्चयात् क्रियासमुच्चयालङ्कारः, काव्यलिङ्गञ्च]। शार्दूलविक्रीडितं वृत्त,—"सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति लक्षणात् ॥ १४ ॥

(६३) भूयोऽपि सूतबुद्धिदार्ढ्यार्थं युक्त्यन्तरं प्रदर्शयन्नाह, कुल्याम्भोभिरिति।—पवनेन वायुना चपलैः, कुल्यानाम् अल्पसरितां ("कुल्याल्पा कृत्रिमा सरित्" इत्यमरः) अम्भोभिः सलिलैः शाखिनः वृक्षाः धौतं क्षालितं मूलं तलभागः येषां तथाभूताः। (कृत्रिमा सरित् खलु जलरक्षार्थं तपोवने एव सम्भवति इति नृपाभिप्रायः)। किसलयरुचां पल्लवकान्तीनां रागः लौहित्यम्, आज्यस्य हव्यस्य घृतस्य धूमोद्गमेन धूमसङ्गेनेति भावः, भिन्नः वैपरीत्यं गत इत्यर्थः, एतेन प्रतिनियतहोमविधानं तापसानामेव तपोवने सम्भवति, इति सूचितम्। एते च हरिणशिशवः मृगपोताः नष्टाशङ्काः निःशङ्काः सन्तः, छिन्नाः ऋषिभिः लूनाः, दर्भाणां कुशानाम् अङ्कुराः अग्रभागाः यस्यां तथाविधायाम् [अनेन तापस-

सूतः। सर्वम् उपपन्नम्। (६४)

राजा। [स्तोकमन्तरं मत्वा]। आश्रमोपरोधो मा भूत्, तत् इहैव रथं स्थापय, यावदवतरामि। (६५)

सूतः। धृताः प्रग्रहाः (६६)। अवतरतु आयुष्मान्।

राजा। [अवतीर्य्य आत्मानमवलोक्य च।] सूत! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद् गृह्यन्ताम् आभरणानि धनुश्च। [इति सूतस्य अर्पयति; (६७) सूतो गृह्णाति]।

नूनकुशसद्भावात् तपोवनस्य अवश्यम्भावित्वं स्फुटीकृतम्।] उपवनभुवि अर्वाक् समीपे मन्दमन्दं चरन्ति; हिंसाऽभावेन भयरहितत्वादिति भावः। [अत्र "प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति मन्दपदस्य द्विरुक्तिः। आद्देरेकस्य विभक्तेः लोपश्च। [पूर्वश्लोके पशुसामान्यवाचकमृगपदस्य प्रयोगः, अत्र तु पशुविशेषवाचकस्य इत्यपौनरुक्त्यम्।] एतेनापि अस्य तपोवनत्वं सुस्पष्टमिति भावः। अत्रापि पूर्ववत् अलङ्कारः।] मन्दाक्रान्ता वृत्तम्—"मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात्। ॥ १५ ॥

(६४) उपपन्नं—युक्तं, यथार्थमभिहितमित्यर्थः।

(६५) आश्रमोपरोधः—आश्रमबाधा। [आश्रमवासिनामिति पाठान्तरं सुगममेव]। यावदवतरामि—अवतरणपर्य्यन्तमित्यर्थः; ["यावत्पुरानिपातयोर्लट्" (३।३।४ पा०) इति यावत्-शब्दयोगे भविष्यति काले लट्। पक्षे अवतरिष्यामि इति लृडपि]।

(६६) प्रग्रहाः—प्रगृह्यन्ते एभिरिति प्रग्रहाः रश्मयः, अश्वावरोधक-रज्जुविशेषा इति यावत्। "तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च" इत्यमरः।

(६७) विनीतवेशेन—नम्रवेशेन, अनुद्धतवेशेनेति यावत्। [अत्र विनीतवेशेनेत्यादिधनुश्चेत्यन्तेषु नीतिनामा नाट्यालङ्कारः उपन्यस्तः। तथा च दर्पणे,—"नीतिः शास्त्रेण वर्त्तनम्" इति]। पूर्वं खलु मृगं हन्तुम् उद्यतस्य नृपतेरात्तधन्वनः मुनिवाक्येन केवलेन बाणप्रतिसंहारः; अत्र च विनीतवेशेन तपोवनप्रवेशः, तथा उत्तरत्र बाहुस्फुरणकारण-भावना च राज्ञः धर्म्मप्रवणतां नितराम् अभिव्यनक्ति, इति विभावनीयम्। सूतस्येति।—[अत्र आवरणादेः स्वस्वत्वस्य ध्वंसाभावात् "रजकस्य वस्त्रं ददाति" इतिवत् सम्प्रदानासम्भवेन सम्बन्धविवक्षया षष्ठी। "उपनीय अर्पयति" इति पाठे—सूतसमीपं गत्वा ददाति इत्यर्थः। अनेन इदानीन्तनसारथिभ्य प्राच्यसारथीनां सगौरवव्यवहारः सूच्यते]।

राजा। यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये, तावत् आर्द्रपृष्ठाः क्रियन्तां वाजिनः। (६८)

सूतः। यथाज्ञापयति आयुष्मान्।

[इति निष्क्रान्तः]।

राजा। [परिक्रम्य अवलोक्य च] इदमाश्रमपदं तावत् प्रविशामि। [प्रविश्य प्रवेष्टकेन निमित्तं सूचयित्वा] (६९)। अये!—

शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य?
अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र (७०) ॥१६॥

(६८) निवर्त्तिष्ये—प्रत्यागमिष्यामि। [अत्रापि यावत्-शब्दयोगे लृट्, पक्षे लडपि।] आर्द्रपृष्ठाः—आर्द्राणि जलसिक्तानि, अथवा आर्द्राणि उपचारात् शीतलानि, पृष्ठास्तरणवस्त्रादीनामपनयनादिति भावः, पृष्ठानि येषां तथाभूताः। वाजिनः—अश्वाः; अश्वान् विश्रामयेति भावः।

(६९) प्रवेष्टकेन—बाहुना, दक्षिणेनेति शेषः। "भुजबाहू प्रवेष्टो दोः" इत्यमरः। निमित्तं—शुभसूचकं लिङ्गं, स्पन्दनमिति भावः। एतच्च वराङ्गनालाभं सूचयति; तथा चोक्तम् अद्भुतसागरे,—"वामेतरभुजस्पन्दो वरस्त्रीलाभसूचक." इति।

(७०) शान्तमिति।—इदं पुरो दृश्यमानम्, आश्रमपदं तपोवनस्थानं, शान्तं शान्तिरसास्पदं, न तु आदिरसास्पदम् इति भावः। (अत्र अचेतनस्य तपोवनस्य शान्तत्वकथनम् अत्यन्तशमगुणप्राधान्यख्यापनार्थम्।) बाहुः वामेतर इति शेषः, स्फुरति स्पन्दते। इह अस्मिन् शमप्रधाने आश्रमे अस्य बाहुस्पन्दनस्य फलं स्त्रीलाभरूपं कुतः कस्मात्? सर्वथा इदमसम्भाव्यमिति भावः। ननु दैवविलसितं चेत्, सर्वत्र असम्भाव्यमपि सर्वं सम्भवति इति पूर्वोक्तमाक्षिप्याह, अथवेति।—भवितव्यानाम् अवश्यम्भाविनां विषयाणां द्वाराणि प्राप्तिसूचका उपायाः, "द्वारं पुनः निर्गमनेऽभ्युपाये" इति विश्वः। सर्वत्र सर्वस्मिन् प्रदेशे भवन्ति। [अत्र सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः, 'उक्तगः' आक्षेपालङ्कारश्च; अनयोरङ्गाङ्गिभावेन साङ्कर्य्यम्। श्रुतिवृत्त्यनुप्रासादयश्च सर्वत्र सन्ति प्रायेण, इति न प्रदर्श्यन्ते ग्रन्थ-गौरवभयात्। तथाऽत्र प्रथममुखनामकसन्धेः द्वितीयमङ्गं परिकराविधेयमपि प्रदर्शितम्। उक्तञ्च दर्पणे,—"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः" इति। आर्य्या छन्दः, तल्लक्षणं यथा वृत्तरत्नाकरे—

[नेपथ्ये] इदो इदो (७१) पिअसहीओ ! (ज)

राजा। [कर्णं दत्त्वा]। अये! दक्षिणेन वृक्षवाटिकाम् आलाप इव श्रूयते, यावदत्र गच्छामि। [परिक्रम्यावलोक्य च]। अये! एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बाल-पादपेभ्यः पयो दातुमित एव अभिवर्त्तन्ते। [निरूप्य] अहो मधुरमासां दर्शनम् (७२)।—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः (७३) ॥१७॥

(ज) इत इतः प्रियसख्यौ

"लक्ष्यैतत् मम गणा गोपिता भवति नेह विषमे जः। षष्ठोऽयं न-लघू वा प्रथमार्द्धे नियतमार्य्यायाः॥ चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठो लः॥" इति ॥ १६ ॥

(७१) इत इतः।—अस्यामस्यां दिशि इत्यर्थः; अथवा इत इत्येकं क्रियापदं, गच्छत इत्यर्थः। (इण् + लट्-तस्)।

(७२) दक्षिणेन वृक्षवाटिकां—वृक्षवाटिका यद्यपि "अमात्यगणिकागेहोपवने वृक्षवाटिका" इत्यमरोक्तेः उपवनविशेषाद्यर्थे वर्त्तते, तथापि लक्षणया वृक्षश्रेणी एव अर्थः। तपोवने उपवनासम्भवात्। तस्याः दक्षिणस्यां दिशीत्यर्थः। ["एनपा द्वितीया" (२।३।३१ पा०) इति द्वितीया]। आलाप इव—कथोपकथनमिव। स्वप्रमाणानु-रूपैः—स्वशक्तियोग्यैः। बालपादपेभ्यः—क्षुद्रतरुभ्यः। इत एव—अस्यां दिश्येव। अभिवर्त्तन्ते आगच्छन्ति। अहो!—इति विस्मये। "अहो हि च विस्मये" इत्यमरः। मधुरं—मनोहरम्, "मधुरं रसवत्स्वादुप्रियेषु" इति विश्वः। दर्शनं—दृश्यते इति दर्शनं, रूपमित्यर्थः। ["कृत्यल्युटो बहुलम्" (३।३।११३ पा०) इति कर्मणि ल्युट्प्रत्ययः।]

(७३) शुद्धान्तेति।—इदं पुरः दृश्यमानम् अतिसुन्दरं शुद्धान्तेषु राजान्तःपुरिकासु दुर्लभं दुष्प्रापं वपुः शरीरम्, (उपचारात् रूपमित्यर्थः) आश्रमवासिनोऽपि तपोवन-स्थायिनोऽपि [आश्रमे वस्तुं शीलमस्य इति शीलार्थे णिनिप्रत्ययः तेन च नितरां तादृशरूपासम्भवत्वं व्यज्यते।] जनस्य—इतरजनस्य इत्यर्थः।—"लोके जगद्भेदे पृथग्-जनः" इति हैमः। अनेनापि सर्वथा असम्भाव्यत्वं रूपस्य सूचितम्। यदि स्यात्, तदा उद्यानलता उपवनवल्ल्यः यत्नवर्द्धिता इति भावः, वनलताभिः अयत्नवर्द्धिताभिरिति

यावत् एताः छायामिमामाश्रित्य प्रतिपालयामि (७४)।

[इति विलोकयन् स्थितः]।

[ततः प्रविशति यथोक्तव्यापारा (७५) सह सखीभ्यां शकुन्तला।]

एका। हला सउन्तले! तत्तो वि तादकस्सस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि, जेण णोमालिआ-कुसुमपरिपेलवा वि तुमं एदाणं आलवालपरिऊरणे (७६) णिउत्ता। (भ)

(भ) हला शकुन्तले! त्वत्तोऽपि तातकाश्यपस्य आश्रमवृक्षाः प्रियतरा इति तर्कयामि, येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषाम् आलवालपरिपूरणे नियुक्ता।

---

भावः, गुणैः सौन्दर्य्यादिभिः दूरीकृताः निराकृताः खलु, पराजिता एव इत्यर्थः। [अत्र पूर्वार्द्धपरार्द्धवाक्ययोरन्योऽन्यसम्बन्धस्यानुपयुज्यमानत्वेन बिम्बानुबिम्बभावप्रतिपादनात् निदर्शनालङ्कारः। तदुक्तं दर्पणे,—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥" इति; तथा पूर्व्वार्द्धे शकुन्तलावपुः इत्यनुक्त्वा वपुःसामान्येन कथनात् अप्रस्तुतप्रशंसालङ्कारश्च, इत्यनयोः संसृष्टिः॥] आर्य्या वृत्तम्॥ १७॥

(७४) एताः—कन्यकाः। प्रतिपालयामि—प्रतीक्षे।

(७५) यथोक्तव्यापारा—वृक्षसेचनतत्परा।

(७६) हला इति सखीसम्बोधनम्। तथा च दर्पणे,—"हलेति सदृशी, प्रेष्या हञ्जे, वेश्याऽज्जुका तथा" इति। त्वत्तोऽपि [युष्मद्-शब्दात् "पञ्चमी विभक्ते" (२।३।४० पा०) इति पञ्चमी, ततः "पञ्चम्यास्तसिल्" (५।३।७ पा०) इति तसिल्प्रत्ययः।] नवमालिकेति।—नवमालिकायाः कुसुमवत् परिपेलवा सुकोमला।—"पेलवं कोमलं तनौ" इति शाश्वतः। अपिरत्र भिन्नक्रमेऽपि, तथा च त्वमपि इति योज्यम्। [अत्र एवात्र समासगेयमुपमालङ्कृतिः। न चात्र पेलवपदोपादाने पदांशगतमश्लीलत्वं दोषः शङ्कनीयः, परिपेलवेतिस्थाने कोमलेतिपदं प्रयोज्य परिहर्त्तव्यत्वात्। "कुसुमकोमला" इति पाठे तु सुतरामेव नास्ति दोषसम्भावना इति दिक्।] आलवालपरिपूरणे—आलवालानां वृक्षमूलवेष्टनजलाधाराणाम् (आलवानि सिक्तजलानि आलान्ति गृह्णन्ति यानि तानि इति व्युत्पत्तिः।) "आलवालं विदुर्धाराधारणं द्रवतोऽम्भसः"। इति। परिपूरणे—सम्यक् पूर्णीकरणे इत्यर्थः।

शकु। हला अणसूए! ण केवलं तादस्स णिओओ मम वि एदेसु सहोअरसिणेहो। (ञ) (७७)

[ इति वृक्षसेचनं नाटयति । ]

द्वितीया। सहि सउन्तले! उदअं लम्भिदा एदे गिम्हआलकुसुमदाइणो अस्समरुक्खआ। दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चम्ह, तेण अणहिसन्धिगुरुओ धम्मो भविस्सदि (ट)। (७८)

शकु। हला पिअम्वदे! रमणिज्जं मन्तेसि। (ठ) (७९)

[ इति भूयो वृक्षसेचनं नाटयति ]

(ञ) हला अनसूये! न केवलं तातस्य नियोगो ममापि एतेषु सहोदरस्नेहः।

(ट) सखि! शकुन्तले! उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षाः। इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः, तेन अनभिसन्धिगुरुको धर्मो भविष्यति।

(ठ) हला प्रियंवदे! रमणीयं मन्त्रयसि।

(७७) नियोगः—आदेशः। [ अनेन वृक्षसेचननियोगकथनेन महात्मनः कण्वस्य सचराचरेषु सकलपदार्थेषु दयाप्रकाशः द्योत्यते। ] सहोदरस्नेहः—भ्रातृस्नेहः।

(७८) लम्भिताः—प्रापिताः। (अत्र लभेः प्राप्त्युपसर्जनगत्यर्थत्वात् अणिकर्त्तुः कर्मत्वम्। तथाच वामनः—"लभेः गत्यर्थत्वात् णिच्यणौ कर्त्तुः कर्मत्वाऽकर्मत्वे" तत्र लभधातोः गत्युपसर्जनप्राप्त्यर्थत्वे अणिकर्त्तुः न कर्मत्वं, प्राप्त्युपसर्जनगत्यर्थत्वे तु तस्य कर्मत्वमेव इति रहस्यम्। ततः कर्मवाच्ये—"णिजन्ते कर्त्तृकर्मैव अन्यदा वक्ति-कर्मजः" इति नियमात् कर्मभावापन्ने अणिकर्त्तरि प्रथमा। उदकमित्यत्र द्वितीयैव)। अतिक्रान्तकुसुमसमयान्—पुष्पोद्गमसमयम् अतिक्रम्य स्थितान्। अनभिसन्धिगुरुकः—नास्ति अभिसन्धिः फलकामना यस्मिन् तथाभूतः, अत एव गुरुरेव गुरुकः [ स्वार्थे कन् ] महान्। (अभिसंहितो धर्मः फलप्राप्त्या क्षीयते, अनभिसंहितस्तु अक्षय इत्यतो महत्त्वमिति भावः। तथा च हारीतः,—"यश्च सोपधं ददाति अन्यश्चावितमल्पफलम्" इति। अत्र सोपधं पुनः लाभेच्छया कृतमित्यर्थः)।

(७९) रमणीयं साधु यथा तथा मन्त्रयसि कथयसि। एतत् शकुन्तलावाक्यं, तथा पूर्वोक्तं प्रियंवदावाक्यञ्च पुस्तकान्तरे न दृश्यते।

राजा। [निर्वर्ण्य आत्मगतम्]। कथमियं सा कण्वदुहिता शकुन्तला !! [सविस्मयम्] अहो! असाधुदर्शी खलु भगवान् कण्वः,—य इमामाश्रमधर्मे नियुङ्क्ते (८०)।—

इदं किलाव्याजमनोहरं वपुः
तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति (८१) ॥१८॥

(८०) निर्वर्ण्य—दृष्ट्वा। आत्मगतं—स्वगतम्। तथा च,—"अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" इति दर्पणोक्तेः। सा इति।—तापसाभ्यां पूर्वकथिता इत्यर्थः। असाधुदर्शी—असम्यग्दर्शी, अविवेचक इति भावः। आश्रमधर्मे—तपोवनविहिते कार्य्ये। नियुङ्क्ते—व्यापारयति।

(८१) असाधुदर्शनं समर्थयमान आह, इदमिति।—किल इति अरुचौ।—"किल सम्भाव्यवार्त्तयोः हेत्वरुच्योरलीके च" इति हैमः। अव्याजेन—व्याजं छलं विना मनोहरं स्वभावरम्यमित्यर्थः, इदं पुरःस्थितं वपुः शरीरं, शकुन्तलाया इति शेषः। तपःक्षमं तपसा क्षमः क्लान्तिः श्रम इत्यर्थः यस्य तथाविधं, तपस्याक्लेशनिरतमित्यर्थः। (अत्र तपःक्षमम् इति पाठान्तरे—तपस्यायोग्यमित्यर्थः) साधयितुं कर्त्तुं यः इच्छति, स ऋषिः नीलोत्पलस्य पत्रधारया दलाग्रभागेण शमीलतां शम्याख्यं तरुमित्यर्थः, (उपमेये शकुन्तलावपुषि कोमलत्वसौभाग्यवत्त्वादि साधारणधर्मसद्भावसूचनार्थं, तरुपदोपादाने लिङ्गव्यत्ययेन अनौचित्यदोषप्रसङ्गाच्च शम्यां लतात्वारोपः इति भाव्यम्।) छेत्तुं व्यवस्यति यतते, ध्रुवम् उद्युङ्क्ते खलु इत्यर्थः। [अनेन उपमेये वपुषि तपःक्लेशसहनस्य अत्यन्तासम्भाव्यत्वं गम्यते। अत्र यत्तच्छब्दयोरभेदेनान्वयस्य असम्भवेन विम्बप्रतिविम्बभावबोधनात् निदर्शनालङ्कारः। लक्षणन्तु पूर्वश्लोके उक्तम्। तथा शमीलतामित्यत्र रूपकोपमयोः सन्देहसङ्करः, एकत्र साधकबाधकप्रमाणाभावात्। अत्र छेदान्वयस्य उभयत्र साम्यात्। पूर्वार्द्धे च विरूपसङ्घटनारूपः विषमालङ्कारः व्यङ्ग्यः। ध्रुवमिति उत्प्रेक्षा च। अनेन च शमीलतासादृश्योद्भावनात् अभिप्रायनामकं नाटकलक्षणमुपन्यस्तम्। तथा च दर्पणे—"अभिप्रायस्तु सादृश्यात् अद्भुतार्थस्य कल्पना" इति]। वंशस्थं वृत्तं—"जतौ तु वंशस्थमुदीरितं जरौ" इति। तल्लक्षणात्। वंशस्थं वृत्तं हि द्वादशाक्षरपादायाः जगत्याः द्व्यशीत्यधिकत्रयोदशशततमसंख्यकप्रस्तारस्य अन्तर्भूतम् ॥ १८ ॥

भवतु पादपान्तरित एव विश्वस्तां तावदेनां पश्यामि। (८२)

[ इति तथा करोति ]।

शकु। हला अणसूए। अदिपिणद्धेण वक्कलेण पियम्वदाए दढ़ं पीड़िदा म्हि, ता सिढ़िलेहि (८३) दाव णं। (ड)

[ अन। शिथिलयति ]।

प्रियं। [ सहासम् ]। एत्थ दाव पओहरवित्थारहेतुअं अत्तणो जोव्वणारम्भं उवालहस्स, मं किं उवालहसि? (ढ) (८४)

राजा। सम्यक् इयमाह (८५)।—

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन।

(ड) हला अनसूये! अतिपिनद्धेन वल्कलेन प्रियंवदया दृढ़ं पीड़ितास्मि, तत् शिथिलय तावदेनत्।

(ढ) अत्र तावत् पयोधरविस्तारहेतुकम् आत्मनो यौवनारम्भमुपालभस्व, मां किम् उपालभसे?

(८२) पादपान्तरित:—पादपैस्तरुभि: अन्तरित: व्यवहित:। विश्वस्तां—मम अदर्शनेन नि:शङ्कामित्यर्थ:। [ विस्रब्धम् इति वा पाठ:। तत्र तु—विश्वासयुक्तम् इति क्रियाविशेषणम्।—"समौ विस्रम्भविश्वासौ" इत्यमर:। अत्र राज्ञो दोष: कोऽपि न विद्यते, अनूढ़ानां दर्शने दोषाभावात्। ]

(८३) अतिपिनद्धेन—दृढ़ं बद्धेन इत्यर्थ:।—"आमुक्त: प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत्" इत्यमर:। वल्कलेन—तरुत्वचा। [अनेन नितरां कष्टासहिष्णुत्वात् अतिकोमलत्वमस्या: वपुष: ध्वन्यते ]। शिथिलय—शिथिलं कुरु। [ कृत्यर्थे णिच् ]।

(८४) अत्र—नियन्त्रणविषये। पयोधरेति।—पयोधरयो: स्तनयो: विस्तारस्य वृद्धे: हेतुरेव हेतुक:, तम्। उपालभस्व—तिरस्कुरु। "निन्दा उपालम्भ:" इत्यमर:।

(८५) सम्यगिति।—सत्यम् इयं प्रियंवदा ब्रवीति। तथा च यौवनमेवात्र दृढ़नियन्त्रणकारणमिति यदुक्तं तत् सत्यं मे प्रतिभाति इत्यर्थ:।

(८६) सम्प्रति अभिनवयौवनदर्शनेन समाकृष्टमानस: किमपि प्रसाधनमिच्छन् वल्कलादिषु अरुचिं प्रकाशयन्नाह, इदमिति।—इदं पुरोवर्त्ति, अस्या: शकुन्तलाया:

वपुरभिनवमस्याः पुष्यति स्वां न शोभाम्
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण (८६) ॥ १९ ॥

अथवा काममननुरूपमपि अस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति ? (८७) कुतः ?—

सरसिजमनुविद्धं शैवलेनापि रम्यम्
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

अभिनवं नवयौवनमित्यर्थः । वपुः, स्कन्धदेशे उपहितः अर्पितः सूक्ष्मग्रन्थिर्यस्य तेन (अनेन वल्कलस्य चारुताहीनत्वं व्यञ्जितम्) स्तनयुगस्य परिणाहं विशालतां ("परिणाहो विशालता" इत्यमरः) आच्छादयतीति तथोक्तेन; (अनेन स्वाभीष्टसन्दर्शनप्रतिबन्धकतया अप्रियत्वं सूचितम्) वल्कलेन वृक्षत्वचा, पाण्डुपत्राणां परिणतपत्राणाम्, उदरेण अभ्यन्तरेण, पिनद्धं बद्धं, वेष्टितमित्यर्थः, संवृतावयवमिति यावत्; (पाण्डुपत्रसंवृतस्य कुसुमस्य यथा कियदंशः परिलक्ष्यते तथा अस्याः वपुषोऽपि मुखनयनादिकम्, इति उभयत्र उपमानोपमेययोः समानमित्यवधेयम् ।) कुसुममिव स्वां निजां शोभां न पुष्यति न धत्ते । [अत्र पूर्णोपमालङ्कारः । उक्तञ्च—"साम्यं वाच्यम् अवैधर्म्यं वाक्यैक्य उपमा द्वयोः" इति,—"सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च । उपमेयञ्चोपमानं भवेद्‌ वाच्यम्" इति च दर्पणे ]। मालिनी वृत्तं—"न न म य य युतेयं मालिनी भोगिलोकैः" इति । तल्लक्षणात् । मालिनी हि—"अतिशक्कर्य्याः" पञ्चदशाक्षरपादच्छन्दसः द्वासप्तत्यधिकाषट्‌चत्वारिंशच्छततमप्रस्तारस्य अन्तर्गता ॥ १९ ॥

(८७) गाढ़ानुरागवशात् तदेव सौन्दर्य्यपक्षे समर्थयमान आह, काममिति ।—कामं सम्यक्, अननुरूपमपि अयुक्तमपि । अलङ्कारश्रियं भूषणजनितशोभां, न न पुष्यति ? अपि तु पुष्यत्येव इत्यर्थः । "सम्भाव्यप्रतिषेधनिवर्त्तने द्वौ नञौ" इति वामनः । एतेन शोभाऽतिशयार्थं विशिष्टभूषणस्य आवश्यकत्वं ध्वन्यते ।

(८८) अत्र हेतुं दर्शयन्नाह, सरसिजमिति ।—सरसिजं कमलं शैवलेन जलनील्या ("जलनीली तु शैवालं शैवलम्" इत्यमरः) अनुविद्धं सम्बद्धमपि रम्यं मनोहरम् । हिमांशोः चन्द्रस्य लक्ष्म कलङ्कः मलिनमपि लक्ष्मीं श्रियं तनोति विस्तारयति । इयं पुरो दृश्यमाना जगत्त्रयरमणीललामभूता इत्यर्थान्तरसङ्क्रमितवाच्यम् । तन्वी कृशाङ्गी शकुन्तला वल्कलेनापि अतितुच्छवृक्षवल्कचाऽपि; अतिनिकृष्टवस्तुसम्पर्केणापि इदृशं

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्? (८८)॥२०॥

अपि च,—

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपम्
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति।
विकचसरसिजायाः स्तोकनिर्मुक्तकण्ठम्
निजमिव कमलिन्याः कर्कशं वृन्तजालम् (८९)॥ २१॥

सौन्दर्य्यम् उत्कृष्टवस्तुसम्पर्कस्य का कथा, इति अपिशब्दार्थः। अधिकमनोज्ञा अधिकमनोहारिणी। हि तथाहि, मधुराणां रम्याणाम् आकृतीनाम् अवयवानां किमिव न मण्डनं भूषणं? सर्व्वमेव हीनमहीनं वा वस्तु मण्डनं भवति इत्यर्थः। [अत्र पादत्रयवाक्येषु सामान्यधर्म्मस्य एकस्यैव रम्यादिविसदृशपदैः पृथक् निर्देशात् प्रतिवस्तूपमालङ्कारः। स च सामान्येन विशेषसमर्थनरूपार्थान्तरन्यासेन सङ्कीर्य्यते। उक्तञ्च दर्पणे—"प्रतिवस्तूपमा सा स्यात् वाक्ययोर्गम्यसाम्ययोः। एकोऽपि धर्म्मः सामान्यः यत्र निर्दिश्यते पृथक्॥" इति।—"सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥" इति च। अत्र प्रथमतृतीयपादे क्रियारहितं वाक्यद्वयं, द्वितीयपादे न तथा, इति वाक्यप्रक्रमभङ्गः, तथा प्रथमे उपमानस्य कर्त्तृत्वं द्वितीये न तथा, इति कर्त्तृत्वप्रक्रमभङ्गः दोषः, तत्र तु "शिशिरकिरणमाली सुन्दरी लक्ष्मणाऽपि" इति पादान्तरं सन्निवेश्य परिहर्त्तव्यः। एतेन अपिशब्दस्य पश्चान्निर्देशात् अस्थानस्थपदता, पचान्तरे—अक्रमता दोषोऽपि परिहृतो भवतीति सूक्ष्ममीक्षणीयम्। मालिनी वृत्तम्॥ २०॥

(८९) अनिन्दनीय-तद्रूपसन्दर्शनविवृद्धरागः नृपतिः प्रागुक्तरूपप्रशंसया सम्यगतृप्तः भूयोऽप्याह, कठिनमिति।—मृगाक्ष्या मृगनयनायाः कठिनमपि एतत्कोमलाङ्गानर्हमपि कान्तरूपं मनोज्ञरूपं ["प्रशंसायां रूपप्" (५।३।६६ पा०) इति रूपप्प्रत्ययः] वल्कलं विकचसरसिजायाः प्रफुल्लकमलायाः कमलिन्याः स्तोकम् अल्पं यथा तथा निर्मुक्तः तोयोपरि उत्थितः कण्ठो यस्य तथाविधं, कर्कशं कठिनं, निजं स्वीयं, वृन्तजालमिव मनसि स्वल्पमपि अणुमपि रुचिभङ्गम् अप्रीतिमित्यर्थः, न आदधाति न जनयति। [उपमालङ्कारः। अत्र श्लोकद्वयेन प्रसिद्धिर्नाम नाटकलक्षणं प्रदर्शितम्। तथा च दर्पणे—"प्रसिद्धिः लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम्" इति, तथा माधुर्य्य-

शकु। [ भयतीऽवलोक्य ]। सहीओ ! एसो वादेरिदपल्लवाङ्गुलीहिं किम्पि वाहरेदि विअ मं चूअरुक्खओ, ता जाव णं सम्भावेमि। (ण) (९०)

[ इति तथा करोति ]।

प्रियं। हला सउन्तले ! इध जेव्व मुहुत्तअं चिट्ठ। (त)

शकु। किं णिमित्तं ? (थ)

प्रियं। तए समीवट्ठिदाए लदासणाधो विअ (९१) अअं चूअरुक्खओ पड़िहादि। (द)

शकु। अदो जेव्व तुमं पिअम्वद त्ति (९२) भणीअसि। (ध)

राजा। अवितथम् (९३) आह प्रियंवदा। तथा ह्यस्याः,—

(ण) सख्यौ ! एष वातेरितपल्लवाङ्गुलीभिः किमपि व्याहरतीव मां चूतवृक्षकः, तद् यावदेनं सम्भावयामि।

(त) हला शकुन्तले ! इहैव मुहूर्त्तं तिष्ठ।

(थ) किं निमित्तम् ?

(द) त्वया समीपस्थितया लतासनाथ इव अयं चूतवृक्षकः प्रतिभाति।

(ध) अत एव त्वं प्रियंवदेति भण्यसे।

नामा नायिकाङ्गजाऽलङ्कारोऽपि प्रकाशितः।—"सर्व्वावस्थाविशेषेषु माधुर्य्यं रमणीयता" इति लक्षणात् ]। मालिनी वृत्तम्॥ २१॥

(९०) वातेरितेति।—वातेरिता वायुकम्पिताः पल्लवा एव अङ्गुल्यः ताभिः। व्याहरतीव—आलपतीव। चूतवृक्षकः—बालाम्रतरुः। [ अत्र पल्लवाङ्गुलीभिरिति एकदेशविवर्त्ति रूपकं, चूतवृक्षस्य प्रियसुहृत्त्वानारोपात्। तथा आलपतीव इति क्रियोत्प्रेक्षा ; अनयोः अङ्गाङ्गित्वेन सङ्करः। अत्र "केशरवृक्षकः" इत्यपि पाठान्तरमस्ति। ] सम्भावयामि—अभिनन्दामि।

(९१) लतासनाथः—लतासहचरः। इव इति पदम् उत्प्रेक्षाव्यञ्जकम्।

(९२) प्रियंवदेति।—प्रियं वदतीति तथोक्ता। "प्रियवशे वदः खच्" (३।२।३८ पा०) इति खच्।

(९३) अवितथं—सत्यम्। तथा च प्रियंवदया यदस्यां लतात्वमारोपितं, तत् यथार्थमेव इत्यर्थः।

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् (८४) ॥२२॥

अन। हला सउन्तले! इअं सअंवरवहू सहआरस्स, तुए किदणामहेआ वणदोसिणी त्ति णोमालिआ, णं विसुमरिदासि? (न) (८५)

शकु। तदो अत्ताणं वि विसुमरिस्सं। [लतामुपेत्य अवलोक्य च]। हला! रमणीओ क्खु कालो इमस्स पादवमिहुणस्स वदिअरो

(न) हला शकुन्तले! इयं स्वयंवरवधूः सहकारस्य, त्वया कृतनामधेया वनतोषिणीति नवमालिका, एनां विस्मृतासि?

(८४) प्रियंवदोक्तं लतात्वं द्रढ़यन्नाह, अधर इति।—अधरः दन्तच्छदः किसलयस्येव रागो लौहित्यं यस्य तथाभूतः। बाहू कोमलविटपौ मृदू शाखे अनुकुरुत इति तथोक्तौ। [अत्र अचेतनस्य अनुकरणत्वासम्भवात् अनुकरणपदेन सादृश्यं लक्ष्यते, मार्दवातिशयश्च ध्वन्यते।] अङ्गेषु अवयवेषु। [अत्र बहुवचनेन मुखे लावण्यातिशयः, नेत्रयोः अनुरागः, ग्रीवायां कम्बुसाम्यं, वक्षोजयोः औन्नत्यं, नाभौ गभीरता, जघननितम्बोरुस्थलेषु मांसलता, चरणयोः गतिमान्द्यञ्च ध्वन्यते। कुसुममिव इति जात्यैकवचनम्]। लोभनीयं स्पृहणीयं, द्रष्टॄणामिति भावः। [अनेन स्वस्यापि निरतिशयः प्रणयः ध्वन्यते]। यौवनं तारुण्यं, नवयौवनजं सौष्ठवमित्यर्थः। सन्नद्धं सम्बद्धं, स्वयमेव प्रकटीभूतमित्यर्थः। [एतेन स्वयं प्राकट्यकथनेन अन्यविमर्द्दाभावव्यञ्जकेन कन्यात्वं ध्वनयता स्वयोग्यत्वं ध्वनितम्। उपमाऽलङ्कारः। अत्र पदोच्चयो नाम नाटकलक्षणं व्यञ्जितम्। तथा च दर्पणे,—"सञ्चयोऽर्थाऽनुरूपो यः पदानां स पदोच्चयः" इति]। आर्य्या वृत्तम् ॥ २२ ॥

(८५) स्वयंवरवधूः—स्वयं वृणोति या सा स्वयंवरा, सा चासौ वधूश्चेति तादृशी। स्वयंकृतास्पदेव वधूरिव इत्यर्थः, अत एव लुप्तोपमाऽलङ्कारः। कृतनामधेया—कृतं नामधेयं यस्याः तथा। वनेति।—वनं तोषयति आनन्दयतीति तथोक्ता। [अत्र वनज्योत्स्ना इति पाठान्तरं, तत्र तु—वनस्य ज्योत्स्नास्वरूपा, नितरामानन्ददायिनी इत्यर्थः। एनां नवमालिकां विस्मृता असि? [अत्र ज्ञानार्थस्य स्मृधातोः वर्त्तमाने कर्त्तरि क्तप्रत्ययः।]

सम्वुत्तो, जेण इअं णवकुसुमजोव्वणा णोमालिआ, अअं वि बहुफलदाए उअभोअक्खमो (९६) सहआरो। (प)

[इति पश्यन्ती तिष्ठति]।

प्रियं। [सस्मितम्]। अणसूए! जाणासि किं णिमित्तं सउन्तला वणदोसिणीं अदिमेत्तं पेक्खदि त्ति? (फ)

अन। ण क्खु (९७) विभावेमि, ता कधेहि मे। (ब)

---

(प) तदा आत्मानमपि विस्मरिष्यामि। हला! रमणीयः खलु कालोऽस्य पादपमिथुनस्य रतिकरः संवृत्तः, येन इयं नवकुसुमयौवना नवमालिका, अयमपि बहुफलतया उपभोगक्षमः सहकारः।

(फ) अनसूये! जानासि किं निमित्तं शकुन्तला वनतोषिणीम् अतिमात्रं प्रेक्षते इति?

(ब) न खलु विभावयामि, तत् कथय मे।

(९६) पादपमिथुनस्य—तरुयुगलस्य; (अत्र पादपशब्दः तरुलतासाधारणः यौगिक एव एतत्पाठसम्मतः, न तु योगरूढः। लतापादप-मिथुनस्य इति पाठे तु—योगरूढार्थ एव सम्यक्, लतापादपयोरित्यर्थः)। रतिकरः—अनुरागवर्द्धकः। ["व्यतिकरः" इत्यपि पाठान्तरं—संश्लेषश्चार्थः]। नवेति।—नवानि कुसुमानि एव यौवनानि यस्याः तथाभूता; अथवा नवं कुसुमं रजोरूपं, यौवनञ्च यस्या इति अर्थान्तरम्। बहुफलतया—फलपूर्णतया, सुरतरूप-फलदानक्षमतया इत्यर्थः; अन्यत्र—बहुफललाभेन। [अत्र "स्निग्धपल्लवतया" इति पाठान्तरम्, तत्र कोमलकिसलयतया इत्यर्थः; अत एव करोपमेयता]। उपभोगक्षमः—सम्भोगयोग्यः, अन्यत्र—सेवनीयः। [अत्र रतिकरादि-विशेषणेन, लिङ्गेन च नायकनायिका-व्यवहार समारोपात् समासोक्तिरलङ्कारः। तथा च दर्पणे,—"समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति। तथा नवकुसुमयौवना इति रूपकालङ्कारश्च; अनयोः सङ्करः]।

(९७) न खलु इति।—अनेन खलु अनसूयावाक्येन अनभिव्यक्तयौवनेयम् अनसूया इति परिलक्ष्यते, यौवन-सुलभ-चातुर्य्यादिविरहात्; प्रियंवदातो न्यूनवयस्का च इति सुधीभिः विभावनीयम्।

प्रियं। जह वणदोसिणी अणुरूवेण पादवेण सङ्गदा, तह अहं वि अत्तणो अणुरूवं वरं लहेअं त्ति। (भ)

शकु। एस दे अत्तणो चित्तगदो मणोरहो। (म) (९८)

[ इति कलसमावर्जयति ]।

अन। हला सउन्तले! इअं तादकस्सेण तुमं विअ सहत्थेण सम्बड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि ? (य)

शकु। तदो अत्ताणं वि विसुमरिस्सं। (९९) [ लतामुपेत्य अवलोक्य च सहर्षम् ]। अच्चरीअं अच्चरीअं !! पिअम्वदे! पिअं दे णिवेदेमि। (र)

प्रियं। सहि! किं मे पिअं ? (ल)

शकु। असमए (१००) क्खु एसा आ मूलादो मुउलिदा माहवीलदा। (व)

(भ) यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता, तथा अहमपि आत्मनोऽनुरूपं वरं लभेय इति।

(म) एष ते आत्मनश्चित्तगतो मनोरथः।

(य) हला शकुन्तले! इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत् कथमिमां विस्मृतासि ?

(र) तदा आत्मानमपि विस्मरिष्यामि। आश्चर्य्यम् आश्चर्य्यम् !! प्रियंवदे! प्रियं ते निवेदयामि।

(ल) सखि! किं मे प्रियम् ?

(व) असमये खलु एषा आ मूलान्मुकुलिता माधवीलता।

---

(९८) चित्तगतः—मनोगतः, मनोरथः—अभिलाषः, अहम् अनुरूपं वरं लभेय इत्येवंरूप इति भावः। [ "चित्तगत" इति पाठः पुस्तकान्तरे न दृश्यते ]।

(९९) आत्मानमिति।—आत्मानमपि विस्मरिष्यामि—आत्मनः प्रियाप्रियस्मरणमिव अस्याः शुभाशुभविषये मम स्मरणमस्तीति भावः।

(१००) असमये—अकाले, वसन्तापगमे इत्यर्थः।

अनु। [सत्वरमुपगम्य।] सहि ! सच्चं सच्चं ? (अ)

शकु। सच्चं किं ण पेक्खध ? (ब)

प्रियं। [सहर्षं निरूप्य]। सहि ! तेण हि पड़िप्पिअं (१) दे णिवेदेमि। (स)

शकु। किं मे पड़िप्पिअं ? (ह)

प्रियं। आसण्णपाणिग्गहणा सि तुमं। (च) (२)

शकु। [सासूयमिव]। एस दे अत्तणो चित्तगदो मणोरहो, ता ण दे वअणं सुणिस्सं। (क)

प्रियं। सहि ! ण क्खु परिहासेण भणामि, सुदं मए ताद-कण्णस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति। (ख) (३)

अन। हला पिअंवदे ! अदो ज्जेव्व ससिणेहा सउन्तला माहवीलदां सिञ्चदि। (ग)

(अ) सखि ! सत्यं सत्यम् ?

(ब) सत्यं किं न प्रेचेथे ?

(स) सखि ! तेन हि प्रतिप्रियं ते निवेदयामि।

(ह) किं मे प्रतिप्रियम् ?

(च) आसन्नपाणिग्रहणासि त्वम्।

(क) एष ते आत्मनश्चित्तगतो मनोरथः, तत् न ते वचनं श्रोष्यामि।

(ख) सखि ! न खलु परिहासेन भणामि, श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदं निमित्तमिति।

(ग) हला प्रियंवदे ! अत एव सस्नेहा शकुन्तला माधवीलतां सिञ्चति।

(१) प्रतिप्रियम्—अनुरूपं प्रियम्।

(२) आसन्नेति।—आसन्नं सन्निहितम्, अविलम्बभावि इत्यर्थः, पाणिग्रहणं परिणयः यस्याः तथोक्ता।

(३) कल्याणसूचकमिति।—कल्याणं शुभं पाणिग्रहणरूपं सूचयति व्यनक्तीति तथाभूतम्। निमित्तं—लक्षणम्। पितुः कण्वस्य अयमादेशः, यत्—"यदा माधवी-लतायाम् असमये कुसुमोद्गमः स्यात्, तदा शकुन्तलायाः परिणयोऽचिरात् सम्पत्स्यते

शकु। जदो बहिणी मे भोदि तदो किं त्ति ण सिञ्चेमि ? (घ)

[ इति कलसमावर्जयति ]। (४)

राजा। अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत् ? अथवा कृतं सन्देहेन।—( ५ )

असंशयं क्षत्रपरिग्रहक्षमा,
यदार्य्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ( ६ ) ॥ २३ ॥

---

(घ) यतो भगिनी मे भवति ततः किमिति न सिञ्चामि ?

---

इति निष्कर्षः ; अथवा अकाले पुष्पोद्गम एव किमपि मङ्गलस्य कारणं भवति इति कण्वमुखात् श्रुतम् ; अत एवं ब्रवीमि इत्यभिप्रायः।

(४) आवर्जयति—अवनमयति, अधोमुखं करोतीत्यर्थः।

(५) शमप्रधानेऽपि तपोवने एतासाम् ईदृशमालापेन शकुन्तला परिणयं प्रति कथञ्चित् सञ्जाताशहृदयः शकुन्तला सन्दर्शनसमाकृष्टाचित्तवृत्तिः नृपतिः, सम्प्रति सहजाऽधर्म्मभीरुतया ब्राह्मणीप्रार्थनायां दृष्टदोषः तदेव संशयान आह,अपीत्यादि।—अपि नामेति सम्भावनायाम्। कुलपतेः—कुलानाम् ऋषिसङ्घानां पतिः अन्नदानविद्यादानाभ्यां पालक इति भावः, तस्य। असवर्णक्षेत्रसम्भवा—असवर्णं ब्राह्मणेतरामित्यर्थः, सत् क्षेत्रं पत्नी,—"क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्" इति शास्त्रात् ; तत्सम्भवा तदुत्पन्ना। विभाव्य किमपि निश्चयबीजमधिगम्य पूर्वोक्तमाक्षिपन्नाह, अथवेति।—सन्देहेन संशयेन कृतम् अलम् ? संशयो निरर्थक इत्यर्थः। कृतम् इति अव्ययं व्यर्थार्थकं [तद्योगेन सन्देहेनेत्यत्र तृतीया]। अनेन खलु राज्ञः धर्म्मप्रवणता प्रदर्शिता कविना। कथमियं सा कण्वदुहितेत्यारभ्य एतदन्तेन शकुन्तलागुणाख्यानात् बीजार्थोपकारित्वाच्च विलोभनं नाम नाटकलक्षणं प्रदर्शितम्। तथा च दर्पणे,—"गुणाख्यानं विलोभनम्" इति।

(६) तदेव निश्चयबीजं युक्त्या द्रढ़यति, असंशयमिति।—(यदार्य्यमिति पदेनान्वयः) अयं मम नयनपथवर्त्तिनी शकुन्तला इत्यर्थः, असंशयं नूनं, निश्चयेनेत्यर्थः, क्षत्रस्य क्षत्रियजातेः परिग्रहक्षमा पत्नीत्वेन ग्रहणयोग्या, ["परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति विश्वः। यत् यस्मात् मे मम पुरुवंशसमुत्पन्नस्य जितेन्द्रियस्य आजन्मशुद्धस्य दृत्या-

तथापि तत्त्वत एवैनामुपलप्स्ये । (७)

शकु । [ससम्भ्रमम्] । अम्मो ! सलिलसेअसंभमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टइ । (ङ) (८)

[इति भ्रमरबाधां नाटयति] ।

---

(ङ) अम्मो ! सलिलसेकसम्भ्रमोद्गतो नवमालिकाम् उज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते ।

---

द्यर्थोऽपि ध्वन्यते ] । आर्य्यं साधु, निर्दोषमिति यावत्, मनः अस्यां कन्यायाम् अभिलाषि आकाङ्क्षि । कथम् एवं सिद्धान्तितम् ? इत्याशङ्क्याह, सतामिति ।—हि यस्मात्, सतां सज्जनानां कदाप्यनाचरितपापकर्म्मणामित्यर्थः, अन्तःकरणस्य मनसः प्रवृत्तयः प्रवर्त्तनानि, सन्देहपदेषु संशयस्थानेषु संशयितेषु इत्यर्थः, ("पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः) वस्तुषु विषयेषु प्रमाणं निश्चयज्ञानकारणानि इत्यर्थः ; तथा च मनुः—"साधूनामात्मनः तुष्टिरेव च" इति । कुल्लूकभट्टोऽपि तद्व्याख्याने—"वैकल्पिके आत्मतुष्टिरेव प्रमाणम्" इत्याह । [अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः ; तथा पूर्वार्द्धे मत्परिग्रहक्षमा इत्यनुक्त्वा चर्व्वितसामान्येन कथनात् अप्रस्तुतप्रशंसा ; अनेन नायकस्य औचित्यमपि ध्वनितम् । "पदेषु वस्तुषु" इत्यत्र पदवस्तुपदयोरापातत एकार्थत्वेन आभासमानत्वात्, भिन्नाकारशब्दत्वाच्च पुनरुक्तवदाभासनामालङ्कारश्च ; एषां संसृष्टिः । एतेन पूर्वापेक्षया शकुन्तलाप्राप्तिरूपस्य काव्यार्थस्य निश्चयत्वेन सङ्कीर्त्तनात् परिन्यासनामकं तृतीयं मुखसन्ध्यङ्गं सूचितम् । तथा च दर्पणे,—"तन्निष्पत्तिः परिन्यासः" इति] । वंशस्थविलं वृत्तम् ॥ २३ ॥

(७) पूर्वं यन्मया सन्देहेन ज्ञातं तदनु यच्च निजमनःप्रत्ययेन कथञ्चित् विश्वास्यत्वेन स्वीकृतं, तदिदानीं तत्त्वतः स्वरूपतः, याथार्थ्येन इत्यर्थः । [तत्त्वत इत्यत्र "इतराभ्योऽपि दृश्यन्ते" (५ । ३ । १४ पा०) इति तृतीयायाः सार्वविभक्तिकः तसिल्प्रत्ययः ] । उपलप्स्ये—ज्ञास्यामि ।

(८) अम्मो ! इति विस्मये ;—"विस्मये दुःसहे अम्मो नित्यं स्त्रीभिः प्रयुज्यते" इति भरतोक्तेः । सलिलसेकसम्भ्रमोद्गतः ।—सलिलसेकेन जलसेकेन यः सम्भ्रमः त्वरा, ("सम्भ्रमः त्वरा" इत्यमरः) तेन उद्गतः उत्पतितः मधुकरः भ्रमरः मे मम वदनम् अभिवर्त्तते मुखं प्रति आगच्छति [ "अभिरभागे" (१।४।९१ पा०) इति द्वितीया ।

राजा। [ सस्पृहं विलोक्य ]। साधु बाधनमपि रमणीयम् ( ९ ) अस्याः।—

यतो यतः षट्‌चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामाऽपि हि दृष्टिविभ्रमम् ( १० ) ॥२४॥

अपि च [ सासूयमिव ]

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषात् मधुकर! हतास्त्वं खलु कृती(११)॥२५॥

---

अनेन पद्मिनीत्वं व्यज्यते। तथा चोक्तं—"कमलमुकुलमृद्वी फुल्लराजीवगन्धः सुरत-पयसि यस्याः सौरभं दिव्यमङ्गे।" इति ]।

(९) सस्पृहं—साभिलाषं, विलोक्य—दृष्ट्वा, कथयतीति कविवाक्यं पूरणीयम्। बाधनं—भ्रमरनिराकरणम्। रमणीयं—मनोहरम्।

(१०) तदेव मनोहरत्वं हेतूपन्यासेन स्पष्टयति, यत इति।—हि यस्मात्, यतः यतः यस्यां यस्यां दिशि [ सप्तम्याः तसिल्] षट्‌चरणः भ्रमरः, अभिवर्त्तते अभिधावति, ततस्ततः तस्यां तस्यां दिशि, प्रेरिते चालिते वामे सुन्दरे ("वामौ वल्गुप्रतीपयोः" इत्यमरः) [वामेत्यत्र लोलेति पाठे—लोले चञ्चले इत्यर्थः] लोचने यया तथोक्ता ; तथा विवर्त्तिते साचीकृते भ्रुवौ यया तथाविधा सती इयं शकुन्तला अकामाऽपि शिक्षितुम् अनिच्छन्त्यपि, भयात् भ्रमरलङ्घनभयेन अद्य दृष्टिविभ्रमं शिक्षते। [ अत्र भीति-विह्वलचक्षुषोः विभ्रमाभ्याससम्भावनात् उत्प्रेक्षालङ्कृतिः, सा च व्यञ्जकाभावात् प्रतीयमाना]। वंशस्थविलं वृत्तम् ॥ २४ ॥

(११) चलेति।—हे मधुकर! करं पाणिं व्याधुन्वत्याः बाधनार्थम् इतस्ततो विक्षिपन्त्याः अस्या इति शेषः, चलौ चञ्चलौ अपाङ्गौ नेत्रप्रान्तौ यस्यास्तथोक्तां ("अपाङ्गौ नेत्रयोरन्तौ" इत्यमरः) वेपथुमतीं त्वदागमनशङ्कया कम्पमानां, दृष्टिं नयनं, बहुशः पुनः-पुनः स्पृशसि ; रहस्यं गोप्यम् आख्याति आचष्टे वा कथयतीत्यर्थः। तथोक्त इव कर्णान्तिकचरः कर्णसमीपगः सन्, मृदु मन्दं यथा तथा स्वनसि गुञ्जसि [अनेन कपोलौ

अपि च,—

लीलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमाम्
आभुग्नेन विवर्त्तिता बलिमता मध्येन कम्प्रस्तनी ।
हस्ताग्रं विधुनोति पल्लवनिभं, शीत्कारभिन्नाधरा,
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी(१२)॥२६॥

चुम्बनविशेषः ध्वन्यते। कामिनः खलु रहस्याख्यानव्याजेन कपोले चुम्बन्ति इति प्रसिद्धिः।] तथा रतिसर्वस्वं सुरतसर्वधनम् [अनेन स्वाभिप्रायः कोऽपि व्यज्यते] अधरं दन्तच्छदं पिबसि चुम्बसि, इत्यारोपपक्षे; भ्रमरपक्षे—दशसि इत्यर्थः। अतः त्वं कृती खलु कृतबहुकृत्यत्वात् कृतार्थ एव, [अत्र युष्मत्पदेन एकवचनेन च आत्मनः अपेक्षया तस्य निकृष्टत्वं व्यज्यते, तथा खलु इत्यव्ययेन चुम्बनादेः अयत्नसिद्धत्वमपि गम्यते]। वयमिति।—[अत्र बहुवचनेन आत्मनि गौरवं, तच्च—अहं प्रख्यातपुरुवंशोत्पन्नः, सुरूपः, युवा, मानवः, नृपतिः, अस्याः सर्वथा योग्योऽपि इत्यादिबहुविधं व्यज्यते]। तत्त्वान्वेषात् तत्त्वस्य कस्येयं कन्या? का चेयम्? परिणेया न वा? इति तथ्यस्य अन्वेषात् अनुसन्धानात् हताः निकृष्टतमाः वञ्चिता इति यावत्, आयासमात्रभाजनमिति भावः; विधात्रेति शेषः। [अत्र त्वं कृतार्थः नाहमिति उपमानस्याधिक्यात् व्यतिरेकालङ्कारः। उक्तञ्च दर्पणे,—"आधिक्यमुपमेयस्योपमानान्यूनताऽथवा। व्यतिरेकः—"इति। तथा आख्यायीव इतिक्रियोत्प्रेक्षा,पादत्रये भ्रमरस्वभावोक्तिश्च, एवं त्वं खलु कृती इत्यस्य पादत्रयगतवाक्यानामेव हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गञ्च; अनेन च नीलोत्पलभ्रान्तिसूचनात् भ्रान्तिमदलङ्कारः ध्वन्यते; इति परस्परं निरपेक्षाणां संसृष्टिः]। शिखरिणी वृत्तम्।—"रसै रुद्रैश्छिन्ना य म न स भ ला गः शिखरिणी" इति लक्षणात्। तच्च वृत्तं त्रिंशदधिक शतत्रयाधिक नवनवतितमसंख्यकप्रस्तारान्तर्गतम्॥ २५॥

(१२) लीलामिति।—इयं बाला, भ्रुवौ लते इव, तयोर्विभ्रमेण सह वर्त्तमाना तां लीलां चञ्चलां दृष्टिम् इतस्ततः वितनुते विक्षिपति, आभुग्नेन ईषद्वक्रेण बलिमता त्रिबलियुता मध्येन विवर्त्तिता भ्रमिता, कम्रौ कमनीयौ स्पृहणीयौ इत्यर्थः, स्तनौ यस्यास्तादृशी [कम्प्रस्तनीति पाठे—कम्पमानस्तनीत्यर्थः]; तथा शीत्कारेण शीत् इति शब्देन भिन्नः विश्लिष्टः अधरो यस्यास्तथाभूता सती पल्लवनिभं पल्लवेन तुल्यम् [इति नित्यसमासः] किसलयसदृशं हस्ताग्रं विधुनोति कम्पयति। भ्रमरस्य अभिलङ्घनात् बाधनात् या भीः भयं तया हेतुना वाद्यैः विना नर्त्तकी जाता। [अत्र वाक्यार्थ-

शकु। हला! परित्ताअध परित्ताअध मं इमिणा दुट्ठमहुअरेण अहिहूअमाणं। (च) (१३)

उभे। [सस्मितम्]। का अह्मे परित्ताणे, एत्थ दाव दुस्सन्तं अक्कन्द, (१४) जदो राअरक्खिदाइं तबोबणाइं। (छ)

राजा। [स्वगतम्] अवसरः खलु अयम् अस्माकमात्मानं दर्शयितुम्। [प्रकाशम्] "न भेतव्यं, न भेतव्यम्—" [इत्यर्द्धोक्ते स्वगतम्]। एवं हि राजाहमस्मीति परिज्ञानं भविष्यति, भवतु अतिथिसमाचारम् एवावलम्बिष्ये (१५)।

---

(च) हला! परित्रायेथां परित्रायेथां मामनेन दुष्टमधुकरेण अभिभूयमानाम्।

(छ) का वयं परित्राणे, अत्र तावत् दुष्मन्तमाक्रन्द, यतो राजरक्षितानि तपोवनानि।

हेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे,—"हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति; तथा भुवो लते इव पल्लवनिभमिति च उपमाद्वयम्, एवं नर्त्तकीधर्म्माणामुपादानात् तुल्ययोगिता इति केचित्। अत्र तु अनेकेषामेव एकधर्म्माभिसम्बन्धात् तुल्ययोगितेति विश्वनाथादिस्वरसात् अवगम्यते; अत्र सा कथमिति सुधीभिः विभावनीयम्। वयमत्र नर्त्तकीसम्भावनामात्रत्वात् उत्प्रेक्षामेव मन्यामहे, सा च इवाद्यसद्भावात् गम्या]। शार्दूलविक्रीड़ितं वृत्तम्। तच्च वृत्तं त्रिसप्तत्यधिक-सप्तषष्टिसहस्रान्वितैकलक्षतमस्य प्रस्तारस्यान्तर्गतम्॥ २६॥

(१३) दुष्टमधुकरेण [अत्र च दुर्विनीतेन इति पाठान्तरं सुगमम्]। अभिभूयमानां—बाध्यमानाम्।

(१४) आक्रन्द—आह्वय।—"आक्रन्दः क्रन्दनाह्वाने" इति मेदिनी।

(१५) अर्द्धोक्ते—वाक्यार्द्धोच्चारणे कृते इत्यर्थः, "अयमहमागतोऽस्मि" इति सम्पूर्णवाक्यस्य इति शेषः। स्वगतम्—अश्राव्यम् इति कविवाक्यं, कथयतीति शेषः। परिज्ञानं—परिचयः। ["राजाऽहमस्मीति परिज्ञानं भविष्यति" इत्यत्र "राजभावस्त्वविज्ञातो भवेत्" इति पाठान्तरम्; तदर्थस्तु—राजभावः राजत्वं अविज्ञातः अज्ञातः]। अतिथिसमाचारम्—अतिथिः आगन्तुकः, उदासीन इत्यर्थः, तस्य समः सदृश आचारः व्यवहारः, तम्। अवलम्बिष्ये—आश्रयिष्यामि, साधारणागन्तुकवत् आचरामि इत्यर्थः।



"—हद्दी ! हद्दी ! कधं इदो वि मं अणुसरदि !! ता परित्ताअध मं",—( ४३ पृष्ठे )।

शकु। ण एसो दुव्विणीदो विरमदि, ता अण्णदो गमिस्सं। [ पदान्तरे सदृष्टिक्षेपम् ]। हद्धी ! हद्धी ! कधं इदो वि मं अणुसरदि !! ता परित्ताअध मं। ( ज )

राजा। [ सत्वरमुपगम्य ]। आः !—( १६ )

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यकासु ? ( १७ ) ॥२७॥

[ सर्वा राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्ताः। ]

अन। अज्ज ! ण किम्पि अच्चाहिदं ( १८ ) किन्तु क्खु इअं पिअसही दुट्ठमहुअरेण आउलोकिअमाणा कादरीभूदा। (झ)

[ इति शकुन्तलां दर्शयतः ]

(ज) न एष दुर्विनीतो विरमति, तदन्यतो गमिष्यामि। हा धिक् ! हा धिक् ! कथमितोऽपि मामनुसरति !! तत्परित्रायेथां माम्।

(झ) आर्य्य ! न किमपि अत्याहितं, किन्तु खलु इयं प्रियसखी दुष्टमधुकरेण आकुलीक्रियमाणा कातरीभूता।

(१६) सत्वरं—त्वरितम्, उपगम्य—उपसृत्य, कन्यका इति शेषः। एतत् कविवाक्यं, तव आहेति शेषः। आः इति।—कोपसूचकमव्ययम्।—"आस्तु स्यात् कोपपीड़योः" इत्यमरः।

(१७) क इति।—दुर्विनीतानां दुष्टानां, शासितरि दण्डयितरि, पौरवे पुरुवंश्ये राजनि, वसुमतीं रत्नप्रसविनीं पृथ्वीं [एतेन रक्षायोग्यत्वं ध्वन्यते] शासति पालयति सति कोऽयं मुग्धासु सहजसरलासु तपस्विकन्यकासु [ अत्र तपस्विपदेन अत्यन्तमविनयायोग्यत्वं व्यज्यते] अविनयम् अत्याचारम् आचरति करोति ?[अत्र प्रस्तुतानां"भ्रमरः, मयि, शकुन्तलायाञ्च"इत्यादिपदप्रतिपाद्यानां "कः, पौरवे, तपस्विकन्यकासु" इत्याद्यप्रस्तुतैरभिधानात् अप्रस्तुतप्रशंसाऽलङ्कारः ; अनेन स्वप्रतापातिशयः आत्मभावगोपनञ्च ध्वन्यते। अत्र दण्डलक्षणं सन्ध्यङ्गान्तरं प्रदर्शितम्। यदाह सुधाकरे,—"दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जनम्" इति। ] ॥ २७ ॥

(१८) अत्याहितम्—महाभीतिः।—"अत्याहितं महाभीतिः कर्म जीवानपेक्षि च" इत्यमरः।

राजा । [ शकुन्तलामुपेत्य ] । अयि ! तपो वर्द्धते ? (१८)

[ शकु । ससाध्वसावनतमुखी तिष्ठति ] ।

अन । दाणिं अदिधिविसेसलाहेण । ( ञ ) ( २० )

प्रियं । साअदं अज्जस्स ? हला सउन्तले ! गच्छ, उड़आदो फलमिस्सं अग्घभाअणं ( २१ ) उवहर, इदम्पि पादोदअं भविस्सदि । ( ट ) [ इति घटं दर्शयति ] ।

राजा । भवतीनां सूनृतयैव वाचा कृतमातिथ्यम् । ( २२ )

अन । इमस्सिं दाव पच्छाअसीदलाए सत्तवखवेदिआए (२३) उववसिअ अज्जो परिस्समं अवणेदु । ( ठ )

राजा । नूनं यूयमप्यनेन धर्म्मकर्म्मणा परिश्रान्ताः, तन्मुहूर्त्तमुपविशत ।

---

(ञ) इदानीमतिथिविशेषलाभेन ।

(ट) स्वागतमार्य्यस्य ? हला शकुन्तले ! गच्छ, उटजात् फलमिश्रमर्घ्यभाजनमुपहर, इदमपि पादोदकं भविष्यति ।

(ठ) अस्यां तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामुपविश्य आर्य्यः परिश्रममपनयतु ।

---

(१८) अयि ! इति ।—कोमलसम्बोधने । तपो वर्द्धते ?—तपस्यायाः कुशलम् ? इत्यर्थः ।

(२०) अतिथिविशेषलाभेन—उत्कृष्टातिथिप्राप्त्या, भवल्लाभेन इत्यर्थः । अत्र "राजा । अयि ! तपोवर्द्धते" इत्यादिना एतदन्तेन अनुवृत्तिनामा नाट्यालङ्कारः अभिहितः । तथा च दर्पणे,— "प्रश्रयादनुवर्त्तनम् अनुवृत्तिः" इति ।

(२१) अर्घ्यभाजनम्—अर्घ्यपात्रम् ।

(२२) सूनृतया—सत्यप्रियया ।—"सूनृतं प्रिये सत्ये" इत्यमरः । आतिथ्यम्—अतिथिसत्कारः [ अतिथिशब्दात् कर्म्मार्थे ञ्यप्रत्ययः । ]

(२३) प्रच्छायेति ।—प्रकृष्टा छाया यस्यास्तथोक्ता, अत एव शीतला, तस्याम् । सप्तपर्णवेदिकायां—विषमच्छदमूलस्थचतुरस्रभूम्यामित्यर्थः । [ सप्त सप्त पर्णानि यस्य इति बहुव्रीहिः, संख्यावाचकस्य वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवत् इति वीप्सार्थता] ।

प्रियं। [ जनान्तिकम् ] ( २४ ) **हला सउन्तले ! उइदं णो अदिधि-पज्जुवासणं, ता एहि उवविसम्ह।** ( ड ) [ इति सर्वा उपविशन्ति ]।

शकु। [ आत्मगतम् ]। **कधं इमं जणं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीया म्हि संबुत्ता ?** ( ढ ) ( २५ )

राजा। [ सर्वा अवलोक्य ]। **अहो ! समानवयोरूपरमणीयं सौहार्द्दम् अत्रभवतीनाम्** ( २६ )।

प्रियं। [ जनान्तिकम् ]। **हला अणसूए ! को णु क्खु एसो दुरवगाहगम्भीराकिदी महुरं आलवन्दो पहुत्तदाक्खिण्णं वित्थारेदि ?** ( ण ) ( २७ )

(ड) हला शकुन्तले ! उचितं नोऽतिथिपर्य्युपासनं, तदेहि उपविशामः।

(ढ) कथमिमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता ?

(ण) हला अनसूये ! को नु खलु एष दुरवगाहगम्भीराकृतिर्मधुरमालपन् प्रभुत्व-दाक्षिण्यं विस्तारयति ?

---

(२४) जनान्तिकं—त्रिपताककरेण अन्यान् अपवार्य्य भाषणम्। तथा च दशरूपके,—"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत् स्यात् जनान्ते तत् जनान्तिकम्॥" इति। त्रिपताकलक्षणमपि संगीतरत्नाकरे,—"स एव त्रिपताकः स्यात् वक्रितानामिकाङ्गुलिः" इति।

(२५) तपोवनविरोधिन इति।—तपोवनस्य आश्रमस्य विरोधिनः विरुद्धस्य इत्यर्थः, विकारस्य विकृतभावस्य, कामानुरागस्येति भावः। [ कर्त्तरि षष्ठी ]। गमनीया—विषयीभूतेति यावत्। अनेन शकुन्तलायाः भावो नाम अङ्गजः प्रथमविकारः प्रदर्शितः, स च नायिकाङ्गजालङ्कारः।—यदाह दर्पणे,—"निर्विकारात्मके चित्ते भावः प्रथमविक्रिया"। इति।

(२६) अहो ! इति विस्मये। समानेति।—समानानि वयांसि रूपाणि सौन्दर्य्याणि च तैः रमणीयं मनोज्ञं, सौहार्द्दं सख्यम्। अत्रभवतीनां—पूज्यानाम्।

(२७) दुरवगाहेति।—दुरवगाहा दुष्प्रवेशा, दुर्बोधभावेत्यर्थः, गम्भीरा धीरा च आकृतिर्यस्य तथाभूतः। [अत्र "चतुरगम्भीराकृतिः चतुर मिव" इति पाठान्तरं क्वचित् पुस्तके दृश्यते, तदर्थस्तु सुगमः, तथा "प्रभाववानिव लक्ष्यते" इत्यपि]। प्रभुत्वेति।—

अन। [ जनान्तिकम् ]। हला ! ममावि अत्थि कोदूहलं, ता पुच्छिस्सं दाव णं। [ प्रकाशम् ]। अज्जस्स महुरालावजणिदो वीसम्भो मं आलावेदि ; कदमो राएसिवंसो अलंकरीअदि अज्जेण, कदमो वा देसो विरहपज्जुस्सुओ करीअदि, किं णिमित्तं वा अज्जेण सुउमारेण तवोवणगमणपरिस्समे अप्पा उवणीदो ? त्ति। (त) (२८)

(त) हला ! ममाप्यस्ति कौतूहलं, तत् प्रक्ष्यामि तावदेनम्। आर्य्यस्य मधुरालापजनितो विश्रम्भो मामालापयति ; कतमो राजर्षिवंशोऽलङ्क्रियते आर्य्येण, कतमो वा देशो विरहपर्य्युत्सुकः क्रियते, किं निमित्तं वा आर्य्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मा उपनीतः ? इति।

प्रभुत्वं—प्रभावः,दुर्विनीतशासनशक्तिरिति भावः। दाक्षिण्यम्—औदार्य्यं, महत्त्वमिति यावत्, अस्मदाश्वसनेनेति भावः, तयोः समाहारः तत्। विस्तारयति—प्रकटयति। [ एतेनास्य खलु नायकस्य विकारहेतावपि निसर्गधैर्य्यं सूचयता धीरोदात्तत्वं सम्यक् प्रकटीकृतं कविना। एवमुत्तरत्रापि बोध्यम्। तथा च उक्तं दर्पणे,—"अविकत्थनः क्षमावान् अतिगम्भीरः महासत्त्वः। स्थेयान् निगूढमानः धीरोदात्तः दृढव्रतः कथितः॥" इति। महासत्त्वः,—हर्षशोकाद्यनभिभूतस्वभावः ]।

(२८) प्रकाशं स्पष्ट,—"सर्वश्राव्य प्रकाशं स्यात्" इति दर्पणोक्तः। स्त्रीडत्य परिहरन्तो आह, मधुरेति।—मधुरालापजनितः प्रियालापजन्यः विश्रम्भः विश्वासः ; यतोऽयं मधुरमालपति अतोऽयं सज्जन इति प्रत्यय इति यावत्। कतमः राजर्षिवंश इति।—कस्मिन् अभिजने कुलभूषणस्वरूपस्य भवतः जन्म इत्यर्थः। को वा देशः विरहपर्य्युत्सुकः—विरहोत्कण्ठितः [अचेतनस्य देशस्य विरहकातरत्वकथनेन अस्य खलु राज्ञः सर्वपदार्थप्रियत्वं ध्वनितम् ] कस्मात् देशादागतोऽसि इत्यर्थः। तपोवनगमनपरिश्रमे।—अत्र तपोवनपदं राजभवनापेक्षया हीनत्वस्य व्यञ्जकं, तच्च राजभवनार्हस्य भवतः नात्रत्य प्रयोजनमिति ध्वनयति, अत एव परिश्रमपदम्; अत्र गमने स्वाभीष्टफलान्तराभावात् श्रममात्रं भवत इति भावः। किमागमनकारणमिति निष्कर्षः। अत्र भङ्ग्या गम्याभिधानात् पर्य्यायोक्तालङ्कारः। अनेनास्य सकलगुणेष्वनुरागः व्यज्यते।

शकु। [आत्मगतम्]। हिअअ ! मा उत्तम्म, जं तुए चिन्तिदं तं अणसूआ मन्तेदि। (थ) (२९)

राजा। [स्वगतम्]। कथमिदानीमात्मानं निवेदयामि, कथं वा आत्मनः परिहारं करोमि ? भवतु एवं तावत्। [प्रकाशम्] भवति ! वेदविदस्मि, राज्ञः पौरवस्य नगरधर्माधिकारे नियुक्तः, पुण्याश्रमदर्शनप्रसङ्गेन धर्मारण्यमिदमायातः (३०)।

अन। सणाधा दाणिं धम्मआरिणो। (द) (३१)

[शकु। शृङ्गारलज्जां नाटयति]। (३२)

सख्यौ। [उभयोराकारं विदित्वा जनान्तिकम्]। हला सउन्तले ! जइ अज्ज तादो इध सण्णिहिदो भवे। (ध)

शकु। तदो किं भवे ? (न)

(थ) हृदय ! मा उत्ताम्य, यत्त्वया चिन्तितं, तदनसूया मन्त्रयति।

(द) सनाथा इदानीं धर्मचारिणः।

(ध) हला शकुन्तले ! यदि अद्य तात इह सन्निहितो भवेत्।

(न) तदा किं भवेत् ?

(२९) मा उत्ताम्य—उत्कण्ठितं मा भवेत्यर्थः। यत् त्वयेति।—तव अभिलषितं अनसूया कथयति इत्यर्थः।

(३०) परिहारं—गोपनम्। पौरवस्येति।—पौरवस्य पुरुवंशोत्पन्नस्य राज्ञः दुष्मन्तस्य इत्यर्थः ; पक्षान्तरे—पौरवस्य राज्ञः दुष्मन्तपितुः। पूर्वत्र धर्मोऽधिकारे, तत्र धर्मकार्य्यविचारे इत्यर्थः ; पक्षान्तरे—धर्माधिकारे राजकर्मणि इत्यर्थः, इति श्लेषेण सुतरामात्मभावगोपनम्। [धर्मारण्यमिति।—धर्मस्य अरण्यमिति अश्वघासादिवत् तादर्थ्ये षष्ठीसमासः]।

(३१) सनाथाः नाथयुक्ताः। धर्मचारिणः तापसाः। [अत्र वयमिति प्रस्तुते वक्तव्ये धर्मचारिणः इति सामान्येन कथनात् अप्रस्तुतप्रशंसाऽलङ्कारः]।

(३२) शृङ्गारलज्जां—कामजनितव्रीडासूचकबाह्यविकारं, नाटयति—अभिनयति, इति कविवाक्यम्। अनेन हावलक्षणः नायिकाङ्गजः अलङ्कार उक्तः। तथा च दर्पणे,—"भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः। भाव एवाल्पसंलक्ष्यविकारः हाव उच्यते॥" इति।

सख्यौ। तदो जीविदसव्वस्सेण (१३) वि इमं अदिधिविसेसं कदत्थं करेदि। (प)

शकु। [सकृतककोपम्] (१४) अवेध तुम्हे, किम्पि हिअए कदुअ मन्तेध, ण वो वअणं सुणिस्सं। (फ)

राजा। वयमपि भवत्योः सखीगतं किञ्चित् पृच्छामः।

सख्यौ। अज्ज! अणुग्गहे वि अब्भत्थणा? (ब) (१५)

राजा। तत्रभवान् काण्वः शाश्वते ब्रह्मणि वर्त्तते, (१६) इयञ्च वः सखी तस्यात्मजा; कथमेतत्?

(प) तदा जीवितसर्वस्वेनापि इममतिथिविशेषं कृतार्थं कुर्य्यात्।

(फ) अपेत यूयं, किमपि हृदये कृत्वा मन्त्रयध्वं, न वो वचनं श्रोष्यामि।

(ब) आर्य्य! अनुग्रहेऽप्यभ्यर्थना?

---

(१३) जीवितसर्वस्वेन—प्राणाधिकया शकुन्तलया इत्यर्थः। अत्र शकुन्तलारूपं विषयं प्रच्छाद्य तस्यैव लाभरूपायाः नाटकीयप्रधानार्थसम्पत्तेः सूचनात् प्रथमं पताकास्थानं प्रदर्शितम्। तथा च आदिभरते,—"सहसैवार्थसम्पत्तिः नायकस्योपकारिका। पताकास्थानकं सन्धौ प्रथमं तन्मतम्—" इति लक्षणात्। इतः पूर्वं सखीद्वयवाक्ये जनान्तिकमिति कविवाक्यं दृश्यते क्वचित् पुस्तके, तदसम्यं न रोचते; जनान्तिककथने नायकोपकाराभावात् पताकास्थानमेव न सम्भवति इति विभावनीयम्।

(१४) सकृतककोपं—कृतकेन कृत्रिमेण कोपेन सह वर्त्तमानं तत् यथा तथा।

(१५) अनुग्रहेऽपि अस्मासु भवादृशां प्रश्नः एव अनुग्रह, तत्रापि अभ्यर्थना? अनुरोध? विश्रब्धं पृच्छ्यतामिति भावः। [अत्र "अनुग्रह इव इयमभ्यर्थना" इति पाठान्तरं, तत्र तु—इयं भवतः प्रार्थना किमपि प्रष्टुमित्यर्थः, अनुग्रह इव अनुकम्पातुल्या। तथा च वयं तापसजनाः, मादृशेषु प्रार्थना भवतः नैव सम्भवति परन्तु अनुग्रहप्रकाश एव इत्यर्थः।

(१६) शाश्वते—चिरन्तने। ब्रह्मणि—वेदे, वेदानुष्ठाने इत्यर्थः, ब्रह्मचर्य्यव्रते इति भावः; अथवा शाश्वते नित्ये ब्रह्मणि परमात्मभूते वर्त्तते अवतिष्ठते; जीवन्मुक्त इत्यर्थः। नैष्ठिकब्रह्मचारी भगवान् कण्वः, नास्य दारपरिग्रहसम्भव इति भावः। तथा च कूर्म्मपुराणे,—"ब्रह्मचार्य्युपकुर्वाणः नैष्ठिको ब्रह्मतत्परः" इति।

अन। सुणादु अज्जो। अत्थि कोसिओ त्ति गोत्तणामहेओ महाप्पहावो राएसी। (भ) (३७)

राजा। स खलु भगवान् कौशिकः।

अन। तं सहीए पहवं अवगच्छ, उज्झिदाए (३८) सरीरसंवड्‌ढणादिहिं उण तादकस्सो वि एदाए पिदा। (म)

राजा। उज्झितशब्देन जनितं नः कुतूहलं, तत् आ मूलाच्छ्रोतुमिच्छामः। (३९)

अन। सुणादु अज्जो। पुरा किल तस्स राएसिणो उग्ग तवसि वट्टमाणस्स कधम्पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी (४०) पेसिदा। (य)

(भ) शृणोतु आर्य्यः। अस्ति कौशिक इति गोत्रनामधेयो महाप्रभावो राजर्षिः।

(म) तं सख्याः प्रभवमवगच्छ, उज्झितायाः शरीरसंवर्द्धनादिभिः पुनस्तातकण्वोऽपि एतस्याः पिता।

(य) शृणोतु आर्य्यः। पुरा किल तस्य राजर्षेः उग्रे तपसि वर्त्तमानस्य कथमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रेषिता।

(३७) कौशिक इति।—कुशस्य अपत्यं पुमान् कौशिकः, इति गोत्रनामधेयं वंशनाम यस्य तथोक्तः। महाप्रभावः—तेजस्वी, राजर्षिः—क्षत्रियतपस्वी, विश्वामित्र इत्यर्थः।

(३८) प्रभवं—प्रभवत्यस्मादिति प्रभवः जन्महेतुः, जनक इत्यर्थः; ("स्यात् जन्महेतुः प्रभवः" इत्यमरः) तम्। उज्झितायाः—परित्यक्तायाः, मात्रा मेनकयेति शेषः।

(३९) उज्झितशब्देन—भवती-वाक्यान्तर्भूतत्यागार्थकोज्झितशब्देन इत्यर्थः। कुतूहलं कौतुकं, शुश्रूषा इत्यर्थः। आ मूलात्—मूलम् आरभ्य, प्रथमतः इत्यर्थः। ["आङ् मर्य्यादाभिविध्योः" (२।१।१३।पा०) इति मर्य्यादाऽर्थकाङ्योगे मूलशब्दात् पञ्चमी]।

(४०) उग्रे तपसि वर्त्तमानस्य।—अतिदुश्चरं तपः कुर्वतः, जातशङ्कैः स्वर्गराज्यग्रहणादिसन्देहयुक्तैः। मेनका नाम अप्सराः सुराङ्गना [अप्सरस्शब्दः बहुवचनान्तः क्वचित् एकवचनोऽपि, तथा च प्रमाणम्,—"आपः सुमनसः वर्षाः अप्सराः सिकताः

राजा। अस्ति एव अन्यसमाधिभीरुत्वं (४१) देवानाम्। ततस्ततः ?

अन। तदो वसन्तावदाररमणीए समए उम्मादइत्तुअं ताए रूवं पेक्खिअ—"। (र) (४२) [इत्यर्द्धोक्ते लज्जां नाटयति]।

राजा। पुरस्तादवगम्यत एव, सर्वथा अप्सरःसम्भवैषा।

अन। अध इं ? (ल)

राजा। उपपद्यते (४३)।—

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ?
न प्रभातरलं ज्योतिरुदेति वसुधातलात् (४४) ॥ २८॥

---

(र) ततो वसन्तावताररमणीये समये उन्मादहेतुकं तस्या रूपं प्रेक्ष्य।

(ल) अथ किम् ?

समाः। एते स्त्रियां बहुत्वे स्युरेकत्वेऽप्युत्तरत्रयम्॥" इति। नियमविघ्नकारिणी—तपोविघ्नकारिणी।

(४१) अन्यसमाधीति।—अन्येषां समाधिः तपोनियमात्; ("स्युः समर्थननीवाक-नियमाश्च समाधयः" इत्यमरः)। भीरुत्वं—भयशीलत्वम्।

(४२) वसन्तेति।—वसन्तस्य अवतारेण, आविर्भावेण, रमणीयः मनोहरः, तस्मिन्। [अत्र वसन्तोदारसमये इति पाठान्तरम्, उदारवसन्तसमये इत्यर्थः, प्राकृते पूर्वनिपातानियमात्]। उन्मादहेतुकं—कामोद्दीपकम् इत्यर्थः, रूपं प्रेक्ष्य दृष्ट्वा। इत्यर्द्धोक्ते—"कामयमानः अभवत्" इति वाक्यशेषः।

(४३) उपपद्यते—युज्यते।

(४४) अप्सरःसम्भवत्वं समर्थयमान आह, मानुषीभ्य इति।—अस्य शकुन्तलासम्ब-न्धिनः रूपस्य (अत्र रूपशब्दः लावण्यादेरपि उपलक्षकः) मानुषीभ्यः मनुष्यजातिस्त्रीभ्यः; [मनोरपत्यानि स्त्रियः इति मानुष्यः; मनुशब्दात् "मनोर्जातावञ्यतौ षुक् च" (४।१।१६१ पा०) इति सूत्रेण अञ्षुकौ, ततः ङीप्प्रत्ययश्च। एतेन तासां क्षिति-प्रधानत्वं सूचयित्वा तादृशरूपाभावः व्यञ्जितः। मानुषीषु इति पाठे—"वसुधा-तलात्" इत्युपमाने अपादानसद्भावात् उपमेये तदसद्भावात् न्यूनपदतादोषः, "क्षित्यादेः" इति सोपस्कारतान्वये तु अध्याहारदोषः इति भाव्यम्]। कथं नु

[ शकु। सव्रीडाऽधोमुखी तिष्ठति ]। ( ४५ )

राजा। [ आत्मगतम् ]। **हन्त! लब्धावकाशो मे मनोरथः।** ( ४६ )

प्रियं। [ सस्मितं शकुन्तलां विलोक्य नायकाभिमुखी भूत्वा ]। **पुणो वि वत्तुकामो विअ अज्जो लक्खीअदि।** ( व ) ( ४७ )

[ शकु। सखीमङ्गुल्या तर्ज्जयति ]।

---

(व) पुनरपि वक्तुकाम इव आर्य्यो लक्ष्यते।

सम्भवः? नैव सम्भव इत्यर्थः। तथा हि प्रभातरलं प्रभया किरणेन तरलं भासुरं, ("तरलं चञ्चले षिङ्गे हारमध्यमणावपि। भासुरे च" इति विश्वः) लावण्य-पूर्णं ज्योतिः, विद्युत् अनलो वा ("ज्योतिर्दिनेशानलयोरपि स्यात्" इति विश्वः) वसुधातलात् भूतलात् न उदेति। [अत्र पूर्वार्द्धपरार्द्धवाक्ययोर्विम्बानुविम्बभावबोधनात् सामान्यधर्म्मस्य पर्य्यायमात्रभेदेन पृथङ्निर्देशाच्च प्रतिवस्तूपमाऽलङ्कारः। अनेन निदर्शनं नाम नाटकभूषणं प्रदर्शितम्; यदाह दर्पणे,—"पदार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम्। परपक्षव्युदासार्थं तन्निदर्शनमुच्यते॥" इति]। पथ्यावक्त्रं वृत्तम्।— "युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्त्तितम्" इति लक्षणात्॥ २८॥

(४५) सव्रीडा—सलज्जा, अधोमुखी—नतानना, स्वगुणकीर्त्तनश्रवणादिति भावः। [एतेन उत्तमनायिकात्वं ध्वनितम्। शृङ्गाररससञ्चारिभावः लज्जारूपश्च व्यञ्जितः]।

(४६) हन्त हर्षे। लब्धावकाशः—प्राप्तावसरः। मनोरथः—शकुन्तलालाभ-प्रत्याशारूपः अभिलाषः।

(४७) शकुन्तलां विलोक्य इति।—शकुन्तलायाः राजकृतस्वगुणाख्यानेन नृपमनुरक्तं मन्यमानायाः सहसा शृङ्गारसञ्चारि-व्रीडोदयात् अधोमुखावस्थानं दृष्ट्वा इत्यर्थः। नायकाभिमुखी—नृपसम्मुखवर्त्तिनी, तस्यापि आकारमवलोकयितुमिति भावः; अत एव सस्मितम् उभयोराकारदर्शनेन स्मितोदयात् इति भावः, वदति इति शेषः, इति कविवाक्यम्। यदा तु स्ववक्तव्यं निःशेषमभिधाय विरतोऽसौ नृपतिः शकुन्तलायां निरस्तसन्देहतया नितरां कामयमानः सत्त्वभावोद्रेकात् क्षणसञ्चारि-लज्जोदयाच्च वक्तुमक्षमः, तदा चतुरेयं परिज्ञातमनोरथा प्रियंवदा लज्जामपनीय पुनः वक्तुं प्रेरयन्ती सविलासमाह—पुनरपि इति। वक्तुकाम इति।—["तुङ्कामममसोः" का० इति मलोपः] कथनेच्छुरित्यर्थः। लक्ष्यते—अनुमीयते।

राजा। सम्यगुपलक्षितं भवत्या। अस्ति नः सच्चरितश्रवणलोभात् (४८) अन्यदपि प्रष्टव्यम्।

प्रियं। तेण हि अलं विआरिदेण, अणिज्जन्तणाणुजोओ (४९) क्खु तवस्सिजणो। (ग)

राजा। एतत् पृच्छामि।—

वैखानसं किमनया व्रतमा प्रदानात्
व्यापाररोधि मदनस्य निषेवितव्यम्?
अत्यन्तमेव सदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः? (५०) ॥ २९॥

---

(ग) तेन हि अलं विचारितेन, अनिर्यन्त्रणानुयोगः खलु तपस्विजनः।

(४८) सम्यक्—यथार्थम्, उपलक्षितं—अनुमितं, मम वक्तुमभिप्रायोऽस्ति इति भावः। सच्चरितेति।—सच्चरितस्य सुकृतस्य। श्रवणलोभात्—श्रवणौत्सुक्यादित्यर्थः।

(४९) अनिर्यन्त्रणेति।—अनिर्यन्त्रणः निर्बाधः, अनुयोगः प्रश्नो यस्मिन् तथाभूतः। तपस्विजने प्रश्नविचारो नास्ति, यः कश्चनापि शुभोऽशुभो वा प्रश्नः निर्बाधेन कर्त्तव्य इति भावः।

(५०) प्रश्नविषयमाह,—वैखानसमिति।—अनया शकुन्तलया मदनस्य कामस्य व्यापारं सुरतभोगादिकं रुणद्धि परिहरतीति तथाभूतं वैखानसं व्रतं ब्रह्मचर्य्यम् इत्यर्थः। आ प्रदानात्—यावत् वराय प्रदानं न भवेत् तावदित्यर्थः, किं निषेवितव्यम्? अनुष्ठातव्यम्? (अत्र प्रदानपदेन प्रकृष्टं दानं प्रभूतैश्वर्य्यशालिने नृपाय दानम् इत्यर्थः। यदि राज्ञे देया तदा विवाहात् पूर्वमेव तपोवने अवस्थानम्, इति प्रथमप्रश्नतात्पर्य्यम्)। प्रश्नान्तरमाह, आहो इति।—आहो अथवा सदृशे ईक्षणे नयने यासां ताः, अत एव वल्लभाः प्रियाः ("दयितं वल्लभं प्रियम्" इत्यमरः) ताभिः हरिणाङ्गनाभिः मृगीभिः समं सह अत्यन्तमेव चिरमेव निवत्स्यति? अर्थात् तपोवने यावज्जीवं ब्रह्मचारिणी भविष्यति? इति एकः भावः, इयमिति शेषः; अथवा तापसजनपरिणीता चिरं सुखैश्वर्य्यभोगशून्या मृगवधूभिः सह क्रीडन्ती स्थास्यति? इत्यर्थः। यदि पुनः तपस्विने देया—तदा चिरमेव तपोवने स्थास्यति इति द्वितीयप्रश्नतात्पर्य्यं साधीयः। अस्या अवावस्थानं परिणयावधिकं यावज्जीवं वेति प्रश्न इति

प्रियं। अज्ज ! धम्माअरणपरवसो एस जणो, गुरुणो उण से अणुरूअवरप्पदाणे संकप्पो। (घ) (५१)

राजा। [सहर्षमात्मगतम्]। (५२)—

भव हृदय ! साभिलाषं, सम्प्रति सन्देहनिर्णयो जातः।
आशङ्कसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् (५३) ॥ ३०॥

(घ) आर्य्य ! धर्माचरणपरवश एष जनः, गुरोः पुनरस्या अनुरूपवरप्रदाने सङ्कल्पः।

फलितम्। इयं किं तपस्विने देया ? उत राज्ञे ? इति जिज्ञासाद्वयम्। अत एव उत्तरत्र अनुरूपवरप्रदाने सङ्कल्पः इति प्रियंवदाप्रत्युत्तरं सङ्गच्छते। [अत्र सदृशलक्षण-वल्लभाभिः इत्यंशे उपमा, काव्यलिङ्गञ्च अलङ्कारः। सर्ममित्यनेन सहोक्तिरिति केचित् आहुः, तत्तु अतिशयोक्तिमूलत्वाभावात् उपेक्षितम्]। वसन्ततिलकं वृत्तम्।—'ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात्। तच्च वृत्तं चतुर्दशाक्षरपादकैकोनविंशत्युत्तरसहस्रसंख्यकप्रस्तारान्तर्गतम् ॥ २९ ॥

(५१) धर्म्मेति।—धर्म्माचरणे ब्रह्मचर्य्यादिधर्म्मकार्य्यानुष्ठाने, परवशः—पराधीनः। तथा च ब्रह्मचर्य्यं सहसा हातुं चिरं धर्त्तुं वा नेयं शक्नोति, पितुरधीनत्वात् इति भावः; किन्तु एतत् जानामि यत्—गुरोः पितुः, कण्वस्य इति यावत्। अनुरूपवरप्रदाने— सदृश-वरार्पणे, सङ्कल्पः—अभिलाषः। अतो नैषा ते दुराशा इति गूढ़ाभिप्रायः। [अत्र उत्तरात् प्रश्नस्य स्वपरिणययोग्यत्वरूपस्य उन्नयनात् उत्तरालङ्कारः। तथा च दर्पणे,—"उत्तरं प्रश्नस्योत्तरादुन्नयो यदि" इति]।

(५२) राजेति।—अत्र सहर्षेत्यादिकविवाक्यात् परं "न दुरवापेयं खलु प्रार्थना" इति पाठान्तरम् अस्ति। तत्र ईदृशस्य अन्वयस्याभावादिति भावः। अत्र "राजा। वयमपि भवत्योः" इत्यादितः एतदन्तेषु युक्तिर्नाम मुखाङ्गं दर्शितम्। तथा च,— "सम्प्रधारणमर्थानां युक्तिः" इति दर्पणोक्तेः।

(५३) भवेति।—हे हृदय ! साभिलाषं शकुन्तलायामिति भावः, भव। सम्प्रति इदानीं सन्देहस्य जात्या आश्रमधर्म्मेण वा मत्परिग्रहयोग्या न वेति संशयस्य निर्णयः निराकरणं जातः भूतः, एतस्या लाभे सन्देहो नास्तीति भावः। निर्णयमेव विवृणोति, आशङ्कसे इति।—यत् वस्तु अग्निम् अग्निवत् स्पर्शनाक्षमं विप्रतनयात्वेन तत्परिग्रहे पापजनकत्वादिति भावः। आशङ्कसे सम्भावयसि, तत् इदं वस्तु शकु-

शकु। [ सरोषमिव ]। अणसूए ! अहं गमिस्सं। (ख)

अन। किं णिमित्तं ? (ह)

शकु। इमं असंबद्धप्पलाविणीं पिअम्बदं अज्जाए गोदमीए (५४) गदुअ णिवेदइस्सं (क)। [ इति उत्तिष्ठति ]।

अन। सहि ! ण जुत्तं अस्समवासिणो जणस्स अकिद-सक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं। (ख) (५५)।

[ शकु। उत्तरमदत्त्वैव प्रस्थिता ]

राजा। [ स्वगतम् ]। कथमियं गच्छति ? [ जिघृक्षुरिव पुनरिच्छां निगृह्य ] अहो ! चेष्टानुरूपिणी कामिजनमनोवृत्तिः (५६)। अहं हि,—

---

(स) अनसूये ! अहं गमिष्यामि।

(ह) किं निमित्तम् ?

(क) इमाम् असम्बद्धप्रलापिनीं प्रियंवदाम् आर्य्यायै गौतम्यै गत्वा निवेदयिष्यामि।

(ख) सखि ! न युक्तम् आश्रमवासिनो जनस्य अकृतसत्कारम् अतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम्।

---

रूपमिति भावः, स्पर्शचमं सुखस्पर्शं लभ्यमिति यावत्, रवं जातमिति शेषः। [अत्र समासाभावात् व्यस्तरूपकालङ्कृतिः, पूर्वार्द्ध काव्यलिङ्गञ्च ; वर्त्तते च समाधानं नाम मुखाङ्गम्। तथा च दर्पणे,—"बीजस्यागमनं यत्तु तत् समाधानमुच्यते" इति। आर्य्या जातिः ॥ ३० ॥

(५४) असम्बद्धप्रलापिनीम्—अयुक्तभाषिणीम्। आर्य्यायै—पूज्यायै। गौतम्यै—[क्रियाग्रहणात् सम्प्रदाने चतुर्थी] उक्त्या च अनया गौतमी खलु सकलतापसजनप्रभविती प्रवीणा च इति गम्यते।

(५५) अकृतसत्कारं—न कृतः सत्कारः पूजनं यस्य तं, अतिथिविशेषं—प्रकृष्टम् अतिथिम् ; अनेन कोऽपि अभिप्रायः व्यज्यते। स्वच्छन्दतः स्वेच्छया गमनं, [स्वच्छन्दतः इत्यत्र "इतराभ्योऽपि दृश्यन्ते" (५।३।१४ पा०) इति तृतीयायाः तसिल्प्रत्ययः। प्रकृत्यादित्वात् तृतीया। अनेन उपदेशनामा नाट्यालङ्कारः प्रदर्शितः। उक्तञ्च दर्पणे,—"शिक्षा स्यादुपदेशनम्" इति]।

(५६) चेष्टानुरूपिणी—चेष्टाम् अभिमतक्रियाम् अनुरूपयति अनुसरतीति तथा-

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः ( ५७ )॥३१॥

प्रियं। [शकुन्तलामुपेत्य]। हला चण्डि! ( ५८ ) णारिहसि गन्तुं। (ग)।

शकु। [परिवृत्य सभ्रूभङ्गम्]। किं त्ति? (घ)

प्रियं। दुवे मे रुक्खसेअणके धारेसि, तेहिं ( ५९ ) दाव अत्ताणं मोआवेहि, तदो गमिस्ससि (ङ)। [इति बलात् निवर्त्तयति।]

(ग) हला चण्डि! नार्हसि गन्तुम्।

(घ) किमिति?

(ङ) द्वे मे वृक्षसेचनके धारयसि, ताभ्यां तावदात्मानं मोचय, ततो गमिष्यसि।

भूता, कायव्यापारसदृशी इत्यर्थः। कामिजनमनोवृत्तिः,—कामुक-जन-मनोभावः, यादृशो शरीरचेष्टा तां विनापि तादृशी हृदयवृत्तिः कामुकस्य इत्यर्थः। [अत्र "चेष्टाप्रतिरूपिका" इति पाठे—तथैवार्थः]।

(५७) तामेव मनोवृत्तिं विवृणोति, अनुयास्यन्निति।—मुनितनयां शकुन्तलाम्, (इमामित्यपहाय मुनितनयामिति कथनम् अतिशयमुग्धत्वव्यञ्जकम्।) अनुयास्यन् अनुगमिष्यन् अहं सहसा अतर्कितं यथा स्यात् तथा इत्यर्थः,("अतर्किते तु सहसा"इत्यमरः) विनयेन जितेन्द्रियतया ("इन्द्रियाणां जयं प्राह विनयं भरतो मुनिः" इति वचनात्;) वारितः निषिद्धः प्रसरो गतिः वेगो वा यस्य तथाभूतः ("प्रसरः प्रणये वेगे" इति विश्वः) सन् स्वस्थानात् अध्युषितप्रदेशात् अचलन्नपि अनुत्तिष्ठन्नपि (उत्थानस्य का कथा? इत्यपिशब्दार्थः) गत्वा इव किञ्चिद्दूरं चरणौ निक्षिप्य इव, प्रतिनिवृत्तः प्रत्यागतः। [अत्र उत्प्रेक्षालङ्कारः, अचलन्नपि गत्वा इति विरोधाभासश्च। अनेन परिभावनानाम मुखसन्धेरङ्गं प्रकटितम्। तथा च दर्पणे,—"कुतूहलोत्तरा वाचः विज्ञेया परिभावना" इति। आर्य्या जातिः॥ ३१॥

(५८) वाक्यश्रवणानन्तरं सम्भाव्यकोपोपशमनार्थम् आदावेव कोप-वाचकनाम्ना सम्बोध्यते हलेति।—चण्डि!—अतिकोपने! "चण्डस्त्वत्यन्तकोपनः" इत्यमरः। गौरादित्वात् ङीष्।

(५९) द्वे मे—मह्यं ["धारेरुत्तमर्णः" ( १।४।३५ पा० ) इति सम्प्रदाने चतुर्थी]।

राजा । भद्रे ! वृक्षसेचनात् एव अत्रभवतीं परिश्रान्तां तर्कयामि । तथा हि अस्याः,—

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणात्
अद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः ।
बद्धं कर्णशिरीषरोधि वदने घर्म्माम्भसा जालकं
बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्द्धजाः(६०)॥३२॥

वृक्षसेचनके—वृक्षः सिच्यते आभ्यामिति तथोक्ते, जलपूर्णकलशौ इत्यर्थः, वारद्वयं वृक्षसेचनं वा । ताभ्यां—वृक्षसेचनाभ्याम् [ अत्र अपादाने पञ्चमी ] ।

(६०) परिश्रममेव तत्कार्य्यप्रदर्शनेन समर्थयते, स्रस्तांसाविति ।—घटस्य जलकुम्भस्य, उत्क्षेपणात् ऊर्द्ध्वोत्तोलनात्, ( हेतुरयं सर्वत्र प्रयोज्यः ) बाहू भुजौ, स्रस्तौ अवनतौ अंसौ स्कन्धौ ययोः तथाभूतौ, ( स्वभावात् तु नतौ, सम्प्रति अतिनतौ इत्यर्थः, ) तथा अतिमात्रम् अत्यर्थं लोहितौ रक्तः स्वभावादधिकरक्ता इत्यर्थः, तलौ ययोः तादृशौ [एतेन स्वभावनतत्वमंसयोः स्वभावलोहितत्वञ्च करतलयोः सूचयित्वा उत्तमनायिकात्वं ध्वन्यते । अत्र तलशब्दः एकदेशेन समग्रं करतलमाह ।—“एकदेशग्रहणे समुदायस्यापि ग्रहणम्” इति न्यायात् ] । प्रमाणात् स्वभावादिति भावः, अधिकः श्वासः निश्वासः स्तनयोः वेपथुं कम्पं स्पन्दनमित्यर्थः, (“अथ वेपथुः । कम्प” इत्यमरः) [अत्र ट्वितोऽथुच् (३।३।८९पा० इति ट्वित्वादथुच्प्रत्ययः] जनयति । घर्म्माम्भसा खेदवारिणा, वदने कर्णयोः शिरीषं तदाख्यकुसुमं रुणद्धि इति तथोक्तं जालकं बिन्दुसमूहः, बद्धं रचितं जनितमित्यर्थः । यद्यपि श्रमजनितस्वेदस्य सर्व्वाङ्गे एव सम्भवः, तथापि वल्कलसंवृतदेहत्वेन इतरेषामङ्गानाम् अदृष्टत्वात् वदने इत्यभिहितं दुष्मन्तेन । तत्रापि “सर्व्वं वा मुखमुच्यते” इत्युक्तेः—वदने इत्यनेन कपोलयोः इत्यर्थः । तत्र तत्रैव अनुरक्तानां प्रथमतः दृष्टिपातसम्भवात्, श्रुतिभूषणशिरीषरोधसम्भवाच्च । तथा बन्धे बन्धने स्रंसिनि शिथिलीभवति सति, अत एव पर्य्याकुलाः इतस्ततः विक्षिप्ताः मूर्द्धजाः केशाः एकेन हस्तेन यमिताः संयम्य धृता इत्यर्थः । [ अत्र प्राधान्येन स्वभावोक्तिः ; “प्रमाणाधिकः श्वासः स्तनवेपथुं जनयति” इत्यत्र स्तनवेपथुना हेतुना प्रमाणाधिकः श्वासः अनुमीयते इति हेतुसाध्यभावात् अनुमानं, बन्धे स्रंसिनि अत एव पर्य्याकुला इति पदार्थहेतुकं काव्यलिङ्गञ्च, इत्येषां निरपेक्षाणां संसृष्टिः] । शार्दूलविक्रीड़ितं वृत्तम् ॥ ३२ ॥

तदहमेनामनृणां करोमि। [ इति अङ्गुरीयकं ददाति ]। (६१)
[ सख्यौ प्रतिगृह्य, नामाक्षराणि वाचयित्वा च परस्परमवलोकयतः।]

राजा। अलम् अन्यथासम्भावनया, राज्ञः प्रतिग्रहोऽयम्। ( ६२ )

प्रियं। तेण हि णारिहदि एदं अङ्गुलीअअं अङ्गुलीविओअं, ( ६३ ) अज्जस्स वअणादो ज्जेव अणिणा एसा भोदु। ( च )

अन। हला सउन्तले ! मोआविदासि अणुकम्पिणा अज्जेण अहवा राएसिणा, ता कहिं (६४) दाणिं गमिस्ससि ? (छ)

शकु। [आत्मगतम्।] ण एदं जणं परिहरिस्सं जइ अत्तणो पहविस्सं। ( ज ) ( ६५ )

---

(च) तेन हि नार्हति इदम् अङ्गुरीयकम् अङ्गुलीवियोगम्, आर्य्यस्य वचनात् एव अनृणा एषा भवतु।

(छ) हला शकुन्तले ! मोचितासि अनुकम्पिना आर्य्येण, अथवा राजर्षिणा, तत् कुत्र इदानीं गमिष्यसि ?

(ज) नैतं जनं पर्य्यहरिष्यं यदि आत्मनः प्राभविष्यम्।

(६१) अनृणाम्—ऋणरहिताम्। [अत्र "शकुन्तलामुपेत्य" इत्यादितः "अङ्गुरीयकं ददाति" इत्यन्तेषु करणं नाम मुखसन्ध्यङ्गं प्रदर्शितम्। तथा च—"करणं पुनः। प्रकृतार्थसमारम्भः"। इति दर्पणोक्तेः]।

(६२) अन्यथेति।—अन्यथासम्भावनया—मम नृपत्वशङ्कया इत्यर्थः। राज्ञः सकाशात् अयं प्रतिगृह्यते इति प्रतिग्रहः, राज्ञा मह्यं प्रसादीकृत इति भावः ; अथवा राज्ञः मम प्रतिग्रहः स्वीकारः इत्यर्थः। [अत्र "इति राजपुरुषं माम् अवगच्छथ" इत्यधिकः पाठः विद्यते, तत्रापि राज्ञः राजसम्बन्धिनं पुरुषम् अमात्यादिरूपम् ; अथवा राजा एव पुरुषः राजानमित्यर्थः, मां अवगच्छथ इति आत्मगोपनम् ]।

(६३) इदम् अङ्गुरीयम्, अङ्गुलिभवत इति शेषः, वियोगं विच्छेदं न अर्हति, भवदङ्गुली एव इदं तिष्ठतु इति भावः।

(६४) कुत्रेति—अत्र "गच्छ" इत्येतन्मात्रं पाठान्तरं क्वचित् पुस्तके दृश्यते।

(६५) न पर्य्यहरिष्यं—न पर्य्यत्यक्ष्यं (पाठोऽयं पुस्तकान्तरे न दृश्यते)। यदि आत्मनः

प्रियं। किं दाणिं ण गच्छीअदि ? (झ)

शकु। दाणिं किं तुह आअत्तम्हि ? जदो मे रोअदि तदो गमिस्सं। (ञ)

राजा। [शकुन्तलां विलोकयन् आत्मगतम्]। किं खलु यथा वयम् अस्याम्, इयमपि अस्मान् प्रति तथा स्यात् ? अथवा लब्धावकाशा मे मनोवृत्तिः। (६६) कुतः ?—

वाचं न मिश्रयति यद्यपि मद्वचोभिः
कर्णं ददात्यवहिता मयि भाषमाणे।
कामं न तिष्ठति मदाननसम्मुखीयं
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः (६७) ॥२३॥

---

(झ) किम् इदानीं न गम्यते ?

(ञ) इदानीं किं तव आयत्ता अस्मि ? यदा मे रोचते तदा गमिष्यामि।

स्वस्य प्राभविष्यं, मम स्वाधीनतायां सत्यां, नैनं जनं कथमपि परित्यजेयं किन्तु पितुरधीना अहं किं करोमि ? इति भावः। ["यदि आत्मनः प्राभविष्यम्" इतिमात्रपाठे—अनेन खलु अपहृतचित्ततया न हि इतः गन्तुं मे शक्तिरस्ति इति भावः। अत्र च राजभावस्य गूढरूपस्य उद्भेदनात् उद्भेदो नाम मुखसन्ध्यङ्गं निर्देशितम्; तथा च दर्पणे,—"बीजार्थस्य प्ररोहः स्यादुद्भेदः" इति]।

(६६) वयम्—अहमित्यर्थः। ["अस्मदो द्वयोश्च" (१।२।५९ पा०) इति पाक्षिकबहुवचनं] अस्यां शकुन्तलायां, यथा येन प्रकारेण, अनुरक्तः इति शेषः। तथा इयमपि शकुन्तलाऽपि अस्मान् प्रति मां प्रति इत्यर्थः [प्रतिशब्दयोगे द्वितीया] अनुरक्तेति शेषः, स्यात् भवेत् [इति सम्भावनायां विधिलिङ्]। अनुरागकारणं किमपि समुत्प्रेक्ष्य आह,—अथवेति। लब्धावकाशा—प्राप्तप्रसरा, मनोवृत्तिः निश्चयात्मिका इत्यर्थः।

(६७) तामेव मनोवृत्तिं हेतुप्रदर्शनेन विवृणोति, वाचमिति।—यद्यपि इयं शकुन्तला मम वचोभिः वाक्यैः सह वाचं न मिश्रयति—मया सह न आलपति इत्यर्थः, [भङ्ग्यन्तरेणाभिधानन्त्वत्र ग्राम्यतादोषवारणार्थमिति विभावनीयम्। अत्र च वाचं वचोभिः इति स्त्री-क्लीवलिङ्गनिर्देशेन स्वकीयां वयस्यामपि तन्निवेश योजयति इति

[ नेपथ्ये ] । भो भोः तपस्विनः ! तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः, प्रत्यासन्नः (६८) किल मृगयाविहारी राजा दुष्मन्तः ।—

तुरगखुरहतस्तथाहि रेणुः
विटपविषक्तजलार्द्रवल्कलेषु ।

---

ध्यम्यते ] तथापि मयि भाषमाणे कथयति सति अवहिता दत्तावधाना सती, कर्णं ददाति—मद्वचनं सादरं शृणोति इति भावः । मदाननसम्मुखी सम्मुखनिविष्टदृष्टिरिति भावः, कामं सम्यक् न तिष्ठति, [अत्र मदाननसम्मुखीना इति पाठान्तरम् ; अर्थस्तु सुगमः ।] तु किन्तु, तथापि अस्याः दृष्टिः भूयिष्ठं बाहुल्येन, प्रायश इत्यर्थः, अन्यः मदितरः विषयी लक्ष्यः यस्याः तथाभूता न । [अत्र चरणद्वये अन्यत्-शब्दद्वयं स्वस्य सौभाग्यातिशयद्योतकमिति विभावनीयम् । अत्र च विलासो नाम स्वभावजः नायिकालङ्कारः उक्तः । तथा च,—"यानस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् । विशेषस्तु विलासः स्यात्—" इति दर्पणोक्तेः । तथा मुग्धायाः अनुरागेङ्गितञ्च सुष्ठु प्रकटीकृतम् । तथा च,—"दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति । प्रच्छन्नं वा भ्रमन्तं वाऽतिक्रान्तं पश्यति प्रियम् ॥ अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम् । शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥" इति च दर्पणोक्तेः] । वसन्ततिलकं वृत्तम् ॥ ३२ ॥

(६८) मुखसन्धेः शेषाङ्गं भेदनामकं दर्शयन् प्रकृतकथां विच्छिद्य अङ्कान्तरमारब्धुकामः कविः आह, नेपथ्य इति । नेपथ्ये ।—यवनिकाभ्यन्तरे । कविवाक्यमेतत् । तपोवनेति ।—आश्रमसविधस्थितप्राणिरक्षार्थम् । सज्जीभवन्तु—असज्जाः सज्जा भवन्तु इति [ सज्जशब्दात् अभूततद्भावे च्विप्रत्ययः दीर्घश्च ] । प्रत्यासन्नः—सन्निहितः । केचित्तु अत्रैव राजनामश्रवणेन शकुन्तलायाः प्रोत्साहनात् भेदनाम मुखशेषाङ्गमाहुः,—"भेदः प्रोत्साहना मता" इति लक्षणात् ।

(६९) प्रत्यासन्नत्वे हेतुं प्रदर्शयति, तुरगेति ।—तथाहि तमेवार्थं जानी हि इत्यर्थः, तुरगाणाम् अश्वानां खुरैः हतः क्षुण्णः रेणुः धूलिः पर्वतीय इति शेषः, [अत्र तथाऽद्रिरेणुरिति पाठान्तरम् ] अन्यथा आकाशलाभासम्भवात् इति भावः । अत एव परिणतः अवसानं गतः, अस्तोन्मुख इत्यर्थः, यः अरुणः सूर्य्यः, ( "अरुणोऽस्फुटरागे च सूर्य्ये सूर्य्यस्य सारथौ" इति धरणिः ) तस्येव प्रकाशो दीप्तिः यस्य तथाभूतः सन्

पतति परिणतारुणप्रकाशः

शलभसमूह इवाश्रमद्रुमेषु (६८) ॥ ३४ ॥

राजा। [स्वगतम्]। अहो! धिक्, मम अन्वेषिणः सैनिकाः तपोवनम् अभिरुन्धन्ति। (७०)

[पुनर्नेपथ्ये]। भो भोः तपस्विनः! पर्य्याकुलयन् (७१) वृद्धस्त्रीकुमारान् एष गजः प्राप्तः।—

तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्तः,

प्रौढ़ाकृष्टव्रततिवलयासङ्गनाज्जातपाशः।

शलभसमूह इव पतङ्गवृन्दमिव [अत्र समूहशब्देन उपमेयभूतानां रेणूनां बहुत्वं घनत्वञ्च भण्यते] विटपेषु शाखासु विषक्तानि संश्लिष्टानि जलार्द्राणि वल्कलानि येषां तथाविधेषु [अत्रापि विषक्तजलपदाभ्याम् "अधुनापि वल्कलेषु जलं वर्त्तते" इति व्यज्यते; तथा वल्कलपदेन "सत्वरम् अपसार्य्यन्तां वल्कलानि न चेत् मलिनानि भवन्ति" इत्यपि गम्यते] आश्रमद्रुमेषु तपोवनतरुषु पतति। [अत्र आश्रमपदेन तुरगाणाम् अतिसान्निध्यं व्यज्यते। उपमालङ्कारः। तथा "तुरगखुरहतः अत एव परिणतारुणप्रकाश इति पदार्थहेतुकं काव्यलिङ्गम्; तथाससैन्यः दुष्मन्तः समागतः इति वक्तव्ये तुरगेत्याद्यप्रस्तुतवाक्येन कथनात् अप्रस्तुतप्रशंसाऽलङ्कारः]। पुष्पिताग्रा वृत्तम्,—"अयुजि न युगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात्॥ ३४ ॥

(७०) अभिरुन्धन्ति—आवृण्वन्ति, बाधन्ते इत्यर्थः।

(७१) पर्य्याकुलयन्—आकुलीकुर्वन्।

(७२) अपरमपि सान्निध्ये हेतुं दर्शयति, तीव्रेति।—स्यन्दनस्य रथस्य आलोकात् दर्शनात् भीतः गजः तीव्रेण उत्कटेन आघातेन अभिमुखस्य तरोः वृक्षस्य स्कन्धे भग्नः एको दन्तो यस्य तथोक्तः [भग्नेत्यत्र लग्नेति पाठे—भग्नः सन् लग्नः, संसक्त इति यावत्। "तीव्राघातप्रतिहततरुः" "स्कन्धलग्नैकदन्तः" इति पदद्वयात्मकपाठे तु—तीव्रेण आघातेन प्रतिहतः भग्नः तरुः येन तादृशः; तथा स्कन्धे लग्नः एकः दन्तः यस्य सः, भयात् पश्चादवलोकनेन इत्यर्थः। स्कन्धभागोऽपि दक्षिणः इत्यवगन्तव्यम्। तथा च पालकाप्ये—"दक्षिणे वलितुं शक्तो गजो वामे प्रयत्नतः" इति]। तथा प्रौढ़म् उद्धतं यथा तथा आकृष्टेन व्रततिवलयेन लतामण्डलेन आसञ्जनात् वेष्टनात् जातः पाशः पादबन्धनरज्जुर्यस्य तथाविधः, [अत्रापि "पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः" इति एकपदं

मूर्त्तो विघ्नस्तपस इव नो, भिन्नसारङ्गयूथो,

धर्म्मारण्यं विशति गजः स्यन्दनालोकभीतः ( ७२ ) ॥२५॥

[ सर्वाः श्रुत्वा ससम्भ्रममुत्तिष्ठन्ति। ] ( ७३ )

राजा। [ स्वगतम् ]। अहो ! धिक्, कथम् अपराद्धस्तपस्विना-मस्मि ? भवतु प्रतिगच्छामि तावत्। ( ७४ )

सख्यौ। महाभाअ ! इमिणा हत्थिसम्भमेण पज्जाउला म्ह, ता अणुजाणीहि णो उडअगमणे। ( ट ) ( ७५ )

(ट) महाभाग ! अनेन हस्तिसम्भ्रमेण पर्य्याकुलाः स्मः, तदनुजानीहि नः उटजगमने।

पाठान्तरम् ; अर्थस्तु पूर्ववत्] भिन्नं द्रावितं सारङ्गाणां मृगाणां यूथं समूहः येन तादृशः सन् [अनेन विशेषणद्वयेन वेगातिशयः व्यज्यते]। मूर्त्तः देहवद्धः, तपसः विघ्न इव, नः अस्माकं धर्मारण्यं तपोवनं विशति पीडयति। [विशति इत्यत्र प्रविशतीति पाठान्तरं दृश्यते ; तदर्थश्च सुगमः। उत्प्रेक्षालङ्कारः, पूर्ववत् अप्रस्तुतप्रशंसा च। रसश्चात्र भयानकः सुव्यक्तः ; तत्र गजः आलम्बनविभावः, गजगतभयं स्थायिभावः, दुरन्तसंसारथाद्यवलोकनम् उद्दीपनविभावः, पार्श्वावलोकनपलायनादिकं व्यभिचारिभावः, इति विभावनीयम् ]। मन्दाक्रान्ता वृत्तम्। एतद् वृत्तन्तु एकोनविंशदधिकैकशतान्विताष्टादशसहस्रतमसङ्ख्याकप्रस्तारान्तर्भूतम् ॥ २५ ॥

(७३) ससम्भ्रमं—सभयम्।

(७४) राजेति।—स्वगतम्—अन्यैरश्राव्यम्। "अहो !" "धिक्" इति पदद्वयं विस्मयनिन्दार्थकम्। अपराद्धः—कृतदोषः। [ अत्र "पौराः अस्मदन्वेषिणः तपोवनमुपरुन्धन्ति। प्रतिनिवर्त्तिष्यामः तावत्" इति पाठान्तरम्। तत्र—पुरवासिनः मां विचिन्वन्तः आश्रमं पीडयन्ति इत्यर्थः। पूर्वत्र पाठे तु—अनुचराणामपराधेन स्वापराधः, परत्र—पश्चात् समागताः सैनिकाः, राज्ञः नगरगमने विलम्बमुद्वीक्ष्य तपोवनं पीडयन्ति इति तेषामेव अपराधः इति विशेषः ]।

(७५) सख्यौ इति।—पर्य्याकुलाः—व्याकुलाः। [अत्र "उटजगमनाय" इति पाठान्तरम्। तत्र—प्रथमे निमित्ते सप्तमी, परत्र तादर्थ्ये चतुर्थी ]।

अन। [ शकुन्तलां प्रति ]। हला सउन्तले ! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होम्ह। (ठ)

शकु। [ गतिरोधं रूपयित्वा ]। हद्धी ! हद्धी ! ऊरुत्थम्भविब्भलम्हि ( ७६ ) संवुत्ता। ( ड )

राजा। स्वैरं स्वैरं ( ७७ ) गच्छन्तु भवत्यः। आश्रमबाधा यथा न भवति, तथाऽहमपि यतिष्ये।

सख्यौ। महाभाअ ! विदिदभूइट्ठोसि, सम्पदं उवआरमज्झत्थदाए अवरद्ध म्ह, तं मरिसेहि, असम्भाविदसक्कारं भूओ वि पच्चवेक्खणणिमित्तं अज्जं विस्सवेम्ह। (ढ) (७८)

---

(ठ) हला शकुन्तले ! पर्य्याकुला आर्य्या गोतमी भविष्यति, तदेहि शीघ्रमेकस्था भवामः।

(ड) हा धिक् ! हा धिक् ! ऊरुस्तम्भविह्वलाऽस्मि संवृत्ता।

(ढ) महाभाग ! विदितभूयिष्ठोऽसि, साम्प्रतम् उपचारमध्यस्थतया अपराद्धाः स्मः, तन्मर्षय, असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः।

---

(७६) ऊर्विति।—ऊर्वोः स्तम्भेन अचलनेन विह्वला विवशा।

(७७) स्वैरं स्वैरं—मन्दं मन्दम्।

(७८) विदितभूयिष्ठोऽसि।—विदितः ज्ञातः भूयिष्ठः बहुविधः आकारेङ्गितादिः येन सः। [अनेन, "आकारेङ्गितादिना शकुन्तलया भवति यो भावः प्रकटितः, स च ज्ञातव्यः भवता" इति गूढाभिप्रायः सख्योः व्यञ्जितः]। उपचारेति।—उपचारेषु उचितेषु सत्कारेषु, मध्यस्थतया औदासीन्येन समुचितसत्काराकरणेन इत्यर्थः। अपराद्धाः—कृतदोषाः। मर्षय—क्षमस्व। असम्भावितेति।—असम्भावितः अकृतः सत्कारः सम्माननं यस्य तादृशम्। [अत्र "असम्भावितातिथिसत्कारम्" इति पाठान्तरं सुगमम्]। भूयोऽपि—पुनरपि, प्रत्यवेक्षणनिमित्तं—दर्शनार्थम्। विज्ञापयामः—निवेदयामः। [अत्र "लज्जामहे आर्य्यं विज्ञापयितुम्" इति पाठान्तरम्। अर्थस्तु सुगमः। अनेन अनुवृत्तिनामा नाट्यालङ्कारः प्रदर्शितः। तथा च,—"प्रश्रयादनुवर्त्तनम् अनुवृत्तिः" इति दर्पणोक्तेः ]।

राजा । मा मैवं, दर्शनेनैव भवतीनां सम्भूतसत्कारोऽस्मि ।(७९)

शकु । हला अणसूए ! अहिणव-कुससूइ-परिक्खदं मे चलणं, कुरुवअसाहापरिलग्गञ्च वक्कलं, दाव पड़िपालेध मं, जाव णं मोआवेमि । (ण) (८०)

[ इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता] । (८१)

राजा । [ निश्वस्य । ] गताः सर्वाः !! भवतु अहमपि गच्छामि ; शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति, यावदनुयात्रिकान् अतिदूरे तपोवनस्य निवेशयामि ; न खलु शक्तोऽस्मि शकुन्तलादर्शनव्यापारात् आत्मानं निवर्त्तयितुम् । (८२)

(ण) हला अनसूये ! अभिनवकुशसूचिपरिचतं मे चरणं, कुरुवकशाखापरिलग्नञ्च वल्कलं, तावत् प्रतिपालयतं मां, यावदेनत् मोचयामि ।

(७९) सम्भूतसत्कारः—जातपूजः । अत्र "पुरस्कृतः" इति पाठे—पूजितः इत्यर्थः ।

(८०) अभिनवेति ।—अभिनवया कुशस्य सूच्या अग्रभागेण परिचतं विद्धम् । [ अत्र अभिनवपदेन तपोवनसान्निध्यं सूचितं, तापसैः यज्ञार्थं नियतलूनकुशाग्रत्वात् कुशाग्राणाम् अभिनवत्वं सम्भवति ] । कुरुवकशाखापरिलग्नं—कुरुवकाख्यक्षुपविटपसंसक्तम् । परिपालयतं—अपेक्षेथाम् । इदन्तु नायके सव्याजसन्दर्शनं मुग्धाया इत्यवगन्तव्यम् । तथा च कामसूत्रे,—"दूरे स्थिता, पश्यतु मामिति मन्यमाना परिजनं समदनविकारमाभाषते" इति ।

(८१) सव्याजं—छलपूर्वकम् । विलम्ब्य इति ।—अनेन सख्यौ पूर्वं प्रस्थिते, अनन्तरं शकुन्तला । [ अनेन प्रतिमुखसन्धौ प्रदर्शयिष्यमाणस्य "दर्भाङ्कुरेण चरणः क्षतः" इत्यस्य सूचना कृता । सह सखीभ्यामित्यनेन च शृङ्गारसञ्चारिभावः लज्जा ध्वनिता । अत्र च संहतभेदनात् भेदो नाम मुखसन्धेः शेषाङ्गं प्रदर्शितम् । यदुक्तं दर्पणे,—"भेदः संहतभेदनम्" इति । ]

(८२) अनुयात्रिकान्—अनुचरान् । निवेशयामि—स्थापयामि । शकुन्तलादर्शनव्यापारात्—शकुन्तलादर्शनविषयात् । "जुगुप्सा-विराम-प्रमादार्थानामुपसंख्यानम्" इति वार्त्तिकसूत्रात् अपादाने पञ्चमी] । आत्मानं—मनः । निवर्त्तयितुम्—इतः आनेतुम् ।

मम हि,—

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य (८३) ॥३६॥

[ इति निष्क्रान्ताः सर्वे ]

इति प्रथमोऽङ्कः । (८४)

(८३) सम्प्रति चित्तावस्थां वर्णयन्नाह, गच्छतीति ।—मम शरीरं पुरः अग्रतः गच्छति, प्रतिवातं वायुं प्रति [प्रातिकूल्यार्थे अव्ययीभावः ; अथवा असमस्तं पदद्वयमेतत्, प्रतिशब्दयोगे द्वितीया] नीयमानस्य चाल्यमानस्य केतोः ध्वजस्य चीनांशुकमिव चीनदेशजातं वस्त्रमिव [अतिसूक्ष्मत्वात् चाञ्चल्यातिशयसूचनार्थं चीनेतिपदमुपात्तम् । चीनशब्दश्च विख्यातदेशवाचकः भाषान्तरप्रयोज्यः, कविना तु समाकृष्य लिखितः संस्कृते तद्दर्शनात् ।] असंस्थितं चञ्चलम् । [असंस्तुतमिति पाठे—अपरिचितमित्यर्थः । ("संस्तवः स्यात् परिचयः" इत्यमरः) । पाठे चात्र—यथा अपरिचितः कोऽपि सहसा कमपि परित्यज्य गच्छति, तथा इदं सम्भाव्यते इति गम्योत्प्रेक्षा । अनेन च नीरसकाष्ठवत् असारत्वं शरीरस्य ध्वन्यते । तापसकन्यायाम् अनुरक्तत्वादिति भावः ।] चेतः पश्चात् तापसकन्यां प्रतीति भावः, धावति द्रुतं चलति । यथा ध्वजोऽग्रे याति तदुपरि स्थितं वस्त्रन्तु वायुगत्या पश्चात् प्रसरति तद्वदिति भावः । [ उपमाऽलङ्कारः । तथा—शरीरं पुरः शनैः गच्छति, चित्तन्तु तद्वियुक्तं पश्चात् द्रुतं चलति, इति असम्बन्धे सम्बन्धरूपा, सम्बन्धेऽसम्बन्धरूपा च अतिशयोक्तिद्वयी ।] आर्या वृत्तम् ॥ ३६ ॥

(८४) अङ्कः—नाटकपरिच्छेदः । तथा च नाट्यशास्त्रे,—"अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान् । नानाविधानयुक्तो यस्मात् तस्माद् भवेदङ्कः ॥" इति । अत्र अन्ते सकलपात्रनिर्गमः, प्राप्तस्य तपोवननिरोधस्य अप्रकटनं च, अङ्कलक्षणप्राप्तत्वात् सुतरां विन्यस्तम् । तथा च—"राज्यदेशादिविप्लवः ।......नगराद्यवरोधनम्...एभिर्विवर्जितः" इति "अन्तनिष्क्रान्तनिखिलपात्रोऽङ्कः" इति च दर्पणोक्तेः ।

# प्रथमाङ्कस्य संक्षिप्त-विवृतिः ।

अथ तत्रभवान् सकल-कविकुल-गीयमानकीर्त्तिः मूर्त्तिरिव वाचस्पतेर्द्वितीया महाकविः कालिदासः ज्ञानोज्ज्वलपावक-पूतहाटक-नवनाटक प्रणयनकौतुकी नवनव-रसधाराभिः भुवि अपरामिवावतारयन्नमन्दमन्दाकिनीम्, आदौ स्वाभीष्टदेव-भगवत्कृत-भावनविभूति-विशेषाभिधानगर्भां संसदि समासीददशेषजनाशीर्वचनपटीयसीं प्राणनाय नान्दीममन्दगुणसन्दोह-सन्दानिताम् ।

अनन्तरं नटीसूत्रधारौ सरसभाषणमुग्धानिव बुद्धा विशुद्धाशयान् सभ्यनिचयान्, भूयोऽपि तान् भावभावितान् भावयितुं, श्रावयित्वा च स्ववदशेष-रससञ्चार चारु नाटकमिदम् अभिज्ञानशकुन्तलं कवेः कालिदासस्य प्रज्ञाप्रचण्ड-पण्डितमण्डली-हृदयोपलनिकषखण्ड-कषितहाटकनिभमिति, रचयित्वा च विकराल कालकवल-भीषणमपि निदाघकालं, पाटलकुसुमगन्धसुगन्ध-गन्धवाहसन्धानैः, सुशीतलसलिलाव-गाहबन्धनैः, विषमक्लमानुसमघर्म्मभानु-भानुभिः मर्मभितप्तानाम् अशर्म्मशान्त्यविधानार्थम् अनातपप्रदेशे सुखशयनसंविधानैः, सायं वहिर्विहर्त्तुमुद्यतानाञ्च दिवसान्तर-सम्भैः अमन्दमान्द्यतासम्पादनैः, वसन्ततोऽपि प्रकृष्टमहिमानम् ; जनयित्वा च सरस-कोमलपदावली-ललितेन गीतेन रागपरिवाहिणा सभ्यानभ्यधिकमुग्धान्, असूचयतां मृगया-विहारिणं मृगानुसारिणं दुष्मन्तम् । स च सारथिसनाथे मृगपोतमनुसरति स्यन्दने निषीदन् उपवर्णयन् मार्गणपातभीतिविह्वलमृगमार्गे मार्गणानि, प्रदर्शयन् प्रचण्डस्यन्दनजवजनित-भूमण्डलखण्डमण्डनानि, वर्त्मनि सपदि प्रतिनिवर्त्तितः तापस-युगलेन । ततश्च प्रतिगृह्य तयोराशिषं, समभ्यर्थितश्च ताभ्यां गुरोः कण्वस्य शकुन्तलाधिष्ठितमाश्रमपदमभिगन्तुं, विसर्ज्य च तौ तापसवरौ, पथि सञ्चरन्, दर्शयित्वा च सारथिं विविधतपोवनसूचकान् कीरनीड़-नीवार-निवहान्, समुपागताश्रमाभ्यर्ण-भूमिः, दक्षबाहुस्पन्दनसूचितशुभनिमित्तः, सहसा शुश्राव तपोवनोपकण्ठे कलहंस-कुल-कलकण्ठसंवादिनं त्रिभुवनललामभूतरमणीचयकण्ठध्वनिम् ।

अथ असौ भूपालः भूतहान्तरालेऽन्तरितशान्तमूर्त्तिः अत्यन्तमन्तःपुरविहारक्षमा-मक्षमामिह तपश्चरणकर्म्मणि अवलोकयन् शकुन्तलातनुम्, अतनु गर्हयन् अर्हणीय-स्वभावमपि त्रिभुवनजनपूजनार्हं तज्जनकं तपोधनं कण्वं, प्रशस्य च क्षणं जरठतरु-वल्कलमण्डनैरपि अखण्डितमण्डनशोभां शकुन्तलां, सलीलं खेलन्तीषु च तासु सखीषु,

सपदि भ्रमराभिभवाभिभूतां तामपश्यत् । ततः याचमानायाश्च तस्यां भ्रमरनिर्भर-पीड़नादात्मानं मोचयितुम्, अभिहितादाश्च सखीभ्यां "दुष्मन्तमाक्रन्द" इति, सहसा उपसर्पन्, अन्यथार्पितात्मपरिचयः, सम्यक्समासादितशकुन्तलोदन्तः, सम्प्रधार्य्य च क्षत्रपरिग्रहार्हतां तस्याः, तत्र नितरामरज्यत । सापि दुष्मन्तमन्तर्निध्यायन्ती नितान्तमनङ्गाधीनतामागता ।

अथ नृपं प्रति सखीकृतस्वगतललितालापाकर्णनजातव्याजरोषायां शकुन्तलायां भवनाभिमुखगमनमभि समुत्सुकायां वृक्षसेचन-ऋणशोधनच्छलेन निवारितायाश्च सख्या प्रियंवदया, नृपतिः समासाद्य ऋणमोचन व्यपदेशं, प्रदाय च अदेयमपि स्वाङ्गसङ्ग-सुन्दरं स्वनामाङ्कितमङ्गुरीयकं, सङ्गोप्य च तत् "राज्ञः प्रतिग्रहोऽयम्" इत्युक्त्वा, स्वस्मिन् शकुन्तलानुरागं क्षणमचिन्तयत् । इत्थमभिक्रान्ते च समये अतर्कितसंप्रवृत्तं स्वसेनासमूहसंक्षोभितचकितमृगयूथं तुरगखुरक्षुण्णक्षौणीरेणुरूषितलम्बमानसरस-वल्कलसनाथशाखशाखिव्रातं स्यन्दनालोकनभीतिचकितप्रचलद्गिभचलनविपर्य्यस्त-लतापादपमश्रौषीत् अश्रुतपूर्वमाश्रमोपरोधम् । श्रुत्वा च तं भीतभीतासु तासु पर्य्याकुलितगीतमीकम् आश्रमं प्रति समुत्सुकासु शकुन्तलाप्रमुखासु रमणीषु, विसर्ज्य च ताः मधुरसम्भाषणादिभिः, राजा दुष्मन्तः शकुन्तला चिन्तया नितान्तस्तिमितान्त-रात्मा प्रतस्थे खलु स्वास्थ्यमापादयितुम् आश्रमस्थसमस्तविपर्य्यस्तप्राणिनः । इति ।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन कुलपतिकल्प-"वि, ए" इत्युपनामक: श्रीमज्जीवा-नन्द विद्यासागरविरचितायां तदात्मजाभ्यां श्रीमदाशुबोध विद्याभूषण-श्रीमन्नित्यबोध विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां प्रथमोऽङ्कः ॥१॥

# द्वितीयोऽङ्कः।

ततः प्रविशति विदूषकः। (१)

विदू। [निश्वस्य]। भो हदो ह्मि एदस्स मिअआसीलस्स रण्णो वअस्सभावेण णिव्विस्सो, (२) अअं मिओ, अअं वराहो, अअं सद्दूला त्ति, मज्झन्दिणे वि गिह्मे विरलपादवच्छाआसु (३)

(क) भो हतोऽस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्विस्सः, 'अयं मृगः', 'अयं वराहः', 'अयं शार्दूलः' इति मध्यन्दिनेऽपि ग्रीष्मे विरलपादपच्छायासु

(१) विदूषकः—शृङ्गारिनायकस्य नर्म्मसचिवः। उक्तञ्च दर्पणे।—"शृङ्गारस्य सहायाः विटचेटविदूषकाद्याः स्युः। भक्ताः नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः॥" इति। विदूषकलक्षणञ्च तत्रैव।—"कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः। हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः॥" इति। इयं पताका, प्रासङ्गिकस्य अस्य वृत्तस्य आ समाप्तिव्याप्तेः।—"व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते" इति दर्पणोक्तेः। न चात्र "आ गर्भाद्वा विमर्षाद्वा पताका विनिवर्त्तते" इति भरतोक्तेः, अस्य खलु विदूषकचरितस्य निर्व्वहणपर्य्यन्तस्थायित्वात् नेयं पताका इति शङ्कनीयम्; अभिनवगुप्ताचार्य्यैः अत्र पताकापदेन गौण्या वृत्त्या नायकफलान्तरस्य व्याख्यातत्वात्। तथा च उक्तं तैः,—"पताका नायकफलं, निर्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिः दर्शनात्" इति। अस्य प्राच्या भाषा पाठ्या,—"प्राच्या विदूषकादीनाम्" इति दर्पणोक्तेः।

(२) ["हतोऽस्मि" इत्यत्र "दिष्टम्" इति पाठान्तरं वर्त्तते। तत्र दिष्टमिति भिन्नं वाक्यं, वक्ष्यमाणं सकलवाक्यजातं कर्म्म। दिष्टमिति पाठे च—दुर्भाग्यमित्यर्थः; निर्विशेषण-भाग्यादिपदस्य प्रायेण दुर्भाग्यपरतायाः दर्शनात्]। वयस्यभावेन—सख्येन। निर्व्विस्सः—प्राप्तनिर्वेदः, नितरां दुःखित इति यावत्।

(३) मध्यन्दिनेऽपि—मध्याह्नेऽपि [दिनस्य मध्यम् इति राजदन्तादित्वात् परनिपातः, अलुक्समासश्च]। विरलेति।—विरला अल्पाल्पा पादपानां वृक्षाणां छाया यासु तथोक्तासु। ["ग्रीष्मविरलपादपच्छायासु" इति समस्तपाठे—निदाघजनिता विरलपादपच्छाया यत्र इति समासः]।

वणराइसुं आहिण्डिअ पत्तसङ्करकसाअविरसाइं उण्हकडुआइं पीअन्ति गिरिणईसलिलाइं, (४) अणिअदवेलञ्च (५) उण्होसमंसभूइट्ठं भुज्जीअदि, तुरअगआणाञ्च सद्देण रत्तिं पि मे णत्थि पकामसुइदव्वं; (६) महन्ते ज्जेव पच्चूसे दासीए पुत्तेहिं साउणिअलुद्धेहिं कण्णोवघादिणा वणगमणकोलाहलेण पड़िबोधिदो ह्मि। (७) एत्तिकेण वि मे पीड़ा ण संवुत्ता,—जदो अअं गण्डस्स उवरि विप्फोड़ओ संवुत्तो; (८) तेण हि किल

वनराजिषु आहिण्ड्य पत्रसङ्करकषायविरसानि उष्णकटुकानि पीयन्ते गिरिणदीसलिलानि, अनियतवेलञ्च उष्णोष्णमांसभूयिष्ठं भुज्यते, तुरगगजानाञ्च शब्देन रात्रिमपि मे नास्ति प्रकामशयितव्यम्; महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिकलुब्धैः कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि। एतावताऽपि मे पीड़ा न संवृत्ता,—यतोऽयं

(४) आहिण्ड्य—परिभ्रम्य। [अत्र "आहिण्डाते अटवीतः अटवीम्" इति पाठे—भ्रम्यते वनात् वनान्तरमित्यर्थः [अपादाने पञ्चमी, ततः तसिल्प्रत्ययः]। पत्रेति।—पत्राणां सङ्करेण सम्मेलनेन, संमिश्रणेन इत्यर्थः, कषायाणि, अत एव विरसानि विस्वादानि। "गिरिणदी" इत्यत्र "गिरिनद्यादीनां वा" इति (८।४।१०) वार्त्तिकसूत्रात् णत्वम्।

(५) अपरं निर्वेदकारणमाह, अनियतवेलमिति।—अनियतवेलम्—अनिश्चितसमयम्। कदाचित् मध्याह्ने, कदाचित् सायाह्ने, रात्रौ वा इत्यर्थः।

(६) उष्णोष्णमांसभूयिष्ठम्—उष्णप्रकारमांसबहुलम्। ["प्रकारे गुणवचनस्य" (८।१।१२पा०) इति उष्णशब्दस्य द्विरुक्तिः। "शूल्यमांसभूयिष्ठः आहारः" इति पाठे—लौहशलाकया पक्वमांसबहुल इत्यर्थः]। रात्रिमपि—कृत्स्नां रात्रिं व्याप्य इत्यर्थः, [अत्यन्तसंयोगे द्वितीया]। प्रकामशयितव्यं—स्वच्छन्दतः शयनमित्यर्थः।

(७) दास्याः पुत्रैः—इतरजनैरित्यर्थः। शाकुनिकलुब्धैः—शकुनैः पक्षिभिः जीवन्तीति शाकुनिकाः, ते च ते लुब्धाश्चेति तैः, मृगयुविशेषैरित्यर्थः। [अत्र पाञ्चजीविलकथनात् व्याधानां मध्ये निकृष्टत्वमुक्त्वा अतितिरस्कारः ध्वनितः]। कर्णोपघातिना—श्रोत्रकटुनेत्यर्थः। प्रतिबोधितः—जागरितः।

(८) एतावतापि—पूर्वोक्तहेतुनापि [इत्थंभूतलक्षणे तृतीया]। संवृत्ता—सञ्जाता। एतावत्क्लेशमनुभूयापि न मे दुःखं दूरीभूतमित्यर्थः। अतः अपरमेवाह, यत इति।—

अह्मेसुं अवहीणेसुं (९) तत्थभवदा मिआणुसारिणा अस्समपदं पविट्टेण मम अधस्सदाए (१०) सउन्तला णाम का वि तवस्सि-कस्सआ दिट्ठा । तं पेक्खिअ सम्पदं णअरगमणस्स कधम्पि ण करेदि, एवं ज्जेव चिन्तअन्तस्स मे पहादा अच्छिसुं (११) रअणी ; का गदी, जाव णं किदआआरपरिग्गहं (१२) पिअ-वअस्सं पेक्खामि । [परिक्रम्यावलोक्य च] एसो बाणासणहत्थो हिअअणिहिदपिअअणो (१३) वणपुप्फमालाहारी इदो ज्जेव

गण्डस्योपरि विस्फोटकः संवृत्तः ; तेन हि किल अस्मासु अवहीनेषु तत्रभवता मृगानु-सारिणा आश्रमपदं प्रविष्टेन ममाधन्यतया शकुन्तला नाम कापि तपस्विकन्यका दृष्टा । तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न करोति, एवमेव चिन्तयतो मे प्रभाता अक्षिषु रजनी ; का गतिर्यावदेनं कृताचारपरिग्रहं प्रियवयस्यं प्रेक्षे । एष

गण्डस्य—कपोलस्य स्फोटस्य वा । [उपरिशब्दयोगे "षष्ठ्यतसर्थप्रत्ययेन"(२।३।३० पा०) इति षष्ठी । "विस्फोटक" इत्यत्र "पिण्डः" "पिटकः" इति च पाठान्तरम् ; अर्थस्तु पूर्ववत् सुगमः । अत्रायमाभाणकः—"स्फोटस्योपरि स्फोटः" इत्यर्थः । प्रकृते तु—एक-स्मिन् दुःखकारणे सत्येव अपरं दुःखकारणमित्यर्थः । अप्रस्तुतप्रशंसाऽलङ्कारः ] ।

(९) अवहीनेषु—पश्चात्पतितेषु ।

(१०) अधन्यतया—दौर्भाग्येण इत्यर्थः ।

(११) कापि—अज्ञातकुलशीला इत्यर्थः, [एतेन,'तपस्विकन्यका' इत्यनेन च तस्य अयोग्यत्वं ध्वनितम् ] । अक्षिषु—नेत्रेषु । [ अत्र "अद्यापि तस्य तामेव चिन्तयतः अक्ष्णोः प्रभातासीत्" इति पाठे—तां शकुन्तलां, चिन्तयतः भावयतः, दुष्मन्तस्य अद्यापि अक्ष्णोः चक्षुषोः, प्रभाता व्युष्टा आसीत्, रजनी इति शेषः, इत्यर्थः] ।

(१२) कृताचारपरिग्रहं—कृतः अनुष्ठितः आचारस्य मृगयाव्यापारानुष्ठानस्य परिग्रहः वेशग्रहणं येन तथोक्तम् । [ कृतदारपरिग्रहम् इत्यपपाठः ; तदानीं तस्य शकुन्तलाया ग्रहणाभावात् पूर्वरागमात्रस्यैव जातत्वादिति] ।

(१३) बाणासनहस्तः—बाणाः अस्यन्ते क्षिप्यन्ते अनेनेति बाणासनं धनुः, तत् हस्ते यस्य तथोक्तः, धनुर्धर इत्यर्थः । हृदयेति ।—हृदये निहितः स्थापितः प्रियजनः येन तादृशः, प्रियतमामन्तः स्मरन्नित्यर्थः । [ अत्र "बाणासणहत्थाहिं जवणीहिं वणपुप्फ-मालाधारिणीहिं पडिवुदो इध एव्व आअच्छदि पिअवअस्सो" इति पाठे—"बाणासन

आश्रच्छदि पिअवअस्सो । भोदु अङ्गभङ्गविअलो (१४) भविअ चिट्ठिस्सं, एव्वम्पि णाम विस्सामं लहेअं । (क)

[ इति दण्डकाष्ठमवलम्ब्य स्थितः ]।

ततः प्रविशति यथानिर्दिष्टो राजा । (१५)

राजा । [आत्मगतम्] ।—

कामं प्रिया न सुलभा, मनस्तु तद्भावदर्शनाश्वासि ।
अकृतार्थेऽपि मनसिजे, रतिमुभयप्रार्थना कुरुते (१६) ॥१॥

बाणासनहस्तो हृदयनिहितप्रियजनो वनपुष्पमालाधारी इत एवागच्छति प्रियवयस्यः । भवतु अङ्गभङ्गविकलो भूत्वा स्थास्यामि, एवमपि नाम विश्रामं लभेय ।

हस्ताभिः यवनीभिः परिवृतः इत एव आगच्छति प्रियवयस्यः इति (सं) । अत्र यवन्यः खलु सञ्चारिकाविशेषाः । यदुक्तं मातृगुप्ताचार्य्यैः,—"गन्धकृत्याविचारिण्यः तथोपवनसञ्चराः । यामेषु च नियुक्तानां यामशुद्धिविशारदाः ॥ सञ्चारिकास्तु ता ज्ञेया यवन्योऽपि मताः क्वचित् ॥" इति ]।

(१४) अङ्गेति ।—अङ्गानाम् अवयवानां भङ्गेन उन्नतानतस्थानपरिधावनजनितेन उपमर्देनेत्यर्थः, विकलः विवशः ।

(१५) अत्र [ "यथा निर्द्दिष्टपरिवारः राजा" इति पाठे—निरुक्तयवनीगण-समावृत इत्यर्थः ]।

(१६) काममिति ।—प्रिया शकुन्तला कामं अत्यर्थम् इत्यर्थः, न सुलभा न सुप्रापा, अथवा [सा इत्यधाहार्य्यं] शकुन्तला कामम् अत्यर्थं प्रिया, प्रियतमा । तर्हि तूष्णीं स्थीय-ताम् ; किं वृथा खेदेन? इत्याह—न सुलभा इति,—न सुखेन लभ्या, गुरुजनाधीनत्वात् गुरोरपि दूरवर्त्तित्वादिति भावः । यद्येवं दुर्लभा, तर्हि किं प्रयत्नेन? इत्याह,—तु किन्तु मनः तस्या भावस्य मयि अनुरागव्यञ्जकताहृशसव्याजावलोकनादिरूपस्य दर्शनेन यः आश्वासः तद्युक्तम् आश्वासाय तद्भावावलोकनार्थं यतते इत्यर्थः । ["तद्भावदर्शनायासि" इति पाठे—तद्भावदर्शने तच्चेष्टावलोकने आयासि प्रयासयुक्तं, प्रयत्नपूर्वकं लालस-मित्यर्थः ; तु-शब्दोऽत्र खेदातिशयद्योतकः ] तथा हि, मनसिजे कामे अकृतार्थेऽपि असङ्गत्या अकृतकार्य्येऽपि इति भावः, उभयोः प्रियायाः प्रियस्य मम चेत्यर्थः, प्रार्थना समागमलालसा, रतिं प्रीतिम् ; 'अहं तत्र गमिष्यामि तामेव आलपिष्यामि'

[स्मितं कृत्वा]। एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते (१७) कुतः ?—

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया,
यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।

इत्थंरूपं प्रत्याशाजनितं सन्तोषमित्यर्थः कुरुते। अथ च, कामः कन्दर्पः अकृतार्थः तथापि रतिं सुरतं कुरुते। अथवा, कामे कन्दर्पे अकृतार्थेऽपि अलब्धरतित्वादिति भावः, रतिं कामभार्य्यां कुरुते [इति विरोधाभासः। अनुरागार्थे उभयत्र विरोधस्य परिहारात्; तथा सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासस्य, इति उभयोः सङ्करः। अनेन विलासनाम नाटकाङ्गं प्रदर्शितम्।—"समीहा रतिभोगार्था विलास इति कथ्यते" इत्युक्तेः]। आर्य्या वृत्तम्॥ १॥

(१७) स्मितं कृत्वा—ईषत् हास्यं कृत्वा। शकुन्तलायाः शृङ्गारजनितविचेष्टितानि तथ्यान्यपि अन्यथा सम्भाव्य 'राज्ञः स्मितोदयः' इति भाव्यम्। प्रायेण कामिनां असत्यऽपि वास्तवबुद्धिर्भवतीति भावः। तदेव स्वाभिलषितं विवृणोति, एवमिति।—एवम्—इत्थम्। आत्माभिप्रायेति।—आत्मनः स्वस्य, अभिप्रायेण आशयेन, सम्भाविता अनुमिता, इष्ट-जनस्य प्रियजनस्य, चित्तवृत्तिः मनोऽभिप्रायः येन तथोक्तः; यथाऽहं तस्यां लालसः सापि तथैव मयीति मन्यमान इत्यर्थः। प्रार्थयिता—प्रियजनप्रणयलिप्सुरित्यर्थः। विप्र-लभ्यते—प्रतार्य्यते। ["विडम्ब्यते" इति पाठान्तरम्—उभयत्रापि कर्म्मकर्त्तरि लट्]। अर्थस्तु पूर्ववत्। [अत्र अहम् इति विशेषे वक्तव्ये, प्रार्थयिता इति सामान्येन कथनात् अप्रस्तुतप्रशंसाऽलङ्कारः]।

(१८) तदेव विप्रलम्भकारणं स्पष्टयति, स्निग्धमिति।—अन्यतः मदन्यस्मिन् विषयेऽपि नयने नेत्रे प्रेरयन्त्या निक्षिपन्त्या तया यत् स्निग्धं सानुरागमित्यर्थः, वीक्षि-तम् अवलोकितं; [स्निग्धदृष्टिलक्षणं यथा,—"विकासिस्निग्धमधुरा चतुरं बिभ्रती भ्रुवौ। कटाक्षिणी साभिलाषा दृष्टिः स्निग्धाऽभिधीयते॥" इति।] नितम्बयोः गुरुतया भार-वत्तया [अत्र नितम्बयोरिति द्विवचनेन तयोर्मध्यनिम्नता, गौरवाधिक्यम्, अत एव सम्यक् यौवनविकासश्च ध्वन्यते।] विलासादिव विभ्रमकलादिव इत्यर्थः,(पदमेतत् सर्वत्रान्वयि)। यत् मन्दं मृदु यथा तथा यातं गतं, [सर्वत्र भावे क्तप्रत्ययः] विलम्बो भवतु इति व्याजेन इति भावः। तथा मा गाः न गच्छ [इण् धातोः लुङ् मध्यमपुरुषैकवचनं, गादेशः। माङ्योगे अडागमाभावः।] इति उपरुद्धया सख्या प्रियंवदया निषिद्धयेत्यर्थः,

मा गा इत्युपरुद्धया यदपि तत् सासूयमुक्ता सखी,
सर्वं तत् किल मत्परायणमहो ! कामः स्वतां पश्यति(१८)॥२॥

विदू। [तथा स्थित एव]। भो महाराअ ! ण मे हत्थो पस-रदि, ता वाआमित्तेण जआवीअसि, जअदु जअदु भवं।(ख)(१९)

राजा। [विलोक्य सस्मितम्] कुतोऽयं गात्रोपघातः ? (२०)

विदू। कधं कुदो त्ति ?—सअं ज्जेव अच्छिं भञ्जिअ (२१) अस्सुकारणं पुच्छसि ? (ग)

(ख) भो महाराज ! न मे हस्तः प्रसरति, तद्वाचामात्रेण जाप्यसे, जयति जयति भवान्।

(ग) कथं कुत इति ? स्वयमेव अक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि ?

तया शकुन्तलया सा अतिप्रियतमा सखी प्रियंवदा यदपि यच्च तत् सासूयं सेर्ष्यम् उक्ता, तत्र स्थित्यर्थमिति भावः। तत् सर्वं स्निग्धदर्शनमन्दगमनसेर्ष्यवचनादि अहमेव परम् अयनम् आश्रयः विषय इत्यर्थः, यस्य तथाभूतं, मदर्थे कृतमित्यर्थः। अहो आश्चर्यं, कामः मदनाविष्ट इत्यर्थः, ["कामी" इति पाठे—मदनाविष्ट इत्यर्थः] स्वताम् आत्मीयताम्, अन्यविषयाणामपि क्रियाणां स्वविषयत्वमित्यर्थः, पश्यति सम्भावयतीति यावत्। [कामः स्वतां पश्यतीति सामान्येन पूर्वार्द्धगतवाक्यानां समर्थनात् अर्थान्तर-न्यासः। पूर्वार्द्धे विलासादिव इति सम्भावनामात्रत्वात् हेतुनिर्देशाच्च हेतूत्प्रेक्षा, तथा एकत्रस्थितेन 'विलासादिव' इति पदेन सकलवाक्यानामुद्दीपनात् मध्यकारक-दीपकालङ्कारः; गमनस्वभाववर्णनात् स्वभावोक्तिश्च, इत्येषां संसृष्टिः]। शार्दूल-विक्रीडितं वृत्तम्। ॥ २ ॥

(१९) ['भो महाराज !' इत्यत्र 'वयस्य !' इति पाठान्तरम्।—"वयस्येति। तथा विदूषकेण च" इति दर्पणवाक्यात्; तथा "हस्तः" इत्यत्र "हस्तपादम्" इति पाठे,—प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः]। जाप्यसे—जययुक्तः कार्य्यसे। ["क्रीङ्जीनां णौ" (६।१।४८ पा०) इति आत्वम्। "अर्त्तिह्रीव्लीरीक्नूयी—"(७।३।३६) इत्यादिना पुक् च। "जआवीअसि" इत्यत्र "जीआवइस्सम्" इति पाठे—'जीव्यसे' इति (सं)]।

(२०) गात्रोपघातः—गात्रस्य उपघातः उपमर्दः, अङ्गवैकल्यमिति यावत्।

(२१) अच्छि भञ्जिआ—नेत्रमाहत्येत्यर्थः।

राजा। न खलु अवगच्छामि, भिन्नार्थम् (२२) अभिधीयताम्।

विदू। जं वेदसो खुज्जस्स लीलं विडम्बेदि, तं किं अत्तणो पहावेण, अधवा णईवेअस्स ? (घ) (२३)

राजा। नदीवेगस्तत्र कारणम्।

विदू। मम वि भवं। (ङ)

राजा। कथमिव ?

विदू। जुत्तं णाम एव्वं,—जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं (२४) पदेसं च वणचलवित्तिणा होदव्वं त्ति। किं एत्थ मन्तीअदु ? अहं उण बह्मणो, पच्चहं सापदाणुसरणेहिं संक्खोहिदसन्धिबन्धणाणं (२५) अत्तणो अङ्गाणं

(घ) यद्वेतसः कुब्जस्य लीलां विडम्बयति, तत् किमात्मनः प्रभावेण, अथवा नदीवेगस्य ?

(ङ) ममापि भवान्।

(च) युक्तं नामैवं,—यत्त्वया राज्यकार्य्याणि उज्झित्वा तादृशमस्खलितपदं प्रदेशञ्च वनचरवृत्तिना भवितव्यमिति। किमत्र मन्त्र्यताम् ? अहं पुनर्ब्राह्मणः, प्रत्यहं

(२२) भिन्नार्थं—विप्रकलितार्थं, स्पष्टार्थमित्यर्थः।

(२३) वेतसः—लताविशेषः। कुब्जस्य लीलां—कुब्जस्य उन्नतपृष्ठस्य लीलां विभ्रमं, वक्रभावमित्यर्थः। विडम्बयति—अनुकरोति। ['अथवा' इत्यत्र "ननु" इति पाठान्तरं, ननु परमताक्षेपे]। नदीवेगस्य—'प्रभावेण' इति पूर्व्वेणान्वयः ; त्वयैवेदं कृतमिति भावः। [अत्र सधर्म्मयोः राजनदीवेगयोः विम्बप्रतिविम्बभावात् दृष्टान्तालङ्कारः]।

(२४) दृष्टान्तं प्रदर्श्य प्रकृते तत् सङ्क्रमयन्नाह, युक्तं नामेति।—नाम सम्भावनायाम्। अस्खलितेति।—अस्खलितम् अभ्रष्ट पदं पदविन्यासो यत्र तादृशम्, इति प्रदेशविशेषणपक्षे ; अबन्धुरत्वादिति भावः। राजकार्य्यविशेषणपक्षे तु—पुरुषानुक्रमेण अभ्रष्टं पदम् आधिपत्यं यत्र तथाभूतम्। [अत्र च विभक्तिविपरिणामेनान्वयः, शब्दश्लेषालङ्कारः ; द्वयोः प्रकृतत्वात्]।

(२५) वनचरवृत्तिना—व्याधवृत्तिना। श्वापदानुसरणैरिति।—श्वनः कुक्कुरात्

अणीसो ह्मि ; ( २६ ) ता पसीद मे, एकाहम्पि दाव विसमीअदु । ( च )

राजा । [ आत्मगतम् ] । अयमेवमाह, ममापि कण्वसुताम् अनुस्मृत्य मृगयां प्रति (२७) निरुत्सुकं चेतः । तथाहि,—

न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु ।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः (२८) ॥ ३ ॥

श्वापदानुसरणैः संक्षोभितसन्धिबन्धनानाम् आत्मनोऽङ्गानाम् अनीशोऽस्मि ; तत् प्रसीद मे, एकाहमपि तावद्विश्राम्यताम् ।

श्वापदो येषां ते श्वापदाः सिंहव्याघ्रादयः ; अथवा श्वभिः कुक्कुरैः आपद्यन्ते विपद्यन्ते इति श्वापदाः [पूर्वत्र—निपातने अकारान्तता, उत्तरत्र—कर्म्मणि घञ् ; अथवा शुनः पादा इव पादा येषामिति । ] श्वानो हि तान् पदवीम् अन्विष्य वहिष्कुर्वन्तीति तेषां श्वापदत्वं बोध्यम् । तेषाम् अनुसरणैः,—अनुगमनैः । संक्षोभितेति ।—संक्षोभितं सम्यक् चालितं सन्धिबन्धनं संयोगसन्धानस्थानं येषां तथाभूतानाम् ।

(२६) अनीशः—अप्रभुः, मात्राणि मे वशे न तिष्ठन्तीति भावः ।

(२७) कण्वसुतां—शकुन्तलाम् । [अत्र "काश्यपसुताम्" इति पाठे—स एवार्थः । उभयत्र अभिजातेयं, साधुचरित्रा च इति ध्वन्यते] । अनुस्मृत्य—मनसिकृत्य । ["मृगयां प्रति" इत्यत्र "मृगयाविक्लवम्" इति पाठे—मृगयापराङ्मुखमित्यर्थः । अत्र स्त्रीलिङ्ग-निर्देशेन, यथा कश्चित् अनुरूपां वरवर्णिनीमासाद्य पूर्व्वस्त्रियां वीतरागः भवेत्, तथा अयमिति ध्वन्यते ] ।

(२८) चेतसः निरौत्सुक्यजनितकार्य्यमाह, नेति ।—मृगेषु अधिज्यं मौर्वीयुक्तम्, आहितसायकं सशरम्, इदं प्रत्यक्षेण दृश्यमानं धनुः, नमयितुं कर्णान्तिकमाकृष्टुं न उत्सहिष्ये न उत्साहं करिष्यामि ; [ "न नमयितुमस्मि शक्तः" इति पाठे—न समर्थोऽस्मि इत्यर्थः । ] यस्मात्, यैः प्रियायाः शकुन्तलायाः सहवसतिम् एकत्राव-स्थानम् उपेत्य प्राप्य लोचनयोः नयनयोः कान्तेः शोभायाः संविभागः सम्यक् विभजनं कृत इव । [ अत्र "मुग्धविलोकितोपदेशः" इति प्राचीनसम्मतः पाठः ;

विदू। [राज्ञो मुखम् अवलोक्य।] अत्तभवं किम्पि हिअए कदुअ मन्तेदि, अरस्से क्खु मए रुदिदं। (ञ) (२९)

राजा। [सस्मितम्]। अनतिक्रमणीयं सुहृद्वाक्यम् इति स्थितोऽस्मि।

विदू। [सपरितोषम्।] तेण हि तुमं चिरं जीव। (ज)

[इति उत्थातुम् इच्छति]।

राजा। तिष्ठ, शृणु मे सावशेषं वचः।

विदू। आणवेदु भवं। (झ)

(ञ) अत्रभवान् किमपि हृदये कृत्वा मन्त्रयति, अरण्ये खलु मया रुदितम्।

(ज) तेन हि त्वं चिरं जीव।

(झ) आज्ञापयतु भवान्।

---

तत्र—मुग्धानि स्वभावसुन्दराणि, अथवा बालस्वभावात् ब्रह्मचारित्वाच्च अनधिगत-हावभावानि यानि विलोकितानि [भावे क्तप्रत्ययः] दृष्टयः तेषाम् उपदेशः अज्ञात-ज्ञापनं कृत इव इत्यर्थः बोध्यव्यः। [अर्थे चास्मिन् "मृगैः उपदेशः कृत इव" इति कथनात् चटुलापाङ्गदर्शनं सहसैव जातम् इति ध्वन्यते; तथा प्रियायै उपदेशप्रदानेन तेषामपि मृगाणां स्वस्यापि गुरुसमत्वात् धनुषः उन्नमने उत्साहाभावः सुतरामुप-युज्यते इति भावः। उत्प्रेक्षालङ्कारः। तथा पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गञ्च। अनयोरङ्गाङ्गिभावेन सङ्करः। अत्र "एवमात्माभिप्रायः" इत्यादिना एतदन्तेन स्मृतिर्नाम तृतीया कामदशा प्रदर्शिता। तथा च,—"हर्षो यत्रान्यकार्य्येषु तदेकाग्रञ्च मानसम्। श्वासैः मनोरथैश्चापि चेष्टास्ताः स्मृतिरुच्यते॥" इत्युक्तेः।] ॥ २ ॥

(२९) अत्रभवान्—मान्यः ["इतराभ्योऽपि दृश्यन्ते" (५।३।१४ पा०) इति प्रथमायाः त्रल्प्रत्ययः, ततः भवच्छब्देन "सुपा सुप्" (२।१।४पा०) इति समासः]। किमपि—किञ्चित् अनिर्वचनीयम् इत्यर्थः, हृदये कृत्वा—विभाव्य, मन्त्रयति—कथयति, मदग्राव्यं मद्-ज्ञापनमस्तु वक्ति इत्यर्थः। अरण्ये रुदितं—वनरोदनवत् साश्वासप्रतिवाक्यशून्यमित्यर्थः। [अत्र गम्यमानबिम्बानुबिम्बभावत्वात् दृष्टान्तालङ्कारः]।

राजा। विश्रान्तेन भवता मम अन्यस्मिन् अनायासे कर्मणि सहायेन भवितव्यम्।

विदू। किं मोदअखज्जिआए? (ञ) (३०)

राजा। यद्वक्ष्यामि।

विदू। गहीदो क्खणो। (ट) (३१)

राजा। कः कोऽत्र भोः?

दौवारिकः। [प्रविश्य।] आणवेदु भट्टा। (ठ) (३२)

राजा। रैवतक! सेनापतिस्तावत् आहूयताम्।

दौवा। तह। [इति निष्क्रम्य सेनापतिना सह प्रविश्य।] एदु एदु अज्जो, एस आलावदिण्णअण्णो (३३) भट्टा इध ज्जेव चिट्ठदि, उवसप्पदु णं अज्जो। (ड)

(ञ) किं मोदकखादिकायाम्?

(ट) गृहीतः क्षणः।

(ठ) आज्ञापयतु भर्त्ता।

(ड) तथा। एतु एतु आर्य्यः, एष आलापदत्तकर्णो भर्त्ता इहैव तिष्ठति, उपसर्पतु एनम् आर्य्यः।

(३०) मोदकखादिकायां—मोदकः मिष्टद्रव्यविशेषः, तस्य खादिकायां खादने भक्षणे इत्यर्थः। [अत्र "मोदअखण्डिआए" इति पाठे—मोदकखण्डिकायाम् इति (सं), मोदकखण्डे इत्यर्थः। उभयत्र भावे कन्प्रत्ययः]।

(३१) गृहीतः क्षणः—क्षणः समयः, गृहीतः अवलम्बितः, अवहितोऽस्मीति भावः। अथवा क्षणः निर्व्यापारस्थितिः, गृहीतः स्वीकृतः, ("निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः" इत्यमरः) यथापूर्वं तिष्ठामि, न उत्तिष्ठामि, न वा अन्यत्र कुत्रापि गच्छामि इत्यर्थः।

(३२) "नीचेषु प्राकृतं भवेत्" इति वचनात् दौवारिकस्य नीचपात्रत्वात् प्राकृतं पाठ्यम्। "भट्टेति चाधमैः" इति दर्पणोक्तेः भट्टेति राजसम्बोधनं दौवारिकस्य।

(३३) आलापेति।—आलापे दत्तः कर्णः येन तथाविधः, आलापं श्रवणम्

सेना । [राजानम् अवलोक्य स्वगतम्] । दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता । तथाहि देवः, (३४)—

अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा,
रविकिरणसहिष्णुः, स्वेदलेशैरभिन्नः ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं,
गिरिचर इव नागः प्राणसारं बिभर्त्ति ( ३५ ) ॥ ४ ॥

[उपगम्य] । जयति जयति स्वामी । स्वामिन् ! गृहीत-

इत्यर्थः । [अत्र "आशावघनोत्कण्ठः भर्त्ता इतः एव दत्तदृष्टिः" इति पाठे—आदेशं प्रचरितुम् अत्रैव दृष्टिं दत्त्वा इत्यर्थः ।

(३४) दृष्टेति ।—दृष्टः दोषः प्राणिहिंसादिरूपः यस्यां तादृशी ; अथवा दृष्टः ज्ञातः मन्वादिवाक्येन इत्यर्थः, ["विशेषवाचकस्यापि सामान्यपरता" इति नियमात् लक्षणया ज्ञानार्थता दृश्धातोः] दोषः पापं यस्यां तादृशी । गुणायैव—उपकारायैव । ["गुण एव" इति पाठे—व्यस्तरूपकालङ्कारः । "राजा स्वामीति देवेति भृत्यैः" इति दर्पणोक्तेः, सेनापतिवाक्ये देवः स्वामीति प्रयोगः ] ।

(३५) मृगयाव्यापारम् उपकारपक्षे समर्थयमान आह, अनवरतेति ।—अनवरतं सततं धनुषः ज्याया मौर्व्याः आस्फालनेन कर्षणेन क्रूरं कठिनं वर्ष्म विग्रहः यस्य तथाभूतः, ("शरीरं वर्ष्म विग्रहः" इत्यमरः ) । [क्रूरकर्मेति पाठे—अनवरतधनुर्ज्याया आस्फालनं कर्षणमेव क्रूरं निष्ठुरं प्राणिवधफलकत्वादिति भावः, कर्म यस्य तादृशः । "क्रूरपूर्वम्" इति पाठे तु,—क्रूरः कठिनः, पूर्वः पूर्वभागः यस्मिन् इत्यर्थः । अनेन दिव्यास्त्रसहत्वं गात्रस्य व्यज्यते । गात्रविशेषणमेतत् ] । रविकिरणान्—सौरतापान्, सहिष्णुः—सोढुं समर्थः । ["सहिष्णु" इति अविसर्गपाठे—गात्रविशेषणम् ] । स्वेदलेशैः घर्मवारिबिन्दुभिः अभिन्नः युक्त इत्यर्थः, अथवा असम्बन्धः इत्यर्थः । स्वेदैः किमु वक्तव्यं तद्बिन्दुभिः अपि अस्पृष्ट इति तात्पर्य्यम् । [एतेन श्रमजयित्वं ध्वन्यते । विशेषणानां प्रथमतृतीयपादयोः सानुस्वारपाठे,—गात्रविशेषणानि बोध्यानि । विशेषणत्रयं यथायथं गजेऽपि योजनीयम् । तत्र धनुर्ज्यायां प्रियालतरुभूमौ आस्फालनेन कठिनदेहः । ("धनुःसंज्ञा प्रियालद्रौ राशिभेदे शरासने" इति विश्वः) ("ज्या मौर्व्वी च वसुन्धरा" इति धरणिः) अन्यत् सुगमम् । विशेषणत्रयेण शरीरस्य सबलत्वं, श्रमसहत्वं, घर्म्मनिःसरणेन लघुत्वं चोक्तम् ।

मृगप्रचारं सूचितश्वापदम् ( ३६ ) अरण्यं, तत् किम् अन्यत् अनुष्ठीयताम् ?

राजा । भद्रसेन ! भग्नोत्साहः कृतोऽस्मि मृगयापवादिना ( ३७ ) माधव्येन ।

सेना । [ जनान्तिकम् ] । सखे माधव्य ! स्थिरप्रतिज्ञो भव, अहं तावत् स्वामिनः चित्तम् अनुवर्त्तिष्ये । [ प्रकाशम् ] । देव ! प्रलपति एष वैधेयः, ननु प्रभुरेव निदर्शनम् । ( ३८ ) पश्यतु देवः,—

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः,
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।

---

गिरिचरः पर्वतीयः नागः गज इव । [अनेन उपमेये नृपेऽपि स्वातन्त्र्यं ध्वनितम्] । अपचितं कृशमपि व्यायतत्वात् प्रलम्बत्वात् अलक्ष्यं कृशत्वेन अप्रतीयमानमित्यर्थः । प्राणः बलं सारः स्थिरांशः यस्य तथाभूतं बलवत्तरमित्यर्थः, गात्रं बिभर्त्ति । [अत्र श्लेषानुप्राणितः उपमाऽलङ्कारः, साभिप्राय-विशेषणबहुलत्वात् परिकरालङ्कारश्च; एषां साङ्कर्य्यम् ] । मालिनी वृत्तम् । तल्लक्षण-प्रस्तारौ पूर्व्वत्र प्रदर्शितौ ॥ ४ ॥

(३६) गृहीतेति ।—गृहीतः ज्ञातः, मृगाणां प्रचारो यस्मिन् तथोक्तम् । सूचितश्वापदम्—सूचिताः शुनां प्रचारेण प्रकाशिताः श्वापदा यत्र तथोक्तम् । कुत्र प्रदेशे हरिणादयः सन्ति, कुत्र वा व्याघ्रादयः विद्यन्ते, इति सर्व्वमेव सम्यक् परिज्ञातमित्यर्थः ।

(३७) ["भग्नोत्साहः" इत्यत्र "मन्दोत्साहः" इति पाठे—निरुत्साहः इति समान एवार्थः ] । मृगयापवादिना—मृगायाम् अपवदति निन्दतीति तथोक्तेन, मृगयाविद्वेषिणा इत्यर्थः ।

( ३८ ) वैधेयः—मूढः, "अज्ञे मूढयथाजात-मूर्खवैधेयबालिशाः" इत्यमरः । निदर्शनं—प्रमाणं, दृष्टान्तभूत इत्यर्थः ।

(३९) प्रभुरेव निदर्शनं इति यदुक्तं, तत् अप्रस्तुतप्रशंसया समर्थयते—मेद इति ।—वपुः शरीरं मेदसां धातुविशेषाणां, वसानामित्यर्थः, छेदेन ह्रासेन मृगयाजनितश्रमादिति भावः, कृशं क्षीणम् उदरं यत्र तथोक्तम् ; अत एव लघु लाघवयुतं भारवत्तया हीन-

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः?(३९)॥५॥

विदू। [सरोषम्]। अवेहि (४०) रे उच्छाअहेतुअ! अत्तभवं पइदिं आवण्णो। तुमं दाव दासीए पुत्तो अड्डदो

(ढ) अपेहि रे उत्साहहेतुक! अत्र भवान् प्रकृतिम् आपन्नः। त्वं तावत् दास्याः

मित्यर्थः; अत एव उत्साहयोग्यम् उद्यमशक्तं ["उत्थानयोग्यम्" इति पाठेऽपि स एवार्थः। अनेन संग्रामपाटवसम्भावना प्रकाशिता] भवति। सत्त्वानां प्राणिनां ("सत्त्वमस्त्री तु जन्तुषु" इत्यमरः) भयक्रोधयोः निमित्तयोः विकृतिमत् विकृतमित्यर्थः, चित्तं लक्ष्यते अपि अनुभूयते च। अपिरत्र समुच्चये। भये च अन्तोरीदृशं चित्तं, क्रोधे च ईदृशमिति ज्ञायते इत्यर्थः। चले चञ्चले, धावनवतीत्यर्थः, लक्ष्ये शरव्ये इषवः शराः सिध्यन्ति सफला भवन्तीति यत् स च धन्विनां धनुर्द्धराणाम् उत्कर्षः। तस्मात् मृगयां यत् व्यसनं दोषजनकं वदन्ति, लोका इति शेषः, तत् मिथ्या हि असत्यमेव; हिरत्रावधारणे। ["मिथ्यैव" इति पाठे—यथाश्रुतमेव सम्यक्] यतः, ईदृक् एतादृशः विनोदः आनन्दः कौतुकमिति यावत्, कुतः? कुत्र? न कुत्रापि भवतीत्यर्थः। अथवा कुतः? कः? [उभयत्र सार्वविभक्तिकस्तसिल्। मृगयायाः व्यसनस्य मिथ्यात्वे प्रथमपादत्रयगतवाक्यार्थानां हेतुत्वेन वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः; समुदाये अप्रस्तुतप्रशंसा च; प्राचां मते—क्रियासमुच्चयालङ्कारश्च। "दृष्टदोषाऽपि" इत्यादिना एतदन्तेन मृगयाव्यसनदोषस्य गुणत्वेन प्रतिपादनात् "मृदवं" नाम वीथ्यङ्गं प्रदर्शितम्; तथा च दर्पणे,—"दोषा गुणा गुणा दोषा यत्र स्युः मृदवं हि तत्" इति लक्षणात्; तथा "दाक्षिण्यं" नाम नाटकलक्षणं, यदाह,—"दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम्" इति च दर्पणकारः। अत्र तु वाचा एव बोध्यम्। व्यसनानि च कामजक्रोधजादिभेदेन अष्टादशधा; यदाह मनुः,—"मृगयाक्षः दिवास्वप्नः परीवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः॥ पैशुन्यं साहसं द्रोहः ईर्ष्याऽसूयार्थदूषणम्। वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणाष्टकः॥" इति। शार्दूलविक्रीडितं वृत्तम्॥ ५॥

(४०) अपेहि—अपगच्छ, दूरीभवेत्यर्थः।

अडई आहिण्डन्तो (४१) जाव णरणासिआलोलुअस्स कस्स वि जिण्णरिच्छस्स ((४२) मुहे णिवडिदो होहि । (ढ)

राजा । सेनापते ! आश्रमसन्निकर्षे (४३) स्थितोऽस्मि इति वचनं ते न अभिनन्दामि । अद्य तावत् ।—

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।

---

पुर्वोऽटवीतोऽटवीम् आहिण्डमानो यावत् नरनासिकालोलुपस्य कस्यापि जीर्णर्क्षस्य मुखे निपतितो भव ।

(४१) प्रकृतिम् आपन्नः—स्वभावं प्राप्तः, स्वस्थ इत्यर्थः । आहिण्डमानः—परिभ्रमन् ।

(४२) नरनासिकालोलुपस्य—मनुष्यनासिकालालसस्य, इति स्वभावकथनम् । जीर्णर्क्षस्य—जीर्णस्य ऋक्षस्य, वृद्धभल्लूकस्य ; जीर्णा एव ते नितरां निष्ठुरा भवन्तीति प्रसिद्धिः ।

(४३) आश्रमसन्निकर्षे—तपोवनसन्निधौ ।

(४४) यो हि यदा यदीययादृशक्लेशमनुभवति, स च तदा "अपरोऽपि मादृशः तदीयतादृशक्लेशभागी मा भूत्" इति प्रार्थयते ; अत एव दुष्मन्तोऽसौ विदितप्रिया-विरहदुःखमर्मा तिर्यग्जातिष्वपि प्रतिषिध्य विरहतापम् आनुकूल्येन योजयन्नाह, गाहन्तामिति ।—महिष्यश्च महिषाश्च इति महिषाः, [ इह यद्यपि "ग्राम्यानेकशफेष्व-तरुणेषु स्त्रीपुंसयोर्बहुलमन्तर्भाव्य द्वन्द्वस्थले तु पुंस एव लुक्" इति नियमात् अत्र द्वन्द्वैकशेषे 'महिषाः' इति पदं भवितुं नार्हति, तथापि अत्र आरण्याभिप्रायेण तरु-णाभिप्रायेण वा द्वन्द्वैकशेषः । ] शृङ्गैः मुहुः पुनःपुनः ताड़ितं चालितम् उत्फालित-मिति यावत् । निपानसलिलं क्षुद्रजलाशयजलं गाहन्ताम् आलोड़यन्तु । [ यद्यपि "आहावस्तु निपानं स्यादुपकूपजलाशये" इत्यमरोक्तेः कूपादुत्थाप्य यत्र पशूनां जल-पानार्थम् उदकं स्थाप्यते, तादृशक्षुद्रजलाधारे ("चौवाचा" इति ख्याते) वर्त्तते निपानशब्दः, तथाप्यत्र अरण्ये तदभावात् लक्षणया क्षुद्रजलाशयम् एव अवगमयति ।] तेन हि प्रियासमेता इमे यथेष्ट जले विहरन्तु इत्यभिप्रायः । मृग्यश्च मृगाश्च मृगाः, तेषां मृगाणां [द्वन्द्वैकशेषे स्त्रिया लुक् ] कुलं वृन्दं छायासु अनातपेषु बद्धं रचितमित्यर्थः, कदम्बकं समूहः यस्य तथाभूतं सत् रोमन्थम् उद्गीर्य्य चर्वणम् अभ्यस्यतु करोतु, रोम-

विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताचतिः पल्वले,
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ( ४४ ) ॥ ६ ॥

सेना । यथा प्रभविष्णवे रोचते । ( ४५ )

राजा । तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः । ( ४६ ) यथा च मे सैनिकास्तपोवनं नाभिरुन्धन्ति, दूरात् परिहरन्ति ( ४७ ) च, तथा निषेद्धव्याः । पश्य,—

---

न्यायतामित्यर्थः । वराहाणां वन्यशूकराणाम् [अत्रापि स्त्रीपुंसयोर्द्वन्द्वे एकशेषः] पतिभिः श्रेष्ठतमैः विश्रब्धैः मम मृगयानिवृत्तेः भयविरहादिति भावः । कृतविश्वासैः सद्भिः पल्वले क्षुद्रजलाधारे मुस्तानां घासविशेषमूलानां चतिः चयः, भक्षणमिति यावत्, क्रियताम् । अथवा वराहपतिभिः वराहश्रेष्ठैः [नात्र द्वन्द्वैकशेषः] मुस्ताचतिः मुस्ताचयः, [अत्र मुस्ता इति स्त्रीलिङ्गनिर्देशेन चतिपदोपादानेन च नायिकासु नखदन्तचतादिकं व्यज्यते] इदं मम हस्तस्थितं, (दानवादिनिधनेऽपि सम्भावितसामर्थ्यम् इत्यर्थान्तरसङ्क्रमितं) शिथिलः ज्याबन्धः मौर्वीयोगः यस्य तादृशं भ्रष्टमौर्वीकमित्यर्थः, अस्माकं धनुः विश्रामं [विश्राममिति पदं चिन्त्यं अपाणिनीयं दीर्घश्रवणात्, अतोऽत्र विश्रान्तिमिति पाठकल्पनमुचितम्] लभतां विश्राम्यतु इत्यर्थः । अथवा—शिथिलः ज्यायां स्त्रीलिङ्गनिर्देशात् नायिकारूपायाम् आबन्धः प्रेम ("आबन्धो दृढबन्धे स्यात् प्रेमालङ्कारयोरपि" इति कोषात्) यस्य तादृशं धनुः,(पूर्वं क्रूरकर्म्मणि नियुक्तत्वात् प्रेम्णः शिथिलत्वं बोध्यम्) सम्प्रति विश्रामं प्रेमजनितसुखं लभतामित्यर्थः । [अत्र स्वभावोक्तिरलङ्कारः । कार्य्यकारणयोः समकालत्वेन कथनात् अतिशयोक्तिश्च, अनया च काव्यलिङ्गं ध्वन्यते । तथा 'गाहन्ताम्', 'अभ्यस्यतु' इत्यत्र बहुवचनपरस्मैपदयोः प्रक्रमभङ्गः, "क्रियताम्" इति वाच्यप्रक्रमभङ्गश्च—"कुर्वन्त्वप्यनिशं वराहपतयः मुस्ताचतिम्" इत्यादि पदपरिवर्त्तनेन कथञ्चित् वारणीयः । न चात्र वाच्यप्रक्रमभङ्गे परिहृतेऽपि द्वितीयतृतीयपादगतवचनप्रक्रमभङ्गदोषः तदवस्थ एव इति वाच्यम् ; प्रथमे पादे बहुवचनं, द्वितीये एकवचनं, तथा तृतीये बहुवचनं, चतुर्थे एकवचनमिति अस्यैव प्रतीयमानरोहरूपक्रमविशेषरूपत्वात् ] । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

(४५) प्रभविष्णवे—प्रभवे । [ प्रपूर्वात् भूधातोः इष्णुच्प्रत्ययः । रुच्यर्थानां प्रीयमाणः" ( १।४।३३ पा० ) इति सम्प्रदाने चतुर्थी ] ।

(४६) पुरोगतान्—अग्रगामिनः । धनुर्ग्राहिणः—धनुर्धरान् ।

(४७) परिहरन्ति—परित्यजन्ति ।

शमप्रधानेषु तपोवनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्य्यकान्ता:
ते ह्यन्यतेजोऽभिभवाद्दहन्ति ( ४८ ) ॥ ७ ॥

सेना। यथाज्ञापयति स्वामी ।

विदू। भो उच्छाअहेतुअ ! णिक्कम णिक्कम । (थ) ( ४९ )

[ सेनापतिर्निष्क्रान्त: ]

राजा। [ परिजनानवलोक्य ]। मृगयावेशमपनयन्तु ( ५० ) भवन्त: । रैवतक ! त्वमपि स्वनियोगमशून्यं कुरु । ( ५१ )

रैव। जं महाराओ आणवेदि । ( त )

[ इति निष्क्रान्त: ] ।

(थ) भो उत्साहहेतुक ! निष्क्राम निष्क्राम ।

(त) यन्महाराज आज्ञापयति ।

(४८) दूरत: परिहारे कारणं प्रदर्शयति, शमेति ।—शम एव प्रधानं येषां तेषु तपोधनेषु तापसेषु गूढं प्रच्छन्नं दाहात्मकं दाह एव आत्मा यस्य तादृशं, दहनस्वभावं तेज: अस्ति हि अस्त्येव। ते प्रसिद्धा: सूर्य्यकान्ता:, सूर्य्य इव कान्ता: शोभमाना:, तापसा: स्पर्श: अनुकूल: प्रिय: येषां तादृशा:, सर्वदा शान्ता अपि इत्यर्थ:, अन्यस्य नृपादे: तेजसा अभिभवात् तिरस्कारात् दहन्ति अभिशापादिना भस्मीकुर्वन्ति । अथ च,—ते प्रसिद्धा: सूर्य्यकान्ता: मणिविशेषा: स्पर्शानुकूला: सुखस्पर्शा अपि अन्यस्य तेजस: सौरस्येति भाव:, अभिभवात् आक्रमणात् दहन्ति । [अत्र "वमन्ति" इति पाठे,—स्व-तेज: प्रकटयन्ति इत्यर्थ:। पाठे चात्र गौणवृत्तिसमाश्रयणात् नाश्लीलत्वदोषाशङ्का कार्य्या। अत्र चानुप्राणितदृष्टान्तालङ्कार: ; सूर्य्यकान्ता इत्यंशे उपमा च । उपजाति: वृत्तम् ॥७॥

(४९) उत्साहहेतुक !—उत्साहवर्द्धक !। निष्क्राम—वहिर्गच्छ । [ वीप्सायां द्वित्वम् । अत्र "ध्वंसतु ते उत्साहवृत्तान्त:" इति पाठान्तरं वर्त्तते, तदर्थस्तु सुगम: ] ।

(५०) अपनयन्तु—त्यजन्तु ।

(५१) अशून्यं कुरु—प्रतिपालयेति भाव: ।

विदू। किदं भवदा सम्पदं णिम्मक्खियं, (५२) ता इमस्सिं पादवच्छाआविरइदविदाणसणाहे (५३) सिलाअले उवविसदु भवं, जाव अहम्मि सुहासीणो होमि। (थ)

राजा। गच्छ अग्रतः।

विदू। एदु एदु भवं। (द)

[उभौ परिक्रम्य उपविष्टौ]।

राजा। सखे माधव्य! अनाप्तचक्षुःफलोऽसि, (५४) येन त्वया द्रष्टव्यानां परं न दृष्टम्।

विदू। णं भवं ज्जेव मे अग्गदो वट्टदि? (ध) (५५)

(थ) कृतं भवता साम्प्रतं निर्मक्षिकं, तदस्मिन् पादपच्छायाविरचितवितानसनाथे शिलातले उपविशतु भवान्, यावत् अहमपि सुखासीनो भवामि।

(द) एतु एतु भवान्।

(ध) ननु भवान् एव मे अग्रतो वर्त्तते?

(५२) निर्मक्षिकं—मक्षिकाणाम् अभावः निर्मक्षिकं, जनशून्यमिति भावः। [अत्यन्ताभावार्थे अव्ययीभावसमासः। स्थानविशेषणञ्चेत्, तदा बहुव्रीहिः]।

(५३) पादपेति।—पादपस्य वृक्षस्य छायया विरचितं विन्यस्तं यत् वितानम् उल्लोचः, चन्द्रातप इत्यर्थः, तत्सनाथे तदाच्छादिते इत्यर्थः। [अत्र "पादवच्छाआए विरइदलदाविदाणदंसणीआए आसणे णिसीददु भवं" इति पाठे—पादपच्छायायां विरचितलतावितानदर्शनीयायाम् आसने निषीदतु भवान् इति (सं)। तत्र विरचितं यत् लतावितानं वल्लीचन्द्रातपः, तेन दर्शनीयायां दर्शनयोग्यायां रमणीयायामित्यर्थः। उभयत्र रूपकमलङ्कारः]।

(५४) अनाप्तेति।—अनाप्तं न प्राप्तं चक्षुःफलं नयनसाफल्यं येन तथोक्तः। ["राजा। सखे! माधव्य! अनाप्तचक्षुःफलोऽसि" इत्यारभ्य तृतीयाङ्कसमाप्तिपर्य्यन्तं प्रतिमुखसन्धिः प्रदर्शितः कविना। तल्लक्षणन्तु दर्पणे,—"फलं प्रधानोपायस्य मुखसन्धिनिवेशिनः। लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखं च तत्॥" तथा मृगयाव्यापारात् कथाविश्रान्तेः "अनाप्तचक्षुःफलोऽसि" इत्यनेन पुनः अवान्तरकथोत्थापने हेतुप्रदर्शनात् "बिन्दुः" उपन्यस्तः। उक्तञ्च दर्पणे,—"अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" इति।

(५५) द्रष्टव्यतमस्य भवतः पुरोवर्त्तित्वेन "द्रष्टव्यानां परं न दृष्टम्" इति

राजा। सर्वः खलु कान्तम् आत्मानं (५६) पश्यति, अहन्तु तामेव आश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि। (५७)

विदू। [स्वगतम्]। भोदु ण से प्पसरं (५८) वड्ढइस्सं। [प्रकाशम्]। भो जइ सा तवस्सिकण्णआ अणब्भत्थणीआ, (५९) ता किं ताए दिट्ठाए? (न)

राजा। धिङ्मूर्ख!—

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः।
नवामिन्दुकलां लोकः केन भावेन पश्यति? (६०) ॥८॥

---

(न) भवतु न अस्य प्रश्रयं वर्द्धयिष्यामि। भोः यदि सा तपस्विकन्यका अनभ्यर्थनीया, तत् किं तया दृष्टया?

कथम् उच्यते? इत्याह, ननु इति।—भवानेव सकलद्रष्टव्यानां रमणीयः मम नयनसमीपवर्त्ती, कथं भवता "द्रष्टव्यानां परं न दृष्टम्" इत्युक्तम्? इत्यभिप्रायः। [अनेन राज्ञः सौन्दर्य्यातिशयः ध्वन्यते]।

(५६) कान्तं—रम्यम्। आत्मानं—स्वम्, आत्मीयजनमित्यर्थः।

(५७) आश्रमेति।—आश्रमस्य ललामभूतां रत्नभूतां, भूषणस्वरूपामित्यर्थः,— "प्रधानध्वजलिङ्गेषु पुण्ड्रवालधिलक्ष्मसु। भूषावाजिप्रभावेषु ललामं स्यात् ललाम च॥" इति रुद्रटः। अधिकृत्य आश्रित्य ब्रवीमि "द्रष्टव्यानां परं न दृष्टम्" इति वच्मि इत्यर्थः।

(५८) प्रश्रयं—शकुन्तलाऽनुरागस्य उत्साहम्।

(५९) "तपस्विकन्यका" इत्यनेन ब्राह्मणतापससम्भवत्वात् भवतः नितरामयोग्या वनवासिनीयम् इति ध्वन्यते। अत एव राज्ञा कथयिष्यते,—"धिङ् मूर्ख!" इति। अनभ्यर्थनीया—अप्रार्थनीया।

(६०) न हि सर्व्वत्र दर्शनविषये जिघृक्षादिरेव कारणम्, अन्यदपि किमप्यस्ति इति दर्शयितुमाह, निवारितेति।—लोकः जनः [जातावेकवचनम्] उन्मुखः ऊर्द्धमुखः सन् निवारितनिमेषाभिः निर्निमेषाभिः नेत्रपङ्क्तिभिः नवां नवोदितां प्रतिपदि दर्शनाभावात् शुक्लद्वितीयोदितामित्यर्थः, [अनेन उपमेयभूतायामपि शकुन्तलायां क्रमशः वर्द्धिष्यमाणसौन्दर्य्यातिशयः व्यज्यते] इन्दुकलां चन्द्रलेखां केन भावेन अभिप्रायेण पश्यति? इन्दुकला कस्यापि प्रार्थनीया न, तथापि तां सादरं पश्यति लोकः

न च परिहार्य्ये वस्तुनि दुष्मन्तस्य मनः प्रवर्त्तते। (६१)

विदू। ता कधेहि। (प)

राजा।

ललिताप्सरोभवं किल मुनेरपत्यं तदुज्झिताधिगतम्।
अर्कस्योपरि शिथिलं च्युतमिव नवमालिकाकुसुमम्(६२)॥८।

(प) तत् कथय।

ऽभिमायाति च। तत्र तु केवलम् अलौकिकसौन्दर्य्यातिशयः, परमानन्दसन्दोह-जनकत्वेन गुणभूयस्त्वञ्च हेतुः; तद्वत् शकुन्तलादर्शनेऽपि अस्माकं स एव हेतुः, नान्यः जिघृक्षादिरिति भावः। [अत्र समात् अप्रस्तुतात् इन्दुकलारूपात् प्रस्तुतायाः शकुन्तलायाः प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः इति केचित्। विदूषकवाक्यं प्रति व्यतिरेकेण दृष्टान्तोऽयम् इति मतं नः।] पथ्यावक्त्रं वृत्तम्॥ ८॥

(६१) विदूषकवाक्येण ब्राह्मणकन्यात्वेन वनवासित्वेन च स्वादानायोग्यत्वं तस्याः खण्डयितुमाह, न चेति।—परिहार्य्ये वस्तुनि—परित्याज्ये विषये। दुष्मन्तस्य आजन्मशुद्धस्य अनाचरितासदनुष्ठानस्य पुरुवंशप्रसूतस्य इत्याद्यर्थान्तरसंक्रमितम् अत-एव नामग्रहणं कृतम्। मनः प्रवर्त्तते—मनसः प्रवृत्तिर्भवति इत्यर्थः, तत्र गमनप्रसङ्गस्य सुतरां दूरपास्त इति भावः।

(६२) शकुन्तलावस्तुनः अपरिहार्य्यत्वं द्रढयितुमाह, ललितेति।—ललिता सुन्दरी ("ललितं त्रिषु सुन्दरम्" इत्यमरः) या अप्सराः सुरसुन्दरी, मेनकेति भावः, तस्या भवतीति तथोक्तं, मेनकागर्भसम्भूतमित्यर्थः। [अत्र "सुरयुवतिसम्भवम्" इति पाठे—स एवार्थो बोद्धव्यः]। किल इति प्रसिद्धौ। तर्हि कथं सा मुनेः अपत्यम्? इत्याह, तदिति।—तया मेनकया पूर्वम् उज्झितं परित्यक्तं सत्, पश्चात् अधिगतं प्राप्तं मुनिना इत्यर्थः। [स्नातानुलिप्तवत् "पूर्वकाल—"इत्यादिना (२।१।४९ पा०) कर्म्मधारयः]। मुनेः कण्वस्य अपत्यम्। तत् कीदृशमित्याह, अर्कस्येति।—अर्कस्य तदाख्यवृक्षस्य उपरि च्युतं पतितं, न तु तस्मात् जातमित्यर्थः [अनेन मुनेरर्कौपम्यकथनेन तदुपरि च्युतत्व-कथनेन च तदुत्पन्नतायाः अत्यन्तासम्भाव्यत्वं सूचितम्।] नवमालिकायाः पुष्पलतायाः [अनेनास्याः मार्दवातिशयः ध्वन्यते]। ननु कस्यचित्तरोरुपरि पतितस्य अन्यदीय-कुसुमस्य सन्दर्शनेन तदीयत्वशङ्का सुतरामुदेति? इत्यत आह, शिथिलमिति।—शिथिलं शिथिलभावेन स्थितं कुसुममिव। [अनेन काकतालीयन्यायेन लब्धं, न

विदू। [विहस्य]। भो जधा पिण्डखज्जूरेहिं उव्वेजिदस्स तिन्तिड़ीए सद्धा भोदि, तधा अन्तेउरइत्थिआरअणपरिभोइणो (६३) भअदो इअं पत्थणा। (फ)

राजा। सखे! तावदेनां न जानासि, येन त्वमेवमवादीः।

विदू। तं क्खु रमणीअं णाम, जं भअदो वि (६४) विम्हअं उप्पादेदि। (ब)

राजा। वयस्य! किं बहुना?—

चित्ते निवेश्य परिकल्पितसर्व्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी।

(फ) भो यथा पिण्डखर्जूरैः उद्वेजितस्य तिन्तिड्यां श्रद्धा भवति, तथा अन्तःपुर-स्त्रीरत्नपरिभोगिणो भवत इयं प्रार्थना।

(ब) तत् खलु रमणीयं नाम, यद्भवतोऽपि विस्मयम् उत्पादयति।

नु केनापि आनीय स्थापितम् इति ध्वन्यते; तथा त्वयापि तत्र गत्वा दर्शनमात्रेणैव नेदं मुनेरपत्यमिति परिज्ञातुं शक्यते इत्यपि सूच्यते। अत्र शिथिलभावेन स्थितं कुसुम-मिव इत्युपमानात् उपमाऽलङ्कारः]। आर्य्या जातिः॥ ९॥

(६३) तथापि मुनिसङ्गात् विस्मृतविलासेयं न तवानुरूपा कथमपि भवितुं शक्यते, इत्यभिमानिनः विदूषकस्य "विहस्य" इत्युक्तिः। पिण्डखर्जूरैः— मधुररस-खर्ज्जूरफलविशेषैरित्यर्थः। स्त्रीरत्नपरिभोगिण इति।—स्त्रीणां रत्नानि उत्-कृष्टानि।—"जातौ जातौ यदुत्कृष्टं तद्रत्नमिह कथ्यते" इत्युक्तेः। तेषां परिभोगिणः सम्भोगशीलस्य इत्यर्थः। [अत्र उपमाऽलङ्कारः स्फुटः]।

(६४) पुनःपुनः राजवाक्यश्रवणेन सञ्जातदृढप्रत्ययः सन्नाह, तदिति।—खलु निश्चितं तत् रमणीयं, नाम इति सम्भावनायां, सम्भावना च स्वस्य दर्शनाभावा-दित्यवगन्तव्यम्। भवतोऽपि निसर्गधैर्य्यगुणस्यापि। अस्माकं किमु वक्तव्यम् इति अपिशब्देन सूचितम्।

(६५) शकुन्तलासौन्दर्य्यस्य अत्यन्तविस्मयनीयतामाख्यातुमाह, चित्ते इति। —धातुः प्रजापतेः विभुत्वं सृष्टिसामर्थ्यं, निर्माणपाटवमित्यर्थः, तस्याः शकुन्त-लाया वपुश्च शरीरञ्च [सकलस्त्रीकातिक्रान्तम्, अनिन्द्यसुन्दरमित्यर्थोऽनरसङ्गमित-

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे

धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः (६५) ॥१०॥

विदू। सव्वधा पच्चादेसो (६६) क्खु सा रूववदीणं। (भ)

राजा। इदञ्च मे मनसि वर्त्तते,—

अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै-

रनामुक्तं रत्नं, मधु नवमनास्वादितरसम्।

(भ) सर्वथा प्रत्यादेशः खलु सा रूपवतीनाम्।

वाच्यम्।] अनुचिन्त्य विभाव्य (स्थितस्येति शेषः, अन्यथा ल्यप्प्रत्यय एव न सम्भवति, एककर्त्तृकत्वाभावादिति भावः)। सा कृशाङ्गी शकुन्तला विधिना विधात्रा परिकल्पिताः कल्पनया निश्चिताः, सर्वे योगाः उपादानकारणानीत्यर्थः, तान् चित्ते मनसि निवेश्य निधाय रूपोच्चयेन सौन्दर्यराशिना विहिता निर्मिता, अत एव अपरा अद्वितीया अनन्यविलक्षणेति भावः, स्त्रीरत्नसृष्टिः मे मम प्रतिभाति प्रतीयमाना भवति। [अत्र "चित्ते निवेश्य परिकल्पितसत्त्वयोगा रूपोच्चयेन मनसा विधिना कृता नु" इति पूर्वार्द्धे क्वचित् पुस्तके पाठान्तरं दृश्यते, तत्र तु,— विधिना जगत्त्रयैकस्रष्टृपतिभूतेन ब्रह्मणा, चित्रे आलेख्ये निवेश्य चित्रयित्वा, तादृशशिल्पिनोऽपि स्वपूर्वकल्पितचित्रं दृष्ट्वैव तस्याः देहनिर्माणं सम्भावयामि, अन्यथा कथमेतत् लोकातिशयसौन्दर्य्यं शरीरेषु? इति भावः। तत्रापि परिकल्पितसत्त्वयोगा—कृतप्राणयोगा, ("द्रव्यासुव्यवसायेषु सत्त्वम्" इत्यमरः) अथवा विहितखेदादिरूपसत्त्वभावसम्बन्धा, तत्रापि—रूपोच्चयेन चन्द्रचकोरपद्मकुमुदकह्लारप्रभृतिभ्यः समाकृष्टेन रूपराशिना, तत्रापि—मनसा न तु स्वतः कठिनेन करादिना कृता नु? निर्म्मिता किम्? अत एव करस्पर्शाद्यभावात् अलौकिककान्तिमत्त्वं कोमलता च सुतरां युज्यते इति भावः]। [अत्र सम्भावनामात्रत्वात् उत्प्रेक्षाऽलङ्कारः। सन्देह एव पाठान्तरे। तथा पूर्वार्द्धवाक्यं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमपि; अपरा स्त्रीरत्नसृष्टिरित्यंशे अभेदे भेदलक्षणाऽतिशयोक्तिरलङ्कारश्च]। वसन्ततिलकं वृत्तम्। तल्लक्षणप्रस्तारादिकन्तु पूर्ववत् द्रष्टव्यम् ॥ १० ॥

(६६) प्रत्यादेशः—निराकरणं, विजेतेत्यर्थः। "प्रत्यादेशो निराकृतिः" इत्यमरः।

(६७) मनोभावं प्रकटयति, अनाघ्रातमिति।—अनघम् अपापम्

अखण्डं पुण्यानां फलमिव च तद्रूपमनघं,
न जाने भोक्तारं कमिह समुपस्थास्यति भुवि (६७)॥११॥

विदू। तेण हि लहुं लहुं गच्छदु (६८) भवं, मा जाव

[विशेषणमेतत् "भोक्तारम्" अत्रापि योजयितुं शक्यते, पुष्पाद्युपमानचयेषु वा; तथा नवशब्दोऽपि।] अदोषमित्यर्थः, तस्याः शकुन्तलायाः रूपं न आघ्रातम् अनाघ्रातं केनापि अगृहीतसौरभं पुष्पं कुसुमसदृशम्। [अनेन आमोदसत्ता ध्वन्यते]। कररुहैः नखैः अलूनम् अच्छिन्नं किसलयं नवपल्लवम् इव [अनेन च क्लमराहित्यं व्यज्यते]। अनामुक्तम् अपरिहितम् अङ्गेष्विति शेषः, रत्नं महार्घमणितुल्यम्। [अत्र अनाविद्धमिति पाठे—न आ सम्यक् विद्धं स्थूलवेधरहितमित्यर्थः। स्थूलवेधस्यैव रत्नस्य दोषत्वात्। अथवा,—अनाविद्धम् अकुटिलम्। ("आविद्धं कुटिलं भुग्नम्" इत्यमरः) [अनेन निर्दोषत्वं ध्वन्यते] अनास्वादितः अननुभूतः रसः स्वादो यस्य तादृशं नवं नूतनं मधु चौद्रम् इव [अनेन अतिहृद्यत्वं व्यज्यते] तथा अखण्डं सम्पूर्णमित्यर्थः, पुण्यानां सुकृतानां फलमिव [अनेन अत्यन्तप्रार्थनीयता अस्याः ध्वन्यते] इह भुवि पृथिव्यां कं प्रकृतसुभूतिमन्तं भोक्तारं समुपस्थास्यति सेविष्यते, न जाने नावगच्छामि तमिति शेषः। [विशेषणैरेभिः तस्याः खलु अनूढात्वेन स्वग्रहणयोग्यता, सम्भोगयोग्यता, कोमलता, निर्दोषता, हृद्यता, तथा अभिजाताभिलषणीयता च क्रमेण ध्वन्यते। एवं पञ्चभिरुपमानैः घ्राणत्वङ्नयनरसनश्रवणाभिधेयानां पञ्चज्ञानेन्द्रियाणां तर्पकत्वं प्रकाशितम्। पुण्यफलस्यापि श्रुतिगम्यतया श्रवणगम्यत्वात्। अत्र एकस्य शकुन्तलारूपस्य बहूपमानदर्शनात् मालोपमाऽलङ्कारः। तथा च दर्पणे,—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति। श्लोकद्वयेन च राज्ञः गुणकीर्त्तनं नाम चतुर्थी कामदशा प्रकटिता। तथा च दर्पणे। —"अभिलाषश्चिन्ता स्मृतिगुणकथन" इत्यादि। अन्यत्रापि—"सौन्दर्यादिगुणश्लाघा गुणकीर्त्तनमत्र हि" इति]। शिखरिणी वृत्तम्।—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति तल्लक्षणात्॥ ११॥

(६८) तेनेति—तेन हि भवद्वचनात् अशेषसौन्दर्यनिलयत्वेन अनिश्चितोपभोक्तृजनत्वेन च इत्यर्थः, लघु लघु—शीघ्रं शीघ्रम्। ("लघु क्षिप्रमरं द्रुतम्" इत्यमरः)। ["गच्छतु" इत्यत्र "परित्रायताम्" इति पाठे,—स्वीयत्वेन अङ्गीक्रियतामित्यर्थः]।

सा कस्स वि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स ( ६९ ) हत्थे णिवड़िस्सदि । (म)

राजा । परवती खलु तत्रभवती, न च सन्निहित-गुरुजना । ( ७० )

विदू । अध तुह उवरि कीदिसो से चित्तराओ ? (य) (७१)

(म) तेन हि लघु लघु गच्छतु भवान्, मा यावत् सा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति ।

(य) अथ तवोपरि कीदृशोऽस्याश्चित्तरागः ?

(६९) इङ्गुदीति ।—इङ्गुदी तापसतरुनामा तरुविशेषः, अत्र तत्फलं बोध्यम् ; "फले लुक्" ( ४।३।१६३ पा० ) इति तद्धितलुकि, "द्विहीनं प्रसवे सर्वं हरीतक्यादयः स्त्रियाम्" इत्युक्तेः स्त्रीत्वम् । तथा च इङ्गुदीफलतैलेन चिक्कणं शीर्षं यस्य तथोक्तस्य । [ अनेन तापसजने अवज्ञा ध्वनिता ] ।

( ७० ) त्वरितं तत्रागमने अन्यग्रहणशङ्किनं विदूषकं तद्वाक्यादनुमाय तस्य आशङ्कामपनेतुमाह, परवतीति ।—परवती—पराधीना ।—("परतन्त्रः पराधीनः परवान्" इत्यमरः ) । तत्रभवती—सम्मान्या, रमणीललामत्वेन इत्यर्थः । ननु यस्याधीना स एव प्रार्थ्यताम् ? इत्यत आह, न चेति ।—सन्निहितेति ।—गुरुजनोऽपि समीपे नास्ति इत्यर्थः ; अतस्ते नास्ति सहसा अन्यग्रहणशङ्का इति भावः ।

(७१) ननु नानुरक्ता चेत् त्वयि तदा ताम् अपरोऽपि ग्रहीतुं शक्नोति इत्याशङ्क्य पृच्छति, अथेति ।—[अत्र "अत्तभवन्तम् अन्तरेण कीदिसी से दिट्ठिराओ" इति पाठं, —अत्रभवन्तमन्तरेण कीदृशस्तस्या दृष्टिराग इति (सं) तत्र—अत्रभवन्तमिति सप्तम्यर्थे द्वितीया, अन्तरेण विशेषेण इत्यर्थः ।—"अन्तरं बह्यावकाशयोः । मध्ये विनार्थे तादर्थ्ये विशेषेऽवसरेऽवधौ" इति हैमः । अत्र अन्तरेणशब्दस्य विनार्थकनिपातत्वाभावात् "अन्तरान्तरेण युक्ते" (२।३।४ पा०) इति सूत्रेण तद्योगे द्वितीया न शङ्कनीया । प्रकृते तु 'अथ'—इति प्रश्नसूचकमव्ययम् । ("मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः ) ।

राजा। वयस्य ! स्वभावादेव अप्रगल्भाः तपस्विकन्यकाः । तथापि तु, (७२)—

अभिमुखे मयि संहृतमीक्षितम्,
हसितमन्यनिमित्तकथोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः (७३) ॥१२॥

(७२) अप्रगल्भाः—अचपलाः । अत्र च तपस्विकन्यकाः इति आर्थो हेतुः बोद्धव्यः । तामेव अप्रगल्भतां दर्शयन्नाह, तथापि तु इति ।—अप्रगल्भत्वेऽपि इति श्लोकेनान्वयः । तथा च तापसकन्यात्वेन निसर्गचापल्यहीनाया अपि यत् वक्ष्यमाण-भावाभिव्यक्तिः तस्याः, सा तु अत्यन्तानुरागवशादेव इति विदूषकप्रश्नस्य प्रतिवाक्यं बोध्यम् ।

(७३) अभिमुखे इति ।—मयि अभिमुखे सम्मुखवर्त्तिनि सति ईक्षितं दृष्टिः मदवलोकनमित्यर्थः, संहृतं सङ्कोचितं तयेति शेषः । [ संवृतमिति पाठे—स एवार्थः । अनेन शृङ्गारलज्जा ध्वन्यते ] तथा अन्येन निमित्तेन हेतुना कथाया उदयो यत्र तत् यथा स्यात् तथा हसितं तयेति शेषः । [अत्र "अन्यनिमित्तकृतोदयम्" इति पाठे,—अन्यनिमित्तम् अन्यजन्यं कृतः उदयः यस्य तादृशं, हसितमिति हसितविशेषणम् । अनेनापि सैव ध्वन्यते । हसितलक्षणमुक्तं मातृगुप्ताचार्य्यैः,—"विकासितकपोलान्तमुत्-फुल्लामललोचनम् । किञ्चिल्लक्षितदन्ताग्रं हसितं तद्विदो विदुः ॥" इति । अनेनास्याः अनुरागः व्यज्यते] अतः कारणात् तया विनयेन शिष्टाचारेण वारिता निषिद्धा वृत्तिर्वर्त्तनं प्रसर इति यावत्, यस्य तथाभूतः मदनः कामः, न विवृतः न प्रकटितः, न च संवृतः नापि गोपितः ; तथा च मुग्धात्वेन गोपितोऽपि कामभावः ईक्षणसंहरणेन, अन्य-निमित्तोदयेन, हसितेन च सम्यक् व्यक्तीकृत इति भावः । [अत्र प्रकटनाप्रकटनयोरत्यन्त-विरुद्धयोः सन्निवेशात् विरोधाभासालङ्कृतिः । तत्र च विरोधस्य मुग्धात्वेन परिहारात् आभासता ] । द्रुतविलम्बितं वृत्तं, "द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् । वृत्तमिदं [illegible] द्वादशाक्षरपादच्छन्दसः चतुःषष्ट्यधिक-चतुर्दशशततमसंख्यकप्रस्तारस्य अन्तर्भुक्तम् ॥ [illegible] ॥

विदू। [विहस्य]। किं दिट्ठिमेत्तेण ज्जेव भअदो अङ्कं आरोहदु ? (र)

राजा। सखीभ्यां मिथः प्रस्थाने पुनः सलीलया तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः। (७४) तथा हि,—

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम् (७५)॥१३॥

(र) किं दृष्टिमात्रेणैव भवतोऽङ्कमारोहतु ?

(७४) सखीभ्यामिति।—सखीभ्यां सहेत्यर्थः [सहार्थे तृतीया]। मिथः—परस्परम्।—"मिथोऽन्योऽन्यं रहस्यपि" इत्यमरः। प्रस्थाने—गमनारम्भे। सलीलया—सविलासया। [अत्र "शालीनतया" इति पाठे,—सलज्जतया इत्यर्थः। "शालीनकौपीने अधृष्टाकार्य्ययोः" (५।२।२० पा०) इति निपातः]। भूयिष्ठं—प्रभूतं यथा तथा। आविष्कृतः,—प्रकटितः, भावः—अनुरागः।

(७५) भावमेव प्रकटयति, दर्भाङ्कुरेणेति।—तन्वी कृशाङ्गी शकुन्तला कतिचिदेव द्वित्राण्येव, न तु अधिकानि, पदानि गत्वा अकाण्डे अनवसरे सहसा इत्यर्थः; ("काण्डं चावसरे बाणे"इति धरणिः)। ननु तन्वीत्वादेव गमनविलम्बः न तु व्याजात्? इत्यत आह, दर्भेति।—दर्भाङ्कुरेण कुशसूच्या, न तु दर्भेण; तस्य द्रष्टुं शक्यतया व्याजो न स्यात्, अङ्कुरस्य तु अदृश्यतया, कोमलत्वेन क्षत्ययोग्यतया च व्याजसम्भवात्। चरणः क्षतः विद्ध इति उक्तेति शेषः स्थिता, तथा द्रुमाणां तरूणां शाखासु असक्तमपि अलग्नमपि वल्कलम् उत्तरीयभूतां वृक्षत्वचं विमोचयन्ती सती विमोचनव्याजेनेति भावः, विवृत्तं प्रत्यावृत्तं, मद्दर्शनायेति भावः, वदनं यस्याः तथाभूता आसीच्च; माम् अवलोकयितुं परावृत्तमुखी जाता इत्यर्थः। [अत्र मुग्धास्वभावोक्तिः अलङ्कारः। तथा "असक्तमपि विमोचयन्ती" इत्यत्र विरोधाभासः इति केचन। अनेन मुग्धानायिकायाः अनुरागेङ्गितानि प्रदर्शितानि; तल्लक्षणन्तु प्राक् प्रदर्शितम्। कामसूत्रेऽपि, उक्तं—"दूरे स्थिता, पश्यतु मामिति मन्यमाना परिजनं समदनविकारमाभाषते" इति। रतिविलासेऽपि—"विलम्बस्तु पथि व्याजात् परावृत्यापि दर्शनम्" इति।

वृत्तम्॥१३॥

विदू। गहीदपाधेओ किदोसि तए, अदो अणुरत्तं तवोवणं (७६) त्ति तक्केमि। (ल)

राजा। सखे! तपस्विभिः कैश्चित् परिज्ञातोऽस्मि, चिन्तय तावत् केनापदेशेन (७७) पुनराश्रमपदं गच्छामः।

विदू। को अवरो अवदेसो? णं भवं राआ। (व)

राजा। ततः किम्?

विदू। णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति। (श)(७८)

राजा। मूर्ख! अन्यमेव भागधेयमेते तपस्विनो मे निर्वपन्ति, यो रत्नराशीनपि (७९) विहाय अभिनन्द्यते। पश्य,—

---

(ल) गृहीतपाथेयः कृतोऽसि तया, अतोऽनुरक्तं तपोवनमिति तर्कयामि।

(व) कोऽपरोऽपदेशः? ननु भवान् राजा।

(श) नीवारषष्ठभागं तापसा मे उपहरन्तु इति।

(७६) गहीतेति।—गृहीतं पाथेयं सम्बलं येन तथाभूतः [पथि साधु इति पाथेयं, पथिन्शब्दात् "पथ्यतिथिवसतिस्वपतेः ढञ्" (४।४।१०४ पा०) इति ढञ्-प्रत्ययः।] सम्बलञ्च तन्मुखविवर्त्तनादि इति बोध्यं; यथा कश्चित् पाथेयं गृहीत्वा गमनाय न विलम्बते तद्वदित्यर्थः। [अनेन उदयीगस्य अवश्यकर्त्तव्यता ध्वन्यते]। अनुरक्तम्—अनुरागविषयभूतमित्यर्थः, तपोवनं—श्रमप्रधानमित्यर्थः।

(७७) अपदेशेन—छलेन।—"व्याजोऽपदेशो लक्ष्यं च" इत्यमरः।

(७८) नीवारेति।—नीवाराणां तृणधान्यविशेषाणां, [निपूर्वकात् वृधातोः घञि रूपम्; उपसर्गस्य दीर्घता च] षष्ठभागं मे मह्यम् उपहरन्तु ददतु। तथा च मनुः—"पञ्चाशद्भाग आदेयः राज्ञा पशुहिरण्ययोः। धान्यानामष्टमो भागः षष्ठो द्वादश एव वा॥" इति।

(७९) भागधेयं—करं,—"भागधेयः करो बलिः" इत्यमरः। ["भागरूपनामभ्यः धेयः" इति भागशब्दात् स्वार्थे धेयप्रत्ययः]। निर्वपन्ति—ददति, यः भागधेयः सुकृतांशरूप इति भावः। रत्नराशीनिति।—सकलोत्कृष्टमणिगणेभ्योऽपि प्रकृष्टतमः इत्यर्थः।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः (८०) ॥१४॥

[ नेपथ्ये । ] हन्त ! सिद्धार्थौ स्वः । (८१)

राजा । [ कर्णं दत्त्वा ] । अये ! प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् । (८२)

दौवारिकः । [ प्रविश्य । ] जअदु जअदु भट्टा, एदे दुवे इसिकुमारआ पड़िहारभूमिं (८३) उवट्ठिदा । (ष)

राजा । अविलम्बं प्रवेशय तौ ।

(ष) जयति जयति भर्त्ता, एतौ द्वौ ऋषिकुमारौ प्रतीहारभूमिमुपस्थितौ ।

(८०) तापसोत्थितं करं दर्शयन्नाह, यदिति ।—वर्णेभ्यः ब्राह्मणादिभ्यः, ("वर्णाः स्युर्ब्राह्मणादयः" इत्यमरः । ) यत् 'धनम्' इति शेषः, उत्तिष्ठति लब्धं भवति इत्यर्थः, तद्धनं नृपाणां राज्ञां क्षयि नश्वरम् । [ प्रकारसहस्रेणापि न तिष्ठतीति व्यज्यते ] आरण्यकाः अरण्यवासिनः तापसाः नः अस्मभ्यम् अक्षय्यं क्षेतुमशक्यम् अविनश्वरम् [ "क्षय्यजय्यौ शक्यार्थे" (६।१।८१ पा०) इति निपातनात् सिद्धम् ] प्रयत्नशतेनापि न नश्यतीति भावः । तपसः षड्भागं षष्ठांशम् । [ षष्ठो भागः षड्भागः "संख्यावाचकानां वृत्तिविषये पूरणार्थत्वनियमात्" पूरणार्थता ] । ददति अर्पयन्ति एव । तथा च, मनुः—"यदधीते यद् यजते यद्ददाति यदर्चति । तस्य षड्भागभाग् राजा सम्यक् भवति रक्षणात् ॥" इति । [ अत्र सामान्यधनादेरुपमानात् मुनिप्रदत्तस्य सुकृतांशरूपस्य प्रकृष्टतया आधिक्यकथनात् व्यतिरेकालङ्कारः ] । अनुष्टुब्वृत्तम् ॥१४॥

(८१) राज्ञः स्वनगरगमनमाशङ्क्य त्वरितगती तापसौ अत्रागत्य श्रुतनृपसान्निध्यौ सहर्षमाह, हन्तेति ।—हन्त इति हर्षसूचकमव्ययम् । ( "हन्त हर्षेऽनुकम्पायाम्" इत्यमरः । ) सिद्धार्थौ—कृतार्थौ । स्वः—भवावः ; राज्ञः दर्शनेनैव इति भावः ।

(८२) अये—सम्भ्रमे । ( "अये क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च" । इति मेदिनी ) । प्रशान्तेति—प्रशान्ताः अनुद्धताः स्वरा येषां तैः । [ भवितव्यमिति—भावे तव्यप्रत्ययः ] ।

(८३) प्रतीहारभूमिं—द्वारदेशम् । ("स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः ) ।

दौवा। जं भट्टा आणवेदि। [इति निष्क्रम्य ऋषिकुमाराभ्यां सह पुन: प्रविश्य]। इदो इदो भवन्ता। (स)

[उभौ राजानं विलोकयत:।]

एक:। अहो दीप्तिमतोऽपि विश्वसनीयताऽस्य वपुष:, अथवा उपपन्नम् एतदस्मिन् ऋषिकल्पे (८४) राजनि। कुत:?—

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्वभोग्ये
रक्षायोगादयमपि तप: प्रत्यहं सञ्चिनोति।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीत:
पुण्य: शब्दो मुनिरिति मुहु: केवलं राजपूर्व: (८५)॥१५॥

---

(स) यत् भर्त्ता आज्ञापयति। इत इतो भवन्तौ।

---

(८४) दीप्तिमतोऽपि—तेजस्विनोऽपि। विश्वसनीयता—नि:शङ्कनीयता। अलौकिकप्रभावाणां सर्व्वमेव उपयुज्यते इति पूर्व्वोक्तमाक्षिप्याह,—अथवेति। उपपन्नं—युक्तम्। ऋषिकल्पे—मुनिसदृशे। ["ईषदसमाप्तौ" (५।३।६७ पा०) इति कल्पप्प्रत्यय:। अत्र "ऋषिभ्यो नातिभिन्ने" इति पाठे,—सदृशे इत्येवार्थ:। ऋषिभ्य इति अन्यार्थशब्दयोगे पञ्चमी]।

(८५) अस्य राजर्षित्वं प्रतिपादयति, अध्याक्रान्तेति।—अमुना नृपेणापि (न केवलं मुनिना इति अपिशब्दार्थ:। एवं सर्वत्र अपिशब्देन मुनि: सूच्यते।) सर्वभोग्ये सर्वभोगास्पदे अथवा सर्वै: ब्रह्मचारिप्रमुखै: भोग्ये आश्रयणीये। मुनिमात्रपक्षे—सर्वै: वटुभि: भोग्ये पाठार्थम् आश्रयणीये। आश्रमे गार्हस्थ्याश्रमे, मुनिपक्षे—मठे, ('आश्रमो व्रतिनां मठे' इति हैम:) वसति: अध्याक्रान्ता आश्रिता, स्वीकृता इत्यर्थ:। तथा च, पद्मपुराणे,—"यथा वायुं समाश्रित्य वर्त्तन्ते सर्वजन्तव:। तथा गृहस्थमाश्रित्य वर्त्तन्ते चतुराश्रमा:॥" इति। अयमपि रक्षायोगात् प्रजापालनात् प्रत्यहं तप: लोकोत्तरं धर्मं सञ्चिनोति करोति। मुनिपक्षे तु—रक्षार्थं शरीररक्षार्थं योग: समाधि: तस्मात् तन्निमित्तं तप: चान्द्रायणादि इत्यर्थ:। अस्यापि वशिन: जितेन्द्रियस्य चारणानां कुशीलवानां ('चारणास्तु कुशीलवा:' इत्यमर:) रत्नाकरोऽपि चारणलक्षमुक्तवान्; यथा,—"किङ्किणीवाद्यवेदी च व्रती विकटनर्त्तक:। मर्म्मज्ञ: सर्वरागेषु चतुर: चारणो मत:॥" इति। द्वन्द्वै: मिथुनै: गीत: कीर्त्तित: पुण्य: पवित्र: केवलं राजपूर्व: राजशब्दपूर्वक: मुनिरिति

द्वितीयः । सखे ! अयं स बलभित्सखो दुष्मन्तः ? (८६)

प्रथमः । अथ किम् ?

द्वितीयः । तेन हि—

नैतच्चित्रं, यदयमुदधिश्यामसीमां धरित्रीम्
एकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ।
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यैः
अस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे (८७) ॥१६॥

शब्दः राजर्षिरिति शब्दः मुहुः पुनःपुनः द्यां स्वर्गम् आकाशं वा ( 'द्यौः स्वर्गसुर-वर्त्मनोः' इति विश्वः ) स्पृशति गच्छति । मुनिपक्षे—शिष्यवटुभिः उच्चारितः वेदध्वनिः तथा निर्विशेषणमुनिशब्दः गगनस्पृक् भवति । अस्य खलु चारणद्वन्द्वगानं राजर्षिशब्दस्य इति विशेषः । [ अत्र "आश्रमी, सर्वभोग्ये" इत्यादिपदैरनेकार्थाभिधानात् श्लेषः, तथा उपमानभूतात् मुनेः अस्य उपमेयभूतस्य राज्ञः ईषदूनत्वकथनात् व्यतिरेकालङ्कारश्च । ] मन्दाक्रान्ता वृत्तम् ॥ १५ ॥

(८६) बलभित्सखः—बलभिदः इन्द्रस्य सखा मित्रम् । ["राजाहःसखिभ्यष्टच्" (५।४।९१ पा०) इति सखिशब्दात् टच्प्रत्ययः । अनेन वक्ष्यमाणराक्षसरक्षायोग्यत्वं ध्वन्यते ] ।

(८७) नैतच्चित्रमिति।—नगरस्य परिघौ इव द्वारार्गलौ इव, प्रांशू दीर्घौ बाहू भुजौ यस्य तादृशः [ अत्र नगरपदेन अतिदीर्घता भुजयोः व्यज्यते । नगरपरिघौपम्येन च भुजयोः दुर्भेद्यत्वात् वीर्यातिशयः व्यज्यते] । अयम् एकः अद्वितीयः, सहायमन्तरेणापि इत्यर्थः,उदधिः समुद्र एव श्यामः सीमा यस्याः तथोक्तां समग्रां धरित्रीं पृथिवीं यत् भुनक्ति पालयति, एतत् न चित्रं न आश्चर्यम् । यतः दैत्यैः असुरैः सक्तं लग्नं वैरं विद्वेषो येषां तथाभूताः सुरा देवाः समितिषु [अत्र "सुरयुवतयः" इति पाठे,—देवरमण्यः इत्यर्थः । तासां भीरुस्वभावत्वादिति भावः ] संग्रामेषु अस्य राज्ञः अधिज्यं मौर्वीयुक्ते धनुषि कार्मुके [अस्य प्राथम्येनोपादानात् वासवास्त्रनिव्यपेक्षया कार्मुकस्यास्य च प्राधान्यं व्यज्यते] पौरुहूते ऐन्द्रे वज्रे च [पश्चादस्य निर्देशात् गौणत्वम् इति विभावनीयम्] विजयम् आशंसन्ते [आङ् शसि इच्छायाम् इति भ्वादिधातोः लटि रूपं, न तु शन्स् स्तुतौ इत्यस्य, परस्मैपदित्वात्] आकाङ्क्षन्ति । [अत्र उपमाकाव्यलिङ्गयोः संसृष्टिः, द्रव्यसमुच्चयालङ्कारश्च

उभौ। [उपगम्य।] विजयस्व राजन्!

राजा। [आसनादुत्थाय।] अभिवादये भवन्तौ। (८८)

उभौ। स्वस्ति भवते। [इति फलानि उपनयतः।] (८९)

राजा। [सप्रणामं परिगृह्य।] आगमनप्रयोजनं श्रोतुम् इच्छामि।

उभौ। विदितो भवानिहस्थस्तपस्विभिः, ते च भवन्तम् अभ्यर्थयन्ते।

राजा। किम् आज्ञापयन्ति? (९०)

उभौ। तत्रभवतः कण्वस्य कुलपतेः असान्निध्यात् रक्षांसि नः इष्टिविघ्नम् उत्पादयन्ति, तत् कतिपयदिवसमात्रं सारथि-द्वितीयेन भवता सनाथीक्रियताम् (९१) आश्रम इति।

इत्यन्ये। वयन्तु पराङ्गं प्रस्तुतस्य धनुषः अप्रस्तुतस्य वज्रस्य च एकधर्माभिसम्बन्धकथनात् दीपकालङ्कारमपि मन्यामहे।—"अप्रस्तुतप्रस्तुतयोः दीपकन्तु निगद्यते" इति दर्पण-लक्षणात्। इदमत्रावधातव्यं—यत् तापसयोः किल प्रथमस्य तपश्चरणजनितश्रम-गुणाधिक्यम् अनुमीयते, यतः अस्य राज्ञः दर्शनमात्रेण अयं राजर्षिरिति चेतसः शमभावः सुव्यक्तः। अपरस्य तु—किञ्चिन्न्यूनता; यतोऽस्य वीर्य्यांशंसनमेव राज्ञः दृष्टि-मात्रेण इति]। मन्दाक्रान्ता वृत्तम्॥ १६॥

(८८) अभिवादये—प्रणमामि। [फलवति कर्त्तरि आत्मनेपदत्वादात्मनेपदम्]।

(८९) स्वस्ति—मङ्गलं, भवते इति।—["नमःस्वस्ति" (२।३।१६ पा०) इत्यादिना स्वस्तिशब्दयोगे चतुर्थी]। उपनयतः—अर्पयतः; तथा चोक्तं—"रिक्तपाणिर्न पश्येत् न राजानं देवतां गुरुम्। नैमित्तिकञ्च वैद्यञ्च फलेन फलमादिशेत्॥" इति।

(९०) आज्ञापयन्ति—आदिशन्ति। [तत् आज्ञाप्यतामित्यनुक्त्वा ईदृशकथनेन राज्ञः तापसेषु नियोगाकरणादौचित्यं ध्वनितम्]।

(९१) तत्रभवतः—पूज्यस्य, कुलपतेः—तल्लक्षणमुक्तं प्राक्। असान्निध्यात्—अनुपस्थितेः। इष्टिविघ्नं—यज्ञव्याघातम्। सनाथीक्रियतां—नाथयुक्तः क्रियताम्। [अनेन समुपस्थिते च तस्मिन् कथं दूरमास्तां राक्षसकथा, अन्येऽपि केचन आश्रम-बाधां जनयितुं न शक्नुवन्ति, इति निगूढाभिप्रायः सुव्यक्तः, तेन च मुनेः तपोजनित-प्रभावातिशयः ध्वन्यते]।

राजा । अनुगृहीतोऽस्मि ।

विदू । [अपवार्य्य] एस दाणिं भअदो अणुऊलो गलहत्थो । (छ) (८२)

राजा । [स्मितं कृत्वा ।] रैवतक ! मद्वचनात् उच्यतां सारथिः "सबाणकार्मुकं रथम् उपस्थापय" इति ।

दौवा । जं देओ आणवेदि (क) ।

[इति निष्क्रान्तः ।]

उभौ । [सहर्षम् ।]

अनुकारिणि पूर्वेषां युक्तरूपमिदं त्वयि ।
आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवाः (८३) ॥ १७ ॥

(छ) एष इदानीं भवतोऽनुकूलो गलहस्तः ।

(क) यद्देव आज्ञापयति ।

(८२) अपवार्य्य—परावृत्य ; तथा च दर्पणे—"तद्भवेदपवारितम् । रहस्यन्तु यदन्यस्य परावृत्य प्रकाशितम् ॥" इति । अनुकूलः,—त्वदीयकार्य्यसिद्धेरुपकारक इत्यर्थः । गलहस्तः,— गले हस्तार्पणम् ; यथा वाष्पयानाद्यारोहणसमये राजकीयाः अन्ये वा यानरक्षिणः पुरुषाः, आरोहिणं गले हस्तं दत्त्वा यानमारोहयन्ति, तदानीं तस्य तत् प्रतिकूलमपि स्वकार्य्यसिद्धेरुपकारित्वात् अनुकूलमिव, तथा प्रियालाभफलकत्वात् तवापि इदमभ्यर्थनम् इति हृदयम् ।

(८३) अनुकारिणीति ।—पूर्वेषां पूर्वपुरुषाणां पुरुप्रभृतीनाम् अनुकारिणि सदृशे ; शीलेन, रूपेण, सौन्दर्य्येण, दानेन, विनयादिना च इति ज्ञेयम् । त्वयि इदम् अस्मदभयदानम् इत्यर्थः, युक्तरूपम् अनुरूपम् । [युक्तशब्दात् "प्रशंसायां रूपप्" (५।३।६६ पा०) इति रूपप्प्रत्ययः] । खलु, यतः पौरवाः पुरुवंशीयाः राजानः आपन्नानां विपन्नानाम् अभयसत्रेषु अभयदानरूपयज्ञेषु ("सत्रमाच्छादने यज्ञे" इत्यमरः ।) दीक्षिताः निरता इत्यर्थः । [अनेन अभयदानस्य अवश्यकर्त्तव्यत्वं ध्वन्यते । अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तथा प्रथमे पादे "अनुकारिणि" इत्यादौ उपमा ; तृतीये च आपन्नाभयमेव सत्रम् इति तदात्मतारोपात् रूपकालङ्कारश्च । अत्र च पूर्वार्द्धं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमिति केचित् । तन्न खलु-शब्देनैव हेतुत्वप्रतिपादनात् नास्ति वैचित्र्यम् इति मन्यामहे ] । पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

राजा। [ सप्रणामम्। ] गच्छतां भवन्तौ, अहम् अनुपदम् (६४) आगत एव।

उभौ। विजयस्व।

[ इति निष्क्रान्तौ। ]

राजा। माधव्य! अप्यस्ति ते कुतूहलं शकुन्तलादर्शनं प्रति?

विदू। पढ़मं अपरिवाधं आसी, सम्पदं रक्खसवुत्तन्तेण सपरिवाधं। (ख) (६५)

राजा। मा भैषीः, ननु मत्समीप एव वर्त्तिष्यसे।

विदू। एष तुह रधचक्करक्खीभूदोम्हि (६६) जइ ण को वि आअच्छिअ विग्घं करेदि। (ग)

दौवारिकः। [ प्रविश्य। ] जअदु जअदु भट्टा। सज्जो रधो, भत्तुणो विजअप्पआणं अवेक्खदि। एस उण णअरादो देवीणं आणत्तिहरो (६७) करभओ आअदो। (घ)

---

(ख) प्रथममपरिबाधमासीत्। साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम्।

(ग) एष तव रथचक्ररक्षीभूतोऽस्मि, यदि न कोऽप्यागत्य विघ्नं करोति।

(घ) जयति जयति भर्त्ता। सज्जो रथो, भर्त्तुर्विजयप्रयाणमपेक्षते, एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः।

---

(६४) अनुपदं—पदं पदसञ्चारं लक्ष्यीकृत्य इत्यर्थः। [लक्षणार्थे अव्ययीभावः]।

(६५) अपरिबाधं—बाधाशून्यं, निर्विघ्नम् इत्यर्थः। सपरिबाधं—सविघ्नम्। [अत्र "पढ़मं सपरिवाहं आसी। दाणिं रक्खसवुत्तन्तेण बिन्दु वि णावसेसिदो।" इति पाठे,—प्रथमं सपरिवाहमासीत् इदानीं राक्षसवृत्तान्तेन बिन्दुरपि नावशेषितः।" इति (सं)। तदर्थस्तु—प्रथमं पूर्वं राक्षसभयश्रवणात् सपरिवाहम् अल्पमातम्। अत्र जल-निर्गमनवाची परिवाहशब्दः अल्पस्य लक्षकः। बिन्दुरपि स्तोकमपि। अत्रापि अवयवविशेषवाचिनः बिन्दुशब्दस्य स एवार्थः लक्षणया ]।

(६६) रथचक्रेति।—रथचक्रस्य रक्षीभूतः रक्षकः। युध्यमानस्य पुरुषस्य कश्चिच्चक्र-रक्षकोऽपेक्षते, स एवाहं तव भविष्यामीत्यर्थः। [अत्र "एस रक्खसादो रक्खिदोम्हि" इति पाठान्तरं,—एष राक्षसात् रक्षितोऽस्मि इति (सं) हास्यव्यञ्जकमेतत् ]।

(६७) आज्ञप्तिहरः—आज्ञावाहकः।

राजा। [सादरम्।] किम् अम्बाभिः प्रेषितः? (६८)

दौवा। अध इं। (ङ)

राजा। तेन हि प्रवेश्यताम्।

दौवा। तह। [इति निष्क्रम्य, पुनः करभकेण सह प्रविश्य।] करभअ! एसो भट्टा, उवसप्पदु भवं। (च)

करभकः। [उपसृत्य प्रणम्य च।] जअदु जअदु भट्टा। देवीओ आणवेन्ति। (छ)

राजा। किम् आज्ञापयन्ति?

कर। आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उववासो भविस्सदि, (६६) तहिं दीहाउणा अवस्सं अह्मे सम्भावइदव्व (१००) त्ति। (ज)

राजा। इतस्तपस्विनां कार्य्यम्, इतो गुरुजनाज्ञा, उभयमपि अनतिक्रमणीयं, तत् किमत्र प्रतिविधेयम्? (१)

(ङ) अथ किम्।

(च) तथा। करभक! एष भर्त्ता, उपसर्पतु भवान्।

(छ) जयति जयति भर्त्ता। देव्य आज्ञापयन्ति।

(ज) आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनो नाम उपवासो भविष्यति, तत्र दीर्घायुषा अवश्यं वयं सम्भावयितव्या इति।

(६८) अम्बाभिः—मातृभिः। "अम्बा माता" इति नाम्न्योक्तौ अमरः।

(६६) पुत्रेति।—पुत्रेण दास्यमानानां पिण्डानां पालनं रक्षणं यस्मात् तथाभूतः। [अत्र च "प्रवृत्तपारणः मे उपवासः भविष्यति" इति पाठे,—उपवासानन्तरं पारणा व्रतान्तभोजनं भविष्यति इत्यर्थः। प्रथमं मातुः उपवासवाक्यश्रवणे दुःखमेव भविष्यति मातृभक्तस्य राज्ञः इत्याशङ्क्य "प्रवृत्तपारणः" इति प्रागभिहितम्]।

(१००) सम्भावयितव्याः—सम्मानयितव्याः, सन्निधौ सन्निधानेनेति भावः।

(१) प्रतिविधेयं—कर्त्तव्यम्।

विदू। भो तिसङ्कु विश्व अन्तरा चिट्ठ। (क) (२)

राजा। सत्यम् आकुलीभूतोऽस्मि (३)।—

कृत्ययोर्भिन्नदेशत्वाद् द्वैधीभवति मे मनः।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहा यथा (४) ॥१८॥

(क) भोस्त्रिशङ्कुरिव अन्तरा तिष्ठ।

(२) त्रिशङ्कुरिवेति।—त्रयः शङ्कवः अपराधाः पितृसन्तोषोत्पादन-गुरुधेनुवधा-शोचितोपयोगरूपाः यस्य तादृशः, सूर्य्यवंशीयः नृपतिविशेषः। तथा च हरिवंशे—"पितु-श्चापरितोषेण गुरोर्दोग्ध्रीवधेन च। अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः॥" वैशम्पा-यन उवाच—"एवं त्रीण्यस्य शङ्कूनि तानि दृष्ट्वा महातपाः। त्रिशङ्कुरिति होवाच त्रिशङ्कुस्तेन स स्मृतः॥" इति। स इव। पुरा किल त्रिशङ्कुर्नाम सूर्य्यवंशीयः कश्चित् नृपतिः सशरीरः स्वर्गं जिगमिषुः एकदा गुरुं वशिष्ठम् उपागच्छत्, तेन तु—"न तदास्मिन् यागेऽधिकारः" इति प्रत्याख्यातः गुरुपुत्रान् उपागात्। ते च—"मूर्ख! गुरुं त्यक्त्वा अस्मान् यदुपागच्छेः, तच्चाण्डालत्वं गच्छेः" इत्यभिशेपुः। राजा गुरुणा गुरुपुत्रैश्च परित्यक्तः सुभृशं दुःखितः गुरुद्वेषिणं विश्वामित्रं जगाम। स तु ऋषिः वशिष्ठ-विद्वेषितया तं याज्यं परिगृह्य तदभिमतं यागम् अकरोत्। त्रिशङ्कुश्च यज्ञप्रभावेण सशरीर एव स्वर्गं चचाल। स्वर्गद्वारमागतश्च तं देवराजो गुरुद्वेषीति निर्भर्त्स्य अन्तरीक्षमपातयत्। पतंश्च—"गुरो कौशिक! परित्रायस्व पतन्तं माम्" इत्याक्र-न्दन् विश्वामित्रेण—"न त्वं पत, अत्रैव तिष्ठ" इति भाषितः गगनान्तराल एव अवाक्-शिराः तस्थौ, न भूमिं न च स्वर्गं प्रापेति गाथा अत्र अनुसन्धेया। अन्तरा—मध्ये। [हास्यरसव्यञ्जकमेतत् विदूषकवाक्यम् इत्यवगन्तव्यम्]।

(३) विदूषकवाक्यमाकर्ण्य नृपतिः, पूर्वकथितं मम वाक्यजातम् उपहासास्पदं मन्यते अनेन इति आशङ्क्य तत्प्रतिषेद्धुमाह, सत्यमिति।—यथार्थमेव अहम् आकुलीभूतः अस्थिरचित्तः किंकर्त्तव्यताविमूढ़ इति यावत् सञ्जातः इत्यर्थः।

(४) तदेव मनसः व्यस्ततोकारणम् उपमाप्रदर्शनेन समर्थयमान आह, कृत्ययोरिति।—कृत्ययोः कार्य्ययोः मातृकार्य्य-तापसकार्य्ययोरिति यावत्, भिन्नदेशत्वात् मातृकार्य्यं राजधान्यां, तापसकार्य्यं तपोवनेषु इति देशभेदात्। मे मम मनः पुरः अग्रतः शैलैः प्रतिहतं व्याहतं स्रोतोवहा सरिता; स्रोतः यथा प्रवाह इव [अत्र स्रोतःपदेन बृहत् स्रोतः उच्यते, अल्पस्य तु तस्य शैले अवस्थानसम्भवात्; अत एव महानदीत्वप्रत्यायनार्थं

[विचिन्त्य।] सखे माधव्य! त्वमपि अम्बाभिः पुत्र इव गृहीतः, स भवान् इतः प्रतिनिवृत्य तपस्विकार्य्यव्यग्रताम् अस्माकम् आवेद्य तत्रभवतीनां पुत्रकार्य्यम् अनुष्ठातुमर्हति।

विदू। भो! मा रक्खसभीरुअं मं अवगच्छ। (ञ)

राजा। [स्मितं कृत्वा।] भो महाब्राह्मण! कथमिदं त्वयि सम्भाव्यते? (५)

विदू। तेण हि राआणुअ विअ गच्छिदुं इच्छेमि। (ट)

राजा। ननु तपोवनोपरोधः परिहरणीय इति सर्वानेव अनुयात्रिकान् (६) त्वयैव सह प्रेषयिष्यामि।

विदू। [सगर्वम्।] जुअराओ म्हि दाणिं संवुत्तो। (ठ)

(ञ) भो मा राक्षसभीरुकं मामवगच्छ।

(ट) तेन हि राजानुज इव गन्तुमिच्छामि।

(ठ) युवराजोऽस्मीदानीं संवृत्तः।

नदीपदं सामान्यवाचकं परित्यज्य "स्रोतोवहाम्" इति विशेषपरपदमुपात्तम्] द्वैधीभवति एकत्र कुत्रापि कार्य्ये न सजते, संशेते इत्यर्थः। स्रोतःपक्षे तु—द्विधा भूत्वा द्वयोरेव मार्गयोः चलति [द्विशब्दात् प्रकारार्थे "द्वित्र्योश्च धमुञ्" (५।३।४५ पा०) इति धाप्रत्ययस्थाने धमुञ् आदेशः, ततः अद्वैधं द्वैधं भवति इति अभूततद्भावार्थे च्वि-प्रत्ययः। अत्र स्रोतोमनःपदयोः उपमानोपमेययोः शब्दमात्रकृत-सादृश्यनिबन्धना उपमाऽलङ्कारः; द्वैधीभवनस्य स्रोतः मनश्च प्रति भिन्नार्थत्वात्। तथा पूर्वोक्ते मनसः परमाणुरूपस्य द्वैधीभवनासम्बन्धेऽपि तत्सम्बन्धकथनात् असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिश्च; इत्यनयोरङ्गाङ्गित्वम्]। पथ्यावक्त्रं वृत्तम्॥ १८॥

(५) विदूषकस्य वाक्यमाकर्ण्य, अनुमाय तस्य तत्रावस्थानं, तेन च स्वाभीष्टसिद्धेः अन्तरायं विशङ्कमानः, अल्पमतिमेनं तत्र गमनाय उत्साहयितुं निन्दितार्थमपि श्रुति-सुभगम् एतदाह, भोः इति।—महाब्राह्मण! निन्दितब्राह्मण! इत्यर्थः;—"शङ्खे तैले तथा मांसे वैद्ये ज्यौतिषिके द्विजे। यात्रायां पथि निद्रायां महच्छब्दो न दीयते॥" इति निषेधात् निन्दितार्थता। कुत्र च देशे 'अयदानीये' एतत् प्रयुज्यते।

(६) तपोवनोपरोधः—आश्रमबाधा। परिहरणीयः,—यथा न भवति तथा करणीय इत्यर्थः। अनुयात्रिकान्—अनुचरान्।

राजा। [आत्मगतम्]। चपलोऽयं ब्राह्मणवटुः, कदाचित् इमामस्मत्प्रार्थनाम् अन्तःपुरिकाभ्यो निवेदयेत्? (७) भवतु एवं तावदस्याभि। [विदूषकस्य हस्तं गृहीत्वा प्रकाशम्।] सखे माधव्य! ऋषिगौरवादाश्रमपदं प्रविशामि, न खलु सत्यमेव तापस-कन्यायाम् (८) अभिलाषो मे। पश्य,—

क्व वयं, क्व परोक्षमन्मथो
मृगशावैः सह वर्द्धितो जनः?

(७) चपलः—चञ्चलस्वभाव इत्यर्थः। ब्राह्मणवटुः—ब्राह्मणबालकः।—"बालको माणवो बालः किशोरो वटुरित्यपि।" इति शब्दरत्नावली। अस्मत्प्रार्थनाम्—अस्माकं शकुन्तलाऽनुरागमित्यर्थः। अन्तःपुरिकाभ्यः—अन्तःपुरवासिनीभ्यः देवीभ्य इत्यर्थः। निवेदयेत्—विज्ञापयेत्। [सम्भावनायां लिङ्। कदाचिच्छब्दश्चात्र सम्भावना-द्योतकः]।

(८) हस्तं गृहीत्वेति—स्ववाक्यस्य दृढ़प्रत्ययसम्पादनार्थमेतदनुष्ठानम्। प्रकाशं—स्पष्टं,—"सर्वश्राव्यं प्रकाशं स्यात्" इति दर्पणोक्तेः। ऋषिगौरवात्—मुनि-जनान् प्रति आदरातिशयात्। तापसकन्यायां—शकुन्तलायाम्, [अनेन सर्वथा स्वायोग्यत्वं ध्वन्यते]।

(९) स्वायोग्यत्वं युक्तिप्रदर्शनेन द्रढ़यन्नाह, क्व इति।—हे सखे! वयं [काम-परायणा विषयिणः विविधवैदग्ध्यकुशलाः अनेकराजोपचारयोग्याः इत्यर्थान्तर-संक्रमितवाच्यः] क्व? मृगशावैः मृगशिशुभिः (वर्द्धितपदस्य उभयत्र सामञ्जस्यार्थं शावपदम्) सह वर्द्धितः [अत्र "सममेधितः" इति पाठे,—अर्थः समानः] प्रति-पालितः, अत एव अक्षाणाम् इन्द्रियाणां परः अगोचरः इति परोक्षः [राजदन्तादित्वात् पूर्वनिपातः, सुडागमश्च निपातनात्] अपरिज्ञात इत्यर्थः, मन्मथः कामः यस्य तथाविधः कामकलानभिज्ञ इत्यर्थः; जनः [जन इत्यनेन नीचत्वं बोधयन् स्वायोग्यत्वं ध्वनयति] शकुन्तलारूप इति भावः; क्व? क्वद्वयं महदन्तरं सूचयति। कामिनो निष्कामस्य च समागमोऽसम्भव इति भावः। अतः परिहासेन कौतुकेन विजल्पितं विविधं जल्पितं, वचः शकुन्तलासम्बद्धं वचनमित्यर्थः, [विजल्पितमित्यत्र "विकल्पितम्" इति पाठे—अनिश्चिताभिहितमित्यर्थः] परमार्थेन सत्येन न गृह्यतां, सत्यतया मा विश्वसिहीति यावत्। [अत्र पूर्वार्द्धे विरूपसङ्घटन-

परिहासविजल्पितं सखे !
परमार्थेन न गृह्यतां वचः (८) ॥१८॥

विदू । एवमेदं । (ड)

राजा । माधव्य ! त्वमपि स्वनियोगम् अनुतिष्ठ, अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि ।

[इति निष्क्रान्ताः सर्वे ।]

इति द्वितीयोऽङ्कः ॥ २ ॥

(ड) एवमिदम् ।

रूपः विषमालङ्कारभेदः । तथा संवृतिः नाम सन्ध्यन्तराङ्गं प्रदर्शितम् । यदाह— "संवृतिः स्वयमुक्तस्य स्वयं प्रच्छादनं भवेत्" इति ]। सुन्दरी वृत्तम्—"अयुजोर्यदि सौ जगौ युजोः, सभरा लौ यदि सुन्दरी तदा" इति लक्षणात् ॥ १८ ॥

## द्वितीयाङ्कस्य सङ्क्षिप्त-विवृतिः ।

अत्र च तत्रभवतः नृपतेः नर्मसचिवः विदितमर्म्मा वयस्यः विदूषकः, अतिकठोरमृगयाव्यापारवीतरागः बहु प्रलपन् प्रबलहृदयावेगेन, निन्दन्नतिव्यामन्दानन्दप्रदमपि मृगयाविनोदं, भर्त्सयन् अबीभत्सचरितमपि मृगयाव्यसनिनं शकुन्तलाघातहृदयं सहृदयं दुष्मन्तम्, अश्रान्तवनान्तभ्रान्त्या विश्रंसितदेहग्रन्थिः छिन्नाश्याहानि विश्रान्तिमीप्सुः अनङ्गभङ्गोऽपि प्रदर्शिताऽङ्गभङ्गः अवलम्बितकाष्ठदण्डश्च मुहूर्त्तमस्थात् अस्वस्थचित्तः ।

अथ महाराजः दुष्मन्तः हृदयनिहितशकुन्तला भारसमाक्रान्त इव मन्दमन्दमुपसर्पन्, जल्पंश्च शकुन्तलागतमनेकं समगच्छत वयस्येन । सङ्गम्य च पश्यंस्तदवस्थं प्रियसखम्, अनुरुद्धश्च तेन मृगयाव्यापारात् विरन्तुं, मृगयापराङ्मुखः सैनान्यमानेतुमनुजीविनमादिशत् । स च आगत्य भृत्येन सार्द्धं, श्लाघित्वा च अश्लाघ्यमपि मृगयाव्यसनं, विदूषकेण विवदमानः तिष्ठन् नृपेण निवारितमृगयाप्रयत्नः स्वनियोगं प्रति

सपत्नी बभूव। इत्थमपसार्य्य सर्वान्, अपूर्वानुरागसर्वस्वं शकुन्तलाप्रणयमाचिख्यासु: नृपति: सह वयस्येन अनुष्ठितविविधविश्रम्भालाप: चणमनयत् सुखातिशय्येन। अवान्तरे द्वौ तापसौ समुपगम्य नृपसविधे, प्रशस्य च राजचरितम्, उद्दीर्य च गुरो: तत्र-भवत: कण्वस्य असान्निध्यात् राचसकृतकृतवविघ्नवार्त्तां, समभ्यर्थ्य च राजानं कतिपयदिवसमावमवस्थातुम्, आसाद्य च तदनुष्ठानाङ्गीकाररूपं तदनुग्रहम्, आशास्य च तम्, अनुज्ञातौ च तेन राज्ञा स्वस्थानं प्रतस्थाते।

अथाऽसौ भूपाल: शकुन्तलालाभप्रत्याशया तपोवनगमनं प्रति कृतधीरवधीरितान्य-कृत्य: सहसा स्वजननीप्रेषितेन अनुजीविना करभकनामधेयेन—"आगामिनि चतुर्थे दिवसे पुत्रपिण्डपालनी नाम उपवासो भविष्यति तदत्र भवता गन्तव्यम्" इत्युक्ता निरवर्त्यत। अनन्तरं "किं कर्त्तव्यमिदानीम्" इति चणं विमृश्य, अवधार्य्य च वयस्यमेव तत्र गन्तुं, प्रबोध्य च तं विविधवाक्यप्रपञ्चै:, "चपलोऽयम्" इति मत्वा अपलप्य च शकुन्तलाव्यापारं व्याजेन, विसर्ज्ज्य च तं सह सेनाभि: विदूषकं, स्वयमपि तपोवन-पालनार्थं प्रचलित:। इति।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"वि, ए" इत्युपनामक-श्रीमज्जीवा-नन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण-श्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां द्वितीयोऽङ्क: ॥२॥

---

# तृतीयोऽङ्कः ।

[ ततः प्रविशति कुशानादाय यजमानशिष्यः ]। (१)

शिष्यः । [ विचिन्त्य सविस्मयम् । ] अहो ! महाप्रभावो राजा दुष्मन्तः, येन प्रविष्टमात्र एव आश्रमं तत्रभवति सारथिद्वितीये राजनि निरुपप्लवानि (२) नः कर्माणि संवृत्तानि ।

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः ।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति ॥ (३) ॥१॥

यावत् एतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि।

---

(१) ततः,—द्वितीयाङ्कावसानानन्तरम् । कुशान्—दर्भान् । आदाय—गृहीत्वा । यजमानशिष्यः,—यागं कर्तुं प्रवृत्तः शिष्य इत्यर्थः ।—"आदेष्टा त्वध्वरे व्रती । यष्टा च यजमानश्च" इत्यमरः । प्रविशतीति कविवाक्यम् ।

(२) महाप्रभावः—महातेजाः । निरुपप्लवानि—निरुपद्रवाणि । [ "निरुपद्रवाणि" इति पाठे,—स एवार्थः । अत्र राक्षसान् निराकृतवान् इति कारणे उच्यमाने कर्म्मनिरुपप्लवतारूपकार्य्यकथनात् पर्य्यायोक्तमलङ्कारः ] ।

(३) राज्ञः प्रभावातिशयं दर्शयति, केति ।—हि यतः, स राजा दूरतः दूरात् हुङ्कारेणेव धनुषः ज्याशब्देनैव मौर्वीस्वनेनैव विघ्नान् व्यपोहति निरस्यति ; बाणसन्धाने धनुषि शरसंयोगे का कथा ? किं वक्तव्यम् ? बाणसन्धानं नापेक्षते इत्यर्थः । अथवा धनुषः हुङ्कारेणेव हुमिति शब्देन इव ज्याशब्देन मौर्वीध्वनिना विघ्नान् अन्तरायस्वरूपान् राक्षसान् इत्यर्थः, व्यपोहति विदूरयति । [अनेन विना प्रयासं शत्रुनिर्य्यातनं व्यज्यते । अत्र प्रथमार्थे एकदेशविवर्त्तिनी उपमा ; तया च दुष्मन्तस्य रुद्रोपमानत्वं गम्यते । अस्मिन् पक्षे—धनुर्ज्याशब्दयोः अर्थगतपौनरुक्त्यं कविस्त्रीकृततया परिहृतम् । परत्र च—धनुषः चेतनव्यवहारसमारोपात् समासोक्तिः, तथा ज्याशब्दस्य हुङ्कारत्वसम्भावनया उत्प्रेक्षा ; इवशब्दसान्निध्यात् सा चात्र वाच्या । पक्षे चात्र—नास्ति पुनरुक्तिदोषावकाशः ] । पथ्यावक्त्रं वृत्तम् ॥ १ ॥

(४) वेदिसंस्तरणार्थं—यागार्थविरचितपरिष्कृतभूमिसञ्छादनार्थम् । तथा च—"वेदिः परिष्कृता भूमिः" इत्यमरः । ऋत्विग्भ्यः—याजकेभ्यः, उपाहरामि—

[ परिक्रम्य अवलोक्य च। ( आकाशे ) ] प्रियंवदे ! कस्य इदम् उशीरानु-लेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते? [श्रुतिम् अभिनीय।] किं कथयसि ?—आतपलङ्घनाद् बलवदस्वस्थशरीरा शकुन्तला, तस्याः शरीरनिर्वापणायेति। प्रियंवदे ! यत्नादुपचर्य्यतां, सा हि तत्रभवतः कुलपतेर्द्वितीयम् उच्छ्वसितम्। अहमपि तावद् वैतानिकं शान्त्युदकम् अस्या एव गौतमीहस्ते विसर्ज्जयामि। (४)

[ इति निष्क्रान्तः। ]

[ विष्कम्भकः। ] (५)

अर्पयामि। आकाशे इति।—नाट्यधर्म्मविशेषः। यदाह दशरूपके,—"किं ब्रवीष्येव-मित्यादि विना पात्रं ब्रवीति यत्। श्रुत्वेवानुक्तमप्येकः तत् स्यात् आकाशभाषितम्॥" इति। कस्येदमिति।—उशीरानुलेपनं—प्रलेपार्थं वीरणमूलं, मृणालवन्ति—पद्म-युक्तानि, नलिनीदलानि—पद्मपलाशानि। श्रुतिमभिनीय—आकर्ण्य। आतपलङ्घनात्—सौरतापाभिभवात्। शरीरनिर्वापणाय—शरीरस्य तापशान्तये। [ इत्यन्तं प्रियंवदा-वाक्यस्यानुकरणम्। तेन च शकुन्तलाऽवस्थायाः गोपनं व्यज्यते। आकाशभाषितेन च केचन मुनिबालकाः सखीसमादिष्टाः उशीरादिकं गुप्तवर्त्मना नयन्ति। सखी च शिष्यपृष्टा तारस्वरेण सर्वथा तत् अपह्नुते इति गम्यते ]। उपचर्य्यतां—सेव्यतां, शुश्रूष्यताम् इत्यर्थः। द्वितीयम्—अपरम्। उच्छ्वसितं—जीवनम्। वैतानिकं—यज्ञियम्। विसर्जयामि—प्रेषयामि।

(५) विष्कम्भक इति।—"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णः नीचमध्यमयोजितः॥" इत्युक्तलक्षणः। स चात्र शुद्धः, मध्यमेनैकेन प्रयोजितः, इति प्रथमभेदान्तर्गतः। अनेन च विष्कम्भकेण राज्ञः तपो-वनाभ्यन्तरगमनं, राक्षसान् अपसार्य्य ऋषिकार्य्यनिर्वाहश्च इत्यतीतवृत्तान्तसूचना। शकुन्तलायाः आतपलङ्घनव्याजेन विरहावस्थावर्णनं, पश्चात् शकुन्तलादुष्मन्तयोः विघटनार्थं शान्त्युदकहस्तायाः गौतम्याः शकुन्तलासकाशे आगमनश्चेति भविष्यत्-सूचनमवगन्तव्यम्।

[ ततः प्रविशति समदनावस्थो राजा ]। (६)

राजा। [ सचिन्तं निश्वस्य ]—

**जाने तपसो वीर्य्यं सा बाला परवतीति मे विदितम्।**
**न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम् (७) ॥२॥**

**भगवन् मन्मथ! कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यम् एतत्?**

**[ स्मृत्वा ] आं ज्ञातम् (८)।—**

---

(६) समदनावस्थ इति।—समदनस्य इव अवस्था यस्य तादृशः। ["कामयमानावस्थः" इति पाठे,—स एवार्थः। "कामयानावस्थः" इति पाठे तु,—कामस्य याने उद्गमे इत्यर्थः, या अवस्था अभिलाषाद्याः ताः यस्य स इत्यर्थः]।

(७) जाने इति।—तपसः तपस्यायाः वीर्य्यं सामर्थ्यं जाने वेद्मि.[एतेन प्रसह्यानयनं न युक्तम् इति ध्वनिः]। अथ अनुरागश्चेत् त्वयि, तदा सा स्वयमेव आगमिष्यति इत्याह, सेति।—सा पूर्वानुभूता, [ अत एव अनुभूतार्थकतया तच्छब्दस्य, यच्छब्दानुपादानेऽपि न विधेयाविमर्षदोषशङ्का; अत्र यच्छब्दस्य आर्थत्वात्। तथा च दर्पणे,— 'तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्य आर्थत्वम्" इति। ] बाला शकुन्तला परवती पराधीना, गुरोरधीना इति यावत्, इति मे मम विदितं ज्ञातम्। [नपुंसके भावे क्तस्य शेषविवक्षया कर्त्तरि वा षष्ठी। एतेन तस्या अनुरागेऽपि स्वयंवरणासामर्थ्यम् इति ध्वनिः]। तर्हि त्यज्यतामेष तदर्थप्रयासः इत्याशङ्क्याह, न चेति।— निम्नात् नीचप्रदेशात् सलिलमिव, ततः शकुन्तलायाः मे मम हृदयं न च निवर्त्तते। नाहं तस्या मनो निवर्त्तयितुं शक्नोमि इति भावः। [ अत्र "अलमस्मि ततो हृदयं तथापि नेदं निवर्त्तयितुम्" इति पाठे,—ततः तस्याः शकुन्तलायाः सकाशात् हृदयं चेतः,—"ममाश्रितमपि चक्षुमात्रपरिचिते मया दुर्लभे जने अनुरक्तमिति निर्लज्जम्" इत्यर्थान्तरसंक्रमितवाच्यम्। निवर्त्तयितुं प्रत्यावर्त्तयितुं नालमस्मि न समर्थो भवामि। ममाश्रितस्य मदनुज्ञां विना तत्र गमने निर्लज्जता धृष्टता च हृदयस्य—"नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः। मनस्तत्रैव रमते वयं पाणिनिना हताः॥" इतिवत् इति भावः। अत्र उपमालङ्कारः; उपायादर्शनात् तापनं नाम प्रतिमुखाङ्गञ्च। यदाह दर्पणे,—"उपायादर्शनं यत्तु तापनं नाम तद्भवेत्" इति]। आर्य्या वृत्तम् ॥ २ ॥

(८) भगवन्!—महिमान्वित! मन्मथ!—काम! अथ वा मां मथति इति मन्मथः [ भ्वादि मथधातोः अच्प्रत्ययेन रूपम्; तस्य सम्बोधने। ] मम पीडक

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व इवाम्बुराशौ।
त्वमन्यथा मन्मथ! मद्विधानां
भस्मावशेषः कथमेवमुष्णः? (९) ॥३॥

अपि च। त्वया चन्द्रमसा चातिविश्वसनीयाभ्याम् अभिसन्धीयते कामिसार्थः। (१०) कुतः?—

इत्यर्थः; न तु शकुन्तलायाः स्वभावपेलवाया इति भावः। कुसुमायुधस्य—कुसुमान्येव अतिकोमलानि इत्यर्थः, आयुधानि यस्य तादृशस्य, पुष्पशरस्य इत्यर्थः। [अनेन अस्य सहजमार्दवं व्यज्यते]। तैक्ष्ण्यम्—उग्रता। विचिन्त्य तीक्ष्णताबीजं स्मरन्नाह, आमिति।—आम् इति स्मरणार्थमव्ययम्।—"आं ज्ञाने निश्चयस्मृत्योः" इति मेदिनी।

(९) स्मृतिकल्पितं व्यनक्ति, अद्यापीति।—हे मन्मथ! हे काम! हरस्य कोपवह्निः कोपानलः अम्बुराशौ समुद्रे और्व इव वाड़वानल इव, त्वयि अद्यापि ज्वलति, नूनम् उत्प्रेक्षे। [पुरा किल ऊरुजः भार्गवः स्वीयकोपजं वह्निं समुद्रे निचिक्षेप, तस्य च सलिलमेव दाह्यम्; अतोऽस्य और्वो नाम। यदाह भारते,—"ततस्तं क्रोधजं तात! और्वोऽग्निं वरुणालये। उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ॥" इति। तथा पुरा तारकासुरवीर्य्यावधूता देवा ब्रह्मणः सकाशमाजग्मुः, तेन च "कार्त्तिकेयजननार्थं हरयोगभङ्गः कर्त्तव्यः" इति समादिष्टाः काममेव तस्मिन् कर्म्मणि व्यापारयामासुः। स च कामः योगभङ्गाय कृतशरविक्षेपः भगवता शूलिना भालवह्निना निर्दग्ध इति शिवपुराणादिकथाऽत्रानुसन्धातव्या।] अन्यथा—नो चेत् इत्यर्थः, त्वं भस्मावशेषः भस्मीभूतोऽपि मद्विधानां मादृशानां कथम् एवम् उष्णः दुःसहतापः? इत्यर्थः। [अत्र काव्यलिङ्गानुप्राणितोपमाऽलङ्कारः। नूनमिति वाच्योत्प्रेक्षा, तथा हरकोपवह्निरिति रूपकम्। ममेत्यनुक्त्वा मद्विधेत्युपादानात् अप्रस्तुतप्रशंसा च; अनुमानमिति केचित्]। उपजातिः वृत्तम् ॥ ३ ॥

(१०) तीक्ष्णतायाः बीजान्तरमाह, अपि चेति।—त्वया कामेन, चन्द्रमसा चन्द्रेण च उभाभ्यामित्यर्थः। अतिविश्वसनीयाभ्याम्—अतिविश्वस्ताभ्याम्। अभिसन्धीयते—प्रतार्य्यते।—"वञ्चनं चाभिसन्धानम्" इति हैमः। [अतिसन्धीयते इति पाठान्तरम्। अर्थस्तु समानः]। कामिसार्थः—विरहिगणः।

तव कुसुमशरत्वं शीतरश्मित्वमिन्दोः
द्वयमिदमयथार्थं दृश्यते मद्विधेषु।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखैः
त्वमपि कुसुमबाणान् वज्रसारीकरोषि (११) ॥ ४ ॥

(११) तदेव प्रतारणाबीजं प्रदर्शयति, तवेति।—तव अतिनिष्ठुरस्वभावस्य इत्यर्थः, कुसुमशरत्वं पुष्पबाणपदवाच्यत्वम् [अनेन मार्दवातिशयप्रकाशनात् विश्वासबीजं सूचितम्]। इन्दोः चन्द्रस्य, शीतरश्मित्वं शीतलीकरणत्वम् [अत्रापि शैत्यातिशय-व्यञ्जया विश्वासयोग्यता ध्वन्यते] इदं द्वयं मद्विधेषु विरहिषु इत्यर्थः, अयथा-र्थम् उक्तविपरीतम् [असुरशब्दवत् विरोधार्थे नञ्समासः] अकुसुमशरत्वम् उष्णकिरणत्वञ्चेति भावः, दृश्यते। द्वयस्य अयथार्थत्वे हेतुद्वयमुपन्यस्यति, विसृज-तीति।—यतः इन्दुः चन्द्रः हिमगर्भैः हिमानि गर्भे येषां तथोक्तैः, [अनेन कालु-त्रयेऽपि उष्णत्वशङ्का नास्तीति गम्यते] मयूखैः किरणैः अग्निं विसृजति ददाति; त्वमपि कुसुमबाणान् कौसुमान् शरान् वज्रसारीकरोषि, वज्रस्येव सारो येषां ते वज्रसाराः कुलिशकठोराः, अवज्रसारान् वज्रसारान् करोषि इति वज्रसारीकरोषि; [अभूततद्भावार्थे च्विप्रत्ययः] ("सारो बले स्थिरांशे च" इत्यमरः) वज्रवत् तीक्ष्णान् कृत्वा निक्षिपसि इति भावः। [अत्र च मयि इति विशेषे वक्तव्ये मद्विधेषु इति सामान्येन कथनात् अप्रस्तुतप्रशंसा बोद्धव्या। कुसुमबाणान् इति।—कुसुमेषु बाणतादात्म्यारोपात् प्रकृतविरहोपयोगित्वाच्च परिणामः। 'वज्रसारो' इत्यंशे उपमा समासगा; तथा 'हिमगर्भैः अग्निं विसृजति' इत्यादौ विरोधाभासः, विप्रलम्भस्वाभाव्येन तत्परिहारात्; चूर्णकेन सह प्रथमपादे, समुदयश्लोके च यथासङ्ख्यद्वयम्।—"यथा-सङ्ख्यमनुद्देश उद्दिष्टानां क्रमेण यत्" इति दर्पणोक्तेः; इत्येषामङ्गाङ्गित्वम्। पूर्वार्द्ध-वाक्यं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमपि अङ्गमध्ये निवेशनीयम्। न चात्र पूर्वार्द्धे कुसुमशरचन्द्रयोः क्रममुल्लङ्घ्य उत्तरार्द्धे हिमगर्भै-रित्यादिना व्यत्यासकथनात् प्रक्रमभङ्गदोषः शङ्कनीयः; विरहिण उक्तेरदोषत्वात्। तथा चूर्णके—"त्वया चन्द्रमसा च" इति चन्द्रस्य नाम्नोत्कीर्त्तनात् श्लोकेऽपि, कुसुमशरस्य तवेतिवत् चन्द्रस्यापि सर्वनामपदेन परामर्शः पुनरुक्तिदोषभिया युक्तः, इति न वाच्यं; तद्दोषक्षालनाय "शीतरश्मित्वमस्य" इति पाठस्य कल्पनीयत्वात् इति दिक्]। मालिनी वृत्तम् ॥ ४ ॥

अथवा (१२) ।—

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति (१३) ॥ ५ ॥

भगवन् ! एवमुपालब्धस्य ते न मां प्रति अनुक्रोशः ? (१४)

वृथैव सङ्कल्पशतैरजस्र-
मनङ्ग ! नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे
मय्येव युक्तस्तव बाणमोक्षः ? (१५) ॥ ६ ॥

(१२) कामकर्म्मणि दारुणेऽपि तव किञ्चित्प्रशंसाबीजमुपलभ्याह,—अथवेति ।

(१३) अनिशमिति ।—मकरकेतुः कामः यदि तां मदिरा मत्तखञ्जनः तद्वत् आयते दीर्घे नयने यस्याः तादृशीं, चञ्चलनेत्रामित्यर्थः, शकुन्तलाम् अधिकृत्य प्रहरति विध्यति, माम् इति शेषः ; यद्येवं स्यात् तदा अनिशम् अनवरतं मनसः रुजं पीड़ाम्, आधिमित्यर्थः, आवहन् उत्पादयन् अपि, मे मम अभिमतः सम्मतः । [अत्र ज्ञानार्थस्य मनधातोः वर्त्तमाने क्तप्रत्ययात् "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इति सूत्रेण कर्त्तरि षष्ठी] । यथा अहं तदर्थम् एवं कामार्त्तः, तथा साऽपि यदि मदर्थमेवं स्यात्, तदा तत् पीड़नं युक्तमिति भावः । [ अत्र मदिरेत्यत्रांशे उपमा समासगा ; "प्रहरन् अभिमतः" इत्यंशे च विरोधाभासः अलङ्कारः ; विरहिण उक्तौ तत्परिहारात् ] । आर्य्याजातिः ॥ ५ ॥

(१४) भगवन्निति ।—हे भगवन् !—सर्वशक्तिमन् काम ! एवम्—इत्थम्, उपालब्धस्य—तिरस्कृतस्य, मयेति शेषः, ते तव मां प्रति न अनुक्रोशः अनुकम्पा, वर्त्तते इति शेषः ।

(१५) वृथेति ।—हे अनङ्ग ! हरकोपानलेन दग्धसर्वावयव काम ! [ अनेन सर्वावयवेषु मनसोऽपि नष्टत्वात् 'नास्ति तव परोपकारस्मरणशक्तिः' इति, तथा निरङ्गस्य वर्द्धनेन वस्तुतः अस्मदादृतत्वात् तद्विज्ञानानभिज्ञता च व्यज्यते ] । मया अजस्रम् अविरतं सङ्कल्पशतैः मानसकर्म्मशतैः, मनःकल्पितैः प्रियासमागमादिभिरित्यर्थः, वृथैव निरर्थकमेव अतिवृद्धिम् अतीव विपुलतां नीतः प्रापितः असि । यो यस्य वृद्धिमादधाति तं स प्रत्युपकारेण प्रीणयति, इत्येष धर्म्मः ; तव तु तद्वैपरीत्यमिति मम त्वद्वर्द्धनाभिप्रायस्य निरर्थकत्वमिति भावः । किं तन्मया कृतं येनैवं

[ सखेदं परिक्रम्य ]। क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नम् आत्मानं विनोदयामि। न च प्रियादर्शनादृते शरणम् (१६) अन्यत्, यावदेनामन्विष्यामि। [ ऊर्द्ध्वमवलोक्य ]। इमामुग्रतपां वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति। (१७) भवतु तत्रैव तावद्गच्छामि। [ परिक्रम्यावलोक्य च ]। अनया बालपादपवीथ्या सुतनुरचिरं गतेति तर्कयामि। (१८) कुतः?—

सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः (१९) ॥ ७ ॥

मामाक्षिपसि? इत्याशङ्क्याह, आकर्णेति।—श्रवणोपकण्ठे श्रवणसन्निधौ, ("उपकण्ठान्तिकाभ्यर्णाः" इति अमरः) आकर्णम् इत्यर्थः, चापं धनुः आकृष्य मयि एव वर्द्धयितरि एव इति भावः; तव बाणमोक्षः शरनिक्षेपः युक्तः उचितः? नैव इत्यर्थः। [ अत्र पूर्वार्द्धं प्रति पराद्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमलङ्कारः; तथा आरब्धवैफल्यानर्थोत्पत्तिरूपः विषमालङ्कारभेदश्च ]। उपजातिः वृत्तम् ॥ ६ ॥

(१६) सखेदं प्ररिक्रम्य ( इति कविवाक्यम् )।—सोपतापपदसञ्चारमभिनीय इत्यर्थः। निरस्तविघ्नैः—निवारितान्तरायैः। अनुज्ञातः,—अनुमतः। खिन्नं—सन्तप्तम्। [अत्र "संस्थिते कर्म्मणि सदस्यैरनुज्ञातः श्रमक्लान्तम्" इति पाठे—संस्थिते अवसिते, कर्म्मणि तपोवनरक्षणव्यापारे, सदस्यैः विधिदर्शिभिः ("सदस्याः विधिदर्शिनः" इत्यमरः) श्रमक्लान्तं परिश्रमकातरम् इत्यर्थः, आत्मानं चेतः, विनोदयामि विनोदेन कौतुकेन यापयामि इत्यर्थः ]। प्रियादर्शनादृते—शकुन्तलादर्शनं विना [ऋतेशब्दयोगे पञ्चमी ]। शरणं—बाधकारकम्।—"शरणं गृहरक्षित्रोः" इत्यमरः।

(१७) उग्रतपां—तीव्रतापवतीम्। वेलां—समयं, मध्यन्दिनमित्यर्थः। लतावलयवत्सु—व्रततिमण्डलवेष्टितेषु। गमयति—अतिवाहयति, [ गम् णिच् लट् तिप् मित्त्वात् ह्रस्वः ]।

(१८) बालपादपवीथ्या—नवतरुराजिपार्श्ववर्त्तिना मार्गेण, सुतनुः,—सुन्दरी, शकुन्तला इत्यर्थः; अचिरं—शीघ्रं, तर्कयामि—अनुमिनोमि।

(१९) तत्र अनुमानस्य हेतुं दर्शयति, सम्मीलन्तीति।—तया सुतन्वा शकुन्तलया अवचितानि लूनानि पुष्पाणि येभ्यः तथोक्ताः, अमी पुरःस्थिताः बन्धनकोषाः

[ स्पर्शं रूपयित्वा ]। अहो! प्रवातसुभगोऽयं वनोद्देशः (२०)।-
शक्योऽरविन्दसुरभिः कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः (२१)॥ ८॥

न्तगर्भाः, न तावत् सम्मीलन्ति न सम्यक् मुद्रिता भवन्ति ; सुचिरगमने तु—सम-मीलन्नेव इति भावः। अमी च किसलयानां नवपल्लवानां छेदाः खण्डाः, ("छेदः खण्डोऽस्त्रियाम्" इति त्रिकाण्डशेषः) चीरेण निर्य्यासेन स्निग्धा मसृणाः, न तु शुष्का इति भावः ; विलम्बश्चेत् शुष्काः समभवन्नेव इत्यर्थः ; दृश्यन्ते। [स्वभावोक्तिरलङ्कारः]। आर्य्या जातिः॥ ७॥

(२०) स्पर्शं रूपयित्वा ( इति कविवाक्यम् )।—वायुस्पर्शम् अभिनीय इत्यर्थः। अहो! इति विस्मये। प्रवातेति।—प्रकृष्टो वातो यत्र तथाभूतः, अत एव सुभगः मनो-रमः। [अत्र प्रशब्देन वायोः शैत्यसौगन्ध्यमान्द्ययुक्तता द्योत्यते]। वनोद्देशः—वनभागः। [ अनेन विरहिमनोविनोदकत्वं ध्वन्यते ]।

(२१) वायोः प्रसिद्धगुणत्रयं प्रदर्शयन् स्वानुकूल्येन योजयति, शक्य इति।—अरविन्दसुरभिः पद्मसौरभवान्, मालिनीतरङ्गाणां कणान् सलिलबिन्दून् वहतीति तथाभूतः, [ अत्र च मालिनीतरङ्गाणामित्यनेन तरङ्गोत्पादकत्वात् वायोः मान्द्यं, तथा कणवाहीत्यनेन शैत्यञ्च ध्वन्यते ] पवनः अनङ्गेन कामेन तप्तैः अङ्गैः निर्दयं गाढम् [ अत्र "अविरलम्" इति पाठे—स एवार्थः ] आलिङ्गितुं सेवितुमित्यर्थः, शक्यः योग्यः। [ अत्र "शक्यम्" इति सानुस्वारपाठे—कर्म्मवाच्यतया पवन-पदेन सह सामानाधिकरण्यं,—"शक्यं श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्" इति महा-भाष्यवचनात् सिद्धम्। तथाऽत्र वामनोऽपि—"शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्" इति सूत्रमसूचयत्। उभयत्र "शकिसहोश्च" ( ३।१।९९ पा० ) इति सूत्रेण कर्मणि यत्प्रत्ययः। अथ च अरविन्दसुरभिः पद्मवत् मनोज्ञः, ("सुगन्धौ च मनोज्ञे च सुरभिः वाच्यवत् स्मृतः" इति विश्वः) ; तथा कणवाही शीतलः, पवनः पवित्रस्य सुहृदिव आलिङ्गनयोग्य इति श्लेषेण प्रस्तुतेन अप्रस्तुतस्य बन्धुव्यवहारस्य समारोपात् समासोक्तिः अलङ्कारः ; तथा शकुन्तलां द्रष्टा आत्म-विनोदनाय यतमानस्य राज्ञः पवनोऽपि सहायभूतः दैवात् तत्कर्म्मणि, इति समाधि-रलङ्कारश्च। तल्लक्षणं दर्पणे,—"समाधिः सुकरे कार्य्ये दैवात् वस्त्वन्तरागमात्" इति। न चात्र विरहिणः नृपस्य हृद्यपवनालिङ्गनस्य शक्यत्वोक्तिः कथं सङ्गच्छते? उद्दीप-कत्वादिति शङ्कनीयम् ; अनेन खलु "अत्रैव मालिनीतीरे प्रिया वर्त्तते" इति पूर्वं

[अवलोक्य।] हन्तास्मिन् वेतसलतामण्डपे सन्निहितया(२२) शकुन्तलया भवितव्यम्। तथाहि,—

अभ्युन्नता पुरस्तादवगाढ़ा जघनगौरवात् पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा (२३)॥ ८॥

यावद्विटपान्तरेणावलोकयामि। [तथा कृत्वा सहर्षम्] अये! लब्धं नेत्रनिर्वाणम्। एषा मनोरथप्रिया मे सकुसुमास्तरणं

सुव्यक्ततया तत् स्पष्टत्वाभिप्रायेण उक्तत्वात्।—"आलिङ्गन्ते गुणवति! मया ते तुषाराद्रिवाताः, पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति।" इत्यनेन मेघदूतेऽपि कथितं कविना]। आर्य्याजातिः॥ ८॥

(२२) प्रियानुमापकं चिह्नं दृष्ट्वा सहर्षमाह, हन्तेति।—[हन्त इति हर्षसूचकम् अव्ययम्]। अस्मिन् पुरःस्थिते, वेतसलतामण्डपे वानीरगृहे, सन्निहितया— उपस्थितया।

(२३) चिह्नमेव प्रकाशयति,अभ्युन्नतेति।—पुरस्तात् अग्रतः अभ्युन्नता,पश्चात् पृष्ठतः, गुल्फक्षेपदेशे इति भावः,जघनस्य श्रोणिपुरोभागस्य ("जघनं कटौ। स्त्रियाः श्रोणिपुरोभागे" इति हैमः) गौरवात् भारवत्त्वात् अवगाढ़ा अवनता, अभिनवा सद्यो निहितेति भावः, पदानां पदचिह्नानां ("पदं शब्दे च वाक्ये च पादतच्चिह्नयोरपि" इति विश्वः) पङ्क्तिः श्रेणी, अस्य लतामण्डपस्य पाण्डुसिकते पाण्डुः सिकता यत्र तस्मिन् [अनेन तत्प्रतिविम्बयोग्यता ध्वन्यते] द्वारे तत्प्रवेशमार्गे (अस्याः प्रवेशसूचनार्थं द्वारग्रहणम्) दृश्यते। [अत्र भङ्ग्या "अत्रैव शकुन्तला प्रविष्टा" इति गम्यस्य प्रत्यायनात् पर्य्यायोक्तिरलङ्कारः, तथा साधनैः पदपङ्क्तिप्रभृतिभिः साध्यस्य तत्प्रवेशस्य गम्यमानत्वात् अनुमानमपि, समुदाये च स्वभावोक्तिः स्पष्टा विभावनीया। न चात्र पदपङ्क्तेः प्रथमं पश्चाद्भागवर्णनमपहाय पुरोभागवर्णने वर्णनीयप्रक्रमभङ्गदोषावकाशः शङ्कनीयः; उन्नतस्थाने एव पूर्वं दृष्टिपातसम्भवात् तस्यैव अग्रे वर्णनमुपयुज्यते। अथ वात्र लतामण्डपस्य पृष्ठदेशादेव समागतः भूपतिः, तेन च पश्चाद्भागे एव प्रथमतः दृष्टिपातसम्भवात् तस्य तादृशवर्णनम्। तथा "भवतु तत्रैव तावद्गच्छामि" इत्यादिना एतदन्तेन परिसर्पो नाम प्रतिमुखसन्ध्यङ्गं दर्शितम्। तथा च दर्पणे,—"दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते" इति लक्षणात्]। आर्य्याजातिः॥ ९॥

(२४) नेत्रनिर्वाणं—नयनानन्दः, [अत्र शकुन्तलाविषयनिगरणात् अतिशयोक्तिः]। मनोरथप्रिया—मनोरथेन मनःसङ्कल्पेन प्रिया, न तु तत्त्वतः; अपरिगृहीतत्वादिति

शिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु लताव्यवहितः शृणोमि विश्वस्तकथितानि (२४) आसाम्।

[ इति विलोकयन् स्थितः। ]

[ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला। ] (२५)

सख्यौ। [उपवीज्य]। हला सउन्तले! अवि सुहाअदि दे (२६) णलिणीवत्तवादो? (क)

शक्। [सखेदम्]। किं वीजअन्ति मं पिअसहीओ? (ख)(२७)।

[ सख्यौ सविषादं परस्परमवलोकयतः ] (२८)।

राजा। बलवदसुस्थशरीरा (२९) अत्रभवती दृश्यते।

(क) हला शकुन्तले! अपि सुखयति ते नलिनीपत्रवातः?

(ख) किं वीजयती मां प्रियसख्यौ?

---

भावः। सकुसुमेति।—कुसुमास्तरणं पुष्पशय्या, तेन सहितम्। शिलापट्टं—पाषाणफलकम् [ अत्र "अधिशीङ्स्थासां कर्म्म" ( १।४।४६ पा० ) इति सूत्रेण अधिकरणे कर्म्मविभक्तिः ]। उपास्यते—सेव्यते। विश्वस्तकथितानि—निःशङ्कवचनानीत्यर्थः; ममादर्शनादिति भावः।

(२५) यथोक्तव्यापारा—यथोक्तः सकुसुमशिलाफलकशयनतल-निपतनादिरूपः व्यापारः यस्याः तादृशी। सखीभ्यां—अनसूया-प्रियंवदाभ्यां सह इत्यर्थः।

(२६) अपीति।—अपिरत्र प्रश्ने। सुखयति—सुखं करोति, सुखं जनयतीत्यर्थः। [ ते इति—सम्बन्धविवक्षया षष्ठी]।

(२७) किमिति।—प्रियसख्यौ मां किं वीजयतः?—व्यजनं कुरुतः? [ एतेन सन्तापाधिक्य, तेन च विषयान्तरज्ञानराहित्यं ध्वन्यते। अत्र च विधूतं नाम प्रतिमुखसन्धेः तृतीयमङ्गं दर्शितम्। यथाह दशरूपके,—"विधूतं स्यादरतिः" इति। मव्यमते—नैवं मन्यते। अनेन च विषयनिवृत्तिरूपा षष्ठावस्था सूचिता कामस्य ]।

(२८) सविषादं—विषण्णभावेन। तथा च उक्तं,—"या दृष्टिः पतिताऽपाङ्गा विस्तारितपुटद्वया। निर्मग्निष्पन्दतारा च विषण्णा सा विषादिनी॥" इति। परस्परम्—अन्योऽन्यम्। अवलोकयतः—पश्यतः, नान्येन इत्यर्थः। [एतेन अत्यर्थं शङ्का सूच्यते]।

(२९) बलवदिति।—बलवत् अत्यर्थम् असुस्थं शरीरं यस्याः तादृशी।

[सवितर्कम्]। तत् किमयमातपदोषः स्यात्; उत यथा मे मनसि वर्त्तते ? (३०)। [साभिलाषं निर्वर्ण्य]। अथवा कृतं सन्देहेन(३१)।—

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम्।
समस्तापः कामं मनसिज-निदाघप्रसरयोः
न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु॥ (३२) ॥१०॥

(३०) संशयान आह, तदिति।—आतपदोषः—सौरतापातिशयविकृतिः। पश्चात्तरमाह, उतेति।—[उत इति पक्षान्तरसूचकमव्ययम्]। यथेत्यादि।—अयं खलु कामजनितसन्ताप इति भावः।

(३१) किमपि निश्चयबीजमुपलभ्याह, अथवेति।—कृतं सन्देहेन,—सन्देहो नैव कार्य्य इत्यर्थः। [कृतमिति वारणार्थम् अव्ययम्। तद्योगे सन्देहशब्दात् तृतीया]।

(३२) वितर्कितं निश्चयकारणं सम्प्रति व्यनक्ति, स्तनेति।—प्रियायाः (इति स्वाभिप्रायवाक्यं) शकुन्तलायाः इदं वपुः स्वभावसुन्दरमित्यर्थः, स्तनयोः न्यस्तम् उशीरं वीरणाख्यतृणमूलानुलेपनं यस्मिन् तथोक्तं;—["शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला" इति कामशास्त्रात् तरुण्यङ्गस्य विशेषतः स्तनद्वयस्य सहजशैत्यसद्भावात् यदिह स्तनन्यस्तेति कथनं तत् सन्तापाधिक्यं गमयति] तथा प्रशिथिलं श्लथं, शरीरतापातिशयात् शुष्कतया इति भावः, [अनेन च सन्तापातिशयः ध्वन्यते] मृणालस्य पद्मखण्डस्य एकमद्वितीयम्, (अपरस्य तु वलयस्य धारणासमर्थत्वादिति भावः) [एतेन अत्यन्तमसहिष्णुता व्यज्यते] वलयं यत्र तथाभूतम्, अत एव साबाधम् आबाधया सम्यक् पीड़या सहितं, न तु पीड़या आसन्नजातया युक्तमित्यर्थः, [अनेन कतिपयदिनस्थायिनी, न तु बहुदिनजनितेयं पीड़ा इति व्यज्यते] (तथात्वेन प्रतीयमानमिति भावः) [एतेन पीड़ायाः सर्वाङ्गगत्वं व्यज्यते]। तदपि तथापि कमनीयं मनोहरम्। अथवा—[तदिति—वपुरित्यस्य विशेषणं]—तत् पूर्वं निर्बाधमिति यावत्, इदं वपुः साबाधमपि सम्यक् बाधासहितत्वेन प्रतीयमानमपीत्यर्थः, कमनीयं मनोहरम्। मनसिज-निदाघप्रसरयोः कामोष्णवेगयोः, तापः कामं सम्यक् समः तुल्यः, तु किन्तु ग्रीष्मस्य निदाघस्य [सम्बन्धविवक्षया कर्त्तरि वा षष्ठी] युवतिषु विषये अपराद्धम् अपराधः, [भावे क्तप्रत्ययः] सन्ताप इति यावत्, एवं सुभगं मनोहरं कमनीयतासम्पादकमित्यर्थः, न। [अत्र उभयतापयोः उपमानोपमेययोः एकतरस्य अपकर्ष-

प्रियं। [जनान्तिकम्]। अणसूए! तस्स राएसिणो पढ़मदंसणादो आरम्भिअ पज्जुच्छुअमणा सउन्तला, ण क्खु से अस्सणिमित्तो आतङ्को (३३) भवे। (ग)

अन। सहि! मम वि एआरिसी आसङ्का हिअअस्स, (३४) भोदु पुच्छिस्सं दाव णं। [प्रकाशम्।] सहि! पुच्छिदव्वासि किम्पि, बलीओ (३५) क्खु दे अङ्गाणं सन्दावो? (घ)

राजा। वक्तव्यमेव।—

शशिकरविशदान्यस्यास्तथाहि दुःसहनिदाघशंसीनि।
भिन्नानि श्यामिकया मृणालनिर्माणवलयानि (३६) ॥११॥

---

(ग) अनसूये! तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमनाः शकुन्तला, न खल्वस्याः अन्यनिमित्त आतङ्को भवेत्।

(घ) सखि! ममापि एतादृशी आशङ्का हृदयस्य, भवतु प्रक्ष्यामि तावदेनाम्। सखि! प्रष्टव्यासि किमपि, बलीयान् खलु तेऽङ्गानां सन्तापः।

कथनात् व्यतिरेकालङ्कारः। तेन अनुमानमपि व्यज्यते। युवतिषु इति सामान्यनिर्देशात् अप्रस्तुतप्रशंसा च]। शिखरिणी वृत्तम् ॥ १० ॥

(३३) पर्य्युत्सुकमनाः—उत्कण्ठितचित्ता। आतङ्कः—सन्तापः।—"रुक्तापशङ्कास्वातङ्कः" इत्यमरः।

(३४) एतादृशी—एवंविधा, नृपदर्शनजनितोऽयमातङ्कः इत्येवंरूपा इत्यर्थः। आशङ्का—सन्देहः, न तु तत्त्वतः, अत एव हृदयपदोपादानम्।

(३५) बलीयान्—प्रबलः [बलवत्-शब्दात् ईयसुन्प्रत्यये "विन्मतोर्लुक्" (५।३।६५ पा०) इति मतुपो लुक्]।

(३६) अङ्गसन्तापस्य बलीयस्त्वं साधयन्नाह, शशीति।—तथाहि अस्याः शकुन्तलायाः शशिकरा इव चन्द्रकिरणा इव विशदानि शुभ्राणि, मृणालेन निर्माणं येषां तादृशानि वलयानि करभूषणविशेषाः, श्यामिकया मालिन्येन सन्तापजनितकालिका इत्यर्थः, भिन्नानि भेदं गतानि सङ्क्रान्तानीत्यर्थः। अत एव दुःसहं दुःखेन सोढुं शक्यं निदाघं तापं शंसन्ति कथयन्ति सूचयन्तीति वा तथोक्तानि। [अत्र 'शशिकिरणविशदानि' इत्यत्र समासगा उपमालङ्कृतिः। उत्तरार्द्धे च वाक्यार्थहेतुकं काव्यलिङ्गम्]। आर्य्या जातिः ॥ ११ ॥

शकु। [पूर्वार्द्धेन शयनादुत्थाय]। हला! भण जं वत्तुकामासि। (ङ)

अन। हला सउन्तले! अलब्भन्तरा अम्हे दे मणोगदस्स वुत्तन्तस्स, किन्तु जादिसी इदिहासकथाणुबन्धेसु कामिजणाणं अवत्था सुणीअदि, तादिसी तुह त्ति तक्कमि; ता कधेहि, किं णिमित्तं दे अअं आआसो त्ति;—विआरं परमत्थदो अजाणिअ अणारम्भो (३७) किल पड़िआरस्स (च)।

राजा। अनसूययापि मदीयस्तर्कोऽवगतः। (३८)

शकु। बलीओ मे आआसो, ण सक्कणोमि सहसा (३९) णिवेदिदुं। (छ)

(ङ) हला! भण यद्वक्तुकामाऽसि।

(च) हला शकुन्तले! अलब्धान्तरा वयं ते मनोगतस्य वृत्तान्तस्य, किन्तु यादृशी इतिहासकथानुबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तवेति तर्कयामि, तत् कथय, किंनिमित्तस्तेऽयमायास इति;—विकारं परमार्थतोऽज्ञात्वा अनारम्भः किल प्रतीकारस्य।

(छ) बलीयान् मे आयासः, न शक्नोमि सहसा निवेदयितुम्।

(३७) अलब्धान्तराः—अलब्धम् अप्राप्तम् अन्तरं तत्त्वं याभिः तथोक्ताः, मर्मानभिज्ञाः इत्यर्थः। इतिहासेति।—इतिहासकथानाम् इतिवृत्ताख्यानानाम्, अनुबन्धेषु प्रसङ्गेषु। कामिजनानां—कामार्त्तानाम्। अवस्था—दशाविशेषः। आयासः—सन्तापः। विकारं—प्रकृतेरन्यथाभावं, व्याधिमिति यावत्। परमार्थतः—तत्त्वतः [सार्वविभक्तिकः तसिल्प्रत्ययः, प्रकृत्यादित्वात् तृतीया]। अनारम्भः—अनुद्योगः। उक्तञ्च वैद्यके—"व्याधेस्तत्त्वपरिज्ञानम्" इति। [अत्र कार्य्यकारणसमर्थनरूपार्थान्तरन्यासालङ्कारः]।

(३८) मदीयस्तर्कः—ममाभिप्राय इत्यर्थः, कामजनितेयमवस्था इत्येवंरूपः। अवगतः,—ज्ञातः।

(३९) बलीयान्—प्रबलः। आयासः—सन्तापः श्रमो वा। सहसा—अकस्मात्; आयत्यातिशये तु वक्ष्याम्येव इति भावः।

प्रियं। सुट्ठु क्खु एसा भणादि, किं एदं अत्तणो उमद्दवं णिगूहसि? अणुदिअसं क्खु परिहीअसि, अङ्गेसुं लावण्णमई छाआ केवलं तुमं ण मुञ्चदि। (ज) (४०)

राजा। अवितथम् (४१) आह प्रियंवदा। तथाहि,—

क्षामक्षामकपोलमाननमुरः काठिन्यमुक्तस्तनं,
मध्यः क्लान्ततरः, प्रकामविनतावंसौ छविः पाण्डुरा।

(ज) सुष्ठु खल्वेषा भणति, किमेतमात्मन उपद्रवं निगूहसि? अनुदिवसं खलु परिहीयसे, अङ्गेषु लावण्यमयी छाया केवलं त्वां न मुञ्चति।

(४०) एषा—अनसूया। सुष्ठु—सम्यक्, समुचितमित्यर्थः। भणति—कथयति, [अनेन ममापि एतत्प्रश्नेऽभिप्रायोऽस्तीति गम्यते]। उपद्रवं—क्लेशम्। निगूहसि—गोपायसि? अनुदिवसं—प्रत्यहम् [वीप्सार्थे अव्ययीभावसमासः]। खलु—निश्चितम्। परिहीयसे—परि सम्यक्, स्वतः क्लशाङ्गीत्वात् पूर्वापेक्षया इत्यर्थः, हीयसे—क्षीणा भवसि [कर्म्मकर्त्तरि लट्]। केवलम्—एकमात्रम्। लावण्यमयी—लावण्यव्याप्ता। छाया—कान्तिः।—"मुक्ताफलेषु छायायाः तरलत्वमिवान्तरा। प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते॥" इत्युक्तेः, मुक्ताफलेषु विलसत्कान्तिसमकान्तिरित्यर्थः। त्वां न मुञ्चति—न परित्यजति; तथा च सम्प्रति केवलं तव देहकान्तिर्दर्शनयोग्या, न तु अवयवा इति भावः।

(४१) अवितथं—सत्यम्।

(४२) तदेव प्रियंवदोक्तं शरीरकार्श्यं स्वयमपि दर्शयति, क्षामेति।—अस्याः आननं वदनं क्षामक्षामौ क्षीणप्रकारौ ["प्रकारे गुणवचनस्य" (८।१।१२ पा०) इति द्विर्भावः, कपोलौ तु पूर्वं क्लशौ सुन्दरीस्वभावात्, अधुना तापाधिक्यात् क्लशतरौ इति सूचनार्थं द्विर्वचनम्] कपोलौ गण्डौ यस्य तथोक्तम्। उरः वक्षःस्थलं, काठिन्येन दार्ढ्येन मुक्तौ स्तनौ यत्र तादृशम्; (एतदपि शरीरकार्श्यादिति भावः)। मध्यः कटिदेशः क्लान्ततरः अतिशयेन क्लान्तः, सहजतः क्षीणमध्यत्वात् पूर्वापेक्षया इत्यर्थः; अंसौ स्कन्धदेशौ प्रकामं सम्यक् यथा तथा विनतौ अवनतौ, (अत्रापि प्रशब्देन प्रकर्षद्योतनात् पूर्वापेक्षया बोध्यौ) सर्वत्र क्षीणत्वादिति भावः। छविः देहप्रभा, पाण्डुरा पाण्डुवर्णा, विरहकार्श्यादिति भावः। अत एव मदनेन कामेन स्पृष्टा सन्तापं नीता, इयं

शोच्या च प्रियदर्शना च मदनक्लान्तेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी(४२)॥१२॥

शकु। [निश्वस्य]। कस्स वा अण्णस्स कधइस्सं ? किन्तु आआसहेतुआ (४३) वो भविस्सं। (भ)

उभे। सहि ! अदो ज्जेव णिब्बन्धो सिणिद्धजणसंविभत्तं क्खु दुक्खं सज्झवेअणं होदि। (ञ) (४४)

(भ) कस्मै वा अन्यस्मै कथयिष्यामि ? किन्तु आयासहेतुका वो भविष्यामि।

(ञ) सखि ! अत एव निर्बन्धः, स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति।

शकुन्तला, पत्राणां शोषणेन शोषणकारिणा [शोषयतेः नन्द्यादित्वात् कर्त्तरि ल्युप्रत्ययः] मरुता पश्चिमानिलेन इत्यर्थः, स्पृष्टा माधवीलतेव वासन्ती वल्लीव [प्रियदर्शनत्व-सूचनाय माधवीपदोपादानं, तादृशवायुना अन्यस्याः अपि लतायाः शोषणसम्भवात्।] शोच्या शोचनीया च, तथापि प्रियदर्शना च मनोज्ञरूपा च आलक्ष्यते सम्यक् दृश्यते। [अत्र 'शोच्या च प्रियदर्शना च' इत्यंशे विरोधाभासः, शोच्या अनुकम्पार्हा इत्यर्थे विरोधस्य परिहारात्; काव्यलिङ्गानुप्राणितोपमा च। अङ्गान्यन्यानि विहाय कपोलादिस्थानवर्णनन्तु कामिजनस्वभावादित्यवगन्तव्यम्। अत्रापि श्लोके विरहि-वाक्यत्वात् मध्यवर्णनात् परं पुनः अंसद्वयवर्णने वर्णनीयप्रक्रमभङ्गदोषः चन्तव्यः, तथा लतापदात् पूर्वम् इवशब्दप्रक्षेपे अस्थानस्थपदतादोषोऽपि]। शार्दूलविक्रीडितं वृत्तम्॥ १२॥

(४३) निश्वस्य—दीर्घमुष्णञ्चेति शेषः, विरहादितमस्य तादृशनिश्वासोदयात् इति भावः। कस्मै वा अन्यस्य—भवतीभ्यामित्यर्थः, अतिप्रियतमत्वादिति भावः। ['कस्य' इति क्लीलिङ्गनिर्देशात् स्त्रीषु एव स्त्रीणां विश्वासातिरेकात् मनोभावाभिव्यक्तिः युज्यते इति सूचितम्। उभयत्र क्रियाग्रहणात् चतुर्थी]। आयासहेतुका—क्लेश-कारिणी; अतो न कथयामीति तात्पर्य्यम्।

(४४) निर्बन्धः—अयहातिशयः। [अत्र अकथनकारणस्य आयासहेतुकत्वस्य अन्याभ्यां खलु सखीभ्यां तद्विरुद्धस्य कथनस्य हेतुत्वे प्रयुक्तत्वात् व्याघातालङ्कारः। तथा च दर्पणे,—"व्याघातः स तु केनापि वस्तु येन यथा कृतम्। तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा॥" इति]। स्निग्धेति।—स्निग्धजनेषु बन्धुजनेषु संविभक्तं विभज्य

राजा। पृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम्।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि (४५) ॥१३॥

शकु। जदो पहुदि तवोवणरक्खिदा सो राएसी मम दंसण-पधं गदो (ट) (४६)—" [ इत्यर्द्धोक्तेन (४७) लज्जां नाटयति ]।

(ट) यतः प्रभृति तपोवनरक्षिता स राजर्षिर्मम दर्शनपथं गतः,—"।

अर्पितं, दुःखं क्लेशः सह्यवेदनं सह्या सहनीया वेदना अनुभवः यस्य तादृशं भवति ; सोढुं शक्यते इत्यर्थः। [अत्र सामान्येन विशेषसमर्थनात् अर्थान्तरन्यासालङ्कारः]।

(४५) सखीजनस्य आग्रहातिशयेऽपि प्रतिवचनदाने विलम्बमुद्वीक्ष्य साशङ्क-माह, पृष्टेति।—समं दुःखं सुखञ्च यस्य तथाभूतेन जनेन, सखीजनेन इत्यर्थः, [एतेनास्याः अवश्यवक्तव्यत्वं सूचितम्] पृष्टा अनुयुक्ता इयं बाला मुग्धा [अनेन चातुर्य्या-नभिज्ञेयं सत्यवाक्यमेव कथयिष्यति इति ध्वन्यते ] शकुन्तला मनोगतं सङ्गोपितम् आधिहेतुं मनस्तापकारणं ('पुंस्याधिर्मानसी व्यथा' इत्यमरः) न वक्ष्यति इति न, अपि तु वक्ष्यति एव ; [सम्भाव्यमाननिषेधनिवृत्तये नञ्द्वयम्] किन्तु अनया शकुन्तलया बहुशः वारं वारं विवृत्य मुखं परावृत्येत्यर्थः, सतृष्णं साग्रहम् इत्यर्थः, दृष्टोऽपि अवलोकितोऽपि अहम् अत्र सखीप्रश्ने, [ अत्र "अन्तरे" इति पाठे—अस्मिन् अवसरे सखीप्रश्नोत्तरदानसमये इत्यर्थः ] उत्तरश्रवणकातरतां प्रतिवचनश्रवणे व्याकुलतां (यदि मद्विषयिणी वार्त्ता न स्यादिति सभयत्वमिति भावः) औत्सुक्यमिति वा, गतः प्राप्तः अस्मि। [ अत्र यतो बाला अत एव मनोगतं वक्ष्यत्येव इति हेतु-हेतुमद्भावात् काव्यलिङ्गमलङ्कारः]। वसन्ततिलकं वृत्तम् ॥ १३ ॥

(४६) यतः प्रभृति—यस्मात् कालादारभ्य [प्रभृतिशब्दयोगे पञ्चमी] तपोवन-रक्षिता—आश्रमरक्षकः। सः—प्रसिद्धः, राजर्षिः,—ऋषिकल्पो राजा, दुष्मन्त इत्यर्थः। [अत्र मनसा पतित्वेन वृतत्वात् गुरुजनमुद्रया नामानुत्कीर्त्तनमित्यवगन्तव्यम्। अनेन नायिकागतमौचित्यं ध्वन्यते। तपोवनेत्यादिविशेषणैः राज्ञः दयादाक्षिण्यादि गुणगण-सूचनात् तत्रानुरागातिशयः नायिकायाः गम्यते। अनुरक्तो हि प्रियस्य केवलं गुणाति-शयं पश्यति इति प्रसिद्धिः ]। दर्शनपथं गतः,—दृष्टः।

(४७) अर्द्धोक्तेनेति।—अत्र "ततः प्रभृति" इत्यादि वक्ष्यमाणवाक्यम् एतदर्द्धम् इत्यवगन्तव्यम्।

उभे। कथेदु कथेदु पिअसही। (ठ)

शकु। "—तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थम्हि संवुत्ता। (ड) (४८)

उभे। दिट्ठिआ दे अणुरूए वरे अहिलासो, अधवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं ? (ढ) (४९)

राजा। [सहर्षम्।] श्रुतं यच्छ्रोतव्यम् (५०)।—

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।

दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य (५१) ॥१४॥

(ठ) कथयतु कथयतु प्रियसखी।

(ड) "—ततः प्रभृति तद्गतेनाभिलाषेण एतावदवस्थास्मि संवृत्ता।

(ढ) दिष्ट्या ते अनुरूपे वरेऽभिलाषः, अथवा सागरमुज्झित्वा कुत्र महानद्या प्रवेष्टव्यम् ?

(४८) ततः प्रभृति—तस्मादारभ्य [अत्रापि पूर्ववत् पञ्चमी]। तद्गतेन—राजर्षिगतेन। अभिलाषेण—वाञ्छया [हेत्वर्थे तृतीया]। एतावदवस्था—एतावती ईदृशी शोचनीया इत्यर्थः अवस्था यस्याः तादृशी ; राजर्षिदर्शनमेव शोचनीयतावीजमिति भावः। [अनेन तपानाशरूपा कामस्य सप्तमावस्था सूचिता]।

(४९) प्रश्नानुरूपोत्तरप्राप्त्या सानन्दमाह, दिष्ट्येति।—दिष्ट्या इत्यव्ययम्—['दिष्ट्या हर्षे शुभे भाग्ये' इति शब्दाब्धिः ; अथवा—"दैवं दिष्टं भागधेयम्" इत्यमरोक्तौ "दिष्टम्" इति भावे क्तनिर्देशात् "दिष्ट्या" इत्यत्र भावे क्तिन्प्रत्ययः, हेतौ तृतीया च] भाग्येन इत्यर्थः।—अनुरूपे वरे—योग्ये पात्रे। अभिलाषः—कामना। अमुमर्थं प्रशंसन्तो आह, अथवा इति।—महानद्या—गङ्गाप्रभृत्या। [यथान्नथैत् पत्ते— कर्त्तरि षष्ठी। अत्र अनुरूपेण प्रशंसनात् समालङ्कारः।—"समं स्यात् आनुरूप्येण श्लाघा योग्यस्य वस्तुनः" इति दर्पणोक्तेः। दृष्टान्तो वेति केचित्]।

(५०) सहर्षमिति—हर्षमभिनीय कथयतीति कविवाक्यम् ; अभिलषितोत्तरलाभात् हर्षोदय इति भावः। श्रोतव्यं—श्रवणयोग्यमित्यर्थः ; श्रवणयोग्यत्वं पुनः स्वाभीष्टवाक्यप्रयोगादिति भावः।

(५१) स्मर इति।—स्मरः काम एव तापस्य हेतुः कारणं, किन्तु स एव स्मर एव, तपात्यये ग्रीष्मावसाने, जलदागमे इत्यर्थः, अभ्रश्यामः सजलमेघेन आच्छन्न इति

शकु। ता जइ वो अणुमदं, तदो तधा पउत्तिदव्वं, जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति, अण्णधा सुमरेध मं। (ण) (५२)

राजा। अहो! विमर्षच्छेदि वचनम्। एतदेव कामफलं, यन्नफलमन्यत्। एतावदवस्थाऽपि मां सुखयति। (५३)

(ण) तद्यदि वामनुमतं ततस्तथा प्रवर्त्तितव्यं, यथा तस्य राजर्षेरनुकम्पनीया भवामीति, अन्यथा स्मरतं माम्।

यावत्, [अत्र "अर्द्धश्याम:" इति पाठे—पूर्वाह्णे सातप:, अपराह्णे मेघाच्छन्नत्वात् सच्छाय इत्यर्थ:; अत एव सातपत्वात् तापहेतु: सच्छायत्वाच्च निर्वापयिता इति दिवसपक्षेऽपि सङ्गच्छते। अस्मदधृतपाठे तु—ग्रीष्मसमये य: खलु दिवस: विच्छायत्वात् तापहेतु: स एव सम्प्रति जलदागमे घनसमाच्छन्नत्वात् निर्वापयिता इति सुतरां सङ्गच्छते।] दिवस: जीवलोकस्य प्राणिनिवहस्येव मे मम निर्वापयिता शमयिता तापस्येति शेष:, जात:। [अत्र उपमाऽलङ्कार:, तथा य एव तापहेतु: स एव तत्प्रशमन-हेतुरिति विरोध:, स्वगतत्वेन तापहेतुत्वं नायिकागतत्वेन च प्रशमहेतुत्वमिति भिन्नाश्रयत्वेन तत्परिहारात् विरोधाभास:]। आर्य्या जाति:॥ १४॥

(५२) प्रवर्त्तितव्यं—यतितव्यम्। अन्यथा—तद्विषयकचेष्टाभावे, स्मरतं मां—न पुनरित: परं भवतीनाम् इन्द्रियविषयीभूता तिष्ठामि, परन्तु स्मरणविषयिण्येव; तथा च 'अहं म्रिये' इति भाव:। [अत्र "अवश्यं सिञ्चतं मे तिलोदकम्" इति पाठे—स एवार्थ:]। [अनेन शमो नाम प्रतिमुखाङ्गं प्रदर्शितम्। यदाह—"तस्योप-शमनं यत्तु शमनं तदुदाहृतम्" इति। अत्र अमङ्गलव्यञ्जकाश्लीलत्वदोषभिया "म्रिये" इति नोपात्तम्]।

(५३) विमर्षेति।—विमर्षं संशयं छिनत्तीति तथोक्तं, सन्देहनिरासकमित्यर्थ:। [अत्र "संशयच्छेदि" इति पाठान्तरं समानार्थकम्]। अत्र मयि प्रकृष्टप्रेमापि किं स्वजनमनुरुन्धती मामुपेक्षते खलु इयम् उत न वेति प्रागासीत् संशय:, सम्प्रति वाक्येनानेन तस्य निरास: जात: इत्यर्थ:। एतदेव।—अनुरागोत्कर्ष एव इत्यर्थ:, काम-फलं—कामस्य प्रयोजनं, कार्य्यमिति यावत्। कामिनो हि अनुरागस्य परां काष्ठा-मारोप्यन्ते मदनेन इति भाव:। अन्यत्—सङ्गमादिकं, यत्तस्य चेष्टाया: फलं कार्य्यम्। यत्ते कृते परिचयादिना सङ्गमो लभ्यते इति भाव:। एतदवस्थापि—मदनक्लिष्टापि,

प्रियं। [जनान्तिकम्।] अणसूए! दूरगदो से मणोरहो, अक्खमा इअं कालहरणस्स। (त) (५४) *

(त) अनसूये! दूरगतोऽस्या मनोरथः, अक्षमेयं कालहरणस्य।

अनुरागोदयात् सङ्गमेन विनैव इति भावः। मां सुखयति—सुखं करोति; [सुखशब्दात् करोत्यर्थे णिच्प्रत्ययः; नामधातुरयम्। अथवा—सुखिरिति चौरादिकः स्वार्थ-णिजन्तः] आनन्दयति इत्यर्थः।

(५४) जनान्तिकम्—अप्रकाशमित्यर्थः। दूरगतः,—दूरम् अतिवृद्धिं गतः। मनोरथः—अभिलाषः, कामावेश इति यावत्। अक्षमा—असहा। कालहरणस्य—कालक्षेपस्य। (अत्र तु इदमवधातव्यं—यत् प्रथमे अङ्के नयनरागादिस्मरदशात्रयं प्रदर्शितं, तथा निद्राच्छेदः कृशता च क्षामक्षामेत्यनेन सूचितं, "किं वीजयती मां प्रियसख्यौ" इत्यनेन विषयनिवृत्तिश्च; तथा इतः प्राक् सखीसविधे मनोभाव-प्रकाशनात् त्रपानाशः। अवशिष्टस्य च परिहार्य्यावस्थात्रयस्य सूचनाय दूरगतमन्मथत्व-मुक्तम् इति सहृदयैः विभावनीयम्। तथा चोक्तं—"नयनप्रीतिः प्रथमं, चित्तासङ्गः ततोऽथसङ्कल्पः। निद्राच्छेदः तनुता विषयनिवृत्तिः त्रपानाशः॥ उन्मादो मूर्च्छा मृतिरित्येताः दशैव स्मरदशाः स्युः"। इति।)

* एतदनन्तरं मुम्बय्यादिमुद्रितपुस्तके बहु पाठान्तरं दृश्यते; तदिह प्रदर्श्यते क्रमेण।—कालहरणस्य इत्यनन्तरं—"जस्सिं बद्धभावा एसा, सो ललामभूदो पोरवाणं, ता जुत्तं से अहिलासो अहिणन्दिदुं" इति अधिके प्रियंवदावाक्ये,—यस्मिन् बद्धभावा एषा, स ललामभूतः पौरवाणां, तद्युक्तम् अस्याः अभिलाषः अभिनन्दितुम्" इति (सं) अनन्तरम्—"अनसूया। तह, जह भणसि। अत्र,—तथा, यथा भणसि" इति (सं)। ततश्च।—"प्रियंवदा। [प्रकाशम्।] सहि! दिट्ठिआ अणुरूवो दे अहिणिवेसो। साअरं उज्झिअ कहिं वा महाणई ओदरइ? को दाणिं सहआरं अन्तरेण अदिमुत्तलदं पल्लविदं सहेदि? इत्यत्र—दिष्ट्या अनुरूपस्ते अभिनिवेशः। सागरमुज्झित्वा कुत्र वा महानदी अवतरति? क इदानीं सहकारमन्तरेण अतिमुक्तलतां पल्लवितां सहते?" इति (सं)। अतिमुक्तलतां—माधवीलतां, सहते—सोढुं शक्नोति इत्यर्थः। [सहकार-मिति अन्तरेणशब्दयोगे द्वितीया]। पाठोऽयं "स्मर एव तापहेतुः" इत्यादिराज-वाक्यात् पूर्वम् अत्र पुस्तके वर्त्तते, इति पुनरुक्तिभिया न पुनरुपात्तः। [पाठे चात्र भावाहृष्टान्तालङ्कारः, समश्च। अत्र शेषोक्तप्रियंवदावाक्यांशद्वये प्रथमं नायिकायाः

अन। पिअम्बदे ! को णु उवाओ भवे, जेण अविलम्बिदं णिहुदञ्च सहीए मणोरहं सम्पादेम्ह ? (थ)

प्रियं। णिहुदं त्ति चिन्तणीअं, सिग्घं त्ति ण दुक्करं। (द)

अन। कधं विअ ? (ध)

प्रियं। णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअएसुं पजाअरकिसो (५५) विअ लक्खीअदि। (न)

(थ) प्रियंवदे ! को नु उपायो भवेत्; येन अविलम्बितं निभृतञ्च सख्या मनोरथं सम्पादयावः ?

(द) निभृतमिति चिन्तनीयं, शीघ्रमिति न दुष्करम्।

(ध) कथमिव ?

(न) ननु सोऽपि राजर्षिरस्मिन् जने स्निग्धदृष्ट्या सूचिताभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते।

कर्तृत्वं, परत्र च नायकस्य, इत्यवगन्तव्यम्। अनुमोदयावः अस्या वचनमिति भावः ]। ततोऽपि,—"राजा। किमत्र चित्रं यदि विशाखे शशाङ्कलेखामनुवर्त्तेते" इति पाठोऽधिकः; तत्र—विशाखे विशाखानक्षत्रयुगे, शशाङ्कलेखां चन्द्रलेखाम् अनुवर्त्तेते अनुसरतः। अत्र—एतस्मिन् विषये, किं चित्रम् ?—किमाश्चर्यमित्यर्थः। [सखीद्वयमभिप्रेत्य विशाखे इति द्विवचनं, शशाङ्कलेखामिति शकुन्तलाभिप्रायेण। अत एव लेखापदं दत्त्वा स्त्रीलिङ्गनिर्देशः कृतः। अप्रस्तुतप्रशंसालङ्कारः, समालङ्कारश्च व्यङ्ग्यः ]।

(५५) स्निग्धदृष्ट्या—सप्रणयदर्शनेन। सूचिताभिलाषः,—व्यक्ताभिप्रायः। प्रजागरकृशः,—प्रजागरेण चिरं निद्राच्छेदेन इत्यर्थः, कृशः क्षीणः, प्रियतमानुध्यानेन निद्राराहित्यमिति भावः। [ अत्र तु राज्ञः पुरुवंशप्रभवस्य सञ्जातः धीरोदात्तस्य पुरुषत्वात् सार्वभौमत्वाच्च तं प्रति त्रपा-नाशविषयनिवृत्तिरूपं दशाद्वयम् अनिर्देश्यं अनन्तरभाव्यं निद्राच्छेदकृशतारूपम् अवस्थाद्वयं प्रदर्शयति। एतेनास्य राज्ञः किमपि औचित्यं व्यज्यते ]।

राजा। [आत्मानमवलोक्य।] सत्यमित्थम्भूत एवास्मि। (५६) तथाहि।—

अनिशमिरतरैरन्तस्तापैर्विवर्णमलीमसं
निशि निशि भुजन्यस्तापाङ्गप्रवर्त्तिभिरश्रुभिः।
अनतिलुलितज्याघाताङ्कात् मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं पुनः प्रतिसार्य्यते (५७) ॥१५॥

(५६) प्रियंवदावाक्यमाकर्ण्य स्वीकुर्वन्नाह, सत्यमिति।—इत्थम्भूतः—ईदृशी-मवस्थामापन्नः, कृश एव सञ्जात इत्यर्थः।

(५७) तामेव कार्श्यावस्थां स्वयं प्रदर्शयति, अनिशमिरिति।—अन्तस्तापः अन्तर्गतैः सन्तापैः हेतुभिः अनिशमिरतरैः अत्युष्णैरित्यर्थः, [आनन्दाश्रुणः शिशिरत्व-सम्भवात् अनिशमिरित्युक्तम्] निशि निशि प्रतिरात्रं, [दिवसे तादृशवैधुर्य्यप्रदर्शनेन नायकस्य धीरोदात्तत्वव्याघातः स्यादिति निशिपदोपादानम्। अनेन खलु शकु-न्तलायाः प्रथमदर्शनादारभ्य ईदृशी जागरावस्था जाता इति ध्वन्यते, वीप्साश्रव-णात्।] भुजे हस्ते न्यस्तात् अर्पितात् अपाङ्गात् नयनान्तात् (अत्र च जागराव-स्थायां शय्यातलविवर्त्तनैः उपाधानस्य व्यर्थीभूतत्वात् भुजस्यैव उपाधानत्वं सम्भवति, इति तदेवोक्तं कविना।) प्रवर्त्तिभिः निर्गलद्भिः अश्रुभिः, विवर्णं—वर्णः कान्तिः तद्रहितम्, अत एव मलीमसं मलिनञ्च [विवर्णमणीकृतमिति पाठे—विवर्णः निष्प्रभः मणिः मध्यरत्नं यस्य तत् विवर्णमणि, ततश्च अविवर्णमणि विवर्णमणि कृतमिति विवर्णमणीकृतम्, अभूततद्भावे च्विप्रत्ययः। अनेनापि सुचिरमेव इयमवस्था इति ध्वन्यते, अत्यल्पकालेन विवर्णत्वासम्भवात्।] कनकवलयं स्वर्णवलयम् (अत्र श्रैष्ठ्यद्योतनार्थं कनकपदम्; अन्यथा "वलयम्" इत्यनेनैव पर्य्याप्तत्वात्।) अनति-लुलितः अनतिव्यञ्जितः कनकवलयाच्छादनेन इति भावः, ज्यायाः मौर्व्याः आघा-तस्य आकर्षणजनितस्येति भावः, अङ्कश्चिह्नं यत्र तथाभूतात्; अथवा—अनति-लुलितायाः कोटिद्वये दृढ़ं बद्धायाः ज्यायाः मौर्व्याः आघातेन अङ्कश्चिह्नं यत्र तस्मात् इत्यर्थः, [अनभिलुलितज्याघाताङ्कमिति पाठे—अनभिलुलितः अस्पृष्टः ज्याघातस्य अङ्कः चिह्नं येन तथोक्तं; कनकवलयमित्यस्य विशेषणम्। पूर्वं खलु स्थूलतादशायां मणिबन्धादुपरिभागे वलयस्य अवस्थानात् ज्याघातस्य अस्पृष्टत्वं सम्भवति, अत-

प्रियं। [विचिन्त्य।] हला! मश्रणलेहणं दाणिं से करीअदु, अहं तं सुमणोगोविदं कदुअ देवदासेवावदेसेण (५८) तस्स रस्सो हत्थं पावइस्सं। (प)

अन। सहि! रोअदि मे सुउमारो एसो पओओ, किं वा सउन्तला भणादि? (फ) (५९)

---

(प) हला! मदनलेखनमिदानीमस्य क्रियताम्। अहं तत् सुमनोगोपितं कृत्वा देवतासेवाऽपदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि।

(फ) सखि! रोचते मे सुकुमार एष प्रयोगः, किं वा शकुन्तला भणति?

दशायां तु सम्प्रति कृशताप्रदर्शनार्थं पूर्वतनस्थूलभावः अनेन संसूचितः, इति सूक्ष्मं विभावनीयम्]। मणिबन्धनात् मणेः बन्धनं यत्र तस्मात्, भुजकरयोः सन्धेः प्रकोष्ठात् इत्यर्थः, मुहुः पुनः पुनः, स्रस्तं स्रस्तं गलितं गलितम्, अतिकार्श्यात् वारं वारं करमूलमागतम् इत्यर्थः, पुनः प्रतिसार्य्यते ऊर्द्धं नीयते इत्यर्थः। [अत्र स्वभावोक्ति-रलङ्कारः]। हरिणी वृत्तं,—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्। सप्तदशाक्षरपादच्छन्दसः ४६११२ संख्यकप्रस्तारान्तर्गतं वृत्तमिदम्॥१५॥

(५८) मदनलेखनं—विरहिण्याः स्वीयाभिप्रायावस्थासूचकं लेखनं; यदाह— "लेख्यप्रस्थापनैः स्निग्धैः वीक्षितैः मृदुभाषितैः। दूतीसम्प्रेषणैर्नार्य्या भावाभिव्यक्ति-रिष्यते"॥ इति। सुमनोगोपितं—सुमनोभिः पुष्पैः, गोपितं संवृतम्। देवतासेवाऽप-देशेन—देवार्चनाच्छलेन। [अत्र "देवताप्रसादस्यापदेशेन" इति पाठे,—निर्माल्यी-भूतं यत् कुसुमं तत्प्रदानच्छलेन इत्यर्थः। पूर्वपाठे—देवार्चनार्थं कुसुमानि एतानि गृह्यन्ताम् इति पुष्पप्रदानव्याजेनेति भावः। पाठान्तरे तु—स्वकल्याणार्थं देवनिर्म्माल्यभूतानि कुसुमानि शिरसि धार्य्यन्ताम् इत्युक्तेति भावः। अनेन अवश्य-ग्राह्यत्वं व्यज्यते]।

(५९) रोचते मे—प्रीणयति मामित्यर्थः। ["रुच्यर्थानां प्रीयमाणः" (१।४।३३पा०) इति सूत्रेण मे इत्यत्र सम्प्रदाने चतुर्थी]। सुकुमारः—सुकोमलः, अनभिशङ्कनीय इति भावः। यत् यदर्थं क्रियते तत्र तस्याः सम्मतिः अग्रत एव अवश्य-मपेक्षणीया, अन्यथा आरब्धवैफल्यं स्यात्, इत्यतः शकुन्तलासम्मतिं प्रार्थयमाना आह—किं वेति। अत्र 'शकुन्तलायाः सम्मतिरस्ति न वा?' इति प्रश्नः।

शकु। सहीणिओओ वि विकप्पोअदि ? (य) (६०)

प्रियं। तेण हि अत्तणो उवण्णासाणुरूअं चिन्तेहि ललिदपदावलिबन्धं गोदिअं। (भ) (६१)

शकु। चिन्तेमि, किन्तु अवहीरणाभीरुअं वेवदि (६२) मे हिअअं। (म)

राजा। [विहस्य।]—

अयं स ते तिष्ठति सङ्गमोत्सुको
विशङ्कसे भीरु ! यतोऽवधीरणाम्।

(य) सखीनियोगोऽपि विकल्प्यते ?

(भ) तेन हि आत्मन उपन्यासानुरूपां चिन्तय ललितपदावलिबन्धां गीतिकाम्।

(म) चिन्तयामि, किन्तु अवधीरणाभीरुकं वेपते मे हृदयम्।

(६०) सखीनियोगोऽपि—सख्योरादेशोऽपि, विकल्प्यते—विचार्यते ; सखीनियोगे शुभाशुभसन्देहो नायाति इति भावः। [अनेन सख्युपरि अस्याः प्रणयातिशयो ध्वन्यते]।

(६१) तेन हि—तवापि सम्मतत्वेन इत्यर्थः। उपन्यासानुरूपां—वृत्तान्तानुरूपाम्। ललितपदावलिबन्धां—ललितः सुन्दरः, सुकोमल इत्यर्थः, शृङ्गाररसाभिव्यञ्जकत्वादिति भावः, पदावलीनां सुप्तिङन्तचयानां बन्धः रचना यस्यां तथाविधाम्। गीतिकामिति।— अनेन गीतेर्भेदान्यतमं छलितम् अवगन्तव्यम् ; तथा चोक्तं,—"रतिक्रोधोत्साहभावप्रधानं छलितं मतम्" इति।

(६२) अवधीरणाभीरुकम्—अवज्ञाभयशीलम्, अत एव वेपते कम्पते ; भयात् इत्यर्थः। स यदि मदनलेखं प्राप्य "वनवासिनीयं मदयोग्या" इति कृत्वा न गृह्णाति इति चिन्तयित्वा भीताऽस्मि इत्यर्थः ; अत एव आत्मगुणावमानिनि ! इति वक्ष्यमाणं सखीकृतसम्बोधनमुपयुज्यते।

(६३) शकुन्तलावाक्यमाकर्ण्य स्वाभिप्रायमाह, अयमिति।—हे भीरु ! भयशीले ! [एतेन आत्मतिरस्कारसम्भावना ध्वन्यते। भीतस्य, "भीतस्त्वम्" इति प्राक् कथने तस्य अनन्तरसम्भाव्यभयापनोदः भवति इति मत्वैव वा सम्बोधनमेतत् प्रयुक्तमिति भावः।] यतः यस्मात् जनात् अवधीरणाम् अवज्ञां विशङ्कसे

लभेत वा प्रार्थयिता न वा श्रियं
श्रिया दुरापः कथमीप्सितो भवेत्? (६३) ॥ १६ ॥

अपि च,—

अयं स, यस्मात् प्रणयावधीरणा-
मशङ्कनीयां करभोरु! शङ्कसे।
उपस्थितस्त्वां प्रणयोत्सुको जनो
न रत्नमन्विष्यति, मृग्यते हि तत् (६४) ॥ १७ ॥

सम्भावयसि, (तदानीमेव अवधीरणाशङ्का सम्भाव्यते, यदि केवलं मत्प्रार्थनैव तव प्राप्तिहेतुः स्यादिति भावः।) सोऽयं तव पुरः स्थितः (इदंशब्दस्य पुरोवर्त्तित्वोपस्थापकत्वात्; तदुक्तम्—"इदमः प्रत्यक्षरूपं समीपतरवर्त्ति चैतदो रूपम्।" इति।) जन इति आत्मनिर्देशः। ते तव सङ्गमे उत्सुकः उत्कण्ठितः सन् तिष्ठति। ["अत्र सङ्गमोत्सुकः तिष्ठति" इति विशिष्टस्यैव विधेयत्वम्; तव प्रार्थयिता कथं दुर्लभः? इत्याशयः]। तदेव समर्थयते, लभेतेति।—प्रार्थयिता याचकः, श्रियाः इति शेषः, श्रियं सम्पदं लभेत वा न वा लभेत, कदाचित् सम्पदभिलाषिणः सम्पल्लाभः स्यात्, कदाचिद्वा न स्यादिति भावः; किन्तु ईप्सितः आप्तुमिष्टः प्रार्थयिता, श्रियः इति शेषः, श्रिया लक्ष्म्या कथं दुरापः दुर्लभः? [श्रिया इति—कर्त्तरि तृतीया, खलर्थानां योगे षष्ठीनिषेधात्। दुराप इति।—दुर् आप्+खल्प्रत्ययः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। तत्र तु क्रमपठितस्य पूर्ववाक्यस्य पूर्व्ववाक्यं समर्थकम्, उत्तरस्य तु उत्तरमिति बोद्धव्यम्। अत्र श्रीशब्दस्य—"लक्ष्मी-सरस्वती-धी-त्रिवर्ग-सम्पद्विभूतिशोभासु। उपकरण-वेशरचना-गुणेषु सरलद्रवे च कथिता श्रीः॥" इति व्याड़िकोषात् अतिशयोक्त्या च युगपत् लक्ष्म्यादिसामान्यवाचकतया सामान्येन समर्थकत्वं बोध्यम्। तथाऽत्र उद्देश्यप्रतिनिर्देश्यप्रक्रमभङ्गदोषः प्रथम-द्वितीयचरणयोः व्यत्यासपाठेन परिहरणीयः]। वंशस्थविलं वृत्तम्।—"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात्॥ १६॥

(६४) पुनर्भङ्ग्यन्तरेणाह, अयमिति।—करभोरु! करभाविव मणिबन्धात् कनिष्ठाङ्गुलिपर्य्यन्तप्रदेशाविव ऊरू यस्याः तत्सम्बोधने; ("मणिबन्धादाकनिष्ठं करस्य करभो बहिः" इत्यमरः) अथवा—करभस्य करिशावकस्य ऊरू इव ऊरू यस्याः तत्सम्बोधने; यद्वा—करभपदस्य करिशावकशुण्डे लक्षणा, तौ इव ऊरू यस्याः

सख्यौ। अइ अत्तगुणावमाणिणि! को णाम सन्दाव-णिव्वाणहेतुअं सारदीअं ज्जोसं आदवत्तेण णिवारेदि? (य)(६५)

शकु। [सस्मितम्।] णिओइदा म्हि। (र)

[इति उपविष्टा चिन्तयति।]

राजा। स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि। (६६) यतः,—

(य) अयि आत्मगुणावमानिनि! को नाम सन्तापनिर्वाणहेतुकां शारदीं ज्योत्स्नामातपत्रेण निवारयति?

(र) नियोजिताऽस्मि।

इत्यर्थः। [एतेन वर्त्तुलत्वं, सुखस्पर्शत्वञ्च व्यज्यते। स्वाभिप्रायमेतत्]। यस्मात् प्रणयस्य प्रेम्णः अवधीरणाम् अवज्ञानम् अशङ्कनीयां शङ्कितुमनर्हां शङ्कसे तर्कयसि, सोऽयं प्रणयोत्सुकः तव प्रणयाकाङ्क्षी; यद्वा—प्रणयार्थं प्रार्थनार्थम् उत्सुकः उत्कण्ठितः इत्यर्थः, जनः, त्वाम् उपस्थितः त्वत्समीपे वर्त्तते इत्यर्थः। हि यतः रत्नं (कर्त्तृ) न अन्विष्यति कमपीति शेषः, तत् रत्नं मृग्यते अन्विष्यते लोकैरिति शेषः। [अत्रापि सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः। अत्र भङ्ग्यन्तरेण पुनः कथनात् न पुनरुक्तदोषः]। वंशस्थविलं वृत्तम्॥ १७॥

(६५) आत्मगुणेति।—आत्मनः स्वस्य गुणान् शीलसौन्दर्य्यादीन् अवमन्यते इति तत्सम्बोधने। तव गुणमहिम्नैव स खलु क्रीतः, कथं तवावमाननाशङ्का? इति भावः। को नामेति।—[नाम इति सम्भावनायामव्ययम्]। सन्तापनिर्व्वाणहेतुकां—शरीरताप-प्रशमयित्रीं, शारदीं—शरत्कालसम्बन्धिनीम्। [एतेन अत्यन्ताह्लादकारित्वं ध्वन्यते]। ज्योत्स्नां—चन्द्रिकाम्, आतपत्रेण—छत्रेण। ["पटान्तेन" इति पाठे—वस्त्राञ्चलेन इत्यर्थः]। निवारयति—प्रतिषिध्यति। [अत्र शकुन्तलावाक्यं प्रति दृष्टान्तालङ्कारः]।

(६६) विस्मृतनिमेषेण—विस्मृतः निमेषः येन तादृशेन, निर्निमिषेण इत्यर्थः; [अत एव 'चक्षुषा' इति विशेष्यपदोपादानम्]। प्रियां—सर्वथा मम प्रेमास्पदीभूतामित्यर्थः; पूर्वं बहुशः दृष्टामपि सम्प्रति अनुरागं मयि आविष्कुर्वतीम्, अत एव प्रत्ययभूतामिति हृदयम्। स्थाने इत्यव्ययं; युक्तमेव इत्यर्थः;—"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः; अथवा—स्थानविशेषे मां प्रति प्रणयाभिव्यञ्जके इत्यर्थः।

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन (६७) ॥ १८ ॥

शकु। हला ! चिन्तिदा मए गीदिआ, असण्णिहिदाणि उण लेहणसाहणाणि । (ल) (६८)

प्रियं। णं इमस्सिं सुओदरसुउमारे णलिणीवत्ते पदच्छेद-भत्तीए (६९) णहेहिं आलिहीअदु । (व)

---

(ल) हला ! चिन्तिता मया गीतिका, असन्निहितानि पुनर्लेखनसाधनानि ।

(व) ननु अस्मिन् शुकोदरसुकुमारे नलिनीपत्रे पदच्छेदभक्त्या नखैरालिख्यताम् ।

---

(६७) तदेव अनुरागाविष्करणं प्रदर्शयति, उन्नमितेति ।—पदानि सुप्तिङन्त-रूपाणि, लेखयोग्यानीति भावः, रचयन्त्याः अस्याः शकुन्तलाया उन्नमिता उत्क्षिप्ता एका भ्रूलता यस्य तादृशम् आननं पुलकाञ्चितेन रोमाञ्चालङ्कृतेन [अत्र "कण्टकितेन" इति पाठे—स एवार्थः ।—"रोमहर्षेऽपि कण्टकः" इत्यमरोक्तेः] कपोलेन [अत्र एक-वचनात् यद्दिक्स्था भ्रूलता उन्नमिता, तत्रस्थ एव कपोलः कण्टकित इति सूचितम् ] मयि—सौभाग्यशालिनि इत्यर्थः, [ अत्र अधिकरणनिर्देशात् स्वस्य सौभाग्यातिशयः व्यज्यते ] अनुरागं प्रणयविशेषं, [रतेरेव षष्ठी अवस्था अनुरागः । यदुक्तं सुधाकरे,—अङ्कुर-पल्लव-कलिका-प्रसून-फल-भोगभागियं क्रमशः । प्रेमा मानः प्रणयः स्नेहो रागो-ऽनुराग इत्युक्तः" इति । अनुरागलक्षणमपि तत्रैव यथा,—"राग एव स्वसंवेद्यदशा-प्राप्त्या प्रकाशितः । यावदाश्रयवृत्तिश्चेदनुराग इतीरितः ॥"इति ।] कथयति प्रकटयति । [ अत्र भ्रूलतामित्यत्र उपमालङ्कारः । भ्रुवोरेव उन्नमनस्य प्रस्तुतत्वेन साधकत्वात् । समुदाये स्वभावोक्तिः । तथा भ्रून्नमनादिलिङ्गेन राजन्यनुरागस्यानुमानात् अनु-मानालङ्कारश्च । अन्ये तु—रोमाञ्चितकपोलान्यथाऽनुपपत्त्या अनुरागबोधनात् अर्था-पत्तिमाहुः । द्वयोः सन्देहसङ्करः इति केचित् । अनेन नव्यमते क्रमो नाम नभोङ्गं, यदाह दर्पणे,—"भावतल्लोपलब्धिस्तु क्रमः स्यात्" इति । प्राचीनास्तु नैवं मन्यन्ते, तदिह चतुर्थाङ्कारम्भे विवेचयिष्यते ] । आर्या जातिः ॥ १८ ॥

(६८) असन्निहितानि—अनुपस्थितानि । लेखनसाधनानि—मसीलेखन्यादीनि ।

(६९) शुकोदरेति ।—शुकस्य पक्षिविशेषस्य उदरमिव सुकुमारं सुकोमलं तस्मिन् । [इत्युपमा] । पदच्छेदभक्त्या—पदानां विच्छेदरूपा या भक्तिः रचनाविशेषः

शकु । [यथोक्तं रूपयित्वा ।] हला ! सुणुध दाव सङ्गदत्था (७०) ण वेत्ति । (श)

उभे । अवहिद म्ह । (ष)

शकु । [वाचयति ।]—

**तुज्झ ण आणे हिअअं, मम उण मअणो दिवा वि रत्तिं वि ।**
**णिक्किव ! दावइ बलिअं तुह हत्थमणोरहाइं अङ्गाइं(स)(७१)॥१८॥**

(श) हला ! शृणुतं तावत् सङ्गतार्था न वेति ।

(ष) अवहिते स्वः ।

(स) तव न जाने हृदयं, मम पुनर्मदनो दिवापि रात्रिमपि ।
निष्कृप ! तापयति बलीयस्तव हस्तमनोरथानि अङ्गानि ॥

तथा, अन्तरा अन्तरा पदं विच्छिद्य विच्छिद्य इत्यर्थः, [अत्र "नलिनीपत्रे" इत्यनन्तरं "णहेहिं णिक्खित्तवण्णं करेहि" इत्यन्त पाठे—"नखैः निक्षिप्तवर्णं कुरु" (इति सं)। तत्र निक्षिप्तवर्णमिति गीतिवस्तुविशेषणं; वर्णानि सन्निवेश्य इत्यर्थः ।] अर्थसौकर्य्यार्थेति भावः ।

(७०) सङ्गतार्था—युक्तार्था ।

(७१) तवेति ।—तव हृदयं न जाने न वेद्मि, [अत्र तवेति विशिष्योपादानात् स्वस्य उत्कण्ठातिशयः, 'तस्य तु न तथा' इति व्यज्यते] पुनः किन्तु हे निष्कृप ! निर्दय ! [अत्र "निर्घृण" इति पाठे,—स एवार्थः ।] मदनः कामः तव हस्ते मनोरथः अभिलाषः येषां तादृशानि त्वदायत्तानीति भावः, ["हस्तमनोरथाया" इति पाठे—येषामित्यत्र यस्या इति स्त्रीलिङ्गैकत्वबहुव्रीहौ,—तव हस्तमनोरथायाः त्वदधीनाया इत्यर्थः] मम अङ्गानि दिवापि रात्रिमपि अहर्निशमित्यर्थः; अथवा—दिवापि रात्रिमपि निष्कृप ! इति योजना । तत्र—दिवा विषयान्तरासङ्गात् निर्दयत्वं सम्भाव्यते, रात्रावपि निर्विषयस्य निर्दयत्वन्तु अतीव असम्भवम् इति नितरामुपालम्भः । बलीयः अत्यर्थं यथा तथा तापयति । * अथवा—तव चवियस्य हृदयं वक्षःस्थलं ("हृदयं मानसो-रसोः" इति विश्वः) वैरिनिकरखरतरशरशतैरपि दुर्भेद्यं विकटदुर्गकपाटसदृशमित्यर्थः न जाने ? इति काकुः ; अपि तु जनपरम्परामुखात् जाने एव । पुनः किन्तु मदनः कामः मम अङ्गानि अतथाभूतानि इत्यर्थः, दिवापि रात्रिमपि अत्यर्थं तापयति । निष्कृप ! निर्दय ! यदधुनापि तादृशहृदयाश्रयं न ददासि, अतस्त्वं निर्दय एव

राजा । अवसरः खलु अयमात्मानं दर्शयितुम् । [ सहसा उपसृत्य ] ।—

**तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव ।**
**ग्लपयति यथा शशाङ्कं न तथा हि कुमुद्वतीं दिवसः(७२)॥२०॥**

इत्यर्थः । [अनेन स्वस्य आलिङ्गनाभिलाषः व्यज्यते] * अथवा—तव इममनोरथानि मे अङ्गानि मदनः नितरां पीड़यति भवान् अद्यापि स्वस्थो वर्त्तते, इति तव क्षत्रियस्य हृदयं कीदृशं निष्ठुरमिति तपस्विनी अहं न जाने । आश्रितप्रतिपालनं तु क्षत्रियस्य धर्मः इति श्रूयते, भवांस्तु न तथा, इत्याह, निष्कृपेति ।—हे निष्कृप ! तव दया नास्ति इत्यर्थः । * अथवा—इह अयम् इति पदच्छेदः, अयं जनः अहमित्यर्थः, तव—प्रियस्य, हृद हृदयमित्यर्थः, अत एव मदनः अहर्निशं तव अधीनानि मम अङ्गानि तापयति, तव सौन्दर्य्यगुणेन पराजितोऽसौ दग्धकामः माम् अबलां तव हृदयञ्च मत्वा नितरां पीड़यति, हे निष्कृप ! निर्दय ! तत्तु किमर्थं पीड़यति ? इति न जाने ; यतः त्वं निर्दयत्वात् मां तव हृदयमेव न मन्यसे ; अतः तस्य पीड़नं निष्फलमेव इत्यर्थः । * यद्वा—इह अयं जनः अहमित्यर्थः, मम तु अङ्गानि सर्वदा मदनः तापयति इति न जाने ? न जानामि किम् ? इति काकुः ; विजयिनः तव अङ्गम् इति मत्वा इति भावः । * शोभीकपक्षहये निर्घृण इति पाठः समीचीनः; तस्य 'निर्निन्द' इत्यर्थे श्लिष्टत्वात् । [ श्लोके चात्र श्लेषः, अर्थापत्तिः, अनुमानं, रूपकं, व्यस्तरूपं विरोधाभासः काव्यलिङ्गं च इत्यादयः अलङ्काराः निपुणैर्ज्ञेयाः । तत्र तु 'निर्घृण' इति पाठे—सर्वत्र अभङ्गश्लेषः, इदयमित्यत्र पदच्छेदे—सभङ्ग-श्लेषः । प्रथमे अर्थे—तवापि सन्तापोऽस्ति इत्यर्थादापतनात् अर्थापत्तिः ; द्वितीये—स्वाभिलषितालिङ्गनस्यानुमानात् अनुमानम् ; तृतीये च—तदेव, सर्व्वत्र च—मदनः दर्पः तापयति दुःखं ददाति इति विरोधाभासः कामार्थे तस्य परिहारात् । चतुर्थे पुनः,—इह अयम् इति पदच्छेदे तादात्म्यारोपात् समासाभावाच्च व्यस्त-रूपकम् ; पञ्चमे च—तदेव । काव्यलिङ्गं पुनः पदार्थहेतुकं सर्व्वत्रैव विद्यते, तदिह ग्रन्थगौरवभिया न समर्थ्यते । रात्रिमपि इत्यत्र "कालाध्वनोरत्यन्तसंयोगे"(२।३।५ पा०) इति सूत्रेण द्वितीया ] । आर्य्या जातिः ॥ १९ ॥

(७२) रन्ध्रान्वेषी नृपतिः सम्प्रति शकुन्तलावाक्यस्य प्रत्युत्तरव्याजेन स्वावस्थां वर्णयन्नाह, तपतीति ।—हे तनुगात्रि ! कृशाङ्गि ! मदनः कामः त्वां तपति ( तव

सख्यौ। [विलोक्य सहर्षमुत्थाय।] साअदं जधासमीहिदफलस्स अविलम्बिणो मणोरहस्स ? (छ) (७३)

[शकुन्तला उत्थातुमिच्छति]।

राजा। अलमलमायासेन !!—(७४)

(छ) स्वागतं यथासमीहितफलस्याविलम्बिनो मनोरथस्य ?

खलु शशाङ्कत्वं स्त्रीत्वञ्च समुत्प्रेक्ष्य "पिष्टपेषणं तु न सतां कार्य्यम्" इति मत्वा केवलं तापं दत्त्वा विरमति, तत् तापप्रदानमपि कादाचित्कं, न तु सर्व्वदा अपाय-शङ्कया, स्त्रीविघातस्य सर्व्वजननिन्दनीयत्वादिति भावः। अत एव तनुगात्रि! इति सम्बोधनम्।) मां, हृष्टपुष्टाङ्गं पुरुषञ्च मत्वा इति भावः, पुनः किन्तु अनिशं सततं, दिवापि रात्रावपि इत्यर्थः, दिवा तव ध्यानसुलभत्वात् रात्रावपि तत्प्रतिबन्धक-निद्रापगमादिति भावः, दहत्येव भस्मसात् करोत्येव, न तु केवलं तापं दत्त्वा विरमति इत्यर्थः। तदेव दृष्टान्तेन समर्थयते, ग्लपयतीति।—दिवसः शशाङ्कं चन्द्रं यथा ग्लपयति ग्लानिं नयति, मलिनयतीत्यर्थः, [हेतुणिजन्तस्य ग्लाधातोः मित्त्वात् ह्रस्वः] कुमुद्वतीं न हि तथा नैव तद्वत् ग्लपयतीत्यर्थः। समानसन्ताप-दायकेऽपि दिवसे चन्द्रस्य यादृशं मालिन्यं दृश्यते, कुमुदिन्यास्तथा नेति भावः। [अत्र वाक्ययोर्विम्बप्रतिविम्बभावात् दृष्टान्तालङ्कारः। तथा च साहित्यदर्पणे।—"दृष्टान्तस्तु सधर्म्मस्य वस्तुनः प्रतिविम्बनम्" इति। मदयति इति मदनः,—हर्षदः, तथापि तपति इति विरोधाभासः, कामार्थे तस्य परिहारात्। तथा 'तनुगात्रि!' इत्यत्र एकपर्य्याय-शब्दद्वयस्य भिन्नार्थकस्य उपादानात् पुनरुक्तवदाभासः। 'तनुगात्रि!' इति पदार्थस्य तपत्यन्तवाक्यार्थं प्रति हेतुत्वात् पदार्थहेतुकं काव्यलिङ्गं च समुन्नेयम्]। आर्य्या जातिः॥ २०॥

(७३) यथेति।—यथासमीहितं यथाऽभिलषितं फलं यस्य तथाभूतस्य। अवि-लम्बिनः—सहसोपगतस्य, मनोरथस्य—अभिलाषभूतस्य इत्यर्थः। स्वागतमिति।—[भावे क्तप्रत्ययात् कर्त्तरि षष्ठी। अत्र दुष्मन्तरूपविषयनिगरणेन मनोरथत्वाध्यव-सानात् भेदेऽभेदकथनाच्च भेदेऽभेदरूपाऽतिशयोक्तिः]।

(७४) अलमलमिति।—आग्रहातिशयद्योतनार्थं द्विरुक्तिः। आयासेन—प्रयासेन, श्रमस्वीकारेण इत्यर्थः। [अत्र व्यर्थार्थकालंशब्दयोगे तृतीया, समर्थार्थतद्योगे च चतुर्थी भवत्येव]।

सन्दष्टकुसुमशयनान्याशुविमर्दितमृणालवलयानि ।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति (७५) ? ॥२१॥

शकु । [ससाध्वसमात्मगतम् ।] हिअअ ! तधा उत्तम्मिअ दाणिं ण किम्पि पड़िवज्जसि ? (क) (७६)

अन । इदो सिलादलेक्कदेसं अणुगेह्णदु महाभाओ । (ख)

[शकुन्तला किञ्चिदपसरति ]।

राजा । [उपविश्य ।] कच्चित् सखीं वो नातिबाधते (७७) शरीरतापः ?

(क) हृदय ! तथा उत्तम्य इदानीं न किमपि प्रतिपद्यसे ?

(ख) इतः शिलातलैकदेशमनुगृह्णातु महाभागः ।

---

(७५) प्रयासवारणे कारणमाह, सन्दष्टेति ।—सन्दष्टं—सम्यक् ग्रस्तमिति यावत्, न तु शिथिलग्रमित्यर्थः, उष्मातिशय्यादिति भावः, कुसुमशयनं पुष्पशय्या, न तु कतिपयकुसुममात्रं, यैः तथोक्तानि, शयनीयादुत्थानसमये शय्यापि अङ्गलग्ना उत्तिष्ठति इति भावः ; [ अनेन सन्तापातिशयः, तेन च अङ्गानां सर्व्वथा प्रयासानर्हत्व सूच्यते ] आशु सद्य एव विमर्दितं मृणालवलयं यैः तथोक्तानि, [अनेन अधुनापि सन्तापो वर्त्तते इति ध्वन्यते । अत्र "आशुक्लान्तबिसभङ्गसुरभीणि" इति पाठे—प्रदानमात्र एव विक्लतस्य मृणालखण्डस्य गन्धयुक्तानि इत्यर्थः । एतेन तापातिशयः व्यज्यते ] अत एव गुरुर्महान् परितापः परि सर्वतः तापः येषां तथाभूतानि, ते तव गात्राणि अङ्गानि, उपचारम्—अभ्यर्थनादिकमागन्तुकसत्कारं, न अर्हन्ति न कर्त्तुं शक्नुवन्तीत्यर्थः । [अत्र सार्थकविशेषणभूयस्त्वात् परिकरालङ्कारः, तथा परार्द्धवाक्यं प्रति पूर्व्वार्द्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गमपि इति निपुणैरूह्नेयम् ]। आर्य्या जातिः ॥ २१ ॥

( ७६ ) ससाध्वसं—सभयम् ।—"भीतिः भीः साध्वसं भयम्" इत्यमरः । उत्तम्य—उत्तान्तं भूत्वा, उत्कण्ठीभूयेत्यर्थः । न किमपि प्रतिपद्यसे—इतिकर्त्तव्यताविमूढं भवसीति भावः ।

(७७) नातिबाधते—न अतिपीडयति । कच्चित्—किम् ? नैवेत्यभिप्रायः ।—"कच्चित् कामप्रवेदने" इत्यमरः । स्वाभिप्रायप्रकाशने कच्चिदित्यव्ययमित्यर्थः ।

प्रियं। [ सस्मितम्। ] दाणिं लद्धोसधो उवसमं गमिस्सदि। (ग) (७८)

[ शकुन्तला सलज्जा तिष्ठति ]।

प्रियं। महाभाअ! दोषम्पि वो अणोण्णाणुराओ पच्चक्खो, सहीसिणेहो उण मं पुणरुत्तवादिणीं (७९) करेदि। (घ)

राजा। भद्रे! नैतत् परिहार्य्यं;—विवक्षितं हि अनुक्तमनुतापं जनयति। (८०)

प्रियं। तेण हि सुणादु अज्जो। (ङ)

राजा। अवहितोऽस्मि।

प्रियं। अस्समवासिणो जणस्स रण्णा अत्तिहरेण होदव्वं त्ति णं एसो धम्मो। (च) (८१)

(ग) इदानीं लब्धौषध उपशमं गमिष्यति।

(घ) महाभाग! द्वयोरपि युवयोरन्योन्यानुरागः प्रत्यक्षः, सखीस्नेहः पुनर्मां पुनरुक्तवादिनीं करोति।

(ङ) तेन हि शृणोतु आर्य्यः।

(च) आश्रमवासिनो जनस्य राज्ञा आर्त्तिहरेण भवितव्यमिति नन्वेष धर्म्मः।

(७८) इदानीं—सम्प्रति, लब्धौषधः—लब्धम् औषधं यस्य सः, औषधप्राप्ता इत्यर्थः, उपशमं—निर्वाणमित्यर्थः, गमिष्यति—प्राप्स्यति; भवानेव सन्तापापहारकम् औषधमिति भावः। [अत्र परिमितैः विचित्रार्थैः पदैः स्वाभिप्रायवर्णनात् अक्षरसङ्घातो नाम नाटकलक्षणं प्रदर्शितम्। यदाह दर्पणे,—"वर्णनाक्षरसङ्घातः चित्रार्थैरक्षरैर्मितैः" इति। ]।

(७९) अन्योऽन्यानुरागः—परस्परप्रणयः, प्रत्यक्षः—साक्षात् अनुभूतः, सखीस्नेहः—सखीं शकुन्तलां प्रति अस्माकं सहजप्रणय इत्यर्थः। पुनरुक्तवादिनीं—समधिकवादिनीमित्यर्थः; प्रगल्भतापरिहारार्थमेतदुक्तमिति बोद्धव्यम्।

(८०) परिहार्य्यं—त्यक्तव्यम्, अतिक्रमणीयमित्यर्थः। हि—यतः। विवक्षितं—वक्तुमिष्टम्। अनुक्तम्—अकथितं सत्, अनुतापं—सन्तापं, जनयति—उत्पादयति। अपरिहार्य्यत्वे समर्थकमेतत्। [ सामान्येन विशेषसमर्थनरूपः अर्थान्तरन्यासः बोद्धव्यः ]।

(८१) आपाततः शकुन्तलाग्रहणप्रार्थनायां तद्ग्रहमाशङ्कमाना राज्ञः स्वकर्त्तव्यलो-

राजा। अस्मत्परं किं तत्?

प्रियं। तेण हि इग्रं णो पिअसही तुमं ज्जेव उद्दिसिअ भअवदा मअणेण इमं अवत्थन्तरं पाविदा, ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बइदुं। (छ) (८२)

राजा। भद्रे! साधारणोऽयं प्रणयः, सर्वथाऽनुगृहीतोऽस्मि। (८३)

(छ) तेन हि इयं आवयोः प्रियसखी त्वामेवोद्दिश्य भगवता मदनेन इदमवस्थान्तरं प्रापिता, तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम्।

पदेशापदेशेन स्वाभिप्रायं दृढीकुर्व्वती, भङ्ग्यन्तरेण तमेवार्थं विज्ञापयितुमाह, आश्रमेति।—आश्रमवासिनः तपोवनस्थायिनः नितरामसहायस्य इत्यर्थः। [अत्र "आपन्नस्य विषयवासिनः" इति पाठे,—आपन्नस्य आपत्प्राप्तस्य, विषयवासिनः देशवासिनः, स्वराज्यवासिनः इत्यर्थः।—"आपन्न आपत्प्राप्तः स्यात्" "देशविषयौ तूपवर्त्तनम्" इति चामरः।] आर्त्तिहरेण—सन्तापहारकेण,—"आर्त्तिः पीड़ाधनुष्कोट्योः" इत्यमरः। एष धर्मः,—इत्थं राजनियमः।

(८२) त्वामेव उद्दिश्य—'तमेव नृपं स्वामिनं लभेय' इति सखीमनोभावं लक्ष्यीकृत्य, इदं—वर्त्तमानं, अवस्थान्तरं—वपानाशरूपदशाविशेषं, भगवता—सर्वलोकातिशयमहिम्ना, मदनेन—कामेन, प्रापिता—लम्भिता। अभ्युपपत्त्या—अनुग्रहेण।—"अथाभ्युपपत्तिरनुग्रहः" इति शाश्वतः। जीवितम् अस्या अवलम्बयितुं—धारयितुम्, अर्हसि—युज्यसे। तथा च, यथेमां तेन कामहतकेन नवमी दशमी च कामावस्था न नीयते तथा कुरु इति भावः।

(८३) साधारणः,—समानः, अयं प्रणयः,—प्रार्थना; यथाऽहमेताम् उद्दिश्य भवतीभिः अभ्यर्थनीयः, तथा मयाऽपि एतदर्थं भवत्यः प्रार्थयितव्या इति समोऽभिलाष इति भावः; अत एव सर्व्वथा—सर्व्वात्मना, मत्प्रार्थनायाः अनवकाशादिति भावः। अनुगृहीतोऽस्मि—अनुकम्पितो भवामि।

शकु । [ अनसूयामवलोक्य । ] हला ! अलं वो अन्तेउरविरह-पज्जुस्सुएण राएसिणा उवरुद्धेण । (ज) (८४)

राजा ।—इदमनन्यपरायणमन्यथा

हृदयसन्निहिते ! हृदयं मम ।

यदि समर्थयसे मदिरेक्षणे !

मदनबाणहतोऽपि हतः पुनः (८५) ॥२२॥

(ज) हला ! अलं वामन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणा उपरुद्धेन ।

(८४) 'बहुपरिग्रहाः खलु राजानः' इति तदानीं बहुशः दृष्टचरं, शकुन्तलाऽपि तदेव आशङ्कमाना तत एव स्वाभिलषिततादृशप्रणयालाभमुत्प्रेक्षमाणा च आयत्यां स्वप्रणयं द्रढयितुमाह, हलेति।—अन्तःपुरविरहपर्य्युत्सुकेन—अवरोधस्थित-रमणीविरहोत्कण्ठितेन, राजर्षिणा, उपरुद्धेन—अनुनीतेन इत्यर्थः ; वां,—युवयोः, अलं—विफलमित्यर्थः ; तादृशस्य अस्य उपरोधं मा कुरुतम् इति हृदयम् । [अन्तःपुर-शब्देन लक्षणया अन्तःपुरस्थितः जनोऽपि लक्ष्यते । 'तात्स्थ्यात्' इति क्षीरस्वामी । उपस्थितेऽपि राजनि, अनसूयां प्रति शकुन्तलाया उक्तिप्रदर्शनेन निकामं मुग्धात्वं परिरक्षितं कविना ]।

(८५) शकुन्तलया विभाव्य विशङ्क्यमानं भाविप्रणयभङ्गं चाटूक्त्या अपाकर्त्तु-माह, इदमिति ।—हे हृदयसन्निहिते ! हृद्वासिनि ! [ एतेन यो यस्य हृदयसन्निहितः स तस्य सर्वमेव आचरणं वेत्ति, तथापि किमिदमाशङ्कावीजमिति ध्वन्यते]। अथवा,—हृदयसन्निहिते इति नैव सम्बोधनं, हृदयसमीप एवार्थः]। मदिरेक्षणे ! मत्तखञ्जननेत्रे ! [अनेन दृष्टेः चाञ्चल्यातिशयप्रख्यापनात् "अधुनापि तव दृष्टेः स्थैर्य्यं न जातं, यतः मामेकान्तमनुरक्ताम् आपातदृष्ट्या अननुरक्तमिव विशङ्कसे ?" तदहो ! किमु वक्तव्यम्, इति ध्वन्यते] अथवा,—मदिरा दृष्टिविशेषः, सा ईक्षणे यस्याः, तत्सम्बोधने । (मदिरा-दृष्टिलक्षणमाह, आदिभरते—"आघूर्णमानमध्या या क्षामा चाञ्चिततारका । दृष्टि-र्विकसितापाङ्गा मदिरा तरुणे मदे ॥" इति । ) इदं,—यत् खलु जन्मनः प्रभृति मम सहचरं भूत्वाऽपि दृष्टिमात्रेण चिरपरिचयं, चिरप्रणयं, सुचिरमेकत्रावस्थानजनितसुखञ्च परिहृत्य असंस्तुते, अज्ञातकुलशीले, अपरीक्षितप्रणये समासक्तं तादृशमिति भावः । न अन्यत्—भवत्याः इति भावः ; परम् अयनम् आश्रयो यस्य तथाभूतं, त्वदेकप्रवण-

अन। बहुवल्लहा क्खु राआणो सुणीअन्ति, ता जधा इअं णो पिअसही बन्धुअणसोअणीआ ण होदि, तधा करिस्सदि। (क) (८६)

राजा। भद्रे! किं बहुना?—

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररशना चोर्व्वी सखी च युवयोरियम् (८७) ॥२३॥

(क) बहुवल्लभाः खलु राजानः श्रूयन्ते, तद् यथा इयं नौ प्रियसखी बन्धुजनशोचनीया न भवति तथा करिष्यति।

मित्यर्थः, मम हृदयं यदि अन्यथा विपरीतं, त्वदन्यपरायणमिति भावः, समर्थयसे सम्भावयसि, तदा मदनस्य बाणेन हतोऽपि विद्धोऽपि, अहमिति शेषः, पुनः हतः विद्धः; क्षते क्षारमिव विद्धवेधनमिति भावः। मम हृदयं तु सम्प्रति विषयान्तरं परित्यज्य त्वयि वर्त्तते, तदपि चेत् त्वम् अन्यथा विशङ्कसे तर्हि तस्य निर्विषयत्वात् निरुद्धहत्ति तदपरिक्षणतत् विलीयेत, इत्यहो! मर्म्मच्छेदिनी ते आशङ्का इति भावः। [ अत्र 'मदिरेक्षणे' इति पदे उपमाऽलङ्कारः, परिकरालङ्कारश्च साभिप्रायविशेषणभूयस्त्वात्। अनेन च साम नाम सन्ध्यङ्गं प्रदर्शितम्। तथा चोक्तं,—"तत्र साम प्रियं वाक्यं सानुवृत्ति प्रकाशकम्" इति। द्रुतविलम्बितं वृत्तं,—द्रुतविलम्बितमाह नभौ भरौ" इति लक्षणात् ॥ २२ ॥

(८६) शकुन्तलाप्रियंवदाभ्यामवरवयाः सहजसरलस्वभावाऽनभिज्ञातचातुरीकैयमनसूया मुग्धात्वेन निह्नुतं शकुन्तलावाक्यं स्पष्टयित्वा राजानमभ्युपगमयन्ती आह, बहुवल्लभेति।—बहुवल्लभाः,—बहुपत्नीकाः। श्रूयन्ते—श्रुतिपथमागताः, गुरुजनमुखात् इत्यर्थः; न जातु नियततपोवनवासिनीनां दृष्टचरा इमे विषया इति भावः। बन्धुजनशोचनीया—बन्धुजनस्य मित्रादेः, शोचनीया—दुःखकारणं, न भवति; सौभाग्यवती भवति इत्यर्थः। तथा करिष्यति—तादृशमाचरिष्यति।

(८७) तदेव अनसूयावाक्यमभ्युपगच्छन्नाह, परिग्रहेति।—परिग्रहाणां स्त्रीणां ("परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः" इति विश्वः। बहुत्वेऽपि आधिक्येऽपि, समुद्ररशना—समुद्रः सागरः, रशना मेखला यस्याः सा, सागरपरिवेष्टितेति भावः। अथवा,—मुद्रया—मण्यादिना सह वर्त्तमाना समुद्रा, सा रशना काञ्चीगुणः यस्याः सा; सखीविशेषणमप्येतत्। उर्व्वी पृथिवी, युवयोरियं पुरो दृश्यमाना, विजगत्

उभे। णिव्वुद म्ह। (ञ) (८८)

[ शकुन्तला हर्षं सूचयति। ]

प्रियं। [ जनान्तिकम्। ] अणसूए! पेक्ख पेक्ख मेहवादाहदं विअ गिह्मे मोरीं क्खणे क्खणे पच्चाअदजीविदं पिअसहीं। (ट) (८९)

(ञ) निर्वृते स्वः।

(ट) अनसूये! पश्य पश्य मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्यागतजीवितां प्रियसखीम्।

रमणीकुलललामभूता इत्यर्थः, सखी च, एते द्वे मे मम कुलस्य वंशस्य प्रतिष्ठे गौरवहेतू। बहुभार्य्यत्वेऽपि पृथिवीपतित्वेन यथाहं गौरववान्, तथा युवयोः सख्याः पतित्वेनात्मानं गौरविणं मन्ये इति निष्कर्षः। तत्र उर्व्याः प्रतिष्ठाहेतुत्वं समुद्रमेखलायाः तस्याः आसूर्य्यचन्द्रम् आजन्मशुद्धैः तद्वंश्यैः प्रतिपालनात्; शकुन्तलायाः प्रतिष्ठाहेतुत्वञ्च चक्रवर्त्तिलक्षणोपेतपुत्रस्य जनयिष्यमाणत्वात् इति भाव्यम्। [ अत्र उभयोः प्रकृतयोः एकधर्माभिसम्बन्धात् तुल्ययोगिता, तथा प्रतिष्ठाकारणे प्रतिष्ठात्वाध्यवसायात् भेदेऽभेदरूपाऽतिशयोक्तिः, समुद्ररशनेत्यत्र श्लेषश्च, इति सङ्कीर्णालङ्कारः। तुल्ययोगितया च उर्व्या इव तव सख्या अपि सापत्न्याभावः, सति च सापत्न्ये द्वयोरेव परस्परं तदिति व्यज्यते ]। पथ्यावक्त्रं वृत्तम्॥ २३॥

(८८) नृपशपथमाकर्ण्य परमप्रीतहृदये वाचापि प्रीतिमुद्गिरन्त्यौ आहतुः, निर्वृते इति।—निर्वृते—निश्चिन्ततया सुखिन्यौ। स्वः,—भवावः।

(८९) जनान्तिकं—"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्॥" इत्युक्तरीत्या अभिनयविशेषः। मेघेति।—मेघवातेन आहतामिव स्पृष्टामिव। प्रत्यागतजीवितां—प्रत्याश्वस्तजीवनां मयूरीम् इव। [ एतेन सुरतसुखप्राप्तिः ध्वन्यते ]। ग्रीष्मार्त्ता मयूरी यथा अभिनवमेघस्य वातस्पर्शेन शमिततापा निर्वृतिमेति, तथा मदनार्त्ता आवयोः प्रियसखी साम्प्रतं प्रियजनसमागमेन पुनर्जीवितेव निर्वृतिमाप्नोति निष्कर्षः। [अत्रोपमालङ्कृतिः सुव्यक्तैव ]।

शकु। हला ! मरिसावेध लोअपालं, जं अह्मेहिं विस्सम्भपलाविणीहिं उवआरादिक्कमेण (८०) भणिदं । (ठ)

सख्यौ। [सस्मितम् । ] जेण तं मन्तिदं सो ज्जेव मरिसाविदु, अण्णस्स को अच्चओ ? (ड) (८१)

शकु। अरिहदि क्खु महाराओ इमं विसोढुं, परोक्खं वा ण किं को मन्तेदि ? (ढ) (८२)

राजा। [सस्मितम् । ] (८३)

अपराधमिमं ततः सहिष्ये,
यदि रम्भोरु ! तवाङ्गसङ्गसृष्टे ।

---

(ठ) हला ! मर्षयतं लोकपालं, यदस्माभिर्विश्रम्भप्रलापिनीभिरुपचारातिक्रमेण भणितम् ।

(ड) येन तन्मन्त्रितं स एव मर्षयतु, अन्यस्य कोऽत्ययः ?

(ढ) अर्हति खलु महाराज इदं विसोढुं, परोक्षं वा न किं को मन्त्रयति ?

(८०) मर्षयतं—क्षान्तं कुरुतम् । लोकपालं—भूलोकपतिम् । विश्रम्भप्रलापिनीभिः—निःशङ्कं निष्कृपेत्यादि वादिनीभिः । उपचारातिक्रमेण—यथोचितसम्मानमतिक्रम्येत्यर्थः ।

(८१) सह प्रणयिना विश्रम्भम् आलपितुं लज्जमानाया मुग्धायाः शकुन्तलायाः व्रीडामपनेतुं सोल्लुण्ठनमाहतुः, येनेति ।—मन्त्रितं—प्रलपितम् । मर्षयतु—क्षमयतु । अत्ययः—क्षतिः । मुग्धासु सर्वत्र सखीस्वभावोऽयम् ।

(८२) अत्र राजसमक्षं सखीप्रतिवचनेन कथमपि वीतव्रीडा अगत्या स्वयमेव क्षमयितुं सविनयमाह, अर्हतीति ।—महाराजेति सम्बोधनं क्षमायोग्यत्वसूचनाय, प्रजादोषान् राजान एव सहन्ते इत्यभिप्रायः । खलु इत्यनुनये ।—“निषेधवाक्यालङ्कारजिज्ञासाऽनुनये खलु” इत्यमरः । परोक्षम् ।—असमक्षम्, [ अक्ष्णोः परम् इति विग्रहे अव्ययीभावसमासः सुट्प्रत्ययश्च निपातनात् ] । मन्त्रयति—कथयति ।

(८३) प्रवक्तुं लज्जमानस्य प्रणयिनः हृदयप्रीतिम् अतिशयेन प्रकटयितुं कविराह, सस्मितमिति ।—स्मितं कृत्वा—ईषत् हसित्वा इत्यर्थः ।

(८४) कामचातुर्यं व्यनक्ति, अपराधमिति ।—हे रम्भोरु ! रम्भे कदलीस्तम्भौ

कुसुमास्तरणे क्लमापहेऽत्र
स्वजनत्वादनुमन्यसेऽवकाशम् (८४) ॥ २४ ॥

प्रियं। [सोपहासम्।] णं एत्तिकेण उण तुट्ठो भविस्सदि? (ण)

शकु[ [सरोषमिव।] विरम विरम दुव्विणीदे! एदावदवत्थं गदाए मए कीलसि? (त)

अन। [बहिः सदृष्टिक्षेपम्।] पिअम्बदे! एसो तवस्सिमिअ-पोदओ इदोतदो दिण्णदिट्ठी णूणं मादरं पब्भट्टं (८५) अण्णेसदि, ता संजोजेमि णं। (थ)

(ण) नन्वेतावन्मात्रेण पुनस्तुष्टो भविष्यति?

(त) विरम विरम दुर्विनीते! एतावदवस्थां गतया मया क्रीड़सि?

(थ) प्रियंवदे! एष तपस्विमृगपोतक इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टामन्वि-ष्यति, तत् संयोजयामि एनम्।

इव ऊरू यस्याः, तत्सम्बोधने। [अनेन शैत्यम्, अत एव सुखस्पर्शत्वं, तेन च 'स्वस्य कोऽपि सुरताभिप्रायः सूच्यते] यदि तव अङ्गानां सङ्गेन मृष्टे विशुद्धे ['मृजु शुद्धौ इत्यस्य क्तप्रत्ययेन रूपमेतत्। अनेन अग्रे तदङ्गसङ्गस्य पवित्रत्वकथनात् "तत् चेत् लभेय धन्यो भवेयम्" इति स्वाभिप्रायः व्यज्यते] विमर्दिते वा, अत एव क्लमापहे क्लमं सन्तापम् अपहन्तीति तथोक्ते, अत्र पुरःस्थिते, कुसुमास्तरणे पुष्पशय्यायां, स्वजनत्वात् आत्मीयत्वात्; न तु अतिथिरयं पूज्यः प्रतिपाल्यवचनश्च इति मत्वा इति भावः; अवकाशं स्थितिम्, अनुमन्यसे आदिशसि, ततः तदा इमम् उपचारातिक्रमजनितमित्यर्थः, अपराधं, सहिष्ये क्षमिष्ये। [अत्र रम्भोरु! इत्यंशे उपमा समासगा; तवाङ्गसङ्गमृष्टे अत एव क्लमापहे; इति पदार्थहेतुकं काव्यलिङ्गमपि। तथाऽत्र प्रगमनं नाम प्रतिमुखसन्ध्यङ्गं प्रदर्शितम्। यदाह दर्पणकारः,—"प्रगमनं वाक्यं स्यादुत्तरोत्तरम्" इति]। औपच्छन्दसिकं वृत्तम्।—"पर्य्यन्ते र्यौ तथैव शेषम् औपच्छन्दसिकं सुधीभिरुक्तम्" इति लक्षणात्॥ २४॥

(८५) उभयोरनुरागं परस्परं प्रवृद्धमुपलक्ष्य "इदानीमावयोरत्रावस्थानमनुचितम्" इति मन्यमाना अनसूया, निर्गन्तुं सव्याजमाह, प्रियंवदे इति।—एषः,—पुरःस्थितः, तपस्विमृगपोतकः—अनुकम्पार्हः मृगशिशुः;—"तपस्वी तापसे चानुकम्पार्हे च" इति

प्रियं। हला ! चवलो क्खु एसो, ण णं संजोजइदुं एआइणी पारेसि, ता अहम्पि सहाअत्तणं करिस्सं। (द) (८६)

[ इत्युभे प्रस्थिते ]।

शकु। हला ! इदो अण्णदो ण वो गन्तुं अणुमण्णे, जदो असहाइणी ह्मि। (ध)

उभे। [ सस्मितम्। ] तुमं दाव असहाइणी, जाए पहिवीणाहो (८७) समीवे वट्टदि ? (न)

[ इति निष्क्रान्ते ]।

शकु। कधं गदाओ ज्जेव पिअसहीओ ? (प)

(द) हला ! चपल: खल्वेष:, नैनं संयोजयितुमेकाकिनी पारयसि, तदहमपि सहायत्वं करिष्यामि।

(ध) हला ! इतोऽन्यतो न वां गन्तुमनुमन्ये, यतोऽसहायिनी अस्मि।

(न) त्वं तावदसहायिनी, यस्या: पृथिवीनाथ: समीपे वर्त्तते ?

(प) कथं गते एव प्रियसख्यौ ?

विश्व:। प्रभ्रष्टाम्—अन्यत्र प्रस्थिताम्। [ अत्र च अप्रस्तुतेन साहश्यमूलकमृगपीतादिवाक्येन प्रस्तुतस्य अनयोर्मेलनस्य प्रत्यायनात् अप्रस्तुतप्रशंसा ; दण्डिमते—पर्य्यायोक्तम् ]।

(८६) विदितानसूयाऽभिप्राया प्रियंवदा अपि ततो निर्गन्तुं सव्याजमाह, हलेति।—चपल:,—चञ्चल:। एकाकिनी—असहाया ; [ "एकादाकिनिच्चासहाये" ( ५।३।५२ पा० ) इति सूत्रेण आकिनिच्, तत: स्त्रियां ङीप् ]। सहायत्वम्—आनुकूल्यम्। अयमिह निर्गमनव्याज:।

(८७) सोपहासमाह त्वमिति।—असहायिनी—सहाय: अस्या: अस्तीति सहायिनी, न सहायिनी असहायिनी, नि:सहाया इत्यर्थ:। पृथिवीनाथ:,—भूपाल:। [ अनेन महासहायवत्ता ध्वन्यते। अत्र "पृथिव्या: य: शरणं स तव समीपे वर्त्तते" इति पाठे—शरणं रक्षक:।—"शरणं गृहरक्षित्रो:" इत्यमर: ]।

राजा। सुन्दरि! अलमावेगेन? नन्वयमाराधयिता जनस्ते सखीभूमौ (९८) वर्त्तते। तदुच्यताम्,—

किं शीकरैः क्लमविमर्हिभिरार्द्रवातं
सञ्चालयामि नलिनीदलतालवृन्तम्?
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु! यथासुखं ते? (९९) ॥२५॥

(९८) अलमिति।—आवेगेन सम्भ्रमेण व्याकुलतया इत्यर्थः, अलम्—आवेगं मा कुरु इत्यर्थः, [अलंशब्दयोगे तृतीया]। आराधयिता—सेवकः। सखीभूमौ—सखीस्थाने। सखीभ्यामपि यत्कर्त्तुं शक्यते अहमपि तदेव साधयामि, अतः किमुत्कण्ठया इति भावः।

(९९) आराधनाप्रकारमाह, किमिति।—हे करभोरु! क्लमविमर्दिभिः सन्ताप-हारिभिः [अनेन शैत्यं व्यज्यते] शीकरैः अम्बुकणैः आर्द्रः सिक्तः वातः यस्य तथोक्तं नलिनीदलतालवृन्तं—नलिनं पद्मम् अस्याः अस्तीति नलिनी, तस्याः दलं पत्रम् एव तालवृन्तं व्यजनं,—"व्यजनं तालवृन्तं स्यात्" इत्यमरः। [अनेन सौरभाति-शयः गम्यते] अत एव विसिन्यादि नोक्तम्; किं सञ्चालयामि? किम् इति प्रश्नसूचकमव्ययं, सं सम्यक् मन्दं मन्दम् इत्यर्थः, [एतेन मान्द्यं द्योत्यते] चालयामि वीजयामि। उत अथवा, पद्मताम्रौ—पद्मं मा उपमा यस्य इति पद्मं, तद्वत् रक्तौ, [अनेन पद्मस्य कथमपि तव चरणौपम्यं सम्भवति, तत्रापि केवलं ताम्रत्वगुणे-नैव इति सूच्यते। अत एव अरविन्दादिकं नोक्तम्। अत्र 'करभोरु' 'पद्मताम्रौ' इति विशेषणद्वयेन तस्य संवाहनयोग्यत्वं ध्वन्यते] ते तव चरणौ अङ्के क्रोड़े निधाय स्थापयित्वा इत्यर्थः, [अनेन नायिकायाः सौभाग्यातिशयः, तस्य च धन्यतरत्वं व्यज्यते] यथासुखं संवाहयामि मन्दविमर्दनेन खेदम् अपनयामि? [अत्र "किं शीतलैः क्लमविमर्हिभिरार्द्रवाताम् सञ्चालयामि नलिनीदलतालवृन्तैः" इति पाठे—'शीतलैः अत एव क्लमविमर्हिभिः नलिनीदलतालवृन्तैः आर्द्रवातान् सञ्चालयामि?' इति योजना। अत्र नलिनीदले तालवृन्तत्वारोपस्य प्रकृतोपयोगित्वात् परिणामः।—"विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि। परिणामः,—" इति दर्पणोक्तेः। तथा 'करभोरु पद्मताम्रौ' इत्यंशे उपमा। तयोश्च संवाहने हेतुत्वात् पदार्थ-हेतुकं काव्यलिङ्गं; 'करभोरु पद्मताम्रौ' इति साभिप्रायविशेषणत्वात् परिकरश्च।

शकु। ण माणणीएसुं जणेसुं अत्ताणं अवराहइस्सं ।(फ)(१००)

[ इति अवस्थासदृशमुत्थाय प्रस्थातुमिच्छति ]।

राजा। [ अवष्टभ्य।] सुन्दरि! अपरिनिर्वाणो दिवसः, इयञ्च ते शरीरावस्था (१)।—

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणा।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः? (२) ॥२६॥

[ इति बलान्निवारयति।]

(फ) न माननीयेषु जनेषु आत्मानमपराधयिष्यामि।

अत्र च उत इति विकल्पात् विकल्पालङ्कारः, इत्येके ; तन्नाव चातुर्य्याभावात् नाकाभ्यं रोचते। अनेन उपन्यासो नाम प्रतिमुखाङ्गं सूचितम्। यदाह दर्पणे,—"उपन्यासः प्रसादनम्" इति। एतेन माला नाम नाटकलक्षणमपि प्रदर्शितम्।—"माला स्यात् यदभीष्टार्थं नैकार्थप्रतिपादनम्" इति दर्पणोक्तेः ]। श्लोके चास्मिन् राज्ञः सुरतप्रार्थना सूचिता, सा च कामशास्त्रोक्तदिशा अवगन्तव्या, अश्लीलत्वात् अस्माभिः उपेक्षिता। वसन्ततिलकं वृत्तम् ॥ २५ ॥

(१००) माननीयेषु—पूज्येषु। अपराधयिष्यामि—अपराधवन्तं करिष्यामि। [ अनेन खलु वाक्येन ईदृशीमवस्थामापन्नायाः अपि तापससहवासजनितधर्म्मानुमतसंस्कारः न विलुप्त इति नायिकौचित्यं ध्वनितम् ]।

(१) अवष्टभ्य—गृहीत्वा। सुन्दरीति।—ईदृशावस्थायामपि तव सौन्दर्य्यं न विलुप्तं जातमित्यहो! महिमा तव सौन्दर्य्यस्य इति सम्बोधनतात्पर्य्यम्। अपरिनिर्वाणः—नास्ति परिनिर्वाणं सम्यक् अवसानमित्यर्थः, यस्य तथाभूतः ; सौरतापेन सहित इत्यर्थः। शरीरावस्था—देहस्य तापाभिभूतता इत्यर्थः। [ अनेन गमनायोग्यत्वं ध्वनितम् ]।

(२) देहावस्थाप्रदर्शनेन गमनं प्रतिषिध्यन्नाह, उत्सृज्येति।—नलिनीदलेन पद्मपत्रेण [ अनेन तापातिशयः ध्वन्यते ] कल्पितं रचितं स्तनयोः आवरणम् आच्छादनं यस्याः तथोक्ता, [अनेन इतः उत्थाय गमने तव स्तनावरणं भ्रश्यति इत्यभिप्रायः सूच्यते ] त्वं कुसुमशयनम् उत्सृज्य विहाय, परिबाधया सन्तापेन, अथवा,—परि सम्यक् बाधा पीड़ा यस्याः सा, इति शकुन्तलाविशेषणं, पदच्छेदः। कोमलैः मृदुभिः, मर्दितैरिति भावः, अङ्गैः उपलक्षिता [ उपलक्षणे तृतीया, अथवा इत्थंभूते

शकु। मुञ्च मुञ्च मं, ण क्खु अत्तणो पहवामि, अधवा सहीमेत्तसरणा किं दाणिं एत्थ करिस्सं ? (व) (३)

राजा। धिग्व्रीडितोऽस्मि। (४)

शकु। ण क्खु अहं महाराअं भणामि, देव्वं उवालहामि। (भ) (५)

(व) मुञ्च मुञ्च मां न खल्वात्मने प्रभवामि, अथवा सखीमात्रशरणा किम् इदानीमत्र करिष्यामि ?

(भ) न खल्वहं महाराजं भणामि, दैवमुपालभे।

इति विवेकः ] आतपे घर्मे, कथं केन प्रकारेण, [ कोमलाङ्गी त्वं स्वस्थदेहापि वस्त्रवल्कलादिना संवृतसकलावयवापि आतपे गन्तुमसमर्था आसीः ; सम्प्रति तु एकतः स्वभावकोमलाङ्गी, तत्रापि ईदृगवस्था, तत्रापि अतिशीतलकुसुमशयनमृणालिनीदलादि स्वदेहादुन्मुच्य नितरां गन्तुमसमर्था इत्यादि सर्वं 'कथं'शब्देन सूच्यते।] गमिष्यसि ? नैव गन्तुं शक्ष्यसीत्यर्थः। [अत्र काव्यलिङ्गमलङ्कारः परिकरश्च। कोमलैरित्यत्र 'पेलवैः' इति पाठस्तु व्रीडाव्यञ्जकाश्लीलत्वदोषदुष्टत्वात् न श्रद्धेयः ]। आर्य्या जातिः॥ २६॥

(३) आत्मने—स्वस्मै, प्रभवामि—प्रभुर्भवामीत्यर्थः, गुरुजनाधीनत्वात् इति भावः, यदि प्रभुः स्यां तदा ते वचनं शृणुयामिति तात्पर्य्यम्। पूर्ववाक्येण गुरुजनतपोऽनुभावस्मरणेन भयात् दुष्मन्तस्य स्वगतप्रणयस्य मूलोच्छेदः सम्भाव्येत इति पूर्वापेक्षया सुकोमलं व्याहरन्ती पूर्वोक्तमाक्षिप्याह, अथवेति।—सखीमात्रं सख्यावेव इत्यर्थः, शरणम् आश्रयो यस्याः तादृशी। अत्र एतस्मिन् विषये, इदानीं सम्प्रति किं करिष्यामि ? तयोरपि सख्योरनुपस्थितत्वात् नास्ति मे स्वस्मिन् प्रभुत्वमिति भावः। [ अनेन सख्योरुपरि आस्थातिशयोऽपि प्रदर्शितः ]।

(४) धिगिति।—व्रीडितः—लज्जितः, [व्रीड्धातोः कर्त्तरि वर्त्तमाने क्तप्रत्ययः, इतजन्तो वा। ] अप्रतिभ इत्यर्थः, महावाक्यानभिनन्दनादिति भावः ; तस्मात् धिक् आत्मानमिति शेषः, आत्मानं निन्दामीत्यर्थः, अयुक्तकारित्वादिति भावः।—"धिङ्-निर्भर्त्सननिन्दयोः" इत्यमरः।

(५) "व्रीडितोऽस्मि" इति दुष्मन्तवाक्यमाकर्ण्य राज्ञः विमुखतामाशङ्कमाना पूर्वोक्तमाक्षिप्याह, न खल्विति।—दैवम् उपालभे—तिरस्करोमि, एवं योजयिष्यत् दैवं कथं मां परायत्तामकरोदिति तिरस्काराशयः।

राजा। अनुकूलकारि (६) दैवं, कथमुपालभ्यते?

शकु। कधं दाणिं ण उवालहिस्सं? जं मं अत्तणो अणीसं कदुअ परगुणेहिं लोहावेदि। (म) (७)

राजा। [स्वगतम्]।—

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः,
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वात्
आबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्य्यः (८) ॥२७॥

[शकुन्तला गच्छत्येव]।

(म) कथमिदानीं नोपालप्स्ये? यन्मामात्मनोऽनीशां कृत्वा परगुणैर्लोभयति।

(६) अनुकूलकारि—हितकारि।

(७) अनीशाम्—प्रभुत्वहीनाम्। परगुणैः,—परकीयसौन्दर्य्यादिभिः, लोभयति—प्ररोचयति। अनीशत्वस्य परगुणाकृष्टत्वस्य च द्वयोः विरुद्धयोः एकत्र समावेशनात् दैवस्य सुतराम् उपालम्भविषयता इति भावः।

(८) स्मरशरविद्धदेहां शकुन्तलां सुतरां स्वप्रवणामपि वाचा खलु चातुर्य्यमभिव्यञ्जयन्तीं समीक्ष्य स्वाभिप्रायम् अप्रस्तुतेन प्रशंसयन्नाह, अपीति।—कुमार्य्यः अप्राप्तपुंसंसर्गा रमण्यः, महति प्रबले औत्सुक्ये दयितप्राप्त्यभिलाषात् उत्कण्ठायामित्यर्थः, अपि दयितस्य प्रियस्य प्रार्थनासु क्रियाविशेषप्रणयेषु प्रतीपाः प्रतिकूलाः पराङ्मुख्यः इत्यर्थः, ("प्रतीपोऽन्यः पराङ्मुखः" इति शब्दाब्धिः) तदपूरणकारिण्य इति यावत्, व्यतिकरसुखं व्यतिकरेण परस्परसमागमेन यत् सुखं सङ्गमसुखमित्यर्थः, काङ्क्षन्त्योऽपि अभिलषन्त्योऽपि, स्वाङ्गस्य स्वदेहस्य दाने अर्पणे, कातराः साध्वसात् लज्जया वा अशक्ता इति यावत्, अत एव क्षिप्तः उपस्थितोऽपि अतिक्रान्तः कालः सुरतोचितः समयः याभिः तथोक्ताः सत्यः, लब्धान्तरत्वात् प्राप्तावसरत्वात् मदनेनैव न खलु नैव आबाध्यन्ते प्रपीड्यन्ते; मनसिजमपि मदनमपि आबाधन्ते पीडयन्ति तदभिमतानुष्ठानादिति भावः। [अत्र उभयोराराधनरूपैकक्रियाकारणत्वात् अन्योऽन्यमलङ्कारः। यदुक्तं दर्पणे,—"अन्योऽन्यमुभयोरेकक्रियायाः कारणं मिथः" इति। तथा क्षिप्तकाला अत एव आबाध्यन्ते इति हेतुहेतुमद्भावात् पदार्थहेतुकं

राजा। न कथमात्मनः प्रियं करिष्ये ? (९)

[ उपसृत्य पटान्तमवलम्बते ]। (१०)

शकु। पोरव ! रक्ख रक्ख विणअं, इदोतदो इसिओ सञ्चरन्ति। (य) (११)

राजा। सुन्दरि ! अलं गुरुजनाद्भयेन, न ते विदितधर्मा तत्रभवान् कण्वः खेदम् (१२) उपयास्यति। यतः,—

(य) पौरव ! रक्ष रक्ष विनयम्, इतस्ततः ऋषयः सञ्चरन्ति।

काव्यलिङ्गमपि। 'शकुन्तला' इति विशेषे वक्तव्ये 'कुमार्य्यः' इति सामान्येन कथनात् अप्रस्तुतप्रशंसा च ; इत्येषां साङ्कर्य्यम् ]। मन्दाक्रान्ता वृत्तम् ॥ २७ ॥

(९) सुखस्य सर्वजनेप्सितत्वात् यथावसरमुपादेयत्वाच्च "अवसरोऽयम्"इति मन्वानः राजा तदेवाभिलषन्नाह, न कथमिति।—आत्मनः स्वस्य प्रियं सुखजनकं, कर्म्मेति शेषः, कथं न करिष्ये—किमर्थं नानुष्ठास्यामि ?

(१०) पटान्तं—वस्त्राञ्चलम्। अवलम्बते—गृह्णाति। इति कविवाक्यम्।

(११) पौरव !—पुरुवंशप्रभव ! [ एतेन तादृशमहावंशप्रभवत्वात् सर्वथैव ईदृशमाचरणं भवतः अनुचितमिति व्यज्यते ]। विनयं—शिष्टाचारं, सौजन्यमिति यावत्। रक्ष रक्ष,—अविनयं मा कुरु इत्यर्थः। इतस्ततः,—सर्वत्र, सञ्चरन्ति—भ्रमन्ति। ईदृशावस्थायामपि बहुमूलतापसजनप्रतिपालनजनितसंस्कारः नावलोपितः इत्यहो ! प्रवरनायिकानिर्म्माणकौशलं महाकवेः कालिदासस्य ; इत्यवगन्तव्यम्। [ अनेन त्यागादिनायिकासामान्यगुणसत्ताऽपि प्रदर्शिता ]।

(१२) शकुन्तलायाः वाक्यमाकर्ण्य तस्याः धर्म्मभीरुतया गुरुजनभयमाशङ्कमानायाः 'शास्त्रानुमतोऽयं धर्म्मः' इति शास्त्रानुमतिप्रदर्शनेन तामेवाशङ्काम् अपनीय अनुकूलयितुमाह, सुन्दरीति।—[ प्ररोचनार्थमेतत् सम्बोधनम् ] गुरुजनात्—पितुः, भयेन अलं—भयं मा कुरु इत्यर्थः। अकार्य्यं कुर्वत्याः नास्ति कुतो मे भीतिः ? इत्याह, विदितधर्म्मेति।—विदितधर्म्मा—विदितः ज्ञातः धर्म्मः गान्धर्वविवाहरूपः येन तथाभूतः। [ बहुव्रीहौ "धर्म्मादनिच् केवलात्" ( ५।४।१२४ पा० ) इति सूत्रेण नित्यमनिच्। ] न खेदं—दुःखं क्रोधं वा, उपयास्यति—प्राप्स्यति।

गान्धर्व्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः (१३) ॥२८॥

[ दिशोऽवलोक्य । ] कथं प्रकाशं निर्गतोऽस्मि ! (१४)

[ शकुन्तलां हित्वा पुनस्तैरेव पदैर्निवर्त्तते ] ।

शकु । [ पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम्(१५) ] । पौरव ! अणिच्छा-

(१३) ननु स्वदुहितुरसदाचारमाकर्णयन्नपि कथं चमिष्यते गुरुजनः ? इत्यतः आचारस्य साधुतां साधयितुं पूर्वेतिवृत्तमनुस्मारयन्नाह, गान्धर्वेण इति ।—बह्व्यः अनेकाः, न तु काचिदेका, यतस्ते भीतिशङ्का इति भावः । मुनिकन्यकाः तापसकन्यकाः, [प्रकृतोपयोगित्वसूचनाय 'मुनि' इति कन्यकाविशेषणम् ; अन्यथा 'कन्यका' इत्यनेनैव प्रमाणतासिद्धेः । अत्र "राजर्षिकन्यकाः" इति पाठान्तरम् ; अर्थस्तु सुगमः ।] गान्धर्वेण विवाहेन मिथः समयेन परिणयेन ; (तथा चोक्तं मनुना ।—"इच्छयाऽन्योऽन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयः मैथुन्यः कामसम्भवः ॥" इति "गान्धर्वः समयान्मिथः" इति च स्मरणात् ) परिणीताः ऊढ़ाः । ननु तेन किम् ? न हि परिणयसमये ज्ञातुं शक्नोति गुरुजनः ; तदनन्तरमेवाशङ्का, इत्यतः आह, पितृभिरिति ।—अथ परिणयानन्तरं ताः पितृभिः गुरुजनैः अनुमोदिताः अभिनन्दिताश्च, श्रूयन्ते इतिहासपुराणादिषु इति शेषः । अतः त्वयापि अत्राशङ्का न कार्य्या इति भावः । [ अनेन शास्त्रानुसारिवाक्यकथनात् उपदिष्टं नाम नाटकलक्षणं प्रदर्शितम् ; यदाह दर्पणे,—"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः" इति ] । पथ्यावक्त्रं वृत्तम् ॥ २८ ॥

(१४) प्रकाशं—व्यक्तं, लतामण्डपात् बहिरित्यर्थः । निर्गतः—निःसृतः, निष्क्रान्त इति यावत् । [अनेन जनान्तरदर्शनभीतिः सूचिता ] ।

(१५) पदान्तरे—द्वितीये पदसञ्चारे, तत्क्षणमेव इत्यर्थः । प्रतिनिवृत्य—परावृत्य । [मुग्धाऽनुरागेङ्गितमेतत् । यथाह दर्पणे,—"न मुञ्चति च तं देशं नायको यत्र दृश्यते" इति] । साङ्गभङ्गम्—अङ्गभङ्गेन सहितम्, अङ्गानि साचीकृत्य इत्यर्थः, वदति इति अध्याहार्य्यक्रियाविशेषणं, कविवाक्यमिदम् ।

पूरश्रो वि सम्भासणमेत्तपरिचिदो श्रश्रं जणो ण विसुमरिदव्वो। (र) (१६)

राजा। सुन्दरि!—

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे।
दिवावसाने च्छायेव पुरो मूलं वनस्पतेः (१७) ॥२९॥

शकु। [स्तोकमन्तरं (१८) गत्वा आत्मगतम्।] हद्धी हद्धी! इमं सुणिश्र ण मे चलणा पुरोमुहा पसरन्ति। भोदु, इमेहिं पज्जन्त-

(र) पौरव! अनिच्छापूरकोऽपि सम्भाषणमात्रपरिचितोऽयं जनो न विस्मर्त्तव्यः

(१६) अनिच्छापूरकः—अपूरितमनोरथः। सम्भाषणेति।—सम्भाषणमात्रम् आलापमात्रं, तेन परिचितः,—प्राप्तपरिचयः; [ 'न तु मया अन्यत् किमपि कार्य्यं साधितं, येनाहं तव स्मरणीया भवामि' इति विस्मरणसम्भावना सूचिता ]। न विस्मर्त्तव्यः—स्मर्त्तव्य एव इत्यर्थः।

(१७) तटस्थालापमाकर्ण्य प्रीणयितुमाह, त्वमिति।—दिवावसाने अपराह्णे, पुरः अग्रतः, दूरमपि व्यवहितमपि; पक्षान्तरे—पुरः पूर्व्वस्यां दिशि, [अत एव दिवावसाने इतिपदमुपात्तम्। पूर्व्वाह्णे छायायाः पुरोगामित्वासम्भवात्, मध्याह्ने च मूलावस्थितत्वेन दूरगमनासम्भवात्। एतेन दिवावसानपदेन प्रवासादिना दूरव्यवधानेऽपि छायेव मम हृदये चिरलग्ना तिष्ठसि इति ध्वन्यते] गच्छन्ती, वनस्पतेः अश्वत्थादेः कुसुमरहितफलिनवृक्षस्य इत्यर्थः,—("तैरपुष्पात् वनस्पतिः" इत्यमरः) [ वनानां पतिः इति षष्ठीतत्पुरुषः, "पारस्करप्रभृतीनि च—" (६।१।१५७ पा०) इति सुट्। अत्र वनस्पतिशब्दोपादानात् छायाप्रकर्षः सूचितः, तेन च उपमेयभूतायाः नायिकायाः साधारणधर्म्मसम्बन्धेन "परिश्रान्तपान्थवत् संसारदुःसहकर्म्मकरणपरिश्रान्तस्य मे श्रमापनोदः भविष्यति" इति नृपाभिप्रायं सर्वजनलोभनीयत्वञ्च सूचयित्वा नायिकागतोत्कर्षः ध्वन्यते ] छाया मूलमिव वनस्पतेरित्यर्थः, ( काकाक्षिगोलकन्यायेन उभयत्रान्वयः ) त्वं दूरं गच्छन्ती अपि मे मम हृदयं न जहासि न त्यजसि, सर्वदैव मे हृदयस्थिता वर्त्तसे, कथं विस्मरामि? इत्यभिप्रायः। [ अत्र उपमाऽलङ्कारः, स च श्लेषसङ्कीर्णः ]। पथ्यावक्त्रं वृत्तम्॥ २९॥

(१८) स्तोकम्—अल्पम्, अन्तरं—दूरम् इत्यर्थः।

कुरुवएहिं ओवारिदसरीरा भविअ पेक्खिस्सं दाव से भावाणुबन्धं। (ल) (१९)

[ तथा कृत्वा स्थिता ]।

राजा। कथमेवं प्रिये! अनुरागैकरसं मामुत्सृज्य निरपेक्षैव गताऽसि? (२०)—

अनिर्दयोपभोगस्य रूपस्य मृदुन: कथम्।
कठिनं खलु ते चेत: शिरीषस्येव बन्धनम्? (२१) ॥३०॥

---

(ल) हा धिक् हा धिक्! इदं श्रुत्वा न मे चरणौ पुरोमुखौ प्रसरत:। भवतु, एभि: पर्य्यन्तकुरुवकैरपवारितशरीरा भूत्वा प्रेक्षिष्ये तावदस्य भावानुबन्धम्।

---

(१९) पुरोमुखौ—अग्रवर्त्तिनौ इत्यर्थ:। प्रसरत:—चलत:। पर्य्यन्तकुरुवकै:,—प्रान्तवर्त्तिकुरुवकाख्यतरुभि:। अपवारितशरीरा—गोपितदेहा। भावानुबन्धं—भावस्य चुम्बनालिङ्गनादिरूपानुभावादिभिरपरिपुष्टाया: अनुरागापरपर्य्यायाया: रते:; तथा च भावलक्षणं दर्पणे,—"उद्बुद्धमात्र: स्थायी च भाव इत्यभिधीयते" इति। अनुबन्धम्—अनुवृत्तिम्। प्रेक्षिष्ये—अवलोकयिष्ये।

(२०) अनुरागेति।—अनुराग एव रतिरेव एक: अद्वितीय: रस: यस्य तादृशम्; शृङ्गाररसमात्राश्रयम् इत्यर्थ:; न हि तव प्रणयम् अभिलषता मया हृदये भयक्रोधादि स्थायिभावान्तरं समाकलितम् इत्यभिप्राय:। निरपेक्षैव—निरनुरोधैव, अपेक्षाम् अकृत्वैव इत्यर्थ:। गताऽसि—प्रस्थिताऽसि? अहो! तव निष्ठुरता हृदयस्य इति भाव:।

(२१) तदेव नैष्ठुर्य्यम् उपमाप्रदर्शनेन व्यनक्ति, अनिर्दयेति।—अनिर्दयम् अगाढं यथा तथा उपभोग: सम्भोग:, उचित इति भाव:, यस्य तथाभूतस्य। अथवा न निर्दयोपभोग: यस्य अप्राप्तगाढालिङ्गनचुम्बनादिव्यापारस्य इत्यर्थ:, [ एतेन कन्यकात्वं सूचयित्वा निरतिशयरसयोग्यत्वं ध्वनितम् ] मृदुन: [ भाषितपुंस्कत्वात् पक्षे मृदोरिति भवितव्यम् ] कोमलस्य ते तव [सकलरमणीललामभूतस्य इत्यर्थान्तरसंक्रमितवाच्यम् ] रूपस्य आकृते:, सर्वथाऽसदृशमेतदिति मे प्रतिभाति, अन्यथा कथं मद्भाग्यदोषात् शिरीषस्य तदाख्यकुसुमस्य [ अनेन मार्दवातिशय: दर्शित: ] बन्धनमिव वृन्तमिव ते चेत: चित्तं कठिनं खलु? निर्दयमेव इत्यर्थ:। [ अत्र काठिन्यस्य हेतुं विना कोमलवस्तुनिष्ठचित्तवृत्ते: तदुत्पत्तेर्विभावना, चित्तस्य

शकु। एदं सुणिअ ण मे अत्थि विहवो (२२) गच्छिदुं। (व)

राजा। सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि? [अग्रतोऽवलोक्य।] हन्त! व्याहतं मे गमनम् (२३)।—

मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः।
हृदयस्य निगड़मिव मे मृणालवलयं स्थितं पुरतः (२४)॥३१॥

[सबहुमानमादत्ते]।

शकु। [हस्तं विलोक्य।] अम्मो! दोब्बल्लसिढ़िलदाए परिब्भट्टं एदं मिणालवलअं ण मए परिण्णादं! (श) (२५)

(व) इदं श्रुत्वा न मेऽस्ति विभवो गन्तुम्।

(श) अम्मो! दौर्बल्यशिथिलतया परिभ्रष्टमिदं मृणालवलयं न मया परिज्ञातम्!

मार्दवहेतौ सत्यपि तदभावाद्विशेषोक्तिश्च सन्दिग्धतया सङ्कीर्य्यते; उपमाऽलङ्कारश्च, तदनयोरस्याश्च संसृष्टिः। तथा च दर्पणे,—"विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते" इति, "सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा" इति "मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते" इति च॥ ३०॥

(२२) विभवः—सामर्थ्यम्।

(२३) मृणालवलयमवलोक्य हर्षातिशयादाह, हन्तेति।—[हर्षसूचकमव्ययमेतत्]। व्याहतं—विघ्नितमित्यर्थः, मे मम गमनं;—गन्तुं न शक्नोमीति भावः।

(२४) गमनव्याघातकारणमाह, मणिबन्धादिति।—तस्याः शकुन्तलायाः मणिबन्धात् मणिबन्धः करग्रन्थिः तस्मात् वलयस्थानादित्यर्थः, गलितं च्युतं; सङ्क्रान्तः गात्रसंस्पर्शात् संसक्तः, उशीरस्य वीरणमूलानुलेपनस्य परिमलः विमर्दगन्धः यस्मिन् तादृशं, ("विमर्दोत्थे परिमलः" इत्यमरः) इदं पुरो दृश्यमानं, मृणालवलयं मृणालनिर्मितः करभूषणविशेषः, अत एव मे मम हृदयस्य निगड़मिव तदर्पितः बन्धनशृङ्खल इव नितरां समाकर्षकत्वादिति भावः, पुरतः अग्रतः स्थितम्; यदिदमवलोक्य नालमहमन्यतो गन्तुं, तदत्र सम्भावयामि मम हृदयबन्धनार्थं तया समर्पितमेतत् निगड़मिति भावः। [अत्र सम्भावनामात्रत्वात् उत्प्रेक्षाऽलङ्कारः, पदार्थहेतुकं काव्यलिङ्गमपि]। आर्य्या जातिः॥ ३१॥

(२५) नृपवाक्येणानुस्मृतवलयवृत्तान्ता स्वानवधानतया सविस्मयमाह, अम्मो!

राजा । [मृणालवलयमुरसि निक्षिप्य (२६) ।] अहो ! स्पर्शः (२७) ।-

अनेन लीलाभरणेन ते प्रिये !
विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभाक्
अचेतनेनापि सता, न तु त्वया (२८) ॥२२॥

इति ।—दौर्बल्यशिथिलतया—दौर्बल्येन शरीरकार्श्येन या शिथिलता श्लथता, वलयस्य इत्यर्थः, तया हेतुना, परिभ्रष्टं—च्युतम् । न मया परिज्ञातं—विदितम् । [अनेनापि तदेकाग्रतया विषयनिवृत्तिः दर्शिता] ।

(२६) उरसि—वक्षसि, निक्षिप्य—स्थापयित्वा ।

(२७) स्पर्शसुखमनुभूयाह, अहो ! इति ।—स्पर्शः,—सुखस्पर्शः इत्यर्थः, [एतेन विरहिणः विरहविनोदोपायोऽपि दर्शितः । यदुक्तं,—"वियोगावस्थासु प्रियजन-सदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि । तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारः कामव्यथितमनसां कोऽपि कथितः ॥" इति ] ।

(२८) कामावेशात् चेतनाचेतनेषु विवेकशून्यतया अचेतनमपि मृणालवलयम् उपकारपक्षे प्रक्षिपन्नाह, अनेनेति ।—हे प्रिये ! हे कान्ते ! ( न हि प्रियायाः प्रिये इदमुचितमनुष्ठातुमिति सम्बोधनाशयः ) तव कान्तं स्वभावमनोहरं भुजं करं विहाय, अत्र एतस्मिन्, कान्तारे पार्थिवरेणुरूषिते स्थाने इत्यर्थः, तिष्ठता, अनेन मम समीपस्थितेन, लीलाभरणेन विलासभूषणेन विलासार्थं त्वया सह चण-परिचितेन इत्यर्थः, ( अत एव विलासपदोपादानम् । भूषणमात्रस्य तु स्त्रिया सह आशैशवपरिचयादिति भावः । ) अचेतनेनापि सता, प्रणयरसानभिज्ञेनापि सता, दुःखभाक् दुःखं विरहस्य वेदनां भजति [ "भजो ण्विः" ( ३।२।६२ पा० ) इति सूत्रेण ण्विप्रत्ययः ] सन्तप्त इत्यर्थः, एषः तव समागमप्रार्थनया सोत्कण्ठं पुरःस्थितः, इत्यर्थः, जनः अहमिति भावः, समाश्वासित सान्त्वितः, सुखीकृत इत्यर्थः, [ यथा कश्चित् सहजकोमलराङ्कवशयनतलमधिशयानोऽपि प्रासादपृष्ठे, दुःखकातरं कमपि दीनमवलोक्य निसर्गदयालुतया विहाय सुखोचितम्, अवतीर्य्य च विषमबन्धुरभूमिभागम् आश्वासयति तद्वदिदमिति ध्वनिः । ] न तु त्वया सचेतनया परिज्ञातपरविरहवेदनयापि इति भावः इत्यहो ! नैष्ठुर्य्यातिशय्यं तव हृदयस्य इत्यभिप्रायः । [ अत्र कथितात् वस्तुनः तादृगन्यस्य शकुन्तलारूपस्य अप्रस्तुतः

शकु । अदो वरं ण समत्थम्हि विलम्बिदुं, भोदु एदेण ज्जेव अवदेसेण अत्ताणं दंसइस्सं । (ष) (२९)

[ इति उपसर्पति ] ।

राजा । [ दृष्ट्वा सहर्षम् । ] अये ! जीवितेश्वरी मे प्राप्ता ! परिदेवनानन्तरं प्रसादेन उपकर्त्तव्योऽस्मि खलु दैवस्य (३०) ।—

पिपासाक्षामकण्ठेन याचितश्चाम्बु पक्षिणा ।
नवमेघोज्झिता चास्य धारा निपतिता मुखे (३१) ॥३३॥

(ष) अतः परं न समर्थोऽस्मि विलम्बितुं, भवतु एतेन एव अपदेशेन आत्मानं दर्शयिष्यामि ।

शब्देन व्यवच्छेदात् शाब्दी परिसंख्याऽलङ्कारः । तथा च दर्पणे,—"प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेत् शाब्दः आर्थोऽथवा तदा ॥ परिसंख्या—" । इति । व्यतिरेकश्च । वंशस्थविलं वृत्तम् ॥ ३२ ॥

(२९) अतः परम्—ईदृशकरुणवाक्यश्रवणानन्तरम् । एतेन—मृणालवलयभ्रंशरूपेण, अपदेशेन—व्याजेन । आत्मानं दर्शयिष्यामि—समीपस्थिता भविष्यामि इत्यर्थः । इति—एवमुक्त्वा, उपसर्पति—समीपं गच्छति, इति कविवाक्यम् । [अनेनापि मुग्धाऽनुरागेङ्गितं प्रदर्शितम् । यदाह दर्पणे,—"आगच्छति गृहं तस्य कार्य्यव्याजेन केनचित्" इति ] ।

(३०) अये ! इति सम्भ्रमे । परिदेवनानन्तरं—विलापानन्तरं,—"विलापः परिदेवनम्" इत्यमरः । दैवस्य—भागधेयस्य । प्रसादेन—अनुग्रहेण । उपकर्त्तव्यः—उपकारार्हः ; शकुन्तलासमागमः एवात्र प्रसाद इति भावः ।

(३१) तमेव प्रसादम् अप्रस्तुतप्रशंसनेन व्यनक्ति, पिपासेति ।—पिपासया तृष्णया क्षामः [क्षैधातोः क्तप्रत्ययेन सिद्धम्] क्षीणः शुष्कः इत्यर्थः, उक्तः शब्दकरणासमर्थो वा इति यावत्, कण्ठो यस्य तथोक्तेन पक्षिणा चातकेन अम्बु जलं याचितश्च प्रार्थितश्च, नवमेघेन वर्षणोन्मुखेन इत्यर्थः, उज्झिता मुक्ता धारा आसारः आशातिरिक्ता, न तु वारिबिन्दुरित्यर्थः, अस्य चातकस्य मुखे निपतिता च । [ अत्र 'च' द्वयेन, प्रार्थनपतनक्रिययोर्यौगपद्यकीर्त्तनात् समुच्चयालङ्कारः ; तथा च दर्पणे,—"समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके । खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत् ॥

शकु। [ राज्ञः सम्मुखे स्थित्वा। ] अज्ज ! अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स किदे पडिणिवुत्त म्हि, कधिदं मे हिअएण तुए गहीदं त्ति, ता णिक्खिव (३२) एदं, मा मं अत्ताणञ्च मुणिअणेसुं पआसइस्ससि। (स)

राजा। एकेनाभिसन्धिना (३३) प्रत्यर्पयामि।

शकु। केण उण ? (ह)

राजा। यदि इदमहमेव यथास्थानं निवेशयामि। (३४)

---

(स) आर्य्य ! अर्द्धपथे स्मृत्वा एतस्य हस्तभ्रंशिनो मृणालवलयस्य क्वते प्रतिनिहत्ताऽस्मि, कथितं मे हृदयेन त्वया गृहीतमिति, तन्निक्षिपेदं, मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यसि।

(ह) केन पुनः ?

---

गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये॥" इति। तथाऽत्र चातकवचनानन्तरवारिधारापातरूपाप्रस्तुतार्थेन 'मम परिदेवनसमये एव शकुन्तलासमागमः सञ्जातः' इति प्रस्तुतार्थस्य गम्यमानत्वात् अप्रस्तुतप्रशंसा च। केचिदत्र चकारद्वयस्य पौर्वापर्य्याथबोधकत्वं परिकल्प्य कार्य्यकारणकालविपर्य्ययस्वरूपातिशयोक्तिमूलत्वाभावात् समुच्चयालङ्कारं न मन्यन्ते, तत् तु 'परिदेवनकाले एव शकुन्तलासमागमः जातः' इति प्रस्तुतेन समम् असामञ्जस्यात् कथमुक्तमिति त एव जानन्ति]। पथ्यावक्त्रं वृत्तम्॥ ३३॥

(३२) अर्द्धपथे—मार्गाभ्यन्तरे [अर्द्धः पन्थाः इति समासे अच्प्रत्ययः]। क्वते—इत्यव्ययं निमित्तार्थकम्। निक्षिप—अर्पय। सहसा निक्षेपेत्युक्तौ 'मया न गृहीतम्' इति विपरीतोत्तरसम्भावना स्यादित्याह, कथितमिति प्राक्।

(३३) "न हीङ्गितज्ञोऽवसरेऽवसीदति" इति अवसरप्राप्त्या प्रच्छन्नतरमात्माभिलषितं साधयितुमाह, एकेनेति।—अभिसन्धिना—नियमेन, प्रतिज्ञया इत्यर्थः।

(३४) इदं—मृणालवलयम्। अहमेव—न तु त्वमिति एवकारव्यवच्छेद्य, यथास्थानं—योग्यस्थाने, मणिबन्धे इत्यर्थः [स्थानमनतिक्रम्य इति अनतिक्रमार्थे अव्ययीभावः] निवेशयामि—स्थापयामि। करस्पर्शादिसुखानुभव एवात्र अभिसन्धिः बोद्धव्यः।

शकु। आ ! का गदी, भोदु एदं दाव । (क) (३५)

[ इति उपसर्पति ] ।

राजा। इतः शिलापट्टैकदेशं संश्रयावः ।

[ इति उभौ परिक्रम्योपविष्टौ ] ।

राजा। [ शकुन्तलाया हस्तमादाय । ] अहो स्पर्शः ।—

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः सम्भृतो भूयः किं स्वित् कामतरोरयम् ? (३६) ॥३४॥

शकु। [ स्पर्शं रूपयित्वा । ] तुवरदु तुवरदु अज्जउत्तो । (ख)

राजा। [ सहर्षमात्मगतम् । ] इदानीमस्मि विश्वसितः, भर्त्तुः आभाषणपदमेतत् । (३७) [ प्रकाशम् । ] सुन्दरि ! नातिश्लिष्टः

(क) आः ! का गतिः, भवतु एवं तावत् ।

(ख) त्वरतां त्वरतामार्य्यपुत्रः ।

(३५) अन्तः प्रार्थनासद्भावेऽपि मुग्धात्वेन वहिः अनभिमतिं प्रदर्श्याह, आः इति ।—पीड़ासूचकमव्ययमेतत् ।—"आस्तु स्यात् कोपपीड़योः" इत्यमरः । का गतिः,—कः उपायः ।—"गतिः स्त्री मार्गदशयोः ज्ञाने यात्राभ्युपाययोः" इति मेदिनी ।

(३६) स्पर्शं स्तौति, हरेति ।—हरस्य कोपाग्निना क्रोधानलेन दग्धस्य भस्मसात्-कृतस्य, कामतरोः मदनवृक्षस्य, अमृतवर्षिणा सुधाधारां सिञ्चता, दैवेन भागधेयेन अयं सुखस्पर्शः करः, प्ररोहः अङ्कुरः, भूयः पुनः दहनानन्तरं सम्भृतः उत्पादितः किं स्वित् ? शकुन्तलायाः कररूपेण कामाङ्कुरः सञ्जनितः किम् ? [किं प्रश्न, स्वित् वितर्के]। पुरा किल तारकासुरेण निपीड़ितैर्देवैः तद्वधाय सेनापतिजननार्थं शम्भोः तपो-भङ्गाय समभ्यर्थितः कामः शरप्रहारोद्यतः हरस्य तृतीयलोचनाग्निना भस्मसात् बभूव इति भारतादिकथाऽत्रानुसन्धेया । [अत्र कामतरोः प्ररोह इत्यादौ रूपका-लङ्कारः, स्विदिति वितर्कसूचनात् सन्देहालङ्कारश्च, इत्यनयोरङ्गाङ्गित्वम् ] । पथ्यावक्त्रं वृत्तम् ॥ ३४ ॥

(३७) भर्त्तुः,—स्वामिनः । आभाषणपदं—सम्भाषणपदम् । तथा च—"आर्य्य-पुत्रेति सम्बोध्यः पतिः पत्नीजनेन वा" इति भरतोक्तेः ।

सन्धिः अस्य मृणालवलयस्य, यदि तेऽभिमतं, तदन्यथा घटयिष्यामि । (३८)

शकु । [ स्मितं कृत्वा । ] जधा दे रोअदि । (ग) (३९)

राजा । [ सव्याजं विलम्ब्य प्रतिमोच्य । ] सुन्दरि ! दृश्यताम् (४०) ।—

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः ( ४१ ) ॥२५॥

(ग) यथा ते रोचते ।

(३८) वलयस्य पुनरन्यथा स्थापने विलम्बेन शकुन्तलायाः कोपसम्भावनामुत्प्रेक्ष्य प्ररोचयितुमाह, सुन्दरीति । नातिश्लिष्टः—नातिलग्नः । सन्धिः—संयोगः । ते—तव, अभिमतम्—अभिप्रेतम् । [अभिपूर्वात् मनधातोः ज्ञानार्थत्वात् वर्त्तमाने क्तप्रत्ययः, तद्योगे कर्त्तरि षष्ठी] । अन्यथा—प्रकारान्तरेण, घटयिष्यामि—योजयिष्यामि । [अत्र घट्धातोः णिजन्तात् लृट् ; घटादित्वात् ह्रस्वः ] ।

(३९) नृपाभिप्रायं बुद्ध्वा स्मितं कृत्वा ईषद्धसिता, आह इति अध्याहृतेन कविवाक्येनान्वयः । यथा—यादृशं, ते—तुभ्यं, रोचते—प्रीणयति, तथा क्रियतामिति शेषः । ["रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति सम्प्रदानत्वात् चतुर्थी ] ।

(४०) सव्याजं—योजनाव्यत्ययरूपकपटतासहितं, प्रतिमोच्य—परिधाप्य । येन केनचित् निकृष्टेनापि भूषणेन तव सौन्दर्यं स्फुरति इत्यभिप्रेत्याह, सुन्दरीति ।— दृश्यताम् अयमिति श्लोकस्थेनान्वयः ।

(४१) अयमिति ।—अयं स प्रसिद्धो नवो नवोदितः कलामात्र इत्यर्थः, [तरुण इति च व्यज्यते ] निशाकरः चन्द्रः उज्झितं त्यक्तम् अम्बरम् आकाशं येन तथाभूतः सन् [त्यक्तवसन इत्यपि व्यज्यते]— ("अम्बरं व्योम्नि वाससि" इत्यमरः) मृणालरूपेण ते तव श्यामलतामनोहरं श्यामलतया श्यामवर्णत्वेन मनोहरम् [अनेन वर्णसाम्यात् गगनभ्रान्तिरपि तस्य व्यज्यते] अथवा,—श्यामलता श्यामाख्यलताविशेषः तद्वत् मनोहरं सुन्दरं करं समेत्य प्राप्य, विशेषशोभार्थम् अधिकशोभासम्पादनार्थम् उभयकोटिम् प्रान्तद्वयम् आश्रितः कुण्डलीभूय स्थित इत्यर्थः ; (चन्द्रस्य ओषधीपतित्वात्

शकु। ण दाव णं पेक्खामि, पवणकम्पिदकसुप्पलरेणुणा कलुसीकिदा (४२) मे दिट्ठी। (घ)

राजा। [सस्मितम्]। यद्यनुमन्यसे तदहमेनां वदनमारुतेन विशदां करवाणि। (४३)

शकु। तदो अणुकम्पिदा भवेअं, किन्तु उण अहं ण दे (४४) वीससेमि। (ङ)

राजा। मा मैवं, नवो हि परिजनः सेव्यानाम् आदेशात् परं न वर्त्तते। (४५)

शकु। अअं ज्जेव अच्चाअरो अविस्सासजणओ। (च)

(घ) न तावदेनां प्रेक्षे, पवनकम्पितकर्णोत्पलरेणुना कलुषीकृता मे दृष्टिः।
(ङ) तदा अनुकम्पिता भवेयम्, किन्तु पुनरहं न ते विश्वसिमि।
(च) अयमेव अत्यादरोऽविश्वासजनकः।

श्यामलतायाः अपि औषधीत्वात् तदाश्रयणमुपयुज्यते इति भाव्यम्)। यथा कश्चित् कामुकः युवा कामवशेन स्खलितवसनः सत्वरमुपगम्य नायिकायाः करकमलं सुदृढ़ं गृह्णाति, तद्वदिति भावः। [अत्र मृणालवलये कविप्रौढ़ोक्तिसिद्धस्य साचीभूतकलामात्रावशिष्टचन्द्रस्य सम्भावनामात्रबलात् उत्प्रेक्षाऽलङ्कारः]। वंशस्थविलं वृत्तम् ॥३५॥

(४२) पवनेति।—पवनेन कम्पितं यत् कर्णोत्पलं तस्य रेणुना परागेण। [जातावेकवचनम्]। कलुषीकृता—मलिनीकृता, आवृतेति यावत्।

(४३) एनां—दृष्टिम्। वदनमारुतेन—मुखवायुना, फुत्कारेण इत्यर्थः, विशदां—निर्म्मलां, परिष्कृतामित्यर्थः। [चुम्बनव्याजोऽयम्।] करवाणि—[प्रार्थनायां लोट्]।

(४४) अनुकम्पिता—अनुगृहीता। ते—तव, त्वामित्यर्थः [सम्बन्धविवक्षया षष्ठी]।

(४५) नवः—नूतनः। परिजनः—परिवारः, भृत्य इति यावत्। सेव्यानां—प्रभूणामिति भावः। आदेशात् परम्—अनुमतिव्यतिरिक्तं, [परशब्दयोगे पञ्चमी]। न वर्त्तते—न किञ्चित् करोति इत्यर्थः; अन्यथा तस्य भृत्यभाव एव विलुप्येत इति भावः।

राजा। [स्वगतम्]। न खलु एवं रमणीयमात्मनः सेवाऽवसरं शिथिलयिष्ये। [मुखमुन्नमयितुं प्रवृत्तः]। (४६)

[शकुन्तला प्रतिषेधं रूपयन्ती विरमति]।

राजा। अयि मदिरेक्षणे! अलमस्मदविनयाशङ्कया। (४७)

[शकुन्तला किञ्चित् दृष्टा व्रीड़ाऽवनतमुखी तिष्ठति]।

राजा। [अङ्गुलिभ्यां मुखमुन्नमय्य आत्मगतम्]।—

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाऽधरः (४८) ॥३६॥

शकु। परित्ताणमन्थरो (४९) विअ अज्जउत्तो। (क)

---

(क) परिज्ञानमन्थर इव आर्य्यपुत्रः।

(४६) रमणीयं—मनोहरं, दुर्लभमित्यर्थः। आत्मनः,—स्वस्य, सेवाऽवसरं—सेवायाः अवकाशं, शिथिलयिष्ये—शिथिलं करिष्ये, उपेक्षिष्ये इत्यर्थः, [शिथिलशब्दात् करोत्यर्थे णिच्प्रत्ययः; नामधातुरयम्]। उन्नमयितुम्—उत्तोलयितुम्। [उत्पूर्वात् नमधातोः णिचि मितां ह्रस्वः]।

(४७) मदिरेक्षणे!—मत्तखञ्जननेत्रे! अस्मत्—मत्तः इत्यर्थः, [पञ्चम्या बहुवचनम्। अन्यस्मात् निकृष्टजनात् अविनयशङ्कासम्भवेऽपि पौरवस्य राज्ञः दुष्मन्तस्य मम सकाशात् कुतः? इति ध्वनिः।] अविनयस्य असभ्यतायाः, शङ्कया भयेन अलम्?—तादृशशङ्कां मा कुरु इत्यर्थः। [स्वस्मिन् ईदृशगौरवसूचनाय बहुवचनमुपात्तम्]।

(४८) चारुणेति।—अयं मम पाणिस्थितः अपरिक्षतः दशनैः अदष्टपूर्वं इति भावः, अत एव कोमलः मृदुलः, परिक्षतं हि स्थानं कठिनं भवतीति भावः। प्रियायाः अधरः दशनच्छदः, चारुणा मनोज्ञेन, स्फुरितेन स्पन्दितेन, पिपासतः अधरं पातुमिच्छतः, तृषाकुलस्य इत्यर्थः, मम अनुज्ञां पाने इति शेषः, ददातीव। [अत्र क्रियामात्रसम्भावनात् क्रियोत्प्रेक्षाऽलङ्कारः]। पथ्यावक्त्रं वृत्तम् ॥ ३६ ॥

(४९) परित्ताणेति।—परिज्ञानं चक्षुषि कर्णोत्पलरजसः सम्यक् ज्ञानं तत्र मन्थरः विमूढ़ः; नेत्रगतान् कर्णोत्पलपरागान् न सम्यक् ज्ञातुमर्हति इति मन्ये इति भावः।

राजा। कर्णोत्पलसन्निकर्षादीक्षणमूढोऽस्मि। (५०)

[ मुखमावृतेन चक्षुः सेवते। ]

शकु। भोदु पइदित्थदंसणम्हि संवुत्ता। लज्जेमि उण अणुवआरिणी पिअआरिणो अज्जउत्तस्स। (ज) (५१)

राजा। सुन्दरि! किम् अन्यत्?—

इदमप्युपकृतिपक्षे सुरभि मुखं ते यदाघ्रातम्।
ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण (५२)॥ ३७॥

(ज) भवतु प्रकृतिस्थदर्शनाऽस्मि संवृत्ता। लज्जे पुनरनुपकारिणी प्रियकारिण आर्य्यपुत्रस्य।

(५०) कर्णोत्पलेति।—कर्णोत्पलस्य सन्निकर्षात् सान्निध्यात् ईक्षणे नयने मूढः, किमेतत् कर्णोत्पलम् उत नयनमिति भ्रान्त इति यावत्; अथवा कर्णोत्पल-सान्निध्यात् ईक्षणमूढः तद्रजोभिरन्धीकरणात् दर्शने अक्षमः इत्यर्थः; अथवा कर्णोत्पलेन दृष्टिपथावरणात् कस्मिन् भागे रेणुरस्ति तत् द्रष्टुमसमर्थः इत्यर्थः।

(५१) प्रकृतिस्थदर्शना—स्वाभाविकदृष्टिः, संवृत्ता—जाता; मम नेत्रे निर्मले जाते इत्यर्थः। उपकारिणः नेत्रपरागापनयनेन उपकारं कुर्वतः अनुपकारिणी लज्जे इति योजना।

(५२) ननु किमन्यत् उपकर्त्तव्यं त्वया? इदमेव मे पर्य्याप्तम्, इति सदृष्टान्तमाह, इदमिति।—ते तव सुरभि सौरभयुक्तं मुखम् [ अनेन उत्कृष्टनायिकात्वं व्यज्यते ] यत् आघ्रातं, मयेति शेषः; इदमपि एतत् आघ्राणमपि उपकृतिपक्षे उपकारकल्पे उपकारत्वेन इत्यर्थः, यथेष्टं परिगणितमिति शेषः। ननु तथाहि,—मधुकरः भ्रमरः, कमलस्य गन्धमात्रेण केवलं गन्धमाघ्राय, सन्तुष्यति सम्यक् परितोषमाप्नोति, मध्व-लाभेऽपि इति भावः। [मधुलाभे तु तदेव प्रार्थयते इति मात्रपदेन कोऽपि अभिप्रायः सूच्यते। अत्र प्रतिवस्तूपमाऽलङ्कारः, तथा च दर्पणे,—"प्रतिवस्तूपमा सा स्याद्वाक्ययो-र्गम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥" इति। आर्य्या जातिः॥ ३७॥

शकु । [सस्मितम्] । असन्तोसे उण किं करेदि ? (झ) (५३)

राजा । इदम् । [इति व्यवसितः] । (५४)

[शकुन्तला वक्त्रं ढौकते] । (५५)

(झ) असन्तोषे पुनः किं करोति ?

(५३) असन्तोषे—सन्तोषाभावे, किं करोति मधुकरः ? इति शेषः, तत्सादृश्यात् भवानपि इति भावः ।

(५४) इदम्—एवम् । इति—इत्युक्त्वा । व्यवसितः—प्रवृत्त इत्यर्थः, उद्यत इति यावत् ; चुम्बितुमिति शेषः, (कविवाक्यमेतत्) न तु चुम्बनं कृतम्, अभिनये तन्निषेधात् ; अत एव व्यवसित इत्युक्तं कविना । यदाह दर्पणे अङ्कलक्षणे,—"शयनाधरपानादि नगराद्यपरोधनम् । स्नानानुलेपने चैभि र्वर्जितो नातिविस्तरः ॥" इति । अत एव उत्तरत्र "मुखमुन्नमितं न चुम्बितन्तु" इति दुष्मन्तस्य स्वानुरूपवाक्यमपि सङ्गच्छते । अथवाऽत्र 'इति व्यवसितः' इति दुष्मन्तवाक्यं, मधुकर इति शेषः ।

(५५) वक्त्रं—मुखं, ढौकते—अन्यत्र चालयति ; धातूनामनेकार्थत्वात् आच्छादयति वा । [अनेन मुग्धात्व सुव्यक्तीकृतं कविना] । तथा च—"प्रथमावतीर्णयौवनमदनविकारा रतौ वामा" इति दर्पणोक्तेः, तथा "शृङ्गारे कौशिकी" इत्युक्तेः तस्याः प्रथमाङ्गं नर्मरूपं सशृङ्गारहास्येन प्रदर्शितं,—"वैदग्ध्यक्रीड़ितं नर्म... सशृङ्गारभयेन वा" इति दर्पणोक्तेः । अत्र "गान्धर्वेण विवाहेन" इत्यादिश्लोकतः एतदन्तः पाठः मुम्बय्यादिपुस्तके न दृश्यते ; परन्तु ततः परं—

"शकुन्तला । मुञ्च दाव मं । भूओ वि सहीजणं अणुमाणइस्सं ।

राजा । भवतु मोक्ष्यामि ।

शकुन्तला । कदा ?

राजा । अपरिक्षतकोमलस्य यावत् कुसुमस्येव नवस्य षट्पदेन ।

अधरस्य पिपासता मया ते सदयं सुन्दरि ! गृह्यते रसोऽस्य ॥*

[इति मुखमस्याः समुन्नमयितुमिच्छति]

शकुन्तला । [परिहरति नाट्येन]"* * * इत्यन्तः पाठः समधिकः वर्त्तते ।

तत्र प्रथमं शकुन्तलावाक्ये—मुञ्च तावत् माम् । भूयोऽपि सखीजनम् अनुमानयिष्ये (इति सं) । अनुमानयिष्ये—तस्य अनुमतिं ग्रहीष्यामि इत्यर्थः ।

[नेपथ्ये]।—"चक्कवाअवहु! आमन्तेहि सहअरं, णं उअत्थिदा रअणी।" (ञ) (५६)

शकु। [कर्णं दत्त्वा ससम्भ्रमम्]। अज्जउत्त! एसा क्खु तादकस्सस्स धम्मकणीअसी मम वुत्तन्तोवलम्भणणिमित्तं अज्जा गोदमी आअच्छदि, ता विड़वान्तरिदो होहि। (ट) (५७)

(ञ) चक्रवाकवधु! आमन्त्रयस्व सहचरं, ननु उपस्थिता रजनी।

(ट) आर्य्यपुत्र! एषा खलु तातकश्वस्य धर्मकनीयसी मम वृत्तान्तोपलम्भननिमित्तमार्य्या गौतमी आगच्छति, तद्विटपान्तरितो भव।

*अपरिक्षतेति।—हे सुन्दरि! न विद्यते परिक्षतं दशनादिना दंशनं यस्य, अन्यत्र तु—भ्रमरेण इत्यर्थः, सः, अत एव कोमलः तस्य नवस्य अनास्वादितपूर्व्वस्य, कुसुमपक्षे—प्रथमविकशितस्य, कुसुमस्य इव तव अस्य मम नयनपथवर्त्तिनः सुधासहोदरस्य सुकृतैकलभ्यस्य [इत्यर्थान्तरितवाच्यः] अधरस्य दन्तच्छदस्य पिपासता पातुमिच्छता षट्पदेन भ्रमरेण मया सदयं सकृपम् [एतेन मुग्धालालनकौशलं प्रदर्शितं] यावत् यत्कालपर्य्यन्तः रसः गृह्यते सीधुपानं क्रियते इत्यर्थः; ततः परं मोक्ष्यामि इति शेषः। [अत्र श्लेषसंकीर्णोपमाऽलङ्कारः]। औपच्छन्दसकं वृत्तम्॥ तल्लक्षणं यथा,—"पर्य्यन्ते र्यौ तथैव शेषम् औपच्छन्दसकं कवीन्द्रहृद्यम्॥" इति॥

(५६) नाटके अधरपानादिसुरतवर्णनस्य प्रतिषिद्धत्वात् "न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते" इत्युक्तेः, अन्तरा विच्छेदेन संभोगस्य परिपोषाधारत्वात् च परस्परं विघटयितुमाह कविः,—नेपथ्ये इति।—यवनिकाऽभ्यन्तरे इत्यर्थः। चक्रवाकवधु! आमन्त्रय—आपृच्छस्व, सहचरं—सह सहितं चरति इति सहचरः, प्रियः, तम्। उपस्थिता रजनी। रजन्यां चक्रवाकमिथुनं विरहितं सत् परस्परमारटतीति प्रसिद्धम्। [अत्र "त्वमपि शकुन्तले दुष्मन्तेन विच्छिन्ना भव, यतः गौतमी समागता" इति प्रस्तुतस्य अप्रस्तुतेन गम्यमानत्वात् अप्रस्तुतप्रशंसाऽलङ्कारः। किञ्च अत्र "रजनी समागता" इत्युक्त्या आगन्तुकभावेन अन्यस्य चिह्नस्य प्रयोगात् पताकास्थानमेव; तच्च "वक्रवाकवधु!" इत्याद्युक्त्या शकुन्तलाक्लेशकरवाक्यप्रयोगात् द्वितीयं स्थानम्। तदुक्तं दर्पणे,—"वचः सातिशयक्लिष्टं नानाबन्धसमाश्रयम्। पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम्॥" इति।

(५७) ससम्भ्रमं—सत्वरम्। धर्म्मकनीयसी—कनिष्ठा धर्म्मभगिनी इत्यर्थः। [अत्र

राजा। **तथा।** [ इति एकान्ते स्थितः ]।

[ ततः प्रविशति पात्रहस्ता गौतमी ]।

गौत। **जादे! अच्चाहिदं सुणिअ आअदा, एदं सान्तिउदअं। (५८)** [इति समुत्थाप्य च]। **इध देवदासहाइणी (५९) चिट्ठसि? (ठ)**

शकु। **दाणिं ज्जेव अणसूआपिअंवदाओ मालिणीं ओदिण्णाओ। (ड) (६०)**

गौत। [ शान्त्युदकेन शकुन्तलाम् अभ्युक्ष्य ]। **जादे! णिराबाधा मे चिरं जीव। अवि दे लहुसन्दावाइं (६१) अङ्गाइं? (ढ)**

[ इति स्पृशति ]।

(ठ) जाते! अत्याहितं श्रुत्वा आगता, एतच्छान्त्युदकम्। इह देवतासहायिनी तिष्ठसि?

(ड) इदानीमेव अनसूयाप्रियंवदे मालिनीमवतीर्णे।

(ढ) जाते! निराबाधा मे चिरं जीव। अपि ते लघुसन्तापानि अङ्गानि?

---

धर्म्मकनीयःपदयोरुपादानात् 'नेयं सहोदरा, नापि कनिष्ठत्वात् मम तातस्योपरि प्रभविनी' इति सूचयित्वा एतस्या अननुमताऽपि पितुरसन्निधाने किमपि कर्त्तुं नाहं शक्नोमि इति दुष्मन्तस्य तदनुमतिप्रश्नोऽपि निराकृतः]। वृत्तान्तोपलम्भननिमित्तं—वार्त्तां ज्ञातुम्। विटपान्तरितः,—शाखासमाच्छन्नः। [ अनेन विरोधो नाम प्रतिमुखाङ्गं प्रदर्शितम्। यदाह दर्पणे,—"विरोधो व्यसनप्राप्तिः" इति। अत्र विच्छेद एव व्यसनम् ]।

(५८) जाते—वत्से। अत्याहितम्—अत्यन्तमसुखमित्यर्थः। शान्त्युदकप्रदर्शनार्थमाह, एददिति।—करस्थितमित्यर्थः।

(५९) देवतासहायिनी—दैवमात्रसहाया, एकाकिनीति भावः। अत्र स्थातुमनुचितमित्यभिप्रायः।

(६०) सखीजनमपश्यन्त्याः अस्याः तदुपरि कोपः गर्हणा च अवश्यम्भाविनी इत्याशङ्क्याह, इदानीमेवेति।—सम्प्रति, न तु चिरमित्यर्थः, अवतीर्णे—गते, अवगाहितुमिति शेषः।

(६१) शान्त्युदकेन—शिष्यप्रदत्तशान्तिजलेन। अभ्युक्ष्य—अभिषिच्य; तथा-

शकु। अण्णो अत्थि विसेसो। (ण) (६२)

गौत। परिणदो दिअसो, ता एहि उडअं ज्जेव गच्छह्म। (त) (६३)

शकु। [कथञ्चिदुत्थाय स्वगतम्]। हिअअ! पढमं सुहोवणदे मणोरहे कालहरणं करेसि, सम्पदं अणुभव दाव दुक्खं। (६४) [पदान्तरं प्रतिनिवृत्य प्रकाशम्]। लदाघर सन्दावहर! आमन्तेमि तुमं पुणो वि परिभोअत्थं। (थ) (६५)

[इति निष्क्रान्ते]।

(ण) अस्ति अस्ति विशेषः।

(त) परिणतो दिवसस्तदेहि उटजमेव गच्छावः।

(थ) हृदय! प्रथमं सुखोपनते मनोरथे कालहरणं करोषि, साम्प्रतमनुभव तावद्दुःखम्। लतागृह! सन्तापहर! आमन्त्रये त्वां पुनरपि परिभोगार्थम्।

चोक्तं,—"उत्तानेनैव हस्तेन प्रोक्षणं समुदाहृतम्। न्यञ्चताभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम्॥" इति। निराबाधा—नीरोगेत्यर्थः। अपि—प्रश्ने। लघुसन्तापानि—लघुः स्वल्पः सन्तापः येषु तानि, शान्ततापानीत्यर्थः।

(६२) विशेषः,—ईषदुपशमः; शान्त्युदकसेचनेन लोकप्रतिकारः सञ्जात इत्यर्थः।

(६३) परिणतः,—परिणामं गतः, अवसानप्राय इत्यर्थः। उटजमेव—पर्णशालामेव;—"पर्णशालोटजोऽस्त्रियाम्" इत्यमरः। [अत्रावस्थानेनालम् इत्येवकारव्यवच्छेद्यः]।

(६४) प्रथमम्—इतः पूर्वं, सुखोपनते—सुखेन अनायासेन उपनते उपस्थिते, मनोरथे—मनोरथभूते प्रियतमे इत्यर्थः। [अत्र प्रियतमरूपस्य विषयस्य निगीर्णत्वात् अतिशयोक्तिः अलङ्कारः]। कालहरणं—समययापनम्। [अत्र "कातरभावं न मुञ्चसि" इति पाठे—कातरभावं कातरतां, न मुञ्चसि न त्यक्तवत् इत्यर्थः]। सम्प्रति अतर्कितघटनात् दुःखं विरहजनितमिति शेषः, अनुभव—उपभुङ्क्ष्व। [अत्र "सानुशयविघटितस्य कथं ते सांप्रतं सन्तापः" इति पाठान्तरे—सानुशयं सपश्चात्तापं विघटितं वियुक्तञ्च तस्य कथं सन्तापः? यत् सङ्गमे कातरता तद्वियोगे तदभाव एव उचितः, न तु तापः, इति 'कथं'शब्देन सूच्यते]।

(६५) पदान्तरे—अन्यस्मिन् पदविक्षेपे, तत्क्षणमेव इत्यर्थः। प्रतिनिवृत्य—पश्चात्-

राजा। [पूर्वस्थानमुपेत्य सनिश्वासम्]। अहो! विघ्नवत्यः प्रार्थितार्थसिद्धयः। (६६) मया हि।—

मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं, न चुम्बितं तु (६७) ॥ ३८ ॥

निहत्य। लतागृह!—लतामण्डप! [अत्र तत्स्थो दुष्मन्त एव ध्वन्यते। अत्र 'लदावलअ संदावहारअ" इति पाठे—लतागृह सन्तापहारकेति (सं)। अत्र "लतागृह सन्तापहर" इत्येकयोक्त्या दुष्मन्तलतागृहयोः सम्बोधनम्। गृहशब्देन आच्छादकत्व-गुप्ततरत्व-मनोहरत्वादि च ध्वनितम्]। आमन्त्रये—आपृच्छामि, पुनरपि—भूयोऽपि, परिभोगार्थं—सुखसम्भोगार्थम्। [अत्र अप्रस्तुतेन प्रस्तुतस्य नायकामन्त्रणस्य गम्यमानत्वात् अप्रस्तुतप्रशंसाऽलङ्कारः। पुनः भङ्ग्यन्तरेण अभिप्रायस्योक्तेः मनोरथो नाम नाटकलक्षणं प्रदर्शितम्। यदाह दर्पणे,—"मनोरथस्त्वभिप्रायः स्वोक्तिर्भङ्ग्यन्तरेण यत्" इति।

(६६) पूर्वस्थानं—लतामण्डपम्। अहो!—इत्याश्चर्य्ये। प्रार्थितेति।—प्रार्थितानाम् अर्थानां प्रयोजनानां सिद्धयः निष्पत्तयः।—"सिद्धिर्निष्पत्तियोगयोः" इति विश्वः। विघ्नवत्यः—सविघ्नाः इत्यर्थः।

(६७) प्रार्थितप्रयोजनसिद्धयः सविघ्ना इत्युक्तम्; तत्र प्रयोजनं दर्शयति, मुहुरिति।—पक्ष्माणि सन्त्यनयोरिति पक्ष्मले ["सिध्मादिभ्यश्च" (५।२।९७ पा०) इति मत्वर्थे लच्प्रत्ययः। स च प्राशस्त्यार्थे एव प्रायेण भवति] घनलोमशालिनी इत्यर्थः, अक्षिणी नयने यस्याः तथोक्तायाः ["बहुव्रीहौ सक्थ्यक्ष्णोः" (५।४।११३ पा०) इति षचि "षिद्गौरादिभ्यश्च" (४।१।४१ पा०) इति ङीप्।] मुहुः पुनःपुनः, अङ्गुलिभिः संवृतः आच्छादितः अधरोष्ठः निम्नोष्ठः, (तत्रैव चुम्बनसम्भवादिति भावः) यस्य तादृशं, प्रतिषेधाक्षरेण 'मा' 'मा' इति वर्णप्रयोगेण यः विक्लवः वैक्लव्यं (धर्म्मपरोऽयं स्फुटमनुच्चारणमित्यर्थः) तेन अभिरामं मनोहरम्, अंसविवर्त्ति अंसे स्कन्धदेशे परावर्त्ति चुम्बनशङ्काभिः लज्जयेति भावः, [विशेषणवशेन चुम्बनयोग्यता ध्वन्यते] एवंविधं मुखं कथमपि महता कष्टेन उन्नमितं चुम्बनार्थम् उत्तोलितं, न तु चुम्बितम्; तदेव गौतमीसमागमात् भयेन इति

क्व नु खलु सम्प्रति गच्छामि ? अथवा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्त्तं तिष्ठामि। [ सर्वतोऽवलोक्य ]।—

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं,
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः।
हस्ताद् भ्रष्टमिदं विसाभरणमित्यासज्जमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहादीशोऽस्मि शून्यादपि (६८)॥३८॥

---

भावः। [ अत्र 'तु' इति निपातस्य अनुतापव्यञ्जकत्वं बोध्यम्। अनेन तावन्मात्रचुम्बनेन मे कृतकृत्यता स्यात् इति ध्वन्यते। अत्र कथमपि इत्यस्य अर्थं प्रति विशेषणद्वयस्य हेतुत्वात् काव्यलिङ्गम्; स्वभावोक्तिश्च अलङ्कारः]। औपच्छन्दसकं नाम वृत्तम्। तल्लक्षणं यथा पैङ्गले—"गौपच्छन्दसकम्" इति।—"अस्मिन् वैतालीये छन्दसि अन्ते गकारश्चेत् अधिको भवति, तदा औपच्छन्दसकं नाम छन्दः।" इति हलायुधः॥ ३८॥

(६८) तस्या इति।—तस्या मम पुरः इव विवर्त्तमानायाः प्रियायाः हृदयसर्वस्वभूतायाः, शरीरेण नितरां सन्नतेन प्रकरणलभ्यमेतदिति नोक्तम्; लुलिता मर्द्दिता, इतस्ततः विक्षिप्ता इत्यर्थः, पुष्पमयी [ पुष्पेण प्रस्तुता इति प्रस्तुतार्थे मयट्, ततः ङीप्। एतेन मार्दवातिशयो ध्वन्यते ] न तु पल्लवमयी, शिलायाम् इयं परिदृश्यमानेत्यर्थः शय्या ( अत्र प्रथमतः शकुन्तलाया अनुस्मरणात् तस्या इति, ततः पुष्पेषु दृष्टिपातात् पुष्पमयी इति, पश्चात् शिलायामिति यथादृष्टोक्तिः दुष्मन्तस्य, इति विभावनीयम् ) एष पुरःस्थितः नलिनीपत्र नखैरर्पितः रचितः कान्तः मनोज्ञः मन्मथलेखः कामलिपिः [ कान्त इत्यत्र "क्लान्तः" इति पाठे—कालातिपातात् म्लानिमापन्न इत्यर्थः ] हस्तात् भ्रष्टं च्युतम् इदं पुरोवर्त्ति विसस्य मृणालस्य आभरणम् इति एष इत्यर्थः, आसज्जमाने द्रष्टुं प्रवृत्ते ईक्षणे नयने यस्य तादृशः, [ असज्यमानेति पाठे—दर्शनव्यापारेण असज्यमाने स्वयमेव सम्बध्यमाने ईक्षणे यस्य स तथोक्तः ] अहं शून्यात् प्रिययेति शेषः, वेतसगृहात् सहसा अकस्मात् निर्गन्तुं न ईशोऽस्मि न शक्नोमीत्यर्थः; तत्परित्यक्तानि चिह्नानि परित्यक्तुं न शक्नोमि, सा पुनः किमु वक्तव्या इति भावः। [ अत्र प्रियाशून्यत्वरूपनिर्गमनकारणसत्त्वेऽपि निर्गमनाभावकथनात् विशेषोक्तिः; तत्कारणाभावेऽपि निर्गमनाभावरूपकार्यमिति विभावना च; द्वयोरेव साधक-बाधकप्रमाणाभावात् सन्देहसङ्करः। अत्र च चतुर्थे

[विचिन्त्य]। अहो! धिक् असम्यक् चेष्टितं (६९) प्रियां समासाद्य कालहरणं कुर्वता मया। तदिदानीम्;—

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुनः
न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः।
इति क्लिष्टं विघ्नैर्गणयति च मे मूढ़हृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव (७०) ॥४०॥

(नेपथ्ये) भो भो राजन्!—

सायन्तने सवनकर्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः।

चरणे अनुरागव्यञ्जक-शब्दसद्भावात् पुष्पं नाम प्रतिमुखाङ्गं दर्शितम्; यदाह दर्पणे,—"पुष्पं विशेषवचनं मतम्" इति। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३९ ॥

(६९) सकातरमाह, अहो! इति।—शोकसूचकमव्ययम्।—"अहो धिगर्थे शोके च करुणार्थविषादयोः" इति मेदिनी। असम्यक्—अभद्रं, चेष्टितं—कृतम्।

(७०) सानुशयमाह, रह इति।—सुवदना—सुष्ठु सुन्दरं वदनं यस्याः सा, [सदैव तन्मुखानुध्यानादेतदुक्तम्] प्रिया यदि पुनः अन्यस्मिन् समये रहः एकान्ते निर्ज्जने इत्यर्थः, प्रत्यासत्तिं सन्निधिं यास्यति प्राप्स्यति, तदा कालं न हास्यामि न परिहरिष्यामि, स्वाभीष्टसाधने विलम्बं न करिष्यामि इत्यर्थः। न चानेन दुष्मन्तस्य वैवाहिकविधिप्रमत्तता शङ्कनीया, गान्धर्व्वविवाहस्य सार्वकालिकत्वात्। तथा चोक्तं,— "गान्धर्व्वाख्यो राक्षसश्चासुरश्च पैशाचो वा सर्वकाले विधेयाः" इति। हि यतः, विषयाः कामाः प्रकृत्या स्वभावेन दुरवापाः दुर्लभाः। विघ्नैः प्रत्यूहैः गौतम्यागमनादिभिः क्लिष्टं व्याहतं मे मूढ़हृदयम् इति इत्थं प्रियायाः प्रत्यक्षं साक्षात्कारं गणयति च विचारयति च, किमपि अनिर्वचनीयं यथा तथा कातरमिव च इतिकर्त्तव्यतायां विक्लवमिव च। उत्प्रेक्षाऽलङ्कारः। शिखरिणी वृत्तम् ॥ ४० ॥

(७१) सायन्तने इति।—सायन्तने सायं भवः सायन्तनः तस्मिन्—सन्ध्याकालीने, ["सायंचिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च" (४।३।२३पा०) इति सायंशब्दात् ट्युप्रत्यये तस्य तुड़ागमश्च] सवनकर्म्मणि यज्ञकर्म्मणि, अग्निहोत्रे इत्यर्थः।—"यावज्जीवम् अग्निहोत्रं जुहोति यदग्नये च प्रजापतये सायं प्रातः जुहोति" इति श्रुतेः। संप्रवृत्ते प्रारब्धे, न तु आदावेव तेषां प्रारब्धधर्म्मकार्य्यविघ्नकारित्वस्वभावात्

छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् (७१)॥४१॥

राजा । [ आकर्ण्य सावष्टम्भम् ] (७२) भो भोः तपस्विनः ! मा भैष्ट मा भैष्ट, अयम् अहमागत एव ।

[ इति निष्क्रान्तः ] ।

इति तृतीयोऽङ्कः ॥ ३ ॥

इत्यर्थः, हुताशनवतीं होमाग्निदीपितां वेदिं यज्ञभूमिं, परितः समन्तात् चेयाः चतुष्पार्श्वं इत्यर्थः, [ अभितःपरितःसमयेति (वा०) परितःशब्दयोगे द्वितीया ] प्रकीर्णाः पतिता इत्यर्थः, [अत्र "प्रथमाः" इति पाठे—स एवार्थः ] अत एव भयम् आदधानाः जनयन्त्यः, सन्ध्याभ्रकूटवत् सायन्तनमेघस्तोमवत् कपिशाः कृष्णपीताः, पिशिताशनानां राक्षसानां, छायाः प्रतिबिम्बानि, ( "छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः" इत्यमरः ) बहुधा अनेकप्रकारं चरन्ति भ्रमन्ति, गतागतं कुर्व्वन्ति इति यावत् ; राक्षसाः खलु अदृश्यशरीरा अपि हुताशनसान्निध्यात् सञ्जाताभिः छायाभिः अनुमीयन्ते इत्यर्थः । [ अत्र परितः प्रकीर्णाः अत एव भयमादधाना इति हेतुहेतुमद्भावात् काव्यलिङ्गम् । सन्ध्याभ्रकूटकपिशा इत्यंशे उपमा च ; इत्यनयोः संसृष्टिः । श्लोके चात्र भयानको रसः व्यङ्ग्यः, राक्षसच्छायादर्शनं विभावः, त्रासश्चात्र व्यभिचारी भावः, भयञ्च स्थायी भावः, इत्यादि सर्व्वमेव अनुसन्धेयम् । अङ्कान्ते निखिलपात्रनिर्गमनाय कौशलमेतत् ;—"अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः" इति दर्पणोक्तेः । अत्र तु प्रतिमुखसन्धिरिति प्राचीनमतेनोक्तम् । दर्पणकारादिमते तु—अयमेव गर्भसन्धिः । द्वितीये अङ्के प्रतिमुखसन्धिरिति महान् भेदः । अस्माभिस्तु प्राचीनमतेन एव सन्ध्यङ्गानि प्रदर्शितानि । नव्यमतेन तु तानि ग्रन्थविस्तरभयादुपेक्षितानि इति सुधीभिः स्वयमूहनीयम् । वसन्ततिलकं वृत्तम् ॥ ४१ ॥

(७२) सावष्टम्भं—सधैर्य्यम् । [ अनेन प्रियाविरहकातरस्य दुष्मन्तस्य धैर्य्यप्रदर्शनेन धीरोदात्तत्वं सूचितम् ] ।

# तृतीयाङ्कस्य सङ्क्षिप्त-विवृतिः।



अत्र प्रथमतः कश्चित् यजमानशिष्यः तापसः दर्भमानेतुमुपगतः क्वचन वनभागे, समनुवर्ण्य दुष्मन्तकृतं तपोवनरक्षां, विजिज्ञासुश्च दूरसंस्थितां प्रियंवदां "कस्येद-मुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते ?" इति, विज्ञाय च बलवद-सुस्थशरीरां शकुन्तलां, समादिश्य च प्रियंवदां तामुपचरितुं, वैतानिकशान्तिसलिल-समर्पणार्थं गौतमीकरे, त्वरितं स्वस्थानं प्रतस्थे।

अथ अनङ्गबाणव्यथिताङ्गयष्टिः नृपतिः शकुन्तलामनुध्यायन् परिभ्रमन् तपोवनोप-कण्ठे चणमनङ्गमृगाङ्कस्वभावम् उपालभमानः समगात् लतामण्डलविमण्डितं मालिनी-तीरम्। सङ्गतश्च तत्र नृपतिः सद्योलूनानि किशलयकुसुमानि सैकतप्रान्ते च जघन-भारानवगाढ़पुरोभागाणि चरणचिह्नानि पश्यन् विचिन्वंश्च समन्तात् लतामण्डपे सरस-कुसुमशयनीयरमणीयकं शिलाफलकमधिशयानां सखीभ्याञ्च प्रियंवदाऽनसूयाभ्यां समु-पास्यमानां पञ्चबाणबाणविद्धदेहां शकुन्तलामपश्यत्। पश्यंश्च लतान्तरान्तरितदेहकान्तिः दुष्मन्तः विजिज्ञासुराश्रु तासां रहस्यविचेष्टितानि चणमतिष्ठत्।

अत्रान्तरे तत्रापि कोमलकमलदलव्यजनवीजनेनाप्यर्जानितसन्तापशान्तिः नितान्त-मन्तःसन्तापसन्तापिता शकुन्तला निर्व्वर्ण्य अनिर्व्वर्ण्यशङ्कासंचुभितमानसाभ्यां ताभ्यां प्रियसखीभ्याम् अनुरुध्यमाना सनिर्बन्धं, निर्बन्धातिशयकौत्सुकाणा च प्रियसख्योः आख्यत् अनाख्येयमपि प्रख्यातख्यातौ दुःष्मन्ताख्ये चोणीपतौ आत्मनः रुग्णम्। श्रुत्वा च शीघ्रपेयम् आख्येयमस्याः कथञ्चित् स्वाश्यमास्थाय संप्रधार्य्य च सहजसाध्यमेतदस्येव इति, प्रेय च तां लज्जितपदावलीबन्धलेखं मदनलेखमालिखितुम् उपदिश्य च लेखन-साधनं विचिन्वानां शुकोदरसुकुमारे नलिनीपत्रे नखैरालिखितुं, समाकर्ण्य च शकुन्तलोदितमनङ्गलेखोदन्तं तूष्णीमास्थातां प्रियसख्यौ।

दुष्मन्तश्च लतान्तर्निषण्णः आसन्नतरस्थितानां तासां संलापमाकर्ण्य कर्णामृतं प्रलपंश्च बहु सबहुमानं मुहुर्मुहुः प्रकाश्य च निखिलमाकूतं कुतश्चित् व्यपदेशाच्च तद्देशमासादयितुं कृतधीरधीरः सन् सहसा संप्राप्तकन्दर्पलेखरन्ध्रः तत्समीप-मुपसर्पन् सम्भाषमाणः मधुरसम्भाषणैः, स्वीकृत्य च सखी सविधे प्राणप्रतिमेयं कृतप्रतिष्ठा च मम ते प्रियवयस्येति विविधालापतत्परौ अरमत। सखीभ्याञ्च

आसन्नतरोऽयमनयोः कन्दर्पभावः इति मन्यमानाभ्यां मृगवध्वा सह मृगपोतस्य सन्धानव्याजेन तत्स्थानात् प्रास्थायि। ततोऽसौ अद्वितीयभूपालः सम्प्रति शकुन्तला-द्वितीयः रहसि बहु विहरन् अकाण्डे दूरस्थितसखीमुखसमुदितम् अतर्कित-गौतमीसमागममश्रौषीत् ।

अथ नरपतौ द्रुतमपसर्पति द्रुमान्तरालं समागतायाञ्च शान्तिसलिलभाजन-करायां कण्वकनीयस्यां गौतम्याम् अभ्युक्षिते च तया शान्तिपाथसि शकुन्तलावपुषि, अस्तोन्मुखे च भगवति कमलनायके घर्मभानौ सा वर्षीयसी गौतमी सह शकुन्तलया स्वमन्दिरमविन्दत ।

राजाऽपि पुनरागत्य पूर्वप्रदेशे विनिन्द्य च अनिन्द्यमपि अकृतार्थमात्मानम् अनु-तपन् अकस्मात् तपस्विजनैः उच्चैरुच्चारितां सायमेव राक्षसानुष्ठितक्रातवविघ्नवार्त्ताम् अशृणोत् ; श्रुत्वा च मा भैष्टेति वचसा समाश्वासयन् प्रतस्थे । इति ।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"वि, ए" इत्युपनामक-श्रीमज्जीवा-नन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण-श्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां तृतीयोऽङ्कः ॥३॥

---

# चतुर्थोऽङ्कः। (१)

[ ततः प्रविशतः कुसुमावचयमभिनयन्त्यौ सख्यौ ]। (२)

अनसूया। **हला पिअंवदे! जइ वि गन्धव्वेण विवाहविहिणा णिव्वुत्तकल्लाणा पिअसही सउन्तला अणुरूवभत्तिभाइणी संवुत्ता, तह वि मे ण णिव्वुदं हिअअं। (क) (३)**

(क) हला प्रियंवदे! यद्यपि गान्धर्वेण विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता, तथापि मे न निर्वृतं हृदयम्।

---

(१) इह खलु सकलकविकुलशिरोमणेः तत्र भवतः महाकवेः कालिदासस्य सकलकाव्यजातेषु विशेषतः रूपकनिचयेषु अभिज्ञानशकुन्तलमेव सकलनाटकलक्षणलक्षिततया रसभावसमुज्ज्वलतया प्रतिपाद्यचरित्रप्रदर्शनपवित्रतया च प्रकृष्टं प्रतिभाति; तत्रापि चतुर्थोऽङ्कः प्रकृष्टतरः, तत्र च श्लोकचतुष्टयं प्रकृष्टतममिति सर्वजनप्रवादः सर्वत्र प्रचरति। तथा च किंवदन्ती,—"कालिदासस्य सर्वस्वम् अभिज्ञानशकुन्तलम्। तत्रापि च चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम्॥" इति। [ अत्र च गर्भसन्धिरिति प्राचीनसम्मतम्। नव्यमते तु—इत आरभ्य शकुन्तलाऽभिज्ञानात् पूर्वपर्य्यन्तं विमर्षसन्धिः। लक्षणमपि तथैव प्रदर्शितं दर्पणे,—"यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः। शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः॥" इति ]।

(२) कुसुमावचयं—पुष्पचयनम्। [ अवपूर्वाच्चेः हस्तादाने अवचय इति रूपं भवति। अत्र तु सख्योः बालत्वात् हस्तादानासम्भवात् अवचाय इति घञि रूपं न प्रदत्तम् ]।

(३) अङ्कलक्षणे—"विवाहः भोजनम्" इत्यादिना विवाहवर्णनस्य प्रतिषिद्धतया "गौतमीसमागमेन शकुन्तलादुष्मन्तयोः विश्लेषानन्तरं तौ किमकुरुतामिति समुत्कण्ठाकुलितचेतसां सभ्यानाम् उत्कण्ठामपनेतुकामः विष्कम्भादौ प्रथममेव तं सूचयन्नाह, "यद्यपीति।—गान्धर्वेण "गान्धर्वः समयान्मिथः" इत्युक्तप्रकारेण, विवाह-

प्रियंवदा। कधं विश्र ? (ख)

श्रन। अज्ज सो राएसी इट्ठिपरिसमत्तीए इसिहिं विसज्जिदो अत्तणो णअरं पविसिअ अन्तेउरसमागमादो इमं जणं सुमरेदि ण वेत्ति। (ग) (४)

प्रियं। एत्थ दाव वीसत्था होहि, ण हि तादिसा आकिदिविसेसा गुणविरहिणो होन्ति। एत्तिअं उण चिन्तणीअं, तादो तीत्थजात्तादो पड़िणिउत्तो इमं वुत्तन्तं सुणिअ ण आणे किं पड़िवज्जिस्सदि त्ति। (घ) (५)

(ख) कथमिव ?

(ग) अद्य स राजर्षिरिष्टिपरिसमाप्त्या ऋषिभिर्विसर्जित आत्मनो नगरं प्रविश्य अन्तःपुरसमागमादिमं जनं स्मरति न वेति।

(घ) अत्र तावद्विश्वस्ता भव, न हि तादृशा आकृतिविशेषा गुणविरहिता भवन्ति। एतावत् पुनश्चिन्तनीयं, तातस्तीर्थयात्रातः प्रतिनिवृत्त इमं वृत्तान्तं श्रुत्वा न जाने किं प्रतिपत्स्यत इति।

विधिना—परिणयव्यापारेण [एतेन सर्वथा धर्मापेक्षित्वमेव नृपस्य सूचितम्]। निर्वृत्तकल्याणा—सम्पन्नमङ्गला, निर्वृत्तमनोरथेति यावत्। अनुरूपभर्तृभागिनी—योग्यपतिसङ्गता। निर्वृतं—सुखितं, सुस्थमिति यावत्;—"निर्वृतिः सुस्थितावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी।

( ४ ) इष्टिपरिसमाप्त्या—यज्ञसमापनेन। ऋषिभिः विसर्ज्जितः—मुनिजनसकाशात् स्वनगरं गन्तुमभ्यनुज्ञातः। अन्तःपुरसमागमात्—स्त्रीसमाजेन मेलनात्। इमं जनं—शकुन्तलामित्यर्थः, स्मरति न वा ? [अनेन वक्ष्यमाणशापेन राज्ञः नायिकाविस्मरणं सूचितम्]।

(५) गुणविरहिताः,—निर्गुणा इत्यर्थः,—"यत्राकृतिस्तत्र [illegible]: वसन्ति" इति शास्त्रात्। [अनेन 'अस्मिन् नृपे वञ्चनाचातुर्य्यादिकं न सं[illegible] सूचयित्वा कोऽपि माहात्म्यातिशयः ध्वन्यते]। तीर्थयात्रातः,—तीर्थ[illegible]र्थः, प्रतिनिवृत्तः,—प्रत्यागतः, इमं वृत्तान्तं—शकुन्तलापरिणयरूपम्। [illegible]त—मंस्यते।

अन। जधा मं पुच्छसि तधा अभिमदं तादस्स । (ङ) (६)

प्रियं। कधं विश्र ? (च)

अन। अणुरूवस्स वरस्स हत्थे कसम्रा पड़िवादणीश्र त्ति, अश्रं दाव पढ़मो कप्पो। तं जइ देव्वं सम्पादेदि, णं किअत्थो गुरुश्रणो। (छ) (७)

प्रियं। एवसेदं। [ पुष्पभाजनं विलोक्य ]। सहि! अवचिदाइं क्खु बलिकम्मपज्जत्ताइं (८) कुसुमाइं। (ज)

(ङ) यथा मां पृच्छसि तथाऽभिमतं तातस्य ।

(च) कथमिव ?

(छ) अनुरूपस्य वरस्य हस्ते कन्यका प्रतिपादनीयेति अयं तावत् प्रथमः कल्पः। तत् यदि दैवं सम्पादयति ननु कृतार्थो गुरुजनः।

(ज) एवमिदम्। सखि! अवचितानि खलु बलिकर्म्मपर्य्याप्तानि कुसुमानि।

---

(६) यथा—यादृशं, तथा—तादृशं, तातस्य अभिमतम्—अभिप्रेतम्। [ "क्तस्य च वर्त्तमाने ( २।३ ६७ पा० ) इति कर्त्तरि षष्ठी। अत्र "जह अहं पेक्खामि तह तस्स अणुमदं भवे" इति पाठान्तरं—"यथा अहं प्रेचे तथा तस्य अनुमतं भवेत्" इति (सं)। तत्र 'यथा'शब्दः योग्यतार्थे ; यदाह दण्डनाथः,—"यथेति योग्यतावीप्सा-पदार्थानुवृत्तिसादृश्येषु" इति। तथा च,—योग्यतया अहं जानामि, तस्य अनुमतं भवेदित्यर्थः ]।

(७) अनुरूपस्य—योग्यस्य, वरस्य—जामातुः।—"वरो जामातरि वृते देवतादे-रभीप्सिते" इति मेदिनी। प्रतिपादनीया—समर्पणीया। प्रथमः,—मुख्यः, कल्पः,—विधिः। [ अत्र सङ्कल्पः इति पाठे—मानसं कर्म इत्यर्थः।—"सङ्कल्पः कर्म्म मानसम्" इत्यमरः]। तत्—योग्यवरे कन्यार्पणं, दैवं—भागधेयं, सम्पादयति—घटयति। कृतार्थः,—सिद्धकामः, गुरुजनः—पित्रादिः, कस्य: इत्यर्थः ; अनायासेन अभिलषित-फलस्य हस्तावाप्तत्वादिति भावः।

(८) पुष्पभाजनं—कुसुमाधारः, अवचितानि—उद्धृतानि, लूनानि इत्यर्थः। बलिकर्म्मपर्य्याप्तानि—पूजोपहारकर्मसु यथेष्टानि।

अन। णं सउन्तलाए वि सोहग्गदेवदाओ अच्चिदव्वाओ, ता अवराइं पि अवचिणह्म। (झ) (९)

प्रियं। जुज्जदि। (ञ)

[ इति तदेव कर्माभिनयतः ]। (१०)

[ नेपथ्ये ]।—"अयमहं भोः"।

अन। [कर्णं दत्त्वा]। सहि ! अदिधिणा विअ णिवेदिदं? (ट) (११)

प्रियं। णं उड़ए सण्णिहिदा सउन्तला। (ठ)

अन। आं, अज्ज उण असण्णिहिदा हिअएण, तेण हि भोदु एत्तिकेहिं कुसुमेहिं पओजणं। (ड) (१२)

[ इति प्रस्थिते ]।

(झ) ननु शकुन्तलाया अपि सौभाग्यदेवता अर्चयितव्यास्तदपराख्यपि अवचिनुवः।

(ञ) युज्यते।

(ट) सखि ! अतिथिनेव निवेदितम् ?

(ठ) ननु उटजे सन्निहिता शकुन्तला ?

(ड) आम्, अद्य पुनरसन्निहिता हृदयेन, तेन हि भवतु एतावद्भिः कुसुमैः प्रयोजनम्।

(९) ननु इति।—परमताक्षेपे। शकुन्तलाया अपि,—[ अपिरत्र भिन्नक्रमः ] सौभाग्यदेवतायाः अपि इति योजना ; भर्त्तुः सौभाग्यलाभार्थं विवाहानन्तरकर्त्तव्य-मङ्गलचण्डिकादिदेवता इत्यर्थः ; सार्वत्रिकप्रसिद्धोऽयं नारीसमयः। अवचिनुवः—लुनीवः।

(१०) स्वाभिप्रायानुरूपवाक्यश्रवणादाह, युज्यत इति।—युक्तमेतत् इत्यर्थः। तदेव—कुसुमावचयनरूपं कार्य्यमेव। अभिनयतः,—आङ्गिकाभिनयेन दर्शयतः इत्यर्थः।

(११) कर्णं दत्त्वा—श्रुतिमभिनीय। अतिथिना आगन्तुना इव निवेदितं—[भावे क्तप्रत्ययः ] अतिथिर्यथा विज्ञापयति तथा अयमपि इत्यर्थः।

(१२) आम् इति।—स्मरणार्थे अव्ययम्। हृदयेन असन्निहिता—हृदयशून्येत्यर्थः, दुष्मन्तगतहृदया इति यावत्, हृदयस्य राजगामित्वादिति भावः। एतावद्भिः,—एतत्परिमाणकैः, प्रयोजनं—बलिकर्म्म-सौभाग्यदेवतार्च्चनरूपं, भवतु—अस्तु।

[ पुनर्नेपथ्ये ]।—"आः! कथमतिथिं मां परिभवसि?(१३)—

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम्।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव" (१४) ॥ १ ॥

[ उभे श्रुत्वा विषण्णे ]।

प्रियं। हद्धी हद्धी तं ज्जेव संवुत्तं जं मए चिन्तिदं, कस्सिं पि पूआरिहे अवरद्धा सुण्णहिअआ (१५) पिअसही सउन्तला। (ढ)

(ढ) हा धिक्, हा धिक्! तदेव संवृत्तं यन्मया चिन्तितं, कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी शकुन्तला।

(१३) आः इति।—कोपे।—"आस्तु स्यात् कोपपीडयोः" इत्यमरः। अतिथिम्—अभ्यागतम्, [ अनेन अनादरानर्थत्वं सूच्यते ]। मां—विशेषतः तापसाग्रगण्यं दुर्वाससम् इत्यर्थः; [ अत एव अस्मद्-शब्दोपादानम् ]। कथं परिभवसि?—मम वाक्यम् उपेत्य तिरस्करोषि।

(१४) विचिन्तयन्तीति।—अनन्यमानसा एकचित्ता तद्गतहृदया इत्यर्थः, सती यं विचिन्तयन्ती; तपोनिधिं तापसवर्य्यम्। ननु आश्रमेऽत्र बहवः तापसा वर्त्तन्ते, तेषाम् अज्ञाने न काचित् हानिः जायते इत्याह, मामिति।—मां—यं कमपि न, सुलभकोपं दुर्वाससम् इत्यर्थः। ननु दूरस्थस्य अज्ञानेऽपि नास्ति मे अपराध इत्याह, उपस्थितमिति।—उपस्थितम्—आतिथ्यलाभार्थं स्वयं तव आश्रमोटजसविधे समागतम्; [ अत्र विशेषणत्रयमेव विधेयं, नातो विधेयाविमर्षदोषः ] न वेत्सि न बुध्यसे, स जनः बोधितोऽपि परेण सम्यक् ज्ञापितोऽपि सन् प्रमत्तः,—प्रकृष्टः मत्तः, क्षिप्तः इत्यर्थः; अन्यत्र—अनवहितः, —"प्रमादोऽनवधानता" इत्यमरः; [ एतेन अशक्तिकृतदोषः परिहृतः ] प्रथमं पूर्वं कृताम् उक्तामित्यर्थः, कथामिव; शकुन्तलापक्षे—पूर्वम् अङ्गीकृतामित्यर्थः; त्वां न स्मरिष्यति—सम्पृक्तेयम् इति न ज्ञास्यति इत्यर्थः। [ अत्र विचिन्तयन्ती अत एव अनन्यमानसा इति हेतुनिर्देशात् वाक्यार्थहेतुकं काव्यलिङ्गम्; श्लेषानुप्राणितोपमाऽलङ्कारश्च ]। वंशस्थविलं वृत्तम् ॥ १ ॥

(१५) तदेव—अनुभूतमेव। यत् मया चिन्तितं—विभावितम्, अनुमितमित्यर्थः,



"-तपोनिधिं वेत्सि न मामुपस्थितम्" ? (१७४ पृष्ठ)।

Engraved and Printed by the Mohila Press, Cal

अन। [ पुरोऽवलोक्य ]। ण क्खु जस्सिं कस्सिं पि! एसो दुव्वासा सुलहकोवो महेसी, तधा सविअ अविरलपाद-तुवराए गदीए पड़िणिउत्तो। (ण) (१६)

प्रियं। को अस्सो हुदवहादो पहवदि दहिदुं, ता गच्छ पाएसुं पड़िअ णिउत्तावेहि, जाव से अहं पि अग्घोदअं उव-कप्पेमि। (त) (१७)

अन। तधा (थ)।

[ इति निष्क्रान्ता ]।

(ण) न खलु यस्मिन् कस्मिन्नपि, एष दुर्वासाः सुलभकोपो महर्षिः तथा शप्त्वा अविरलपादत्वरया गत्या प्रतिनिवृत्तः।

(त) कोऽन्यो हुतवहात् प्रभवति दग्धुं, तद्गच्छ पादयोः पतित्वा निवर्त्तय याव-दस्याहमपि अर्घ्योदकमुपकल्पयामि।

(थ) तथा।

आत्मीयत्वादिति भावः; आत्मीया हि आत्मीयेषु सर्वदैव विपदमाशंसन्ते। तत् किम्? इत्याह, कस्मिन्निति।—पूजार्हे—पूजायोग्ये। अपराद्धा—अपराधिनी। शून्यहृदया—तृपगतचित्ता इत्यर्थः।

(१६) पुरः,—अग्रतः। यस्मिन् कस्मिन्नपि—तुच्छजने इत्यर्थः। तर्हि कस्मिन् इत्याह, एष इति।—एषः,—पुरःस्थितः, सुलभकोपः,—कोपनस्वभाव इत्यर्थः, महर्षिः, —ऋषिवर्य्यः। दुर्वासाः,—स्वनामप्रसिद्ध इत्यर्थः। तथा—तेन प्रकारेण, पूर्वोक्तरूपेण इत्यर्थः। अविरलपादत्वरया—घनत्वरितपदसञ्चारया; ( कोपेनेतत् )। [अत्र "वेग-बलोत्फुल्लया दुर्वारया" इति पाठान्तरे—वेगबलेन—अति त्वरया, उत्फुल्लया—दीर्घं विचिप्तया, दुर्वारया—परैः प्रतिषेद्धुम् अशक्यया इत्यर्थः।

(१७) हुतवहात्—हुतम् अग्नौ प्रदत्तम् आज्यादिकं तस्य वहः इति हुतवहो वह्निः, तस्मात्। अन्यः,—अपरः [ अन्यशब्दयोगे पञ्चमी। अत्र दृष्टान्तालङ्कारः ]। अर्घ्योदकं—पूजार्थं पाद्यमित्यर्थः। उपकल्पयामि—आहरामि।

प्रियं। [ पदान्तरे स्खलितं रूपयन्ती ]। अम्मो ! आवेअक्खलिदाए गदीए परिब्भट्टं मे अग्गहत्थादो पुप्फभाअणं। (द) (१८)

[ इति पुष्पावचयं रूपयति ]।

अन। [ प्रविश्य ]। सहि ! सरीरी विअ कोवो, कस्स अणुणअं सो गेह्णदि ? किञ्च उण सो अणुकम्पिदो मए। (ध) (१९)

प्रियं। एदं ज्जेव तस्सिं बहुदरं, ता कधेहि कधं तुए पसादिदो ? (न)

अन। जदा णिउत्तिदुं ण इच्छदि, तदा पाएसु पडिअ विण्णविदो मए,—"भअवं ! पढमं त्ति पेक्खिअ अविण्णाद-

---

(द) अहो ! आवेगस्खलितया गत्या परिभ्रष्टं मेऽग्रहस्तात् पुष्पभाजनम्।

(ध) सखि ! शरीरीव कोपः कस्यानुनयं स गृह्णाति ? किञ्च पुनः सोऽनुकम्पितो मया।

(न) एतदेव तस्मिन् बहुतरम्, तत् कथय कथं त्वया प्रसादितः ?

(१८) पदान्तरे—अन्यस्मिन् पादविक्षेपे, स्खलितं—गतिभङ्गं, रूपयन्ती—आङ्गिकाऽभिनयेन प्रदर्शयन्ती। अहो! इति।—विस्मये। आवेगेन—सम्भ्रमेण, स्खलितया—विकृतया। परिभ्रष्टं—च्युतम्। अग्रहस्तात्—[अग्रश्चासौ हस्तश्चेति कर्मधारये सति अवयवे लक्षणा ; उक्तञ्च काशिकायां,—"हस्ताग्राग्रहस्तादयः गुणगुणिनोः भेदाभेदाभ्याम्" इति। अन्ये तु—अग्रहस्त इत्यखण्ड एवायं शब्दो हस्ताग्रवाचक इत्याहुः। अपरे तु—हस्तस्याग्रमिति विगृह्य आहिताग्न्यादित्वात् अग्रशब्दस्य पूर्वनिपातः इत्याहुः। केचित्तु—प्राकृते पूर्वनिपातनियमाभावात् हस्ताग्रशब्दमेवाहुः ]। पुष्पभाजनं—पुष्पपात्रम्। [ अनेन दुर्निमित्तेन दुर्वाससः अपुनरावृत्तिः सूच्यते ]।

(१९) शरीरी—मूर्त्तिमान्, [ कोप इव इत्युत्प्रेक्षाऽलङ्कारः ]। कस्य अनुनयं—प्रार्थनां गृह्णाति ? न कस्यापि इत्यर्थः ; अतिदुरपनेयकोपोऽयं तापसः दुर्वासाः इति भावः। तर्हि तव गमनमेव तव विफलम् ; शोचनीया च सा तपस्विनी शकुन्तला, इत्याशङ्कामपनेतुमाह, किञ्चेति।—अनुकम्पितः,—सकृपः कृतः। [अनेन अतिदुःसाध्यं मया अनुष्ठितमिति सूचितम् ]।

तवप्पहावस्स दुहिदिअणस्स अअं अवराहो भअदा मरिसिदव्वो" त्ति । (प) (२०)

प्रियं । तदो तदो ? (फ)

अन । तदो तेण भणिदं, ण मे वअणं अण्णधा भविदुं अरिहदि, किन्तु आहरणाहिण्णाणदंसणेण से सावो णिवत्तिस्सदि त्ति मन्तअन्तो ज्जेव अन्तरिदो । (ब) (२१)

(प) यदा निवर्त्तितुं नेच्छति, तदा पादयोः पतित्वा विज्ञापितो मया,—"भगवन् ! प्रथममिति प्रेक्ष्य अविज्ञाततपःप्रभावस्य दुहितृजनस्य अयमपराधो भवता मर्षयितव्यः" इति ।

(फ) ततस्ततः ?

(ब) ततस्तेन भणितं, न मे वचनमन्यथा भवितुमर्हति, किन्तु आभरणाऽभिज्ञानदर्शनेन अस्याः शापो निवर्त्तिष्यति, इति मन्त्रयमाण एव अन्तरितः ।

(२०) प्रथमं—नूतनम्, अपराद्धमिति शेषः, न कदाचित् पूर्वं कृतमिति भावः । इति प्रेक्ष्य—इति विचार्य्य ; 'अत्र कोपः कर्त्तुं युक्तो न वा' इति विचार्य्य इत्यर्थः । अविज्ञाततपःप्रभावस्य—तपोमहिमानमजानत इत्यर्थः । अयं भावः,—यथेयं कण्वदुहिता तथा तवापि इति मन्तव्यं, तव च दुहिता अपरिणतवयाः, अत एव तव तपोमाहात्म्यं न ज्ञातुमर्हति ; तदस्याः अयं प्रथमकृतः अपराधः तव वैधसत्काराऽकरणरूपः मर्षयितव्यः क्षन्तव्यः । न कोऽपि स्वतनयाऽपराधं गणयति इति भावः ।

(२१) तेन—दुर्वाससा, भणितं—कथितं, मे—मम, तापसवर्य्यस्य इत्यभिप्रायः, अन्यथा भवितुं—विफलीभवितुम् । आभरणाभिज्ञानेति ।—अभिज्ञायते अनेनेति अभिज्ञानं चिह्नम्, आभरणमेव अभिज्ञानम् आभरणाभिज्ञानं, तस्य दर्शनेन । [अनेन पञ्चमाङ्के शकुन्तलायाः वचनरूपाभिज्ञानेन दुष्मन्तस्य विस्मृतिः नापनीता इति विभाव्यताम्] । मन्त्रयमाण एव—आलपन्नेव । अन्तरितः—अन्तर्हितः । नन्वत्र "विवाहो भोजनं शापोत्सर्गौ" इत्यादि दर्पणकाराद्युक्त्या अङ्कलक्षणे शापवर्णनस्य प्रतिषिद्धत्वात् कथमत्रोक्तिः ? इति न शङ्कनीयम् ; अत एव आलङ्कारिकवाक्यप्रमाणतः नेपथ्ये एव स वर्णितः, न तु पात्रप्रदर्शनेन स्पष्टीकृतः ; पात्रप्रदर्शनेनैव तद्दोषसम्भवात् ।

प्रियं। सक्कं दाणिं आस्ससिदुं, अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं, एस ज्जेव तस्सिं साहीणो उआओ (२२) भविस्सदि। (भ)

अन। सहि ! एहि देवकज्जं दाव से णिव्वत्तेह्म। (म)

[ इति परिक्रामतः ]।

प्रियं। [ अवलोक्य ]। अणसूए ! पेक्ख दाव वामहत्थविणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणं पि ण विभावेदि, किं उण आगन्तुअं। (य) (२३)

(भ) शक्यमिदानीमाश्वसितुम्, अस्ति तेन राजर्षिणा सम्प्रस्थितेन आत्मनो नामाङ्कितमङ्गुरीयकं स्मरणीयमिति शकुन्तलाया हस्ते स्वयमेव परिधापितम्, एष तस्मिन् स्वाधीन उपायो भविष्यति।

(म) सखि ! एहि देवकार्यं तावदस्या निर्वर्त्तयावः।

(य) अनसूये ! प्रेक्षस्व तावद्वामहस्तविनिहितवदना आलिखितेव प्रियसखी तद्गतया चिन्तया आत्मानमपि न विभावयति, किं पुनरागन्तुकम् ?

(२२) स्मरणीयमिति।—स्मरणाय हितमिति कृत्वा, परिधापितं—अङ्गुलौ निवेशितम्। तस्मिन् स्वाधीन उपाय इति।—तस्मिन्—शापे। एष इति।—[ प्रश्नस्यमानलिङ्गभाक्त्वम् ]। स्वाधीनः,—आत्मायत्तः उपायः, विमोचनस्य इति भावः।

(२३) अवलोक्य—शकुन्तलामिति शेषः। वामहस्तविनिहितवदना—वामकरार्पितवामकपोला इत्यर्थः; स्त्रीस्वभावोऽयम्। आलिखिता—चित्रिता इव, निश्चलत्वादिति भावः। [अत्रोत्प्रेक्षाऽलङ्कारः]। तद्गतया—तं गता, तया, राजविषयिण्येत्यर्थः। [ अनेन विषयनिवृत्तिर्दर्शिता ]। आत्मानमपि—स्वमपि, विभावयति—जानाति। 'काऽहं, किं करोमि, कुत्र तिष्ठामि ?' इत्यादिकम् आत्मविषयकं ज्ञानमपि नास्ति इत्यर्थः। आगन्तुकम्—अतिथिम्, विभावयतीत्यनुषङ्गः; तज्ज्ञानन्तु सुदूरमपास्तम् इत्यर्थः।

अन। हला ! दोसं ज्जेव णो हिअए एसो वुत्तन्तो चिट्ठदु, रक्खणीआ क्खु पइदिपेलवा ( २४ ) पिअसही । (र)

प्रियं। को दाव उण्होदएण णोमालिअं सिञ्चदि ? (ल) (२५)

[ इत्युभे निष्क्रान्ते ] ।

इति विष्कम्भकः । (२६)

[ ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः ] । (२७)

शिष्यः। वेलोपलक्षणार्थम् आदिष्टोऽस्मि तत्रभवता प्रवासात्

(र) हला ! द्वयोरेव नौ हृदये एष वृत्तान्तस्तिष्ठतु, रक्षणीया खलु प्रकृतिपेलवा प्रियसखी ।

(ल) कस्तावदुष्णोदकेन नवमालिकां सिञ्चति ?

(२४) द्वयोरेव नौ हृदये इति ।—एवात्र भिन्नक्रमं, तेन हृदये एव इत्यर्थः । एषः, —दुर्व्वाससः शापरूपः । वृत्तान्तः,—वार्त्ता, तिष्ठतु—प्रकाशेनालमित्यर्थः [ प्राप्तकाले लोट् ] । रक्षणीया—रक्षितव्या, एतत्पदार्थं प्रति उत्तरपदार्थो हेतुः । प्रकृतिपेलवा—स्वभावदुर्बला [ 'प्रकृतिकोमला' इति पर्य्यायान्तरं सन्निवेश्य व्रीड़ान्यञ्जकपदांशगताश्लीलत्वदोषः परिहर्त्तव्यः । अत्र शकुन्तलां प्रति शापाकथनात् अभूताहरणं नाम गर्भसन्ध्यङ्गं प्रदर्शितम् ; यदाह दर्पणे,—"तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्" इति ] ।

(२५) मनोऽभिमतमाकर्ण्य प्रशंसयन्ती आह, कस्तावदिति ।—उष्णोदकेन—सन्तप्तजलेन, नवमालिकां तदाख्यकोमललतां सिञ्चति ? न कोऽपि इत्यर्थः । [ अत्र वैधर्म्येण दृष्टान्तालङ्कारः ] ।

(२६) अत्र अनभिनीतानां प्रतिषिद्धानाञ्च वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकत्वात् विष्कम्भकः । स चात्र मध्यमपात्राभ्यां केवलप्राकृतेन च प्रयोजितत्वात् शुद्धः । तत्र वृत्तः प्रतिषिद्धश्च कथाभागः,—प्रथमं शकुन्तलापरिणयः, ततः दुर्व्वाससः शापः ; वर्त्तिष्यमाणश्च—अङ्गुरीयकदर्शनेन शापावसानम् इत्यवगन्तव्यम् । एतल्लक्षणन्तु तृतीयाङ्के प्रदर्शितम् ।

(२७) ततः,—सख्योः प्रस्थानानन्तरं, सुप्तोत्थितः,—पूर्वं सुप्तः पश्चात् उत्थितः [ "पूर्वकाल—" ( २।१।४९ पा० ) इत्यादिना धर्म्मधारयः ] । कण्वशिष्यः,—कण्वस्य ऋषेः कश्चिदन्तेवासी ।

प्रतिनिवृत्तेन (२८) कण्वेन, तत्प्रकाशं निर्गत्य अवलोकयामि कियदवशिष्टं रजन्या इति । [ परिक्रम्यावलोक्य च ] । हन्त ! प्रभातप्राया (२९) रजनी ! तथाहि,—

यात्येकतोऽस्तशिखरं पतिरोषधीनाम्
आविष्कृतारुणपुरःसर एकतोऽर्कः ।
तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु (३०) ॥ २ ॥

---

(२८) वेलोपलक्षणार्थं—वेलायाः समयस्य प्रातर्होमयोग्यस्य उपलक्षणार्थं निर्णयार्थम् । तत्रभवता—पूज्येन । प्रवासात्—अन्यदेशवासात्, सोमतीर्थात् इति यावत् । प्रतिनिवृत्तेन—प्रत्यागतेन ।

(२९) प्रभातप्राया—प्रायेण प्रभाता, प्रभातकल्पा इत्यर्थः, प्रभातात् किञ्चिदूना इति यावत् । [ कडारादित्वात् प्रायपदस्य वा पूर्वनिपातः, पक्षे—'प्रायप्रभाता' इत्यपि भवितव्यम् ] ।

(३०) ननु कथं ज्ञायते प्रभातप्राया रजनी इति ? तदेव नैसर्गिकप्रभातोचित-पदार्थप्रदर्शनेन प्रकाशयति, यातीति ।—ओषधीनाम् ( अतिदारुणरोग-मरणादिविपत्ति-सम्भारहारकाणां सकलजीवलोकप्राणधारणैकसाधनभूतानां वा, एतदनुसन्धायैव ओषधिपदं प्रदत्तम् ) तृणज्योतिर्लतानां शस्यविशेषाणां वा पतिः चन्द्रोऽपि ( "सोम ओषधीनामधिपतिः" इति श्रुतेः ) एकतः एकस्यां दिशि, प्रतीच्यामिति यावत्, अस्तस्य अस्ताचलस्य शिखरम् अग्रभागं याति गच्छति ; [एतेन अत्युच्चैः पतनाय इति सूचितम्] एकतः एकस्यां दिशि प्राच्यामित्यर्थः, [ उभयत्र एकशब्दात् सार्वविभक्तिकः तसिल् ] अर्कः सूर्य्यः आविष्कृतः प्रकाशितः, अरुणः अनूरुः, स्वसारथिः पुरःसरः अग्रगः यस्य तथाभूतः, उदयोन्मुख इत्यर्थः [अत्र "आविष्कृत:" इति पदच्छेदे अर्कः आविष्कृतः प्रकटीभूतः इत्यर्थः ; अत्र अरुणपुरःसरत्व-कथनेन स्वप्रतापातिशयः अभ्युदयः सूचितः । उभयपक्षे आविष्कृत इत्यत्र आदिकर्मणि कर्त्तरि क्तप्रत्ययः ] प्रकाशितुमारब्धवानिति यावत् ; [ अथवा आत्मानं प्रकाशयन् स्वाश्रितमपि प्रकाशयति इति ध्वन्यते ] । तेजोद्वयस्य चन्द्रसूर्य्ययोरिति यावत्, युगपत् समकालं ( समकालोभयदर्शनेनैव नियमः सम्भवति, न तु क्रमिकसन्दर्शनेन इति युगपदित्युक्तम्) व्यसनम् अस्तगमनं, विपत्तिर्वा, उदयः प्रकाशः, अभ्युन्नतिरित्यर्थः,

अपि च—अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुरुद्वहानि (३१) ॥ ३ ॥

तार्थां, एष लोकः जनः ( "लोकस्तु भुवने जने" इत्यमरः ) दशान्तरेषु अवस्थाभेदेषु नियम्यत इव शिक्ष्यत इव, 'सर्वेषामेव इत्थं चयोदयौ स्तः, कोऽपि नात्र चिरस्थायीति ज्ञाप्यते इव' इति निष्कर्षः । अतः 'स्वस्वसम्पत्तिविपत्तिकाले न केनापि हर्षशोकौ कार्यौ' इति भावः । [अत्र पूर्वार्द्धे—यथा कश्चित् पूर्वं महासमृद्धिसम्पन्नः पश्चात् सहसा विपन्नः जातनिर्वेदश्च स्वजनानपि परित्यज्य सुदूरस्थितं पर्वतादिकं समाश्रयति, यथा वा अपरः कश्चित् सहसा अभ्युन्नतः स्वं परिजनञ्च अभ्युदयेन योजयति, तथाऽत्रापि तादृशपुरुषद्वयव्यवहारसमारोपात् समासोक्तिः ; तथा प्रकृते प्रभातवर्णने द्वयोरपि प्राकरणिकतया अरुणपुरःसरत्वस्य तुल्यतया तुल्ययोगिता च ; उत्तरार्द्धे च तेजोद्वयस्य व्यसनोदयाभ्याम् इत्यंशे यथासङ्ख्यम् ; नियम्यते इव इति सम्भावनामात्रत्वात् क्रियोत्प्रेक्षाऽलङ्कारश्च ; इत्येषां साङ्कर्य्यम् । न चात्र पूर्वं चन्द्रसूर्य्ययोः पृथगुद्देश्यत्वेन तेजोद्वयस्य इत्यत्र सर्वनामवत् एकप्रतिनिर्देश्यत्वेन च उद्देश्यप्रतिनिर्देश्य-प्रक्रमभङ्गदोषः शङ्कनीयः ; तत्र तेजोद्वयपदेन तयोरवगमात् । जगत्कारणीभूतस्य तेजोद्वयस्य इयं समवस्था, अन्येषान्तु का कथा ? इत्यर्थस्फुरणात् सहृदयानां चमत्कारातिशयाच्च ] । वसन्ततिलकं वृत्तम् ॥ २ ॥

(३१) प्रभातसौन्दर्य्यालोकनलोललोचनः सरोवरे दत्तचक्षुः कुमुदिनीं दृष्ट्वाह, अन्तर्हिते इति ।—शशः कलङ्कः अस्य अस्तीति शशी तस्मिन् ( अत एवास्य अन्तर्द्धानमुचितमिति भावः ) शशिनि चन्द्रमसि अन्तर्हिते अस्तं गते, सैवेयं—या पूर्वं विकसितकुसुमा सकलजनानन्ददायिनी सैव, इयं मम दृष्टिविषयिणी कुमुद्वती, संस्मरणीया सम्यक् स्मरणविषयिणी शोभा यस्याः तादृशी, विनष्टकान्तिरिति यावत्, सती अत एव दृष्टिं नयनं न नन्दयति न प्रीणयति । तथाहि,—अबलाजनेन नारीजनेन [अनेन अत्यन्तदुःसहत्वं सूचितम्, अन्यथा स्त्रीजनेन इत्युक्त्यैव तदवसानात् ] इष्टस्य कान्तस्य प्रवासेन भिन्नदेशावस्थानेन, विच्छेदेन इति यावत्, जनितानि उत्पादितानि दुःखानि नूनम् उत्प्रेक्षे, न तु अज्ञातदाम्पत्यव्यवहारस्य मे न जातु तन्नयनविषय इति भावः, दुरुद्वहानि दुःसहानीत्यर्थः ; प्रियविरहे नार्य्यः न शोभन्ते इति तात्पर्य्यम् । अथ च ;—को

अपि च—कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या,
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः (३२)॥४॥

पृथिव्यां मुदती हर्षवती, शकुन्तला इत्यर्थः, शशिनि चन्द्रसदृशे इति लक्षणा साध्यवसाना ; अथवा चन्द्रवंशप्रभवत्वात् शशिनि दुष्मन्ते अन्तर्हिते सति संस्मरणीयशोभा परित्यक्तदेहकान्तिरित्यर्थः, विरहादिति भावः, दृष्टिं न नन्दयति। [ अनेनास्याः राजगृहं प्रति प्रस्थापनं सूचितम् । अत्र पूर्वार्द्धे नायके प्रोषिते नायिका दृष्टिं न नन्दयतीति कयोश्चित् नायकनायिकयोः व्यवहारसमारोपात् लिङ्गेन समासोक्तिः। उत्तरार्द्धे च—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ; 'संस्मरणीयशोभा अत एव दृष्टिं न नन्दयति' इत्यंशे काव्यलिङ्गमपि, उत्प्रेक्षा च मध्यवर्त्तिनी ; एषामङ्गाङ्गिभावेन साङ्कर्य्यम् ]। वसन्ततिलकं वृत्तम् ॥ ३ ॥

(३२) किञ्च कर्कन्धूनामिति।—अग्रसन्ध्या—अग्रा प्रथमा सन्ध्या प्रातःसन्ध्या, प्रातःकाल इत्यर्थः, कर्कन्धूनां बदरीणां तत्फलानां वा ("कर्कन्धूः बदरी कोलिः" इत्यमरः) उपरि पतितंर्मिति शेषः, तुहिनं हिमं ("तुषारस्तुहिनं हिमम्" इत्यमरः) रञ्जयति सरागं करोति ; स्वशैत्यगुणं प्रच्याव्य लौहित्यं लम्भयति इत्यर्थः। मयूरः वीता गता निद्रा यस्य तथोक्तः सन्, दार्भं दर्भैर्निर्मितम् उटजपटलं पर्णशालाच्छदिं मुञ्चति त्यजति, प्रभातमनुमीय सम्प्रति गृहाच्छादनं परित्यज्य भूमौ अवतरति इत्यर्थः। एष च पुरो दृश्यमानः तपोवने हिंसाभावात् रात्रौ स्वच्छन्दं जातनिद्रः इत्यर्थः, हरिणः, सम्प्रति प्रभाते खुरैः विलिखितात् कुट्टितात्, वेदिप्रान्तात् यज्ञभूमिप्रान्तदेशात् उत्थितः सद्यस्तत्क्षणं स्वाङ्गं स्वं स्वकीयम् अङ्गम् अवयवम् आयच्छमानः प्रसारयन् सन् [ "आङो यमहनः" (१।३।२८ पा०) इति आङ्पूर्वात् यमधातोः स्वाङ्गकर्मकत्वात् आत्मनेपदम्, अत एव शानच्प्रत्ययः] पश्चात् अपरकायप्रदेशे उच्चैः उन्नतदेहः भवति। अग्रपादौ प्रसार्य्य शिरसा सह पूर्वकायम् अवनमय्य पश्चात्पादौ किञ्चिदग्रभागे प्रवेश्य अङ्गमर्दच्छलेन अपरकायम् उन्नमयतीत्यर्थः ; (पशुस्वभावोऽयम्)। [ अत्र पूर्वार्द्धे तुहिनस्य सहजश्वेतस्य लौहित्यापादनकथनात् तद्गुणालङ्कारः ; तथा च दर्पणे,—"तद्गुणः स्वगुणत्यागात् अत्युत्कृष्टगुणग्रहः" इति ; तथा समुदाये—स्वभावोक्तिरलङ्कारः ; तथा च दर्पणे,—"स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्" इति ]। मन्दाक्रान्ता वृत्तम् ॥ ४ ॥

अपि च—पादन्यासं क्षितिधरगुरोर्मूर्द्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखैः
अत्यारूढ़िर्भवति महतामप्यपभ्रंशनिष्ठा (३३) ॥५॥

अन। [पटीक्षेपेण (३४) प्रविश्य]। एव्वं णाम विसअपरम्मुहस्स

(३३) पादन्यासमिति।—क्षयितं क्षयं नीतं [क्षयशब्दात् णिजन्तात् कर्मणि क्तः। क्षपितमिति पाठे—स एवार्थः; तत्र क्षै क्षये, इत्यस्य रूपम्।] नाशितं, स्वकिरणेन निराकृतमित्यर्थः, तमः अन्धकारो येन तथोक्तेन; येन चन्द्रेण क्षितिधरेषु पर्वतेषु गुरोः श्रेष्ठस्य गुरुजनस्य च सुमेरोः मूर्द्ध्नि शिखरे शिरसि च पादन्यासं मयूखपातं चरण-निक्षेपञ्च कृत्वा विष्णोः वामनरूपस्य नारायणस्य मध्यमं धाम गगनमित्यर्थः, [अनेन अनतिक्रम्यत्वं ध्वन्यते। पुरा किल बलिदानवच्छलनार्थं वामनवेशः भगवान् नारायणः द्वितीयपादक्षेपेण नभः समाक्रान्तवान् इति पुराणोक्तेः। तथा च वामनपुराणम्,—"ततः समाकं विदशाधिवासं सोमार्कऋक्षैरभिमण्डितं नभः। देवो द्वितीयेन जगाम वेगात् क्रमेण देवप्रियलोकमीश्वरः॥"] क्रान्तम् अधिकृतमिति यावत्; सोऽयं चन्द्रः एतादृशमहावीरोऽपि इति भावः, अल्पाः शेषा येषां तथोक्तैः किञ्चिन्मात्राव-शिष्टैः मयूखैः [उपलक्षणे तृतीया] गगनात् पतति अस्तं गच्छतीति भावः। युक्तञ्चैतदित्याह, अत्यारूढ़िरिति।—अत्यारूढ़िः अत्यारोहणम् अतिवृद्धिः च महता-मपि उन्नतानामपि ['किमुत नीचानाम्?' इति अपिशब्देन सूचितम्] अपभ्रंशः क्षयः, निष्ठा अन्तः अवसानमित्यर्थः, यस्याः तथाभूता ("निष्ठा निष्पत्तिनाशान्ताः" इत्यमरः) भवति। "सर्वमत्यन्तगर्हितम्" इति न्यायात् अतिवृद्धिमापन्नः कोऽपि चिरं न तिष्ठतीति भावः। [अत्र पूर्वार्द्धे यथा कश्चित्तेजःसपन्नोऽपि अतिक्रान्तगुरु-जनमर्य्यादः अतीव दुर्दशामाप्नोति तद्वदिति; अप्रस्तुतव्यवहारसमारोपात् समा-सोक्तिः, श्लेषः, परार्द्धे च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च]। मन्दा-क्रान्ता वृत्तम्॥ ५॥

(३४) पटीक्षेपेण—यवनिकामपसार्य्येत्यर्थः। [अत्र "अपटीक्षेपेण" इति पाठे—यवनिकामनपसार्य्य इत्यर्थः। तथा च शिष्यवाक्यमाकर्ण्य 'प्रभातसमयोऽयम्' इति मन्यमाना अनसूया गृहकार्य्यसमयः अतिवर्त्तते इति प्रबुद्धा सहसैव समागता इति सूचनाय अपटीक्षेपेण इत्युक्तं कविना]।

जणस्स ण णिवड़िदं, जधा तेण रण्णा सउन्तलाए अणज्जं आचरिदं त्ति। (व) (३५)

शिष्यः। यावदुपस्थितां होमवेलां गुरवे निवेदयामि। (३६)

[ इति निष्क्रान्तः ]।

अन। णं पहादा रअणी, ता सिग्घं सअणं परिच्चआमि, अधवा लहु लहु उत्थिदा वि किं करिस्सं? ण मे उइदेसुं (३७) पहादकरणीएसुं हत्थपाआ प्पसरन्ति, कामो दाणिं सकामो (३८) भोदु, जेण असच्चसन्धे (३९) जणे पिअसही

(व) एवं नाम विषयपराङ्मुखस्य जनस्य न निपतितं, यथा तेन राज्ञा शकुन्तलायामनार्य्यमाचरितमिति।

(श) ननु प्रभाता रजनी, तच्छीघ्रं शयनं परित्यजामि, अथवा लघु लघु उत्थितापि किं करिष्यामि? न मे उचितेषु प्रभातकरणीयेषु हस्तपादं प्रसरति, काम इदानीं

(३५) विषयेति।—विषयाः स्रक्चन्दनवनितादयः भोग्यवस्तूनि, तेभ्यः पराङ्मुखस्य निवृत्तविषयाभिलाषस्य इत्यर्थः। जनस्य—माहशस्य तापसजनस्य इति भावः। निपतितं—उपस्थितम्। [ अत्र न "विदितम्" इति पाठे—न ज्ञातमित्यर्थः। सम्बन्धविवक्षया कर्त्तरि षष्ठी ] अनार्य्यं—गर्हितम्, आचरितं—कृतम्; इतो गमनात् वृत्तान्तस्यापि अयहणरूपमित्यर्थः।

(३६) यावत्—वाक्यालङ्कारे, उपस्थितां—सम्प्राप्तां, होमवेलाम्—अग्निहोत्रार्थं प्रातः होमकालम्। गुरवे—कण्वाय [ अत्र क्रियायहणात् चतुर्थी ]।

(३७) अथ होमवेलानिवेदनार्थं गते शिष्ये तद्वाक्येन प्रभातं बुद्धा गृहसम्मार्जनादि कर्त्तुम् अयमेव प्रबोधकालः इति मन्वाना वदति,—नन्विति। शकुन्तलाव्यापारमनुस्मृत्याह,—अथवेति। लघु लघु—शीघ्रं शीघ्रमिति। उचितेषु—अवश्यकर्त्तव्येष्वित्यर्थः।

(३८) प्रभातकरणीयेषु—गृहसम्मार्जनादिषु इत्यर्थः। हस्तपादं—हस्तौ च पादौ च इति [ प्राण्यङ्गत्वात् समाहारद्वन्द्वैकवद्भावः ]। सकामः,—सिद्धमनोरथः, तस्याभिलाषः पूर्य्यतामित्यर्थः।

(३९) येन—कामेन, असत्यसन्धे—मिथ्याप्रतिज्ञे, अनृतभाषिणि इत्यर्थः।

सुद्दहिअआ पदं कारिदा। (४०) [स्मृत्वा]। अधवा ण तस्स राएसिणो अवराहो, दुव्वाससावो क्खु एसो पहवदि ; (४१) अण्णधा कधं सो राएसी तादिसाइं मन्तिअ एत्तिअस्स कालस्स वात्तामात्तं पि ण विसज्जेदि ? (४२) [विचिन्त्य।] ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम ?—अधवा दुक्खसीले तवस्सिजणे को अब्भत्थीअदु ? (४३) णं सहीगामी दोसो त्ति व्ववसाइदुं पि ण पारेह्म (४४) तादकण्णस्स वा प्पवासपडि-

सकामो भवतु, येन असत्यसन्धे जने प्रियसखी शुद्धहृदया पदं कारिता। अथवा न तस्य राजर्षेरपराधः दुर्वाससः शापः खल्वेष प्रभवति ; अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतः कालस्य वार्त्तामात्रमपि न विसर्जयति ? तदितोऽभिज्ञानमङ्गुरीयकं तस्य विसर्जयामः ?—अथवा दुःखशीले तपस्विजने कोऽभ्यर्थ्यताम् ? ननु सखीगामी दोष इति व्यवसाययितुमपि न पारयामः तातकण्वस्य वा प्रवासात् प्रति-

(४०) शुद्धहृदया—सरलेत्यर्थः। पदं—स्थानं व्यवसायं वा "पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु" इत्यमरः। [अत्र "शून्यहृदया" इति पाठे—शून्यं कौटिल्येन रहितं हृदयं यस्याः सा इत्यर्थः ; हृदय एव कामस्य अभिलाष इत्यर्थः]।

(४१) स्मरणेन शापवृत्तान्तोदयात् स्वपूर्व्ववाक्यमाक्षिपति,—अथवेति।—तस्य राजर्षेः,—ऋषितुल्यस्य राज्ञः इत्यर्थः (साभिप्रायमेतत्)। प्रभवति—प्रभावं दर्शयति। [अत्र "विकारयति" इति पाठान्तरे—अन्यथा कारयतीत्यर्थः]।

(४२) दुर्वाससः शापप्रभावं समर्थयते, अन्यथेति।—उक्तवैपरीत्ये, तादृशानि—'अवश्यमेव त्वां शीघ्रमितः नेष्यामि' इत्यादीनि वाक्यानि, मन्त्रयित्वा—कथयित्वा, वार्त्तामात्रमपि—वृत्तान्तमपि, ['का कथा तव नयनस्य' इत्यपिशब्दार्थः]। विसर्जयति—प्रेषयति।

(४३) दुःखशीले—सर्व्वदादुःखभागिनि इत्यर्थः, तपस्विजने—दुःखशीलेषु तपस्विजनेष्वित्यर्थः। [निर्द्धारे सप्तमी, जातावेकत्वम्]। कः,—तापस इति शेषः, अभ्यर्थ्यतां—राजसन्निधौ प्रेषणार्थमनुरुध्यताम् ? अभ्यर्थनमनुचितमिति भावः [सम्प्रश्ने लोट्]।

(४४) सखीगामी दोषः,—सखीं शकुन्तलां गमिष्यतीति तादृशः, 'स्वेच्छया कथमेवम् अज्ञातशीलेन जनेन प्रणयः कृत ?' इत्येवम् अपराधः सख्यां रटिष्यतीति हेतोः।

णिउत्तस्स दुस्सन्तपरिणीदं आवसस्सत्तं सउन्तलं णिवेदिदुं। ता एत्थ दाणिं किं णु क्खु अह्मेहिं करणिज्जं? (श) (४५)

प्रियं। [प्रविश्य।] अणसूए! तुवर तुवर सउन्तलाए पत्थाण-कोदूहलं णिव्वत्तिदुं। (ष) (४६)

अन। [सविस्मयम्।] सहि! कधं विअ? (स)

प्रियं। सुणाहि, दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं (४७) सउन्तलाए सआसं गदह्मि। (ह)

निवृत्तस्य दुष्मन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुम्। तदत्रेदानीं किं नु खलु अस्माभिः करणीयम्?

(ष) अनसूये! त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतूहलं निर्वर्त्तयितुम्।

(स) सखि! कथमिव?

(ह) शृणु, इदानीमेव सुखसुप्तिकाप्रच्छननिमित्तं शकुन्तलायाः सकाशं गताऽस्मि।

व्यवसायशितुं—चेष्टितुं, राजसकाशे वार्त्ताप्रेषणादिकं कर्त्तुमिति भावः। न पारयामः,—न शक्नुमः।

(४५) प्रवासप्रतिनिवृत्यस्य—प्रवासात् विदेशवासात् सोमतीर्थवासादित्यर्थः, प्रतिनिवृत्तस्य प्रत्यागतस्य। आपन्नसत्त्वां—अन्तर्वत्नीं, निवेदयितुं—ज्ञापयितुं, 'न पारयामः' इति पूर्वेणान्वयः। तदत्र—एतस्मिन् विषये, शकुन्तलासम्बन्धिव्यापारे इत्यर्थः, किं करणीयम्? न किमपि कर्त्तव्यमस्ति इति भावः।

(४६) प्रस्थानकौतूहलं—पतिगृहगमनार्थं पारम्पर्य्यागतमाङ्गलिकविधिनिर्वाहक-व्यापारविशेषं द्रष्टुमिति भावः।—"रम्यवस्तुसमालोके लोलता स्यात् कुतूहलम्" इति दर्पणोक्तेः। कुतूहलमेव कौतूहलम्।—"कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलम्" इत्यमरोक्तौ कौतुक कौतूहलयोः समानपर्य्यायत्वेऽपि "प्रस्थानकौतुकम्" इति पाठान्तरे—अर्थान्तरमाह हैमः,—"कौतुकं नर्म्मणीच्छायामुत्सवे कुतुके मुदि। पारम्पर्य्यागतख्यातमङ्गलोद्वाहसूत्रयोः॥" इति। निर्वर्त्तयितुं—सम्पादयितुम्।

(४७) सुखसुप्तिकेति।—सुखेन सुप्तिः निद्रा, तस्याः प्रच्छननिमित्तं, 'सुखेन निद्रां गतासि न वा?' इति जिज्ञासार्थमिति यावत्। [अत्र "सुखशयनप्रच्छिका शकुन्तला-सकाशं गताऽस्मि" इति पाठान्तरे,—"रात्रौ तव सुखशयनं जातम्?" इति प्रातर्गत्वा या पृच्छति सा सुखशयनप्रच्छिका इति]।

अन। तदो तदो ? (क)

प्रियं। तदो णं लज्जावणदमुहीं परिस्सइअ सअं तादकस्सेण एव्वं अहिणन्दिदं,—"वच्छे ! दिट्टिआ धूमोवरुद्धदिट्टिणो वि जजमाणस्स (४८) पावअस्स ज्जेव मुहे (४९) आहुदी णिवड़िदा, (५०) सुसिस्सपरिदिण्णा विअ विज्जा असोअणीआसि मे संवुत्ता। अज्ज ज्जेव तुमं इसिपरिरक्खिदं करिअ भत्तुणो सआसं विसज्जेमि" त्ति। (ख) (५१)

---

(क) ततस्ततः ?

(ख) तत एनां लज्जाऽवनतमुखीं परिष्वज्य स्वयं तातकाश्येन एवम् अभिनन्दितं,—"वत्से ! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता, सुशिष्यपरिदत्तेव विद्या अशोचनीयाऽसि मे संवृत्ता। अद्यैव त्वाम् ऋषिपरिरक्षितां कृत्वा भर्त्तुः सकाशं विसर्जयामि" इति।

(४८) लज्जाऽवनतमुखीं—लज्जया अधोवदनां, गुरुजनदर्शनेन स्वचेष्टितस्मरणात् अन्तर्वत्नीत्वाच्चेति भावः। परिष्वज्य—आलिङ्ग्य,—"आलिङ्गनं परिष्वङ्गः" इति हैमः। एवं—इत्थं, वक्ष्यमाणप्रकारमित्यर्थः। अभिनन्दितम्—अनुमोदितमित्यर्थः। कीदृशं तदित्याह, दिष्ट्येति।—दिष्ट्या—भाग्येन। धूम इति।—धूमेन उपरुद्धा आच्छन्ना दृष्टिर्यस्य तादृशस्य। [एतेन सदा धूमेन संवृतनेत्रत्वात् पावके आहुतिपातस्य अत्यन्तासम्भाव्यत्वं सूचितम्]। 'ननु धूमाच्छन्ननेत्रस्य यस्य कस्यचित् पावके आहुतिपतनाभावे का क्षतिः ? पतने वा क आनन्दः ?' इत्याह,—यजमानस्येति।—यजमानस्य यागं कर्त्तुं प्रवृत्तस्य, तत्र तस्यैव मुख्योद्देश्यत्वादिति भावः। [ अत्र दृष्टान्तालङ्कारः, समः अलङ्कारः इति च। अनेन स्वस्य कृतकृत्यता ध्वनिता ]।

(४९) पावकस्य—अग्नेः एव, 'न तु भस्मनि' इति एवशब्दव्यवच्छेद्यम् ; मुखे—मुखभागे। [अत्र पुनाति इति 'पावकः' तस्य 'मुखे' च इति पदद्वयेन अत्यन्तमुत्कर्षमुक्त्वा उपमानस्य तत्सम्बन्धात् दुष्मन्तेऽपि किमपि आभिजात्यादिकं ध्वन्यते ]।

(५०) आहुतिः,—आहूयते सम्यक् मन्त्रेण प्रक्षिप्यते इति आहुतिः, हवनीयं घृतादिकमित्यर्थः। निपतिता—स्वयं तत्र सङ्गता इत्यर्थः; अनायासेन मम वाञ्छितस्थले सम्बन्धो जातः इति अनुमोदनप्रकारः।

(५१) सम्प्रति पावकदृष्टान्तेन तस्याः परिणयम् अभिनन्द्य शकुन्तलामपि प्रशंसन-

अन। सहि! केण उण आचक्खिदो तादकणस्स अअं वुत्तन्तो? (ग)

प्रियं। अग्गिसरणं पविट्ठस्स किल शरीरं विणा छन्दोमईए वाआए। (घ) (५२)

अन। [सविस्मयम्।] कधं विअ? (ङ)

प्रियं। सुणाहि। (च) [संस्कृतमाश्रित्य] (५३)।—

(ग) सखि केन पुनराख्याततातकण्वस्यायं वृत्तान्त:?

(घ) अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा।

(ङ) कथमिव?

(च) शृणु।

आह, सुशिष्येति।—सुशिष्यपरिदत्ता—सुशिष्याय सच्छात्राय परिदत्ता अर्पिता, विद्याज्ञानमिव, त्वमिति शेष:। अशोचनीया—न दु:खहेतुरित्यर्थ:। विद्येवेति उपमानात् शकुन्तलायां कोऽपि उत्कर्षातिशय: सूच्यते। कुशिष्यपरिगता हि विद्या परिहीयते। तथा चोक्तं—"कुशिष्यमध्यापयत: कुतो यश:?" इति। [अत्र उपमाऽलङ्कार:। अनेन च अस्या: अपि कृतकृत्यता ध्वन्यते, इत्यलङ्कारेण वस्तुध्वनि:]। विसर्जयामि—प्रेषयामि। [वर्त्तमानसामीप्ये लट्]।

(५२) अग्निशरणम्—अग्निगृहं, होमशालामित्यर्थ:,—"शरणं गृहरक्षित्री:" इत्यमर:। किल इति—वार्त्तासूचकम्—"वार्त्तासम्भाव्ययो: किल" इत्यमर:। शरीरं विना—अशरीरिण्या, अदृश्यशरीरया इत्यर्थ:, दैव्येति यावत्। [एतेन कण्वस्यापि प्रभवातिशय: सूचित:]। छन्दोमय्या—छन्दसा पद्येन रचितया, वाचा—वाक्येन, श्लोकेन इत्यर्थ:,—"छन्द: पद्येऽभिलाषे च" इत्यमर:। [प्रस्तुतार्थे मयट्प्रत्यय:, स्त्रीत्वात् ङीप् च]।

(५३) संस्कृतं—सकलजनप्रसिद्धां देवभाषामित्यर्थ:। यद्यपि—"सौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्" इति दर्पणोक्ते: अस्या अपि सौरसेनीप्रयोग एव सर्वत्र युज्यते, तथापि—"योषित् सखीबालवेश्या कितवाप्सरसां तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥" इति पुन: तत्रैवोक्ते: वैदग्ध्यार्थं तत्प्रयोगोऽपि न दोषावह:।

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन् ! अग्निगर्भां शमीमिव (५४) ॥६॥

अन । [प्रियंवदामाश्लिष्य ।] सहि ! पिअं मे पिअं, किन्तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परिदोसं अणुभवेमि । (झ) (५५)

प्रियं । सहि ! अह्मे कधं पि उक्कण्ठं विणोदइस्सामो, सा दाणिं तवस्सिणी णिव्वुदा होदु । (ञ) (५६)

(झ) सखि ! प्रियं मे प्रियं, किन्तु अद्यैव शकुन्तला नीयते इति उत्कण्ठासाधारणं परितोषमनुभवामि ।

(ञ) सखि ! वयं कथमपि उत्कण्ठां विनोदयिष्यामः, सा इदानीं तपस्विनी निर्वृता भवतु ।

(५४) किं तदित्याह, दुष्यन्तेन इति ।—हे ब्रह्मन् ! विप्र ! (अत्र "ब्रह्मन्" इति पुंलिङ्गः शब्दः । "ब्रह्मा विप्रः प्रजापतिः" इत्यमरः । कण्वसम्बोधनमेतत् ।) दुष्यन्तेन [अत्र नामकीर्त्तनेन चन्द्रवंशसम्भवत्वेन आभिजात्यम् औदार्य्य-धैर्य्य विनयादिगुणवत्त्वञ्च ध्वनितम् ] आहितं—कृताधानं, निहितमिति यावत् [ एतेन वैधमेतत् इति सूच्यते ] तेजः शुक्रं दीप्तिञ्च, ( "तेजः प्रभावे दीप्तौ च बले शुक्रेऽपि" इत्यमरः ) [ अनेन तेजोरूपत्वं गर्भस्य सूचितम् ] भुवः पृथिव्या भूतयै सम्पत्तये अभ्युदयायेत्यर्थः,—("भूतिर्भस्मनि सम्पदि" इत्यमरः ) [ अनेन गर्भस्थस्य भाविचक्रवर्त्तित्वमवगम्यते] दधानाम्, अत एव अग्निः गर्भे उदरे यस्याः तादृशीं शमीं तदाख्यतरुमिव [ अनेनास्याः सहजपूतत्वं व्यञ्जितम् ] तनयां कन्याम् अवेहि जानीहि । [अत्र श्लेषसङ्कीर्णोपमाऽलङ्कारः । अत्र च अशरीरिण्या वाचा तत्त्वार्थकथनात् मार्गो नाम गर्भसन्ध्यङ्गं प्रदर्शितम् । यदाह दर्पणे,—"तत्त्वार्थकथनं मार्गः" इति] । पथ्यावक्त्रं वृत्तम् ॥ ६ ॥

(५५) उत्कण्ठेति ।—उत्कण्ठासाधारणं—विषादसदृशं, उत्कण्ठासहितम् इत्यर्थः ; शकुन्तलायाः पतिलाभभावितया यादृशो हर्षः भवति, अस्माभिः विरहिता भविष्यतीति च तथा विषादः, इति उभयम् अनुभवामि सुखे ।

(५६) कथमपि—अतिकष्टेन, उत्कण्ठां—अदर्शनजनितमनोवेदनाम् ।—"रागे त्वलब्धविषये वेदना महती तु या । संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः ॥"

अन। तेण हि एदस्सिं चूअसाहावलम्बिदे णारिएलसमुग्गए एदण्णिमित्तं ज्जेव मए कालहरणक्खमा केसरगुण्डा णिक्खित्ता चिट्ठदि, ता इमं णलिणीवत्तसङ्गदं करेहि, जाव से अहं पि गोरोअणं तित्थमित्तिअं दुब्बाकिसलआइं मङ्गलसमालभणाइं विरएमि। (भ) (५७) [ प्रियंवदा तथा करोति ]।

[ अनसूया निष्क्रान्ता ]

(भ) तेन हि एतस्मिन् चूतशाखाऽवलम्बिते नारिकेलसमुद्गके एतन्निमित्तमेव मया कालहरणक्षमा केसरगुण्डा निक्षिप्ता तिष्ठति, तदिमां नलिनीपत्रसङ्गतां कुरु, यावत् अस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालभनानि विरचयामि।

इत्युक्तः। विनोदयिष्यामः—अपनेष्यामः। तपस्विनी—वराकी, कृपार्हा इत्यर्थः।—"तपस्वी तापसे चानुकम्पार्हे च" इति विश्वः। निर्वृता—सुखिनी, सुस्था इत्यर्थः।—"निर्वृतिः सुस्थितावस्तं गमने च सुखे स्त्रियाम्" इति मेदिनी।

(५७) एतस्मिन्—पुरो दृश्यमाने, चूतशाखाऽवलम्बिते—आम्रविटपसंस्थापिते, नारिकेलसमुद्गके—नारिकेलसम्पुटे। एतन्निमित्तमेव—शकुन्तलायाः पतिगृहप्रस्थान-कालिकमङ्गलसमाधानार्थमेव इत्यर्थः। कालहरणक्षमा—दीर्घकालेनापि विकृति-मनापद्यमानेत्यर्थः। केशरगुण्डा—वकुलरेणुः। निक्षिप्ता—निहिता। [ अत्र "णिक्खित्ता मए केसरमालिआ" इति पाठे,—"निक्षिप्ता मया केसरमालिका इति (सं)। केसरमालिका—वकुलपुष्पमाला, निक्षिप्ता—स्थापिता इत्यर्थः:]। नलिनी-पत्रसङ्गतां—पद्मपत्रस्थितां कुरु। [ अत्र "हत्थसण्णिहिदम्" इति पाठान्तरे,—करेण गृहाण इत्यर्थः]। अस्याः,—शकुन्तलार्थनिमित्तं, ["षष्ठी शेषे" ( २।३।५० पा० ) इति शेषे षष्ठी]। गोरोचना—स्वनामख्याती द्रव्यविशेषः। [अत्र "मृगरोचना" इति पाठे—स एवार्थः ]। तीर्थमृत्तिकां—गङ्गामृत्तिकाम्। दूर्वाकिसलयानि—दूर्वाङ्कुराः, अथवा —दूर्वाः किसलयानि च,—आम्रपल्लवादीनि च। मङ्गलसमालभनानि—मङ्गलार्थं समालभनम्—आलेपनम्, अलङ्करणं वा, तानि।—"समालभनमालेपे तिलके-ऽलङ्कृतावपि" इति यादवः। विरचयामि—एकत्र करोमि। एष एव तदानीं नव-वधूनां पतिगृहे प्रथमप्रयाणकाले नारीसमुदाचार आसीदिति विभावनीयम्।

[नेपथ्ये]।—"गौतमि! आदिश्यन्तां शार्ङ्गरव-शारद्वतमिश्राः वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्त इति। (५८)

प्रियं। अणसूए! तुवर तुवर, एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दावीअन्ति। (ञ) (५९)

अन। [समालम्भनहस्ता प्रविश्य।] सहि! एहि गच्छह्म। (ट)

[इति परिक्रामतः]।

प्रियं। [विलोक्य।] एसा सुज्जोदए किदमज्जणा पड़िच्छिदणीवारभाअणाहिं सोत्थिवाअणिआहिं तावसीहिं अहिणन्दीअमाणा (६०) चिट्ठदि सउन्तला, ता उवसप्पह्म णं। (ठ) [इत्युभे तथा कुरुतः]।

(ञ) अनसूये! त्वरस्व त्वरस्व, एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते।

(ट) सखि! एहि गच्छावः।

(ठ) एषा सूर्य्योदये कृतमज्जना प्रतीष्टनीवारभाजनाभिः स्वस्तिवाचनिकाभिः तापसीभिः अभिनन्द्यमाना तिष्ठति शकुन्तला, तदुपसर्पाव एनाम्।

(५८) अस्य खलु कण्वस्य सहसा तत्रानयने तद्गौरवेण भयेन च स्त्रीजनाचारः शिथिलः सम्पद्यते, तत्करणे च औद्धत्यं स्यादिति कविः नेपथ्यं एव कण्वादेशं श्रावयितुमाह, आदिश्यन्तामिति।—आदिश्यन्ताम्—अनुमन्यन्ताम्। शार्ङ्गरव-शारद्वतमिश्राः,—शार्ङ्गरव-शारद्वतौ इत्यर्थः, [गौरवे बहुवचनम्। मिश्रपदमपि गौरवसूचकम्]; उत्तरत्र तयोः द्वयोरेव शकुन्तलाऽनुगमनात्। किमित्याह—'शकुन्तलां नेतुं सज्जीभवन्तु'—उद्युक्ता भवन्तु इत्यर्थः।

(५९) हस्तिनापुरगामिनः,—हस्तिनापुरं गजनामकं पुरं तद् गमिष्यन्ति इति तादृशाः। शब्दायन्ते—शब्दं कुर्वन्ति—["शब्दवैरकलहाभ—" (३।१।१७ पा०) इति क्यङ्प्रत्ययान्तः नामधातुः]। न चात्र दुष्मन्ताधस्तनहस्तिनामकनृपतिना सन्निवेशितत्वेन तस्याः राजधान्या "हस्तिना" इति नाम प्रथितं, तत्कथमधुना तदुच्यते? इति न शङ्कनीयं, महाभारतादौ तदानीमपि तस्योत्कीर्त्तनात्। तथा च,—"तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः। शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयम्॥" इति। गजसाह्वयं हस्तिनानगरमित्यर्थः।

(६०) कृतमज्जना—कृतस्नाना। प्रतीष्टनीवारभाजनाभिः,—गृहीतनीवार-

[ ततः प्रविशति यथानिर्दिष्टव्यापारा सपरिवारा शकुन्तला। ]

शकु। भअवदीओ वन्दामि। (ड)

गौत। जादे! भत्तुणो बहुमाणसुहहेतुअं देवीसद्दं अहिगच्छ। (ढ) (६१)

तापस्यः। वीरप्पसविणी होहि। (ण) [ इत्याशिषो दत्त्वा गौतमीवर्ज्जं सर्वा निष्क्रान्ताः ]। (६२)

सख्यौ। [ उपगम्य ]। सम्मज्जणं (६३) दे भूदं? (त)

शकु। साअदं पिअसहीणं? (६४) इदो णिसीदध। (थ)

(ड) भगवतीर्वन्दे।

(ढ) जाते! भर्त्तुः बहुमानसुखहेतुकं देवीशब्दमधिगच्छ।

(ण) वीरप्रसविनी भव।

(त) सम्मज्जनं ते भूतम्?

(थ) स्वागतं प्रियसख्योः? इतो निषीदतम्।

पाठाभिः। [ अत्र प्रतीष्टनीवारहस्ताभिः इति पाठे,—प्रतीष्टा नीवाराः यैः तादृशा हस्ता यासां ताभिः; रिक्तहस्तानामागमननिषेधात् नीवारैरित्युक्तम् ]। स्वस्तिवाचनिकाभिः,—स्वस्ति शुभं भूयादिति वचनम्, आशीर्वचनम् इत्यर्थः, वाचयन्तीति स्वस्तिवाचनिकाः, ताभिः। अभिनन्द्यमाना—आशिषा संवर्द्धमानेत्यर्थः।

(६१) जाते!—वत्से! भर्त्तुः,—स्वामिनः, बहुमानसुखहेतुकं—बहुमानः अत्यादरः, तेन यत् सुखं तदेव हेतुः कारणं यस्मिन् तादृशम्; देवीशब्दं—'देवी' इति सम्भाषणम्। अधिगच्छ—लभस्व। "देवी कृताभिषेकायाम्" इत्यमरोक्तेः; कृताभिषेकाया एव देवीसम्भाषणश्रवणात् 'राज्ञः कृताभिषेका प्रधाना महिषी भव' इत्यर्थः।

(६२) वीरप्रसविनी—वीरं विक्रान्तं शूरमित्यर्थः, प्रसवितुं शीलमस्याः तादृशी भव; विक्रान्तस्ते पुत्रो भवतु इत्यर्थः। गौतमीवर्ज्जं—गौतमीं वर्ज्जयित्वा [वर्ज्जः णमुल्प्रत्ययः]।

(६३) सम्मज्जनं—स्नानं, मङ्गलस्नानमित्यर्थः।

(६४) स्वागतं—शुभागमनम्। [ प्रियसख्योः इत्यत्र भावे क्तप्रत्ययात् प्रश्ने कर्त्तरि षष्ठी ]।

सख्यौ। [उपविश्य।] हला! उजुआ दाव होहि, जाव दे मङ्गलसमालम्भणं (६५) करेह्म। (द)

शकु। उइदं पि एदं अज्ज बहुमणिदव्वं, जदो दुल्लहं दाव पुणो मे पिअसहीमण्डणं (६६) भविस्सदि। (ध)

[इति वाष्पं विसृजति]।

सख्यौ। सहि! ण जुत्तं मङ्गलकाले (६७) रोइदुं। (न)

[इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः।]

प्रियं। सहि! आहरणारिहं दे रूअं अस्समसुलहेहिं प्पसाहणेहिं विप्पआरीअदि। (प) (६८)

---

(द) हला! ऋजुका तावद्भव, यावत्ते मङ्गलसमालम्भनं कुर्वः।

(ध) उचितमपि एतदद्य बहु मन्तव्यं, यतो दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति।

(न) सखि! न युक्तं मङ्गलकाले रोदितुम्।

(प) सखि! आभरणार्हं ते रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकार्य्यते।

---

(६५) ऋजुका—सरला, अवक्रा इत्यर्थः। मङ्गलसमालम्भनं—मङ्गलालङ्करणम्। केचित् अत्र मङ्गलसमालम्भनं मङ्गलस्नानं, मङ्गलार्थं गात्रानुलेपनं वा इति व्याचक्षते। तदुभयञ्च शकुन्तलावाक्ये—"दुर्लभं तावत् पुनर्मे प्रियसखीमण्डनं भविष्यति" इति अनेन शङ्कितः सम्बन्धासङ्गतेः न चारुतरं प्रतिभाति।

(६६) इतः पतिगृहगमने सखीभ्यां सह सुचिरविरहमुत्प्रेक्षमाणा सकरुणमाह, उचितमपि इति।—उचितमपि—चिराभ्यस्तमपि—"अभ्यस्तेऽप्युचितं न्याय्यम्" इति यादवः। एतत्—भवतीभ्यां क्रियमाणं मण्डनम्, अद्य—समागतप्रायविरहे दिवसे, बहु मन्तव्यम्—आदरणीयम्। दुर्लभं हि वस्तु सर्वैः सर्वदा समाद्रियते इत्याशयः। 'तत् कुतः?' इति हेतुं प्रकाशयाह—यतः इति।—दुर्लभं—दुरापं, मे—मम, प्रियसखीमण्डनं—प्रियसखीभ्यां क्रियमाणम् अलङ्करणम्। ["मे" इति सम्बन्धे षष्ठी, न तु दुर्लभमित्यस्य कर्त्तरि "न लोकाव्ययनिष्ठा—" (२।३।६९ पा०) इति षष्ठी प्रतिषेधात्]।

(६७) मङ्गलकाले—शुभकार्य्यानुष्ठानसमये, [अनेन भाविवियोगः सूच्यते]।

(६८) आभरणार्हम्—अलङ्कारोचितम्। आश्रमसुलभैः,—तपोवने अनायासेन

[ प्रविश्य आभरणहस्तः ] ऋषिकुमारः। इदम् अलङ्कारजातम्, अलङ्क्रियताम् आयुष्मती।

[ सर्वा विलोक्य विस्मिताः ]।

गौत। वच्छ हारीद ! कुदो इदं आसादिदं ? (फ)

हारी। तातकण्वप्रभावात्।

गौत। किं माणसी सिद्धी ? (ब) (६९)

हारी। न खलु। श्रूयतां, तत्रभवता कण्वेन वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति। ततश्च—(७०)

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं,
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित्।

---

(फ) वत्स हारीत ! कुत इदम् आसादितम् ?

(ब) किं मानसी सिद्धिः ?

लभ्यैः। प्रसाधनैः,—भूषणैः। विप्रकार्य्यते—विकृतीक्रियते, तिरस्क्रियते इत्यर्थः। [आभरणार्हमित्यनेन आभरणानयनं सूचयित्वा तद्द्वारा तदानयनकर्त्तृणामप्यागमनं ध्वनयति]।

(६९) मानसी सिद्धिः,—मनःसङ्कल्पमात्रेण अस्यालङ्करणजातस्य अधिगमः इत्यर्थः। [अनेन गौतमीप्रश्नेन कण्वस्य तपःप्रभावातिशयसूचनात् कोऽपि माहात्म्यातिशयः ध्वन्यते]।

(७०) न खलु—नैव इत्यर्थः, ( भिन्नवाक्यमेतत्, पूर्वप्रश्नस्योत्तरम् )। आज्ञप्ताः,—आदिष्टाः [आज्ञप्ताः इति।—आङ्पूर्वस्य णिजन्त-'ज्ञा-'धातोः क्तप्रत्ययेन रूपं, निपातनात्, पक्षे—आज्ञापिताः। केचित् तु चौरादिकस्य ज्ञपधातोः रूपमिच्छन्ति ]। वनस्पतिभ्यः,—वृक्षेभ्य इत्यर्थः। अत्र "तैरपुष्पात् वनस्पतिः" इति अमरोक्तेः वनस्पतिशब्दस्य कुसुमं विना फलवद्वृक्षवाचित्वेऽपि कुसुमानि आहरेति उत्तरवाक्यान्वयानुपपत्तेः सामान्यवृक्षपरतैव लक्षणया। 'ततः किम् ?' इत्याकाङ्क्षां पूरयितुं स्वयमेवाह—तत इति।

(७१) क्षौममिति।—केनचित् तरुणा इन्दुपाण्डु चन्द्रवत् शुभ्रं, सितपीतमित्यर्थः, "सितपीतसमायुक्तः पाण्डुवर्णः प्रकीर्त्तितः" इति सुभूतिः। माङ्गल्यं मङ्गलकर्म्मणि साधु

अन्येभ्यो वनदेवताकरतलैरापर्वभागोत्थितैः
दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः (७१) ॥७॥

प्रियं। [ शकुन्तलां विलोक्य। ] हला ! कोडरसम्भवा वि महुअरी पोक्खरमहु ज्जेव अहिलसदि। (भ) (७२)

---

(भ) हला ! कोटरसम्भवापि मधुकरी पुष्करमधु एव अभिलषति।

[ तत्र साध्वर्थे यत्प्रत्ययः] तथा च अलूनदशं कुङ्कुमादिचिचितप्रान्तभागमित्यर्थः, चौमं दुकूलयुगलमित्यर्थः, तथा च परत्र सखीद्वयवाक्ये "अवसितमण्डनासि साम्प्रतं परिधेहि चौमयुगलम्" इत्युक्तेः। आविष्कृतं प्रकटितं, दत्तमिति यावत्। कैश्चित् तरुणा चरणयोरुपरागः रञ्जनं तस्मिन् सुभगः प्रियः मनोरम इत्यर्थः, [ अत्र "चरणोपभोगसुलभः" इति पाठे,—चरणयोरुपभोगः रञ्जनादिः तत्र सुलभः योग्यः इत्यर्थः। अनेन अनेकप्रयत्नसाध्यचरणोपरागक्रियाऽपि अस्याः स्वाभाविकी वर्त्तते इति ध्वन्यते। ] लाक्षारसः अलक्तकद्रवः निष्ठ्यूतः निःसार्य्य दत्त इत्यर्थः [ अत्रापि अश्लीलत्वदोषः गौणवृत्त्या परिहरणीयः। ] अन्येभ्यः तरुभ्यः किसलयस्य छाया कान्तिः तस्याः परिस्पर्द्धिभिः अनुकारिभिः, किसलयसदृशैः इत्यर्थः। [अत्र "तत् किसलयोद्भेदप्रतिद्वन्द्विभिः" इति पाठे,—किसलयोद्भेदा उद्भिद्यमानपल्लवा इत्यर्थः, ( लक्षणया एषोऽर्थः अवगन्तव्यः, प्रयोजनन्तु अत्र रक्तत्व-कोमलत्वादिकं व्यक्तम् ) तत्प्रतिद्वन्द्विभिः तत्सदृशैरित्यर्थः। ] आ पर्वभागात् पर्व्वभागं मर्य्यादीकृत्य उत्थितैः उद्गतैः [अत्र आपर्वेति विशेषणात् देवतानाम् अदृश्यत्वं सूचयित्वा करतलभागस्य च दृश्यत्वं सूचयता तलपदसार्थक्यञ्च सुतरां प्रदर्शितम्।] वनदेवतानां करतलैः [न चात्र तलपदसद्भावात् अधिकपदतादोषः; केवलकरपदेनैव दानकरणत्वनिर्व्वाहादिति वाच्यं, "किसलयच्छायापरिस्पर्द्धिभिः" इत्यत्र किसलयेति विशेषणस्य सार्थक्यसम्पादनाय तदुपादानात्।] आभरणानि अलङ्काराः नः अस्मभ्यं दत्तानि अर्पितानि। [अनेन वनदेवताप्रदत्ताभरणेन अस्याः चिरावैधव्यं सौभाग्यातिशयः आभरणस्य महार्घत्वञ्च सूच्यते। अत्र इन्दुपाण्डु इति किसलयच्छायापरिस्पर्द्धिभिरिति, एतयोरुपमालङ्कारयोः संसृष्टिः। तथा च 'अन्येभ्यः' इत्यत्र 'अन्यैः तैः' इति पदप्रक्षेपेण कर्तृप्रक्रमभङ्गदोषः परिहरणीयः]। शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

(७२) कोटरेति।—कोटरे रन्ध्रे, वृक्षाणामिति शेषः। सम्भव उत्पत्तिर्यस्याः तथोक्ताऽपि। पुष्करमधु—कमलमधु, अभिलषति—तदास्वादयितुम् आकाङ्क्षति

गौत। जादे! इमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुहोदव्वा रामलच्छी। (म) (७३)

[शकुन्तला लज्जां नाटयति]। (७४)

शार्ङ्ग। यावत् इमां वनस्पतिसेवाम् अभिषेकार्थं मालिनीम् अवतीर्णाय तत्रभवते कण्वाय निवेदयामि। (७५)

[इति निष्क्रान्तः]।

अन। सहि! अणणुभूदभूसणो (७६) अअं जणो कधं

---

(म) जाते! अनया अभ्युपपत्त्या सूचिता भर्त्तुर्गेहे अनुभवितव्या राजलक्ष्मीः।

इत्यर्थः। [अत्र मधुकरी पुष्करमधुरूपात् समादप्रस्तुतात् प्रस्तुतायाः शकुन्तलायाः वनजातायाः अपि अलङ्कारार्हतायाः प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः। तदुक्तं दर्पणे,—"क्वचिद् विशेषः सामान्यात् सामान्यं वा विशेषतः। कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम्। अप्रस्तुतात् प्रस्तुतञ्चेत् गम्यते पञ्चधा ततः। अप्रस्तुतप्रशंसा स्यात्—"] इति।

(७३) अभ्युपपत्त्या—आभरणदानरूपेण अनुग्रहेण, वनदेवतानामिति शेषः। [अनेन च उदाहरणं नाम गर्भाङ्गं प्रदर्शितम्। यदाह दर्पणे,—"उदाहरणमुत्कर्षयुक्तं वचनमुच्यते" इति]। सूचिता—सम्भाविता, अनुभवितव्या—भोक्तव्या। राजलक्ष्मीः,—राजसम्पद्।

(७४) लज्जां नाटयति—नाट्येन दर्शयति, अवनतमस्तकेन अधोदृष्ट्या इत्यर्थः। आत्मसौभाग्यश्रवणात् लज्जोदयादिति भावः। [अनेन नायिकागतमौचित्यं ध्वन्यते]।

(७५) वनस्पतिसेवां—वनस्पतिभिः वृक्षैः कृतां सेवाम् आभरणादिप्रदानरूपामुपचर्य्यामित्यर्थः। अभिषेकार्थं—स्नानार्थम्। मालिनीम् अवतीर्णाय—तत्र स्नातुं प्रविष्टाय। कण्वाय—[अत्र क्रियाग्रहणात् चतुर्थी]।

(७६) अननुभूतेति।—अननुभूतम् अनुपभुक्तं भूषणं येन तथाभूतः। तपोवनवासित्वात् न जातु अस्माभिरीदृशमलङ्करणम् उपभुक्तं न वा प्रत्यक्षीकृतमित्यर्थः।

तुमं अलङ्करेदि ? [ चिन्तयित्वा विलोक्य च। ] (७७) चित्तपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेह्म। (य) (७८)

शकु। जाणामि वो णिउणत्तणं। (र) (७९)

[ सख्यौ नाट्येन अलङ्कारान् विनियुञ्जाते। ] (८०)

[ ततः प्रविशति स्नानोत्तीर्णः कण्वः ]।

कण्वः। [ विचिन्त्य ]—

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,

अन्तर्वाष्पभरोपरोधि गदितं, चिन्ताजड़ं दर्शनम्।

(य) सखि ! अननुभूतभूषणोऽयं जनः, कथं त्वाम् अलङ्करोति ? चित्रपरिचयेन इदानीं तेऽङ्गेषु आभरणविनियोगं कुर्वः।

(र) जानामि वो निपुणत्वम्।

---

(७७) चिन्तयित्वा—चित्रकर्मणि अलङ्कारनियोगं स्मृत्वा इत्यर्थः, विलोक्य च—शकुन्तलाशरीरम् अलङ्कारजातञ्च इति शेषः।

(७८) चित्रपरिचयेन—आलेख्यलिखितानां रमणीनाम् अलङ्कारदर्शनसंस्कारेण इत्यर्थः; अथवा चित्रनिर्माणजनितसंस्कारेण इत्यर्थः। [अत्र "चित्तपरिचयेन" इति पाठे,—मनसा अवधार्य्य इत्यर्थः। अनेन बुद्धिकौशलमनयोः व्यञ्जितं, कलानैपुण्यञ्च सूचितम् ]।

(७९) निपुणत्वं—वैदग्ध्यम्; सर्वस्मिन्नेव विषये भवत्योः चातुर्य्यमस्ति इति मया ज्ञातमित्यर्थः।

(८०) नाट्येन—आङ्गिकाभिनयेन, विनियुञ्जाते—अलङ्कुरुतः; तथा च तूलिकया चरणयोः अलक्तकार्पणं, सूत्रेण हारार्पणमित्यादि बोध्यम्।

(८१) यास्यतीति।—अद्य शकुन्तला मम हृदयसर्वस्वभूता इत्यर्थः यास्यति, न तु याता, न चापि याति, अपि तु यास्यतीति चिन्तामात्रेण इति भावः; पतिगृहमिति शेषः। इति हेतोः, हृदयं मनः ममेति शेषः, उत्कण्ठया तीव्रचिन्तया—("रागे त्वलब्धविषये वेदना महती तु या। संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥" इत्यभिधानात्।) संस्पृष्टं किञ्चिदधिकृतमित्यर्थः। [अत्र स्पृशधातोः प्रयोगात् स्पर्शमात्रार्थकत्वबोधनेन सम्यक्समाक्रान्तत्वाभावबोधनेन च अस्य काऽपि महानुभावता व्यज्यते। न चात्र हृदयस्य स्पर्शनासम्भवात् हृदयपदोपादाने अर्थगतपौन-

वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः,
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः ? (८१)॥८॥
[ इति परिक्रामति ]।

कण्ठरोधः समाशङ्कनीयः, हृदयस्यैव सकलेन्द्रियज्ञानप्रवर्त्तकत्वेन वक्ष्यमाण दर्शनस्य चिन्ताजड़त्वकथने हृदयशब्दानुपादाने तादृशार्थस्फुरणासम्भवात्।] गदितं वचनम् [ भावे निष्ठाप्रत्ययः ] अन्तर्वाष्पायाम् अन्तर्गतानाम् अश्रूणां, न तु वहिः गलितानामिति भावः [ अनेन धैर्य्यातिशयः ध्वनितः] भरेण समूहेन, आतिशय्येन इत्यर्थः, यः उपरोधः स्खलनं स विद्यते यस्येति तथोक्तम्, अन्तर्वाष्पोपरुद्धमित्यर्थः। [अत्र "कण्ठः स्तम्भितवाष्पवृत्तिकलुषः" इति पाठे,—स्तम्भिता नियमिता, निसर्गधैर्य्यादिति भावः, या वाष्पस्य अश्रुणः वृत्तिः प्रवृत्तिः, आरम्भ इति यावत्, तया कलुषः विकृतः स्वरभङ्गवानित्यर्थः कण्ठः, जात इति शेषः। अत्र स्तम्भितवृत्तिपदेन धैर्य्यातिशयः व्यज्यते। अत एव न स्तम्भितेति विशेषणपदे निर्हेतुत्वदोषः। वाष्पावरोधे कण्ठः सगद्गदः भवतीति सर्वजनप्रसिद्धमिदम्। प्रवृत्तस्य अश्रुणः स्तम्भयितुमशक्यत्वात् वृत्तिपदोपादानमिति बोद्धव्यम्।] दर्शनं चक्षुः चिन्तया जड़ं मन्थरं, कलुषभावमापन्नम् इत्यर्थः, अथवा दर्शनं ज्ञानं ("दृष्टिः ज्ञानेऽक्षिदर्शने" इति मेदिनी ) चिन्ताजड़ं स्वस्वविषयाग्राहकं, चिन्तया ज्ञानकारणीभूतस्य मनसः अभिभवादिति भावः; अरण्यं वनम् ओकः स्थानं यस्य तथोक्तस्य वनवासिनोऽपि [एतेन वैक्लव्यस्य अत्यन्तासद्भावत्व सूचितम्, अप्रविष्टगार्हस्थ्यधर्मत्वात्।] मम स्नेहात् अपत्यवात्सल्यात् ईदृशम् एवम्प्रकारमनुभूयमानम् अनिर्वचनीयं वैक्लव्यं कातर्य्यं तावत् सर्वतः इत्यर्थः, भवतीति शेषः। अतः, गृहिणः गृहस्थाः, संसारेषु गाढ़तरं लिप्तत्वात् मायया अभिभूयमानाः इत्यर्थः, नवैः प्रथमैः अपूर्वैरित्यर्थः, द्वितीयवारे पूर्वानुभूततया सह्यवेदनत्वात् न तथा क्लेशः इति भावः, तनयायाः कन्याया विश्लेषदुःखैः विच्छेदजक्लेशैः कथं न पीड्यन्ते ? नाभिभूयन्ते ? अपि तु पीड्यन्ते एवेत्यर्थः। [अत्र 'कथं नु' इति पाठे,—कथं केन प्रकारेण, नु वितर्के, पीड्यन्ते अभिभूयन्ते, इत्यहं निश्चेतुं न शक्नोमि इत्यर्थः। तत्र तु काकुर्नास्ति। अनेन पद्येन सकलविषयवीतरागस्यापि मुनेः पालितकन्यायाम् ईदृशवात्सल्यप्रदर्शनेन सर्वजीवेषु समदर्शित्वं कारुण्यरत्नाकरत्वञ्च ध्वनितम्। "तत्र श्लोकचतुष्टयम्" इति प्राचीनप्रवादस्यायमाद्यश्लोकः इत्यवगन्तव्यम्। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, व्यतिरेकश्च इत्यपरे]। शार्दूलविक्रीड़ितं वृत्तम्॥ ८॥

सख्यौ। हला सउन्तले ! अवसिदमण्डणासि, सम्पदं परिहेहि क्खोमजुअलं। (ल) (८२)

[ शकुन्तला उत्थाय नाट्येन परिधत्ते ]।

गौत। जादे ! एस दे आणन्दवाप्पपरिवाहिणा लोअणेण परिस्सजन्तो विअ गुरु उवत्थितो, ता समुदाआरं पड़िवज्जस्स। (व) (८३)

[ शकुन्तला सव्रीड़ं वन्दनां करोति ]।

कण्व:। वत्से !—

यथातेरिव शर्मिष्ठा भर्त्तुर्बहुमता भव।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि (८४) ॥९॥

(ल) हला शकुन्तले ! अवसितमण्डनाऽसि, साम्प्रतं परिधेहि क्षौमयुगलम्।

(व) जाते ! एष ते आनन्दवाष्पपरिवाहिणा लोचनेन परिष्वजमान इव गुरुरुपस्थितः, तत् समुदाचारं प्रतिपद्यस्व।

(८२) अवसितमण्डना—समाप्तभूषणा, परिहितभूषणा इत्यर्थः। क्षौमयुगलं—दुकूलयुग्मम्।

(८३) 'पितुः शोकोदयकथने कन्याया अपि शोकोदयः सम्भवेत्' इति प्रज्ञावती गौतमी व्याजेन याथार्थ्यं प्रच्छाद्य आह, आनन्देति।—आनन्दवाष्पपरिवाहिणा—आनन्दाश्रुवर्षिणा। परिष्वजमान इव—आलिङ्गन्निव [ इति उत्प्रेक्षालङ्कारः]। गुरुः—पिता। समुदाचारं—सम्यक् उत्कृष्टमाचारं, पितरि कर्त्तव्यम् अभिवादनादिरूपं गौरवमिति भावः।

(८४) यथातेरिति।—ययातेः शर्मिष्ठेव त्वं भर्त्तुः दुष्मन्तस्य [पत्युरिति पाठान्तरम्] बहुमता प्रियतमा, बह्वादरिणी इति यावत्, भव ["बहुमता" इति वर्त्तमाने क्तप्रत्ययः, अत एव भर्त्तुरिति "क्तस्य च वर्त्तमाने" ( २।३।६७ पा० ) इति कर्त्तरि षष्ठी ]। सा शर्मिष्ठा पूरुमिव त्वमपि सम्राजं चक्रवर्त्तिनं ( "येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः। शास्ति यश्चाज्ञया राज्ञः स सम्राट्—" इत्यमरोक्तलक्षणं ) पुत्रम् आप्नुहि लभस्व। [ "पुरा किल ययातिः नाम राजर्षिः शुक्रकन्यां देवयानीं तत्सखीं वृषपर्व्वदुहितरं शर्मिष्ठाञ्च उपयेमे, तयोः खलु शर्म्मिष्ठेव प्रियतमा, तत्सन्ततिः महानुभवः पूरुरेव पितुः जरायहणरूपादेशानुवर्त्तनेन साम्राज्यमवाप" इति पौराणिकी कथाऽत्रानु-

गौत। जादे! वरो क्खु एसो, ण आसिसो। (अ) (८५)

कण्व:। वत्से! इत: सद्यो हुतानग्नीन् प्रदक्षिणीकुरुष्व।(८६)

[ सर्वे तथा कारयितुं परिक्रामन्ति ]।

कण्व:। वत्से! (८७)—

अमी वेदिं परित: क्लृप्तधिष्ण्या:
समिद्वन्त: प्रान्तसंस्तीर्णदर्भा:।

(अ) जाते! वर: खलु एष, नाशिष:।

सन्धेया। उपमाऽलङ्कार:। अत्र खलु क्रमो नाम गर्भाङ्गं प्राचां मते तत्तु विवेचितं प्राक्; तथाऽत्र आशीर्नाम नाट्यालङ्कृति:। तथा च दर्पणे—"आशीरिष्टजनाशंसा" इति]। पथ्यावक्त्रं वृत्तम्॥ ८॥

(८५) वर इति।—एष:,—गुरुवचनमित्यर्थ:, वर:,—अवश्यम्भाविफलक: वाग्व्यापार इत्यर्थ:। आशिष:,—आशीर्वादा:, शुभचिन्तनविशेषा: इति यावत्; तासां फलं प्रति अवश्यसाधकत्वं नास्तीति भाव:। न हीदृशस्य महाप्रभावस्य ऋषे: वाक्यम् अन्यथा भवितुं पार्य्यते इत्यभिप्राय:। [अनेन ऋषे: तप:प्रभावातिशय: व्यज्यते]।

(८६) सद्य:,—इदानीमेव, प्रात: होमकालत्वादिति भाव:। हुतान्—आज्येन तर्पितान्। प्रदक्षिणीकुरुष्व—दक्षिणावर्त्तेन भ्रमणं कुरु इत्यर्थ:। [ प्रगतं दक्षिणं प्रदक्षिणमिति अव्ययीभाव:, तत: अभूततद्भावे च्विप्रत्यय: ]।

(८७) क्वचित् "वत्से" इत्यत्र "ऋक्छन्दसा आशास्ते" इत्यधिक: पाठ: दृश्यते। तत्र ऋक्छन्दसा—ऋक्छन्दोग्रथितेन वाक्येन इत्यर्थ:।

(८८) अमी इति।—वेदिं यज्ञभूमिं परित: समन्तत: उपरीत्यर्थ: [ "अभित: परित:" इति (वा०) द्वितीया ] क्लृप्तं कृतं धिष्ण्यं स्थानं यै: तथोक्ता: ("धिष्ण्यं स्थाने गृहे भेऽग्नौ" इत्यमर:) वेद्यां स्थापिता इत्यर्थ:, समिध: काष्ठानि सन्ति एषां तथोक्ता: दह्यमानेन्धना इत्यर्थ: [ अनेन विशेषणद्वयेन सद्य: उद्दृप्तत्वेन प्रकाशमानत्वात् शुभसूचकत्वं ध्वनितम् ] प्रान्तेषु समन्तात् संस्तीर्णा: प्रक्षिप्ता दर्भा: कुशा येषां तथाभूता:, हव्यानां देवोद्देशेन अर्पितानां हवनीयद्रव्याणां गन्धै: सौरभै: दुरितं पापम् अपघ्नन्त: नाशयन्त: वैताना यज्ञिया अमी पुरो दृश्यमाना: वह्नय:

अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु (८८) ॥१०॥

[ शकुन्तला प्रदक्षिणं करोति ]।

कण्वः। वत्से ! प्रतिष्ठस्व (८९) इदानीम्। [सदृष्टिक्षेपम्]। क्व नु ते शार्ङ्गरवशारद्वतमिश्राः ? (९०)

शिष्यौ। [ प्रविश्य। ] भगवन् ! इमौ स्वः।

कण्वः। वत्सौ ! भगिन्याः पन्थानम् आदेशयतम्।

शिष्यौ। इत इतो भवति ! (९१)

[ सर्वे परिक्रामन्ति ]।

[अत्र बहुवचनेन वह्नित्रयम् अवगन्तव्यम्] त्वां पावयन्तु पवित्रीकुर्वन्तु। दौर्भाग्यसूचकं दुरदृष्टं क्षपयन्त्विति भावः। [ अत्र साभिप्रायविशेषणबाहुल्येन परिकरालङ्कारः ]। अत्र वातोर्मी-शालिन्योः उपजातिः वृत्तम्। "वातोर्मीयं गदिता म्भौ तगौ गः" इति "मात् तौ गौ चेच्छालिनी वेदलोकैः" इति तयोः लक्षणात्। केचित् तु प्रथम-तृतीययोः पादयोः समतायां द्वितीय-चतुर्थयोः पादयोश्च तुल्यतायाम् एव उपजातिं मन्यन्ते, नान्यथा इति ; तन्न विचारसहम्। उपजातेरेवंविधनियमाभावात् "इत्थं किलान्यास्वपि मिश्रितासु" इत्युक्तेः। मिश्रतत्वं तु नानाप्रकारेण सम्भवति। तेन प्रथम-द्वितीययोः, द्वितीय-चतुर्थयोः पादयोः भिन्नलक्षणत्वेऽपि उपजातिः भवत्येव। एवं—प्रथमस्य द्वितीय-तृतीय-चतुर्थानां, द्वितीयस्य प्रथम-तृतीय-चतुर्थानां भिन्नलक्षणेऽपि ऊहनीया उपजातिः। एतद्विशेषस्तु अस्माकं नूतनमुद्रितपिङ्गलादौ द्रष्टव्यः। एकादशाक्षरपादवृत्तेषु प्रस्तारे निरूपिते वातोर्मी हि पञ्चाधिकविंशततमे, शालिनी च एकोननवत्यधिकद्विशततमे अवगन्तव्यम् ॥ १० ॥

(८९) प्रतिष्ठस्व—गच्छ। [ प्रतिपूर्वात् स्थाधातोः लोट् "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इति आत्मनेपदम्]।

(९०) नु—प्रश्ने। शार्ङ्गरव-शारद्वतमिश्राः क्व कुत्र वर्त्तन्ते ? अत्र बहुवचनं गौरवसूचकं, मिश्रपदञ्च मान्यार्थकम्। [एतेन शिष्यान् प्रत्यपि तादृशसम्मानप्रदर्शनेन अत्यौदार्य्यं मुनेः सूचितम् ]।

(९१) "परपत्नी तु या स्त्री स्यात् असम्बन्धा तु योनितः। तां ब्रूयात् भवतीत्येवं सुभगे भगिनीति च ॥" इति मनूक्तेः भवतीति सम्बोधनम्।

कण्व: । भो भो: सन्निहितवनदेवतास्तपोवनतरव: !—
पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।
आदौ व: कुसुमप्रवृत्तिसमये यस्या भवत्युत्सव:,
सेयं याति शकुन्तला पतिगृहं, सर्वैरनुज्ञायताम् (८२) ॥११॥

[ आकाशे ] । (८३)—

(८२) सर्वज्ञोऽसौ भगवान् कण्व: सर्वजीवसमदर्शितया तरूनपि शकुन्तला-विरहकातरान् समुद्वीक्ष्य अग्रत: तान् अनुमानयितुं प्रार्थयते, पातुमिति ।—या शकुन्तला युष्मासु असिक्तेषु युष्माकम् आलवालेषु अपूरितेषु इति भाव:, प्रथमम् अग्रे जलं पातुं न व्यवस्यति नेच्छति । [अत्रैव च वाक्ये "अपीतेषु" इति पाठे—न विद्यते पीतं पानं येषां तेषु, अथवा पीतम् एषाम् अस्ति (इति अर्शआदित्वादच्) न पीता अपीतास्तेषु ; तथा च महाभाष्यम्—'अकारो मत्वर्थीयो, विभक्तमेषामस्तीति विभक्ता:, पीतमेषामस्तीति पीता: इति" । अत्र च पक्षे प्रथममिति क्रियाविशेषणं, प्रथमं पानं न करोतीत्यर्थ: । उभयत्र वर्त्तमाने लट्निर्देशात् ईदृशावस्थायामपि ईदृशी स्नेहप्रवृत्ति: अस्या वर्त्तते इति ध्वन्यते । ] या प्रियं मण्डनं भूषणं यस्या: तथोक्ता अलङ्कारप्रियापि इत्यर्थ:, [पक्षे "वा प्रियस्य" (वा०) इति परनिपातात् मण्डनप्रिया इत्यपि भवेत् । अनेन आदानयोग्यत्वं सूच्यते ।] भवतां स्नेहेन—भवतां काचित् हानि: भवेत् इति मत्वा इत्यर्थ:, पल्लवं नवं किसलयं न आदत्ते न छिनत्ति । व: युष्माकं कुसुमप्रवृत्तिसमये पुष्पविकाससमये आदौ अग्रत: यस्या: उत्सव: आनन्दो भवति [ अथवा आदौ इति कुसुमप्रवृत्तिसमये इत्यस्य विशेषणम् । फलोद्गमसमयजात: आनन्दातिशय: वक्तुमपि न शक्यते इत्यभिप्राय: । अत्रापि वर्त्तमाने लट् निर्देशात् अधुनाऽपि अस्या: ईदृश: स्नेह: वर्त्तते इति सूच्यते । ] सा भवत्सु एतादृशस्नेह-परायणा इयं सर्वेषां भवतां पुर:स्थिता शकुन्तला पतिगृहं स्वामिभवनम् [ अनेन अनुज्ञादानयोग्यत्वं ध्वन्यम् ] याति, सर्वै: युष्माभि: युगपदित्यर्थ:, अनुज्ञायताम् अनुमन्यताम् । [अत्र प्रत्येकमनुज्ञाने गमनविलम्ब: स्यादिति सर्वपदम् । अत्र अचेतनेषु तरुषु चेतनव्यवहारसमारोपात् समासोक्तिरलङ्कार:] । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

(८३) आकाशे इति—देवानामदृश्यशरीरत्वात् आकाश इत्युक्तं कविना ।

रम्यान्तरः कमलिनीहरितैः सरोभिः
छायाद्रुमैर्नियमितार्कमरीचितापः।
भूयात् कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः (८४) ॥१२॥

[ सर्वे सविस्मयम् आकर्णयन्ति ]।

(८४) वनदेवतावाक्यमाह, रम्यान्तर इति।—अस्याः शकुन्तलायाः पन्थाः प्रस्थानमार्गः कमलिनीभिः हरितैः श्यामैरित्यर्थः [ अनेन कमलिनीव्याप्तत्वं कमल-संयोगश्च ध्वन्यते ] सरोभिः [ अत्र बहुवचनेन प्रतिपदं सरःसद्भावः सूच्यते ] रम्यं मनोज्ञम् अन्तरम् अवकाशः यस्य तथोक्तः, [ समुदायेन च वाक्येन सहजकोमलाङ्गयाः तस्याः पिपासाजनितक्लेशाभावः सूच्यते ] छायाप्रधानाः द्रुमाः छायाद्रुमाः ( शाक-पार्थिवादित्वात् मध्यपदलोपी कर्म्मधारयः ) तैः छायावद्भिर्वृक्षैरित्यर्थः, [वृक्षमात्रस्य सौरकिरणनिवारणयोग्यता न सम्भवतीति छायापदं, तथा बहुवचनमपि ] नियमितः निवर्त्तितः अर्कमरीचीनां सूर्य्यमयूखाणां तापः यत्र तादृशः [ मरीचिनिवर्त्तनत्व-कथनेऽपि तत्तापनिवृत्तेः अवश्यबोधनात् पुनः तापग्रहणं मध्याह्नसमुत्थस्य तापस्य तीव्रत्वसूचनार्थमवगन्तव्यम् ] कुशेशयानां कमलानां रजांसीव परागा इव मृदवः कोमलाः रेणवो यत्र तथाविधः, [ अनेन चरणानुपघातकत्वं सूचितम् ] तथा शान्तः, मन्दः अनुकूलः पृष्ठप्रवर्त्तित्वात् सुभग इत्यर्थः, अथवा अनुकूलः शीतलः सुरभिश्च, पवनः वायुर्यत्र तथोक्तश्च, (उष्णो हि पवनः प्रतिकूलो भवति शरीरस्य इति भावः ) अत एव शिवश्च कल्याणसूचकश्च इत्यर्थः, भूयात् भवतु। [ अत्र शोकस्थचका-रयोरेकस्य समुच्चयार्थकत्वे अन्यस्योपादाने अधिकपदतादोषप्रसङ्गः, शिवश्च इत्यनेन समुच्चये प्रतिविशेषणं चकारदानस्यावश्यकता प्रसज्येत, इत्यन्यथा व्याख्यायते,— तथा च—शान्तानुकूलश्च यः पवनः स शिवः सुखप्रदः भूयात् तथा पन्थाश्च शिवः कल्याणसूचकः भूयादित्यर्थः। विशेषणानि च उभयत्र योज्यानि। तथाच वायु-पक्षे—रम्यति-विशेषणेन कुशेशयेति विशेषणेन च सौगन्ध्यं, छायाद्रुमैरिति शान्तेति च विशेषणाभ्यां यथाक्रमं शैत्यं मान्द्यञ्च सूच्यते। अनुकूलविशेषणेन शुभ-शकुनं व्यज्यते। अस्मिन् पक्षे उभयोः प्रस्तुतयोः एकधर्माभिसम्बन्धात् तुल्ययोगिता ; पूर्वञ्च च कुशेशयेत्येनेन उपमा, साभिप्रायविशेषणबाहुल्यात् परिकरः, तथा काव्य-लिङ्गमपि अलङ्काराः। अयञ्च श्लोकचतुष्टयान्तर्गतः द्वितीयः श्लोकः इति मतं नः। केचित् तु एतत्पूर्वश्लोकमाचक्षते तत्र ]। वसन्ततिलकं वृत्तम् ॥ १२ ॥

शार्ङ्ग। [कोकिलशब्दं सूचयित्वा।] (८५) भगवन्!—

अनुमतगमना शकुन्तला
तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यतः
प्रतिवचनीकृतमेभिरात्मनः (८६) ॥१३॥

गौत। जादे! ञादिजणसिणिद्धाहिं (८७) अणुण्णाद-गमणासि तवोवणदेवदाहिं, ता पणम भअवदीओ। (ष)

शकु। [सप्रणामं परिक्रम्य जनान्तिकम्।] हला पिअम्वदे! अज्ज-

(ष) जाते! ज्ञातिजनस्निग्धाभिः अनुज्ञातगमनासि तपोवनदेवताभिः, तत् प्रणम भगवतीः।

(८५) शिक्षिता हि नटाः प्रच्छन्नाः अधुना कोकिलशब्दं कुर्व्वन्ति इति कवेरभिप्रायः।

(८६) वने पिकध्वनिमाकर्णयन् शिष्यो गुरवे शुभशकुनं ज्ञापयति, अनुमतेति।—यतः यस्मात् एभिः तरुभिः कलं मधुरास्फुटं परभृतानां कोकिलानां विरुतं रवः, आत्मनः स्वस्य [अत्र ईदृशमिति पाठे—ईदृशं प्रत्यक्षतः अनुभूयमानमित्यर्थः] प्रतिवचनीकृतं प्रत्युत्तरत्वेन प्रकटितम् इत्यर्थः, ततः कारणात् इयं शकुन्तला वनवासे बन्धुभिः सुहृद्भिः तरुभिः अनुमतं गमनं यस्याः तथोक्ता, पतिगृहगमनाय अनुज्ञातेत्यर्थः, 'शकुनेन शुभं सूचितम् अतः विलम्बो न कार्य्यः' इति भावः। तथा चोक्तं—"वामे मधुरवाक् पक्षी वृक्षः पल्लवितोऽग्रतः। अनुकूलो वहन् वायुः प्रयाणे शुभशंसिनः॥" इति। [अत्र वनवासबन्धुभिः तरुभिरिति व्यस्तरूपकं, तथा परार्द्धे कोकिलविरुतस्य प्रतिवचनतादात्म्येन परिणमनात् प्रकृतोपयोगित्वाच्च परिणामालङ्कारः]। अपरवक्त्रं वृत्तम्,—"अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ" इति लक्षणात्॥ १३॥

(८७) ज्ञातीति।—ज्ञातिजना इव स्निग्धाः, यद्वा ज्ञातिजनेषु पित्रादिषु तवेति भावः, स्निग्धा अनुरागवत्यः, ताभिः; अथवा ज्ञातिजनस्य तव पितुः सर्व्वलोकसमदर्शिन इत्यर्थः, स्निग्धाभिः, स्नेहयुक्ताभिः। [अनेन मुनेः कारुण्यातिशयः गम्यते]।

उत्तदंसणुस्सुआए वि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा ण णिवड़न्ति । (स) (९८)

प्रियं । ण केवलं तुमं ज्जेव तवोवणविरहकादरा, तुए उवत्थिदविओअस्स तवोवणस्स वि अवत्थं पेक्ख दाव । (ह) (९९)

उग्गिलदब्भकवला मई, परिच्चत्तणत्तणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ(क)(१००)॥१४॥

(स) हला प्रियंवदे ! आर्य्यपुत्रदर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःखदुःखेन चरणौ मे पुरोमुखौ न निपततः ।

(ह) न केवलं त्वमेव तपोवनविरहकातरा ; त्वया उपस्थितवियोगस्य तपोवनस्यापि अवस्थां प्रेक्षस्व तावत् ।

(क) उद्गीर्णदर्भकवला मृगी, परित्यक्तनर्त्तना मयूरी ।
अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रुिव लताः ॥

(९८) जनान्तिकमिति ।—त्रिपताककरेण अन्यानपवार्य्य इत्यर्थः । आर्य्येति—पतिदर्शनोत्कण्ठिताया: । दुःखदुःखेन—अतिदुःखेन । ["प्रकारे गुणवचनस्य"(८।१।१२ पा०) इति द्विरुक्तिः । एतेन पितृभवनत्यागे वधूनां दुःखातिशयः व्यज्यते] । पुरोमुखौ—अग्रेसरौ इत्यर्थः ।

(९९) तपोवनविरहकातरा—आश्रमविच्छेददुःखिता । त्वया उपस्थितवियोगस्य—त्वया उपस्थितः सम्प्राप्तः वियोगः यस्य, तादृशस्य तपोवनस्य—अचेतनस्यापि इति भावः । अवस्थां—तव विरहमुत्प्रेक्ष्य कारुण्यमित्यर्थः । [ अनेन चेतनाऽचेतनेषु सर्वेष्वेव स्नेहप्रवणतामस्याः सूचयित्वा त्रिजगद्रमणीललामभूतेयमिति नायिकागतनिरतिशयोत्कर्षः ध्वन्यते ] ।

(१००) तामेव अवस्थां विवृणोति, उद्गीर्णेति ।—मृगी उद्गीर्णः उद्वान्तः [अत्र "उद्गलित" इति पाठे,—चर्वितोऽपि मुखात् निःसारित इत्यर्थः । अत च णिच्प्रत्ययेन दुःखातिशयो ध्वन्यते ] दर्भकवलः कुशग्रासः यया तादृशी, मयूरी परित्यक्तं नर्त्तनं यया तथोक्ता ; तव विरहपर्य्युत्सुकतया मृगी ग्रासं, मयूरी च नृत्यं परित्यजतीत्यर्थः । [अत्र द्वयोः तिर्य्यक्त्वसाम्येऽपि भोजनादिलाभार्थं कृण्वाः नियतं समीपावस्थितेः तस्याः विरहेण भोजनेऽपि अरुचिः जाता, मयूर्य्यास्तु नर्त्तनमात्रे, इति

शकु। [श्रुत्वा।] ताद ! लदावहिणीं दाव माहवीं आमन्तइस्सं। (ख) (१)

कण्वः। वत्से ! अवैमि ते तस्यां सौहार्दम्, इयं सा दक्षिणे पश्य।

शकु। [उपेत्य लताकालिङ्ग्य।] लतावहिणि ! पच्चालिङ्ग मं साहामएहिं बाहुहिं, अज्ज प्पहुदि दूरवत्तिणी क्खु दे भविस्सं। ताद ! अहं विअ इअं तुए चिन्तणीआ। (ग) (२)

कण्वः। वत्से !—

सङ्कल्पितं प्रथममेव मया त्वदर्थं
भर्त्तारमात्मसदृशं स्वगुणैर्गताऽसि।

(ख) तात ! लताभगिनीं तावन्माधवीम् आमन्त्रयिष्ये।

(ग) लताभगिनि ! प्रत्यालिङ्ग मां शाखामयैर्बाहुभिः, अद्य प्रभृति दूरवर्त्तिनी खलु ते भविष्यामि। तात ! अहमिव इयं त्वया चिन्तनीया।

विशेषः अवयवान्वयः] चेतनेषु इयम् अवस्था इति भावः,—लताश्च अचेतना अपीति भावः, अपवृतानि गलितानि पाण्डूनि परिणतानीति भावः, पत्राणि यासां तथाविधाः सत्यः, अश्रु इव वाष्पमिव मुञ्चन्ति त्यजन्ति। पाण्डुपत्रमोचनव्याजेन वाष्पं त्यजन्ति इव इत्यर्थः। [स्त्रीणान्तु विदेशगमने स्त्रीणामेव शोकातिशयः सम्भवतीति मचयितुं सर्व्वत्र स्त्रीलिङ्गनिर्देशः। अनेन वध्वाः पतिगृहगमने पितृकुलजनस्य दुःखातिशयः ध्वन्यते। अत्र 'लताः' इति वचनप्रक्रमभङ्गदोषः विरहकातरोक्ततया वान्वयः। अत्र मृग्यादिषु सखीजनव्यवहारसमारोपात् समासोऽक्तिः, पाण्डुपत्रापगमः वाष्पमोच इव इति सम्भावनामात्रत्वात् उत्प्रेक्षालङ्कारः]। इयं गाथा वृत्तम्। "अत्रानुक्तं गाथा" इति पैङ्गले ॥ १४ ॥

(१) लताभगिनीं—लता एव भगिनी तां भगिनीरूपां लतामित्यर्थः। [अत्र परिणामालङ्कारः प्रकृतोपयोगित्वात्]। आमन्त्रयिष्ये—सम्भाषिष्ये।

(२) शाखामयैः,—विटपरूपैः, बाहुभिः,—करैः। [इति रूपकम्। समुदाये समासोक्तिः बोद्धव्या]। चिन्तनीया—अहमिव द्रष्टव्या इत्यर्थः।

(३) सङ्कल्पितमिति।—मया तपोनिधिना प्रथममेव आदौ एव त्वदर्थं तव

अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्त:
कान्तं समीपसहकारमिमं करिष्ये (३) ॥१५॥

तदित: पन्थानं प्रतिपद्यस्व । (४)

शक । [सख्यावुपेत्य ।] हला ! एसा दोस्रं पि वो हत्थे णिक्खेवो । (घ) (५)

(घ) हला ! एषा द्वयोरपि युवयोर्हस्ते निक्षेप: ।

---

सत्पात्रे अर्पणार्थं सङ्कल्पितं चिन्तितम् ; त्वं स्वगुणै: निजसौन्दर्य्यादिभि: हेतुभि: [अत्र "सुकृतै:" इति पाठे—मम पुण्यै: अथवा तव पूर्वजन्मार्जितपुण्यैरित्यर्थ:, चिन्तितोऽप्यर्थ: पुण्यातिशयादेव फलति इति भाव: ।] आत्मन: सदृशं सौन्दर्य्येण गुणेन वयसा च अनुरूपं भर्त्तारं, (न केवलं तव भरणात्, अपि तु त्रिभुवनभरणात्) पतिं गताऽसि प्राप्ताऽसि । सम्प्रति त्वयि वीतचिन्त: अनुरूपवरलाभात् निश्चिन्त: अहम् इमं समीपसहकारं सन्निहितरमालतरुम् अस्या: तव पुर:स्थिताया: माधवीलताया: कान्तं रम्यं वरं वोढारं करिष्ये । [अत्र उत्तरार्द्धे "चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च सम्प्रति वीतचिन्त:" इति पाठान्तरे—इयं तव पुरोवर्त्तिनी अतिप्रियतमा नवमालिका चूतेन सहकारेण सुकृतै: सुष्ठु कृतै: तव समीपारोपणै: जलसेकादिभिश्च संश्रितवती, अत: अस्यां नवमालिकायाम् अतिस्निग्धत्वात् शकुन्तलाया: सन्तोषविधानार्थम् अस्यामिति प्रथमनिर्द्देश: ; त्वयि च वीतचिन्त: चिन्ताशून्य: । [अत्र च पाठे—उभयो: प्राकरणिकत्वात् तुल्ययोगिता, प्रस्तुते अप्रस्तुतयो: नायकनायिकयो: व्यवहारसमारोपात् समासोक्ति:, यदुक्तं दर्पणे,—"प्रस्तुतेऽन्यस्य वस्तुन:" इति । "वीतचिन्त:" इत्यस्य पूर्वार्द्धवाक्यगतहेतुत्वात् काव्यलिङ्गमपि । समेन समाया: मेलनात् समालङ्कारश्च ; इत्येषां सङ्कर: । अस्मदीय पाठे तु—पूर्वार्द्धे समालङ्कार:, अन्योऽन्य:, काव्यलिङ्गं, प्रस्तुते अप्रस्तुतस्य वस्तुन: व्यवहारसमारोपात् समासोक्तिरपीति एषां सङ्कर: ] । वसन्ततिलकं वृत्तम् ॥ १५ ॥

(४) इत:,—इदानीं, पन्थानं—मार्गं, प्रतिपद्यस्व—अवलम्बस्व ।

(५) एषा—माधवीलतेत्यर्थ: । निक्षेप:—न्यास:, [अत एव परिणामालङ्कार:] ।

सख्यौ। अअं जणो दाणिं कस्स हत्थे समप्पिदो? (ङ) (६)

[ इति बाष्पं विसृजतः ]।

कण्वः। अनसूये! प्रियंवदे! अलं रुदितेन, ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या।

[ इति सर्वे परिक्रामन्ति ]।

शकु। [ विलोक्य। ] ताद! एसा उड़अपज्जन्तचारिणी गब्भभारमन्थरा मिअबहू जदा सुहप्पसवा भविस्सदि, तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि; मा एदं विसुमरिस्ससि। (च) (७)

कण्वः। वत्से! नेदं विस्मरिष्यामि।

शकु। [ गतिभेदं रूपयित्वा। ] अम्मो! को णु क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि? (छ) (८)

[ इति पराहृत्यावलोकयति ]।

(ङ) अयं जन इदानीं कस्य हस्ते समर्पितः?

(च) तात! एषा उटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधूः यदा सुखप्रसवा भविष्यति, तदा मे कमपि प्रियनिवेदकं विसर्जयिष्यसि; मा इदं विस्मरिष्यसि।

(छ) अम्मो! को नु खल्वेष पदाक्रान्त इव मे पुनः पुनः वसनान्ते सज्जते?

(६) शकुन्तलावाक्यमाकर्ण्य जातनिर्वेदे सख्यौ आहतुः, अयं जन इति।—त्वदाश्रयाः तव स्नेहपाशबद्धा वयमभूम, सम्प्रति तव प्रस्थाने कामाश्रयामः? ब्रूहि। इति सख्योरभिप्रायः।

(७) एषा—मदनुवर्त्तिनी, उटजपर्य्यन्तचारिणी—पर्णशालासीम्नि चरणशीला [ शीलार्थे णिनिः। अनेन नियतमस्याः सन्दर्शनात् अतीव प्रियतमेयमिति व्यज्यते]। गर्भभारमन्थरा—गर्भभारेण अलसा। सुखप्रसवा—सुखेन प्रसविष्यते इत्यर्थः। प्रियनिवेदकं—शुभवार्त्तावहं, मे—मह्यं [ क्रियायहणात् चतुर्थी ]। विसर्जयिष्यसि—प्रेरयिष्यसि। [ मम वार्त्ता तु अवश्यमेव त्वया लब्धव्या इति गूढ़ाभिप्रायः ]।

(८) पदाक्रान्त इव—पादलग्न इव, वसनान्ते—वस्त्राञ्चले, सज्जते—लगति। [अत्र नु-खलुभ्यां वितर्को बोद्धव्यः]।

कण्वः। वत्से!--

यस्य त्वया व्रणविरोहणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते (९) ॥१६॥

शकु। वच्छ! किं मं सहवासपरिच्चाइणीं अणुबन्धेसि? णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदोसि तधा दाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि, ता णिउत्तस्स। (ज) (१०)

[ इति रुदती प्रस्थिता ]।

(ज) वत्स! किं मां सहवासपरित्यागिनीमनुबध्नासि? ननु अचिरप्रसूतोपरतया जनन्या विना यथा मया वर्द्धितोऽसि, तथेदानीमपि मया विरहितं तातस्त्वां चिन्तयिष्यति, तन्निवर्त्तस्व।

(९) यस्येति।—त्वया स्नेहार्द्रचित्तया मातृभूतया [ इत्यर्थान्तरसंक्रमितवाच्यध्वनि.] यस्य सन्तानभूतस्य मृगस्य कुशसूचिभिः कुशाग्रैः [अत्र सूचिपदेन वेधनयोग्यताऽतिशयः ध्वन्यते] विद्धे क्षते मुखे व्रणविरोहणं क्षतशोषकम् इङ्गुदीनां तापसतरुफलानां तैलं न्यषिच्यत निषिक्तं, दत्तम् इति यावत्, श्यामाकानां धान्यविशेषाणां मुष्टिभिः मुष्टिगृहीतैः श्यामाकधान्यैरित्यर्थः, [ अत्र मुष्टिपदेन अतिशैशवात् स्वयं गृहीत्वा भोक्तुमसमर्थस्यापि श्यामाकान् मुष्टौ धृत्वा खलु अर्पितवत्यसीति ध्वन्यते ] परिवर्द्धितकः पोषितः [ स्वार्थे कन् ] सः अयं जन्मान आरभ्य अतियत्नेन पुत्रवात्सल्यम् आसाद्य यस्त्वया पोषितः इत्यर्थः, ते तव पुत्रकृतकः कृत्रिमपुत्रः, ["कृतकः स्यात् पुमान् लवणखर्परे चाप्यसम्भवे। पुत्रभेदे कृत्रिमे च त्रिषु—" इति शब्दाब्धिः। आहिताग्न्यादित्वात् परनिपातः] मृगः, पदवीं तव पन्थानं न जहाति न त्यजति, त्वदनुगामी एव भवतीत्यर्थः। मृगस्वभावोक्तिरियम्। [ अत्र पदवीपरित्यागाभावं प्रति पूर्ववाक्यार्थां हेतुत्वात् काव्यलिङ्गमलङ्कारः, स्वभावोक्तिश्च व्यक्ता ]। वसन्ततिलकं वृत्तम् ॥ १६ ॥

(१०) सहवासपरित्यागिनीं—सहवासम् एकत्रावस्थितिं परित्युक्तं शीलमस्याः ताद्दशीम्। [ अनेन अत्यन्तानुसरणायोग्यता ध्वन्यते]। अनुबध्नासि—अनुगच्छसि।

कण्वः । वत्से ! अलं रुदितेन, स्थिरा भव, इतः पन्थानम् आलोकय ।—

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
वाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।
अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति (११) ॥१७॥

शिष्यौ । भगवन् ! ओदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते, तत् इदं सरसीतीरम्, अत्र नः (१२) सन्दिश्य प्रतिगन्तुम् अर्हसि ।

---

अचिरेति ।—अचिरं सद्यः प्रसूता प्रसविनी, उपरता पश्चात् मृता च, तया ; [“पूर्वकाल—” ( २।१।४९ पा० ) इत्यादिना कर्म्मधारयः ]। इदानीमपि—अपिरत्र भिन्नक्रमे, विरहितमपि इत्यर्थः, त्वां तातः—पिता कण्वः, चिन्तयिष्यति—मत्कर्त्तव्यं सर्व्वमेव करिष्यति इत्यर्थः ।

(११) उत्पक्ष्मणोरिति ।—उन्नतं पक्ष्म लोम ययोः तादृशयोः नयनयोः, उपरुद्धा निरुद्धा वृत्तिर्व्यापारः येन, तथाभूतं वाष्पम्, अथवा उपरुद्धा वृत्तिः यस्य तादृशं, तथाच सम्प्रति अक्षिलोमोद्गमात् यस्य अश्रुणः प्रवृत्तिः लोचनान्तर्लीना, अधिकं चेत् क्रन्दसि तदा नूनं सा गलित्वा भूमौ पतिष्यति, ततश्च तव अमङ्गलं भविष्यति, अत एव वाष्पं नेत्रजलं, स्थिरतया धैर्य्यमवलम्ब्येत्यर्थः, शिथिलः ह्रासं गतः अनुबन्धः सातत्यं यस्य तथोक्तं कुरु, मा रुदिहीति भावः। तत्र हेतुमाह,—खलु यतः, अस्मिन् अलक्षितः अदृष्टः, नतोन्नतः बन्धुरः इत्यर्थः, भूमिभागः भूप्रदेशो यस्मिन् तथाभूते मार्गे ते तव पदानि पदनिक्षेपा इत्यर्थः, विषमीभवन्ति स्खलन्ति, त्वं पतिष्यसि इत्यर्थः, गमनकाले अशुभसूचकशब्दप्रयोगे अशुभं स्यादिति विषमपदेनोपात्तम्। [ अत्र पदार्थ-वाक्यार्थहेतुकयोः काव्यलिङ्गयोः संसृष्टिः। न चात्र वाष्पस्य नयनाऽविनाभावात् पुनः नयनपदोपादाने अर्थगतपौनरुक्त्यं शङ्कनीयम् ; उत्पक्ष्मणोरिति विशेषणदानार्थं तदुपादाने पौनरुक्त्यदोषानवकाशात्। तथा चात्र दर्पणादौ—“उवाच मधुरां वाचम्” इति तद्दोषराहित्ये समुदाहृतम्। इति दिक् ]। वसन्ततिलकं वृत्तम् ॥ १७ ॥

(१२) ओदकान्तम्—उदकान्तात् आ ओदकान्तं जलदर्शनपर्य्यन्तमित्यर्थः,

कण्वः। तेन हि इमां चीरवृक्षच्छायाम् (१३) आश्रयामः।

[ सर्वे तथा नाटयन्ति। कण्वः आत्मगतम्। ] किन्नु खलु तत्रभवतो दुष्मन्तस्य युक्तरूपं सन्देष्टव्यम् ? (१४) [ इति चिन्तयति ]।*

[ मर्य्यादायाम् अव्ययीभावः ]। स्निग्धः,—स्नेहास्पदीभूतः जनः, अनुगम्यते—अनुस्रियते। इति श्रूयते—श्रुतेः वेदात् अवगम्यते इत्यर्थः। तथा च श्रुतिः—"ओदकान्तं प्रियं प्रोथमनुव्रजेत्" इति। नः,—अस्मान्, सन्दिश्य—आदिश्य।

(१३) चीरवृक्षच्छायां—चीरप्रधानो वृक्षः चीरवृक्षः [ शाकपार्थिववत् समासः। ] वटतरुरित्यर्थः, तस्य छाया ताम्। [अत्र यद्यपि चीरवृक्षपदेन उदुम्बरादयोऽपि अभिधीयन्ते, तथापि ग्रीष्मसमयोचितत्वात् छायाबाहुल्यार्थं वटतरुरेव प्रत्याय्यते, औचित्यस्यापि विशेषतात्पर्य्यग्राहकत्वात्। ]

(१४) वाचिकार्थमध्येषितः शिष्येण कण्वोऽसौ राज्ञः दुष्मन्तस्यानुरूपं सन्देष्टुं सवितर्कमाह, किन्नु इति।—किन्नु—वितर्के "किन्नु प्रश्नवितर्कयोः" इति मेदिनी। तत्रभवतः,—मान्यस्य दुष्मन्तस्य। [अत्र नामग्रहणेन चन्द्रवंशप्रभवत्वादिरूपमाभिजात्यं शौर्य्यधैर्य्यादिगुणभूयिष्ठत्वञ्च व्यज्यते। ] युक्तरूपं—प्रशस्तं युक्तं [ प्रशंसायां रूपप्-प्रत्ययः ] अनुरूपमित्यर्थः। सन्देष्टव्यं—वाचिकं प्रेषयितव्यमित्यर्थः।

* इतः परं मुम्बय्यादिमुद्रितपुस्तकेषु "सखि" इत्यारभ्य "चक्राङ्कः" इत्यन्तं यावत् अनसूयोक्तिस्थाने एवंविधं पाठान्तरं दृश्यते। तत् इह प्रदर्श्यते सव्याख्यानमस्माभिः। तद्यथा,—

"शकु। [ जनान्तिकम् ]। हला पेक्ख। णलिणीपत्तन्तरिदं वि सहअरं अदेक्खन्ती आदुरा चक्कवाई आरडदि दुक्करं अहं करेमि त्ति।

अन। सहि, मा एव्वं मन्तेहि।

एसा वि पिएण विणा गमेइ रअणिं विसाअदीहअरं।

गुरुअं वि विरहदुक्खं आसाबन्धो सहावेदि॥" इति।

एषां संस्कृतं यथा,—

"शकु। हला ! प्रेक्षस्व। नलिनीपत्रान्तरितमपि सहचरम् अपश्यन्ती आतुरा चक्रवाकी आरटति, दुष्करमहं करोमीति।

अन। सखि ! मैवं मन्त्रयस्व।

एषापि प्रियेण विना गमयति रजनीं विषाददीर्घतराम्।

गुर्व्वपि विरहदुःखम् आशाबन्धः साहयति॥" इति।

अन। सहि! अस्समपदे ण अत्थि को वि चित्तवन्तो जो तुए विरहिज्जन्तो ण ताम्मदि, (१५) पेक्ख दाव। (झ)—

पुड़इणिवत्तन्तरिश्रं वाहरिश्रो वि ण वाहरेइ पिश्रं।
मुह उव्वूढ़मिणालो तइ दिट्ठिं देइ चक्काहो (ञ) (१६)॥१८॥

(झ) सखि! आश्रमपदे नास्ति कोऽपि चित्तवान् यः त्वया विरह्यमाणो न ताम्यति, प्रेक्षस्व तावत्।—

(ञ) पुटकिनीपत्रान्तरितां व्याहृतोऽपि न हि व्याहरति प्रियाम्।
मुख उदव्यूढमृणालस्त्वयि दृष्टिं ददाति चक्राह्वः॥ १६॥

अत्रेदं व्याख्यानम्।—अत्र शकुन्तलावाक्यस्य अयमर्थः,—नलिनीपत्ररूपसामान्य-व्यवधाने सत्यपि इयं चक्रवाकी प्रियम् अनवलोकयमानाऽपि व्याकुलीभूता, मया तु प्रियेण चिरं विरहिता सती इदानीमपि जीवामि ; अतो दुष्करं कृतमिति। अनसूया तु वक्रोक्तिचातुर्य्येण शकुन्तलां प्रबोधयति।—सखि! यथा त्वमात्थ, इयं तथा नारटति। किं तत् ; इत्याह,—एषाऽपि चक्रवाकी प्रियेण विना विषादेन दीर्घतरां रजनीं गमयति यापयति। न केवलं त्वम् एकाकिनी रजनीं यापितवती, अहमपि तथा। [ इत्यपिशब्दार्थः ]। तदेव अर्थान्तरन्यासेन आह,—आशाया बन्धः बन्धनं, प्रियसमागमाशाधारणमित्यर्थः, गुर्व्वपि असह्यमपि इत्यर्थः, विरहदुःखं साहयति सह्यवेदनं करोति इत्यर्थः ; अतः यथाऽहम् आशाबन्धनात् प्रतिरात्रं प्रियविरहिताऽपि प्रातः प्रातः प्रियेण संगच्छे, तथा त्वमपि प्रियसमागमाशां हृदये धारय, चिरविरहात् प्रियेण सङ्गत्य सुखम् अनुभविष्यसि इति भावः। इयं गाथा।

(१५) चित्तवान्—सचेताः प्राणीत्यर्थः। विरह्यमाणः,—सन्त्यज्यमानः, न ताम्यति—न क्लाम्यति, न कातरी भवतीत्यर्थः ; सर्व्वमेव सत्त्वं व्याकुलं जातमिति भावः। [अनेन सर्व्वजनप्रियत्वं ध्वन्यते]।

(१६) तदेव दर्शयति, पुटकिनीति।—चक्राह्वः चक्र इति आह्वा आख्या यस्य तथोक्तः, चक्रवाक इत्यर्थः, व्याहृतोऽपि उक्तोऽपि प्रिययेति शेषः, [ अनेन आलापयोग्यतातिशयः व्यज्यते] पुटकिन्याः पद्मिन्याः पत्रैः अन्तरितां व्यवहितां (सन्निहितां, न तु दूरस्थितामिति भावः) [अनेनापि सम्भाषणस्य योग्यतातिशयः ध्वन्यते ] तथापि प्रियां प्रणयसर्व्वस्वभूतां स्वभार्य्यां चक्रवाकीं न व्याहरति नालपति, दूरमास्तां मिलनस्य कथा, आलापमपि न करोति इत्यर्थः। ननु "सर्वं हन्ति

कण्वः। वत्स शार्ङ्गरव! इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः। (१७)—

शार्ङ्ग। आज्ञापयतु भवान्।

कण्वः। अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-
स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम्।

---

बुभुक्षया" इत्युक्तेः बुभुक्षैवात्र आलापप्रतिबन्धिका, न तु मम विरहः, इत्याह—मुखे उद्व्यूढं धृतं मृणालं येन तथाभूतः सन्, त्वयि दृष्टिं ददाति, न तु भक्षयतीत्यर्थः, "क्षुधा चेत् प्रतिबन्धिका तदा कथं न भक्षयति?" इति भावः। किञ्च "प्रियया व्याहृतोऽपि प्रियां न व्याहरति" इति कथनात् "व्याकुलीभूतया शकुन्तलया नाना-प्रकारेण परिबोध्यमानोऽपि तत्प्रियः तां न व्याहरिष्यति, किन्तु प्रत्याख्यास्यति" इति अर्थान्तरमपि गम्यते। इति दिक्। [यात्राकाले चक्रवाकरूपशुभशकुनसन्दर्शनात् अदृष्टपूर्वराजसभां गतस्य अतुलैश्वर्य्ययुक्तस्य स्वामिनः सन्दर्शनरूपं सौभाग्यं व्यज्यते, तथा भक्षणार्थं धृतस्य मृणालस्य अभक्षणाकरणपूर्वकम् एकाग्रचित्तेन शकुन्तलायां दृष्टि-दानात् तत्पतिकर्त्तृकपरित्यागरूपं भविष्यत् अमङ्गलमपि व्यज्यते]। इयं गाथा ॥१८॥

(१७) मद्वचनात्—मम वाक्यमाश्रित्य। [ल्यब्लोपे पञ्चमी]। पुरस्कृत्य—अग्रे कृत्वा। अभिधातव्यः,—वक्तव्यः।

(१८) राज्ञः अनुरूपं वाचिकमाह, अस्मानिति।—अस्मान् संयम एव धनं येषां तान्, तपोधनान् इत्यर्थः। [एतेन "तपोधनानाम् अस्माकम् आदिष्टस्य अनङ्गी-कारे भयम्, अङ्गीकारे च अनुग्रहः" इति "कन्यायाः पतिगृहप्रेषणकाले बहुधनादि-यौतुकदानं क्रियते, इति लोकसमाचारः, अस्माकन्तु तपोमात्रधनत्वात् तदसङ्गतिः" इति च सूचितम्] आत्मनः स्वस्य उच्चैः महत् कुलं वंशञ्च पूरुवंशस्य महा-महिमत्वेन तव कलङ्को नापतेदिति भावः। अस्याः शकुन्तलायाः त्वयि [अत्र तव अस्यामित्यनुक्त्वा "अस्याः त्वयि" इति कथनेन भवद्दर्शनादारभ्य अस्या एव प्रतिक्षणमनु-रागः समुपचीयमानः वर्त्तते इति सूचितम्] अबान्धवकृतां बान्धवैः पित्रादिभिः कथमपि न, स्वयं वाक्यप्रयोगेण न वा अपरेङ्गितादिना इत्यर्थः, अकृतां स्वयं गान्धर्व-विधिना कृतामिति भावः; [अत्र स्नेहप्रवृत्तेः प्रयत्नेन अन्यकर्त्तृकतां प्रतिषिध्य तस्याः स्थायित्वञ्च सूचयित्वा कोऽपि अलौकिकचमत्कारातिशयः ध्वन्यते] तां तादृशीम् इत्यर्थः, स्नेहप्रवृत्तिं प्रणयप्रवाहम्, अनुरागाधिक्यमित्यर्थः, ("प्रवृत्तिः कथिता क्वचौ

सामान्यप्रतिपत्तिपूर्वकमियं दारेषु दृश्या त्वया,
भाग्याधीनमतः परं न खलु तत् स्त्रीबन्धुभिर्याच्यते (१८)॥१८॥

शार्ङ्ग। गृहीतोऽयं सन्देशः ।

कण्वः। [शकुन्तलां विलोक्य।] वत्से ! त्वम् इदानीम् अनुशासनीयाऽसि, वनौकसोऽपि वयं लौकिकज्ञा एव । (१९)

प्रवार्हीढनर्योरपि" इति विश्वः) साधु सम्यक् विचिन्त्य विचार्य्य त्वया [सकलगुणसम्पन्नेन धार्म्मिकेण तादृशाभिजातेन इत्यर्थान्तरितवाच्यता] इयं शकुन्तला दारेषु भार्य्यासु मध्ये [दारेषु इति बहुवचनेन अस्मानित्यादि उपदेशसार्थक्यं सुतराम् उपयुज्यत इति मन्तव्यम्] सामान्यप्रतिपत्तिपूर्वकं समानत्वबोधपूर्वकं साधारणज्ञानेन इत्यर्थः, अथवा सामान्या साधारणी या प्रतिपत्तिः गौरवं तत्पूर्वकं ("प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । सम्प्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ॥" इति मेदिनी।) यथा अन्या भार्य्या दृश्यते तथेति भावः, दृश्या ज्ञातव्या, पालनीयेति भावः, न तु कर्त्तव्या, अस्माकं तव नियोगासम्भवात्। "ननु ईदृशे अनुरागे कथं सामान्यप्रतिपत्तिपूर्वकदर्शनमात्रं भवता इत्युच्यते ?" इत्याह, भाग्याधीनमिति ।—अतः परम् अस्मात् अधिकम् अधिकसम्मानमिति यावत्, भाग्याधीनं शुभादृष्टायत्तम्; यदि अस्याः शुभादृष्टं स्यात् तदा बहुमता भविष्यतीति भावः । ननु "भाग्यं विना भवादृशस्य मुनेर्वाक्यात् एतत् भवितुमर्हति," इत्यत आह, न खल्विति ।—तत् अधिकसम्मानमित्यर्थः स्त्रीबन्धुभिः स्त्रियाः पित्रादिभिः न खलु नैव याच्यते प्रार्थ्यते । वयमपि बधूबान्धवः, अस्माभिः तस्मिन् उच्यमाने पक्षपातितादोषेण उपदेशस्य औदासीन्यं सम्पद्येत इति भावः; अथवा—अतः परं महिषीत्वादिकं भाग्याधीनं, तत् बधूबन्धुभिः न याच्यते; न हि वचनमात्रेण किमपि सम्भवति इति भावः । [अनेन श्लोकेन सर्वसमदर्शित्वमस्य सूचितम् । अत्र मया इत्यनुक्त्वा बधूबन्धुभिरिति सामान्येन कथनात् अप्रस्तुतप्रशंसा काव्यलिङ्गञ्च] । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

(१९) शिष्यद्वारेण राजानमुपदिश्य स्वसुतायां "प्रतिकूलगामिन्यां तत् सर्वं विफलम्" इति मत्वा, तामपि उपदेष्टुं प्रथमतः भूमिकामाचरति, वत्से ! इति ।—त्वं सच्चरित्रा अपि अज्ञातबधूसमाचारा; तत् इदानीं नृपोपदेशानन्तरम् अनुशासनीया—उपदेष्टव्या । ननु "नैष्ठिकब्रह्मचारिणः अदृष्टबधूजनसमयस्य भवतः कथं बधूजनोपदेशयोग्यता सम्भवति ?" इत्यत आह, वनौकसोऽपीति ।—वनौकसः,—

शार्ङ्ग । भगवन्! न खलु कश्चित् अविषयो नाम धीमताम्। (२०)

कण्वः। सा त्वम् (२१) इतः पतिगृहं प्राप्य,—

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः।
भूयिष्ठं भव दक्षिणा परिजने, भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः (२२)॥२०॥

वनवासिनः; जन्मारभ्य वनवासेन लोकाचारम् अपश्यन्तोऽपि इत्यर्थः। ['वयम्' इति बहुवचनेन सकलशास्त्रपारदर्शित्व-सर्वज्ञत्वादिरूप-बहुतरगौरवमात्मनि सूचितम्, अत एव "अहम्" इति नोक्तम्। लौकिकज्ञाः—लौकिकाचारविदः।

(२०) शिष्यजनोचितां गुरोरनुवृत्तिं कुर्वन्नाह, न खलु इति।—नैव इत्यर्थः, कश्चित्—कोऽपि, अविषयः—अगोचरः। नाम इति सम्भावनायाम्। धीमतां—बुद्धिमताम्। [अत्र शिष्यवाक्येन गुरोर्वाक्यसमर्थनात् अर्थान्तरन्यासः]।

(२१) उपदेशमाह, सेति।—सा त्वं—या खलु ममाश्रमे स्वच्छन्दचारिणी, सा त्वमित्यर्थः,—सेत्यादि पदकदम्बकस्य श्लोकेनान्वयः।

(२२) शुश्रूषस्वेति।—गुरून् पूज्यान् जनान् श्वशुरादीन् शुश्रूषस्व सेवस्व [ श्रृणोतेः सन्नन्तात् "ज्ञाश्रुस्मृदृशां सनः" ( १।३।५७ पा० ) इति आत्मनेपदम् ] सपत्नीजने समानः पतिः यस्याः सा एव जनः तस्मिन् [ "नित्यं सपत्न्यादिषु" ( ४।१।३५ पा० ) इति निपातनात् ङीप्, नः, समानस्य सादेशश्च। ] प्रियसखीवृत्तिं प्रियवयस्याव्यवहारं कुरु। विप्रकृताऽपि क्रोधिताऽपि अपमानिताऽपि वा (आहृता चेत् किमु वक्तव्यमित्यपिशब्दार्थः) भर्त्त्रेति शेषः, रोषणतया कोपनया भर्त्तुः प्रतीपं पराङ्मुखत्वं प्रतिकूलतामित्यर्थः, मा स्म गमः न गच्छ, प्रतिकूलवर्त्तिनी मा भवेत्यर्थः। [ "न माङ्योगे" ( ६।४।७४ पा० ) इत्यड़ागमनिषेधः ] परिजने पोष्यवर्गे, भूयिष्ठम् अत्यर्थं दक्षिणा सरला, उदाराशया इत्यर्थः, भव, तथा भोगेषु सुखसम्पदां लाभेषु इत्यर्थः, अनुत्सेकिनी अगर्विणी भवेति शेषः। अथवा—भोगेषु विषयजसुखेषु अनुत्सेकिनी उत्साहाभाववती अगर्विता वा सती परिजने दक्षिणा भव इति पूर्वेणान्वयः। आजन्मवनवासिन्याः सहजदरिद्रायाः तादृशं सार्वभौमैश्वर्य्यं प्राप्य अभिमानस्य सुतरां सम्भवात् इति भावः। [अत्र "भाग्येषु" इति पाठे,—भाग्येषु सपत्न्यादेरदृष्टेषु अनुत्सेकिनी अनुत्साहिनी भव, इति पूर्वेणान्वयः;—"अस्याः भाग्यसदृशं भाग्यं मम

गौतमी वा किं मन्यते ? (२३)

गौत। एत्तिओ क्खु बहूजणे उवदेसो। जादे! एदं क्खु हिअए करेहि, मा विसुमरिस्ससि। (ट) (२४)

कण्वः। वत्से! एहि परिष्वजस्व मां सखीजनञ्च।

शकु। ताद! इदो ज्जेव किं पिअसहीओ णिवत्तिस्सन्ति ? (ठ) (२५)

---

(ट) एतावान् खलु वधूजने उपदेशः। जाते! एतत् खलु हृदये कुरु, मा विस्मरिष्यसि।

(ठ) तात! इत एव किं प्रियसख्यौ निवर्त्तिष्येते ?

नास्ति" इति दुःखं न कार्य्यमित्यर्थः। अथवा—भाग्येषु निजेषु अनुत्सेकिनी अगर्विता भव; 'मम ईदृशं भाग्यम्' इति गर्वो न कार्य्यः। ] एवं सति इत्थमनुष्ठिते, युवतयः तरुण्यः, न केवलं त्वमपि तु स्त्रीमात्रम् इति यावत्, गृहिणीपदं गृहिण्याः पदं स्थानम्, अथवा—गृहिणीति पदम् अधिकारं यान्ति लभन्ते, वामाः एतत्प्रतिकूलवर्त्तिन्य इत्यर्थः, कुलस्य पितृश्वशुरवंशयोः इत्यर्थः, आधयः मनस्तापकारिण्यः मनःपीड़ा इव भवन्तीति शेषः। ("पुंस्याधिर्मानसी व्यथा" इत्यमरः।) [अत्र "वामा युवतयः" "कुलस्याधयः" इति रूपकम्, अर्थान्तरन्यासश्च। अनेन उपदेशकनामकं नाटकलक्षणम् उपन्यस्तम्। यदाह दर्पणे,—"उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः" इति। अयमत्र कविसर्वस्वभूतः तुरीयः श्लोकः। अनेन च गुरुषु भक्तिः, समानेषु प्रेम, अवरेषु स्नेहः, सर्वत्र अगर्विता च रमणीनां गृहिणीपदकामानाम् आवश्यकमिति जगद् विज्ञापितं कण्वमुखेन कविना ]। शार्दूलविक्रीड़ितं वृत्तम्॥ २०॥

(२३) 'स्त्रियामुपदेशः स्त्रीणामभिमतः चेत् शोभते' इत्यतः गौतमीं परिज्ञातबहुवृत्तान्तां पृच्छन्नाह, गौतमीति।—मन्यते—वक्ति इत्यर्थः। [अनेन प्रश्नेन सर्वज्ञकल्पस्य मुनेः परमौदार्य्यं व्यञ्जितम्]।

(२४) जिज्ञासिता स्वाभिप्रायमाह, एतावानिति।—एतन्मात्र इत्यर्थः, [प्रमाणे डवतुप्रत्ययः, ततः स्वार्थे मात्रच्] इतोऽतिरिक्तः नववधूषु उपदेशो नास्ति इत्यर्थः।

(२५) इतः पूर्वं खलु सह समागमेन सख्योः राजधानीगमनमभ्यत, सम्प्रति पितुः विसर्ज्जनोचितालिङ्गनकथाश्रवणेन सहसा उद्भ्रान्ता तटस्थतामाह, इत इति।—इत एव—अस्मात् स्थानादेव, 'न तु राजधानीं मया सह गमिष्यतः' इत्यभिप्रायः। निवर्त्तिष्येते—तपोवनं प्रत्यावर्त्तिष्येते ? इत्यर्थः।

कण्वः । वत्से ! इमे अपि प्रदेये, तन्न युक्तम् अनयोः तत्र गन्तुं ; (२६) त्वया सह गौतमी गमिष्यति ।

शकु । [पितुरङ्कमाश्रित्य ।] कधं दाणिं तादस्स अङ्कादो परिब्भट्टा मलअपव्वदादो उम्मूलिदा चन्दणलदा विअ देसन्तरे जीविदं धारइस्सं ! (ड) (२७)

कण्वः । वत्से ! किम् एवं कातराऽसि ?—

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।

---

(ड) कथमिदानीं तातस्य अङ्कात् परिभ्रष्टा मलयपर्वतादुन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि !

---

(२६) सखीविरहमुत्प्रेक्ष्य व्याकुला भविष्यति, इति प्रबोधयितुं सयुक्तिकं प्रतिवक्ति, वत्से इति ।—इमे—तव सहचरीभूते कन्यके, प्रदेये—प्रदातव्ये, त्वमिव इति अपिशब्दार्थः । अनयोः,—तव सख्योरित्यर्थः, तत्र—राजधान्यां, गन्तुं न युक्तं—न उचितम् ; अपरिणतवयस्कत्वेन दोषसम्भवादिति भावः ।

(२७) अङ्कम्—उत्सङ्गम् । "उत्सङ्गचिह्नयोरङ्कः" इत्यमरः । परिभ्रष्टा—विच्युता, मलयपर्वतात्—मलयाचलात्, उन्मूलिता—उत्पाटिता, चन्दनलतेव—चन्दनतरुरिव [ इत्युपमालङ्कारः ] । देशान्तरे—भिन्नदेशे, जीवितं धारयिष्यामि—जीविष्यामि इत्यर्थः । [अनया खलु उपमया राजधानीस्थितेः बहुमानिताया अपि पितृवियोगाविस्मरणं ध्वन्यते ] ।

(२८) "किमेवं कातराऽसि" इति यदुक्तं, तत्र कारणं प्रदर्शयन्नाह, अभिजनवत इति ।—हे वत्से ! त्वम् अभिजनवतः अभिजनः कुलम् ( "अभिजनान्वयौ" इत्यमरः ) तद्वतः [ प्रशंसायां मतुप् । एतेन दयादानदाक्षिण्यधर्मभीरुत्वादिधर्मशतं ध्वन्यते । ] महाकुलीनस्य, अथवा—अभितो जनाः अभिजनाः, तद्वतः बहुस्वजनवतः । [ अनेन बहुस्वजनकार्यचिन्तया गृहिणीगतः अतिशयो ध्वन्यते ।] भर्त्तुः न केवलं तव भरणात्, अपि तु विश्वभरणात् विश्वपालयितुः [ अनेनापि गृहिणीगतातिशयः व्यज्यते] स्वामिनः श्लाघ्ये प्रशस्ते गृहिणीपदे—गृहिण्याः पदं तस्मिन् गृहिणीस्थाने गृहिणीलक्षणाधिकारे वा, महिषीपदे इत्यर्थः, स्थिता चाञ्चल्यनिवृत्त्या स्थिरीभूता इत्यर्थः । ततः

तनयमचिरात् प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि (२८) ॥२१॥

शकु। [पितुः पादयोः पतित्वा।] ताद ! वन्दामि। (ढ)

कण्वः। वत्से ! यत् अहम् इच्छामि, तदस्तु ते। (२९)

शकु। [सख्यावुपगम्य।] सहीओ ! एध, दुवे वि मं समं ज्जेव परिस्सजध। (ण) (३०)

---

(ढ) तात वन्दे।

(ण) सख्यौ ! एतं, द्वे अपि मां सममेव परिष्वजेथाम्।

किम् ? तवाह, विभवेति।—अस्य भर्त्तुः विभवेन सम्पदा गुरुभिः महद्भिः [अनेन कृत्यानाम् अनन्यनिर्वाहकत्वं सूचितम्] कृत्यैः नित्यनैमित्तिककाम्यैः कर्मभिः प्रतिक्षणं सततम् आकुला व्यस्ता सती, [अथवा प्रतिक्षणमिति कृत्यैरित्यस्य विशेषणं, अस्मिन् पक्षे प्रतिक्षणमित्यनेन कृत्यैरिति बहुवचनेन च तादृशबहुव्ययसाध्यकृत्यानाम् अन्यतमेनैव व्याकुला भविष्यसीति ध्वन्यते] अचिरात् अविलम्बेन प्राची पूर्वा दिक् पावयतीति पावनं जगत्पवित्रकरम्, अर्कमिव सूर्य्यमिव, (तन्नामग्रहणेन अन्येऽपि पूता भविष्यन्ति इत्यभिप्रायः) तनयं प्रसूय जनयित्वा च [अत्र अर्कोपम्येण अलौकिकतेजस्वित्वम् असामान्यपौरुषत्वं जगत्त्रयगीयमानकीर्त्तिमत्त्वम्, अत एव द्वादशमण्डलाधिपत्वञ्च ध्वन्यते।] मम विरहजां मद्वियोगजनितां शुचं शोकं न गणयिष्यसि न चिन्तयिष्यसि, मां न स्मरिष्यसीत्यर्थः; गृहकार्य्यव्यग्रतया त्वया शोकः न स्मरणीय इति भावः। [अत्र उपमाऽलङ्कारः, तथा चतुर्थचरणवाक्यार्थं प्रति तत्पूर्ववाक्यजातस्य हेतुत्वेन काव्यलिङ्गं, समुच्चयश्च, इत्यङ्गाङ्गित्वम्]। हरिणी वृत्तम्,—"नसमरसला गः षड्वेदैर्हयैर्हरिणी मता" इति लक्षणात्। सप्तदशाक्षर-पादकेषु हरिणी हि द्वासप्तत्यधिक-षट्सहस्रान्वित-पञ्चचत्वारिंशत्सहस्रतमस्य प्रस्तारस्य अन्तर्भूता ॥ २१ ॥

(२९) एकस्य प्रार्थने अन्यदवशिष्यते इति जीवितसर्वस्वभूतायाः शकुन्तलायाः आशीर्वादार्थं युगपत् सर्वमेव आशास्ते, वत्से ! इति।—यदहमिच्छामि तत् ते अस्तु इति योजना। सर्वमभीष्टं तव भवतु इत्यर्थः।

(३०) एकस्याः कदाचित् सम्भवेऽपि द्वयोः पुनः आलिङ्गनं युगपदसम्भावीति मत्वा आह, सख्यौ इति।—समं—युगपद्, परिष्वजेथाम्—आलिङ्गतम्।

सख्यौ। [तथा कृत्वा।] सहि! जइ णाम सो राएसी पच्चहिण्णाणमन्थरो (३१) भवे, तदो से इमं अत्तणो णामधेअङ्किदं अङ्गुलीअअं दंसइस्ससि। (त)

शकु। इमिणा वो सन्देसेण कम्पिदं मे हिअअं। (थ)

सख्यौ। सहि! मा भाआहि, सिणेहो पावमासङ्कदि। (द) (३२)

शार्ङ्ग। भगवन्! दूरम् अधिरूढः सविता, तत् त्वरय अत्रभवतीम्। (३३)

शकु। [भूयः पितुरङ्कमाश्लिष्य, आश्रमाभिमुखीभूय च।] ताद! कदा णु क्खु भूओ तवोवणं पेक्खिस्सं? (ध) (३४)

(त) सखि! यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत्, तदाऽस्य इदमात्मनो नामधेयाङ्कितमङ्गुरीयकं दर्शयिष्यसि।

(थ) अनेन वां सन्देशेन कम्पितं मे हृदयम्।

(द) सखि! मा बिभीहि, स्नेहः पापमाशङ्कते।

(ध) तात! कदा नु खलु भूयस्तपोवनं प्रेक्षिष्ये?

---

(३१) प्रत्यभिज्ञानमन्थरः—शकुन्तलेयमिति ज्ञाने मन्थरः शिथिलः, झटित्येताहृग्ज्ञानरहित इत्यर्थः।

(३२) पापम्—अनिष्टम्। आशङ्कते—मन्यते; वैरिणः मनसि यद्भीरेति स्निग्धस्य सहसा एव तदाविर्भवति इति सर्वत्र प्रसिद्धिः।

(३३) साक्षात् गुरुं प्रतिषेद्धुमन्याय्यमिति भक्त्या आह, भगवन्निति।—दूरं दूरस्थितं व्योम अधिरूढः आक्रान्तवान्। [अत्र "युगान्तरमारूढः" इति पाठे,—युगान्तरं हस्तचतुष्कावधि "युगं हस्तचतुष्केऽपि" इति विश्वः; प्रहराधिका वेला वर्त्तते इत्यर्थः। त्वरय—सत्वरं प्रेरय। मित्त्वात् ह्रस्वः]।

(३४) नु—प्रश्ने, खलु—निश्चितं, भूयः,—पुनः, तपोवनं प्रेक्षिष्ये—द्रक्ष्यामि; पतिगृहगमनकाले कन्यास्वभावोक्तिः।

कण्वः । वत्से !—

भूत्वा चिराय सदिगन्तमहीसपत्नी
दौष्मन्तिमप्रतिरथं तनयं प्रसूय ।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन् (३५) ॥२२॥

गौत । जादे ! परिहीअदि दे गमणवेला, ता णिउत्तावेहि

(३५) भूत्वेति ।—चिराय चिरकालं व्याप्य सदिगन्ता दिगन्तसहिता या मही पृथिवी तस्याः सपत्नी समभर्तृका [सदिगन्तमहीशपत्नीति पाठे—सदिगन्तमह्या ईशः पतिः तस्य पत्नीत्यर्थः ; तथा "चतुरन्तमहीसपत्नी" इति पाठान्तरे,—चत्वारः समुद्राः "विशेषणेनैव विशेष्यप्रतिपत्तिः" इति नियमेन समुद्रपदार्थलाभः, अन्तः यस्याः तस्याः मह्याः सपत्नी इत्यर्थः, आसमुद्रक्षितिवलयोपभोगसुखमुपभुज्य इत्यर्थः । अत्र सपत्नी-ग्रहणेन मातृत्वं सूचितम् । ] भूत्वा, नास्ति प्रतिरथः प्रतिवीरः यस्य तादृशं, दुष्मन्तस्य अपत्यं पुमान् दौष्मन्तिः, तम् [अनेन विशेषणद्वयेन भूभारधारणक्षमत्वं ध्वन्यते ] तनयं पुत्रं प्रसूय उत्पाद्य ["प्रसूय" इत्यत्र "निवेश्य" इति पाठे,—स्थापयित्वा महीसपत्न्या-मित्यर्थः । यद्यपि सा सपत्नी, तथापि त्वयि तत्र सत्यामेव तस्याः सपत्नभावः ; त्वया समर्पिते तु तन्नाप्नोतीति भावः।] तस्मिन् पुत्रे सन्निवेशिता सन्निहिता धूः राज्यभारो येन तथोक्तेन, ("धूः स्त्री स्याद् भारचिन्तयोः" इत्यमरः) [ "ऋक्पूरब्धूःपथामानक्षे" (५।४।७४ पा०) इति समासान्तः अप्रत्ययः । अत्र "भर्त्रा तदर्पितकुटुम्बभरेण सार्द्धं" इति पाठे,—अर्थस्तु सुगमः । ] भर्त्रा पत्या सहैव, न तु एकाकिन्येति एवकारार्थः । शान्ते अस्मिन् आश्रमे पुनः पदं स्थानं, स्थितिमित्यर्थः, करिष्यसि ; अथवा शान्ते चरमे वयसि इत्यर्थः, तत् तु प्रकरणात् गम्यते । पुनः भूयः अस्मिन् आश्रमे वने इत्यर्थः, पदं स्थानं करिष्यसि ; "पञ्चाशोर्द्ध्वं वनं व्रजेत्" इति स्मरणादिति भावः। ["शान्त्यै" इति पाठे—शान्त्यै—शान्त्यर्थम् इत्यर्थः । "प्रसूय" इत्यत्र "निवेश्य" इति पदसम्ब-लितपाठे,—तस्यां महीसपत्नीत्वं, तस्यां तन्निवेशनं, तत्र च भारनिवेशनमिति माला-दीपकालङ्कृतिः ]। वसन्ततिलकं वृत्तम् ॥ २२ ॥

(३६) धर्म्मभीरुरियं गौतमी कण्वस्य तपोऽनुष्ठानवेलामतिक्रान्तामवलोक्य व्याजेन तं निवर्त्तयितुमाह, जाते इति ।—परिहीयते—अतिक्रामति । [परिपूर्व्वकहाधातोः

पिदरं, अधवा चिरेण वि एसा ण णिउत्तइस्सदि, (३६) ता णिउत्तदु भवं। (न)

कण्वः। वत्से! उपरुध्यते (३७) मे तपोऽनुष्ठानम्।

शकु। तपच्चरणबावारेण निरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता। (प) (३८)

कण्वः। वत्से! माम् एवं जड़ीकरोषि! (३९) [निश्वस्य।]—

अपयास्यति मे शोकः कथं नु वत्से! त्वया रचितपूर्वम्।
उटजद्वारविरूढं नीवारवलिं विलोकयतः? (४०) ॥२३॥

(न) जाते! परिहीयते ते गमनवेला, तन्निवर्त्तय पितरम्, अथवा चिरेण अपि एषा न निवर्त्तयिष्यति, तन्निवर्त्ततां भवान्।

(प) तपश्चरणव्यापारेण निरुत्कण्ठस्तातः, अहं पुनरुत्कण्ठाभागिनी संवृत्ता।

कर्म्मकर्त्तरि लट्]। कन्यया विशेषतः पतिगृहं प्रस्थितया पितरं निवर्त्तयितुम् अशुभकमिति प्रागुक्तमाक्षिप्याह, अथवेति।—चिरेणापि—दीर्घकालेनापि, न निवर्त्तयिष्यति—न हि काऽपि पितृवत्सला पितरं निवर्त्तयितुं शक्नोति इत्यर्थः।

(३७) उपरुध्यते—परिहीयते इत्यर्थः।

(३८) तपश्चरणव्यापारेण—तपोऽनुष्ठानादिकर्म्मणा। निरुत्कण्ठः,—उत्कण्ठा-रहितः, उत्कण्ठाभागिनी—तव विरहेण सोत्कण्ठा इत्यर्थः। [अत्र पुस्तकान्तरे— "[भूयः पितरमाश्लिष्य] तवच्चरणपीड़िदं तादसरीरं। ता मा अदिमेत्तं मम किदे उक्कण्ठिदुं" इति पाठान्तरमस्ति। तत्र—"तपश्चरणपीड़ितं तातशरीरम्। तन्माऽति-मात्रं मम कृते उत्कण्ठितुम्" इति (सं)। तपोऽनुष्ठानेनैव अतिपीड़ितं तव शरीरं, तस्मात् मम निमित्तं पुनः उत्कण्ठां मा कुरु इत्यर्थः]।

(३९) जड़ीकरोषि—जड़तामापादयसि, जाड्येन मां योजयसीत्यर्थः।

(४०) अपयास्यतीति।—नु इति सम्बोधनसूचकमव्ययम्। हे वत्से! त्वया सकलगुणवत्या मम हृदयसर्व्वस्वभूतया इत्यर्थः। रचितपूर्वं पूर्वं रचितं विन्यस्तं पक्षिणामाहारार्थमिति भावः, सम्प्रति उटजस्य कुटीरस्य द्वारे विरूढं जातम् अङ्कुरितमिति यावत् ("विरूढोऽङ्कुरिते जाते" इति मेदिनी) नीवारवलिं नीवार-रूपं पूजोपकरणं विलोकयतः, मे मम कण्वस्य आजन्म त्वत्कृतपालनस्य इत्यर्थः,

गच्छ शिवास्ते सन्तु पन्थानः। (४१)

[ इति निष्क्रान्ताः शकुन्तलया सह गौतमी-शार्ङ्गरव-शारद्वतमिश्राः ]।

सख्यौ। [ चिरं विचिन्त्य सकरुणम्। ] हद्धी हद्धी! अन्तरिदा सउन्तला वणराइहिं!! (फ) (४२)

कण्वः। [ सनिश्वासम्। ] अनसूये! प्रियंवदे! गता वां सहचरी, निगृह्य शोकावेगं माम् अनुगच्छतम्।

[ सर्वे प्रस्थिताः। ] (४३)

उभे। ताद! सउन्तलाविरहिदं सुण्णं विअ तवोवणं प्पविसम्ह। (ब) (४४)

(फ) हा धिक्, हा धिक्! अन्तरिता शकुन्तला वनराजिभिः!!

(ब) तात! शकुन्तलाविरहितं शून्यमिव तपोवनं प्रविशावः।

शोकः त्वद्वियोगज इति शेषः, कथं केन प्रकारेण, अपयास्यति? निवर्त्स्यते? नैव निवर्त्स्यते इत्यर्थः; प्रत्युत तत्स्मारकसत्त्वात् शोको वर्द्धिष्यते इति भावः। [ अत्र रचितपूर्वम् अत एव विरूढमित्यादौ काव्यलिङ्गमलङ्कारः]। आर्य्या जातिः॥२३॥

(४१) शिवाः,—कल्याणदाः, सन्तु—भवन्तु।

(४२) अन्तरिता—व्यवहिता, दृष्टिपथात् अपनीता इत्यर्थः। वनराजिभिः,—वनश्रेणीभिः,—"श्रेणी लेखास्तु राजयः" इत्यमरः।

(४३) सर्वे—कण्वः अनसूया प्रियंवदा च। "प्रधानेनैव व्यपदेशा भवन्ति" इति न्यायात् अत्र कण्वस्य प्राधान्यात् पुंस्त्वम्। प्रस्थिताः,—गन्तुमारब्धाः। [ अत्र आदिकर्म्मणि क्तः ]।

(४४) शकुन्तलाविरहितं—शकुन्तलाशून्यम्, अत एव शून्यमिव सर्वजनरहितमिव,—"तदेकाकी सबन्धुः सन् इष्टेन रहितो यदा" इति न्यायादिति भावः। [ इयमुत्प्रेक्षा। अनेन शकुन्तलैव तपोवनवासिनाम् उच्छ्वसितमिति सूचयित्वा नायिकागतः कोऽप्यतिशयः ध्वन्यते। कण्वप्रवेशानन्तरमेतदन्तेन महाकविना करुणो रसः ध्वनितः, तत्र तु स्थायिभावादयः स्पष्टतया नोल्लेखिताः ]।

कण्वः। स्नेहप्रवृत्तिरेवंदर्शिनी। (४५) [सविमर्शं परिक्रम्य] (४६) हन्त, भोः! शकुन्तलां पतिगृहे विसृज्य लब्धम् इदानीं स्वास्थ्यम्। (४७) कुतः?—

अर्थो हि कन्या परकीय एव,
तामद्य सम्प्रेष्य परिग्रहीतुः।
जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा (४८) ॥२४॥

[इति निष्क्रान्ताः सर्वे]।

इति चतुर्थोऽङ्कः ॥ ४ ॥

(४५) तं प्रबोधयितुमाह, स्नेहेति।—स्नेहप्रवृत्तिः,—स्नेहातिशयः। एवंदर्शिनी—इत्थं दर्शयतीत्यर्थः, न तु वास्तवम्।

(४६) सविमर्शं—सचिन्तम्। परिक्रम्य—इतस्ततः चरणौ निक्षिप्य।

(४७) हन्तेति हर्षसूचकमव्ययम्। विसृज्य—प्रस्थाप्य। स्वास्थ्यं—निश्चिन्तता इत्यर्थः।

(४८) स्वास्थ्ये हेतुमाह, अर्थ इति।—हि निश्चितम्। कन्या परकीयः अर्थः एव जन्मारभ्य अन्यदीयत्वेन ज्ञातव्य एव इत्यर्थः। अद्य तां कन्यां परिग्रहीतुः परिणेतुः, तत्-स्वामिनः सकाशे इति शेषः, सम्प्रेष्य प्रस्थाप्य [अत्र तु प्रथमं कन्यायाः सामान्यतः 'पर-कीयधनत्वेन' उक्त्वा अनन्तरञ्च 'परिग्रहीतुः ताम्' इति नियतविषयत्वेन परकीयत्वकथ-नात् अवश्यप्रस्थापनीयत्वं ध्वनितम्] चिरस्य चिरकालात् ("चिराय चिररात्राय चिर-स्याद्याश्चिरार्थकाः" इत्यमरोक्तेः) परं निक्षेपं न्यस्तधनम् अर्पयित्वा इव, धनिने समर्प्य इव, सद्यः सहसा साम्प्रतं वा, विशदः निर्मलः, निश्चिन्त इत्यर्थः, अन्तरात्मा अन्तःकरणं यस्य तथाभूतः जातः अस्मि अभवमित्यर्थः। [अत्र परार्द्धे "जातो ममायं विशदः प्रकामं प्रत्यर्पितन्यास इवान्तरात्मा" इति पाठः दृश्यते, तत्र—प्रत्यर्पितः समर्पितः न्यासः निक्षेपः येन तादृश इव मम अन्तरात्मा प्रकामम् अत्यर्थं विशदः निर्मलः जात इत्यर्थः। अस्मिन् पाठे इन्द्रवज्रा वृत्तम्। अत्र रूपकोत्प्रेक्षयोः संसृष्टिः]। उपजातिः वृत्तम् ॥२४॥

---

# चतुर्थाङ्कस्य संक्षिप्त-विवृतिः ।

अथ शकुन्तलायाः प्रियसख्यौ कुसुममवचेतुमागत्य वर्णं विचरन्त्यौ आलपन्त्यौ च मिथः 'इतो गतः स्वराज्यं, स भूपतिः शकुन्तलां स्मरति न वा, न वा सम्प्रति समागतः सोमतीर्थात् तातः कण्वो विषण्णो भवेदमुना शकुन्तलोदन्तेन' इति कुसुममवाचिनुताम्; अशृणुताञ्च अत्रान्तरे—"अयमहं भोः" इति अतिथितारस्वरम्। प्रस्थानसमुद्यताभ्याञ्च ताभ्याम् अभ्यागतमुखात् अत्यधिककोपसूचकं—'यस्य स्मरणेन विस्मरणविषयीऽहं स स्मारितोऽपि न त्वां स्मरिष्यति' इति श्रुतिदारुणं नितराम् अरुन्तुदं वचोऽश्रावि। अकारि च चेतसि आगतः खलु नूनमयं सुलभकोपपरतापसवरो दुर्वासाः ; तदत्र गत्वा नत्वा च चरणयोरनुनयमहिम्ना गरिम्णा क्षमयितव्योऽक्षमयितव्योऽप्ययमपराध इति ।

अथ तयोरन्यतरा कातरा सती शकुन्तलादुःखेन अनसूया, अनसूयापरवशमपि तदा असूयापरवशं तापसं दुर्वाससं मर्षयितुममर्षव्यापारात्, द्रुतं प्रस्थिता। संस्थिता च तस्य पुरतः अश्रमापाद्य च तं कथं कथमपि, अभिज्ञानाभरणदर्शनसमाप्तं शापमपि विधाय, निधाय च तत्सर्व्वमापूर्वं प्रियंवदाकर्णे, विषण्णा च विषादेन, संमन्त्र्य च मिथः अङ्गुरीयके एव राजार्पिते सुलभोपायः इति, संगोप्य च शकुन्तलाशान्त्यर्थं तदभिसम्पातप्रवृत्तिं, कथञ्चित् निर्वृतिपरा अपरसखीसहिता स्व-वसतिं प्रस्थिता ।

अथ प्रभातप्रायायां निशायां होमवेलोपलक्षणार्थमादिष्टः कोऽपि कण्वशिष्यः विशिष्य शशस्य च प्रभातागमम् अगमत् समागतसमयमावेदयितुं गुरवे। अनसूया च शयनतलमधिशयाना विषण्णा खलु शकुन्तलागतं भावयन्ती गर्हयन्ती च कन्दर्पं, गुरवे शकुन्तलावृत्तान्तं विज्ञापयितुं शङ्काकुलितमना समागवर्त्तत। तदाऽसौ प्रियंवदाऽपि सहसा समागत्य विज्ञाप्य च—"आकाशवाणीमाकर्ण्य शकुन्तलापरिणयानुमोदनं कण्वस्य, अद्यैव शकुन्तला यास्यति पतिभवनम्" इति प्रस्थानोचितमङ्गलसमालम्भनार्थमनसूयां नितरामत्वरयत्। अनसूयाऽपि समादिश्य तां चूतविटप-विलम्बि-नारिकेलसमुद्गकात् समानेतुं केशरगुण्ठिकां, स्वयमपि समालम्भनं विरचयितुमगमत् ।

अनन्तरं कण्वेन समादिष्टे शार्ङ्गरवप्रमुखे शिष्यजने शकुन्तलाऽनुगमनसम्पादनार्थं, तापसः खलु प्रवयसः समागम्य, संवर्द्ध्य च आशिषा तामशेषं प्रस्थिताः। अथ

हारीताभिधेयः मुनितनयः कण्वसमादेशात् तपोवनतरु-वनदेवतार्पितवसन-भूषण-सम्भारान् समानीय शकुन्तलासकाशमगमत्। गत्वा च तत्र, समर्प्य च तान्, विनिवेद्य च तत्सम्प्राप्तिवृत्तान्तं कण्वकर्णगोचरीकर्त्तुं प्रस्थितः।

अथ तत्रभवान् कण्वः भावितनयाविरहभावनाव्यथितमना मनाक् विचलित-चित्तः संवृत्तश्च बहुविलपनपरां मन्दं मन्दमुपसर्पन् प्रणतिपरामपरामिव प्राण-प्रतिमां शकुन्तलामाश्वास्य, आदिश्य च सद्योहुतहुताशनान् प्रदक्षिणीकर्त्तुं, भर्त्तृवसतिं प्रेषयितुं सत्वरमत्वरयत्। अथ गन्तुमुद्यतायां दुहितरि अनुव्रजति च गौतमी-सहिते शार्ङ्गरवशारद्वतनामधेये तापसयुगले प्रोच्छलितमन्युवेगः शून्यहृदयोऽसौ कण्वः वन्यविटपिनोऽपि कारुण्यमयान् विधाय अनुमान्य च तान् तनया-गमनार्थं नितान्तसन्तापतप्तोऽवर्त्तत। अनन्तरं समुच्चरिते वनदेवताभिः गमनमङ्गले गौतमी-समादिष्टा शकुन्तला अभिवादनरता पर्य्यवेक्ष्य च प्रियंवदादिताः तपोवनशोचनीयावस्थाः, समाश्लिष्य च परमप्रेमनिलयां लता-भगिनीं माधवीं, समर्प्य च तां सखीद्वयसविधे, विनिवेद्य च गर्भभारमन्थराया मृगवध्वाः प्रसववार्त्तां विसर्जयितुं कण्वं, प्रतिनिवर्त्त्य च पदानुसारिणं जननी-विरहितं मृगपोतं, प्रतिबोधिता च तत्रभवता कण्वेन गन्तुमारेभे।

अथ इत्थं सकरुणं प्रस्थितायां सपरिजनायां शकुन्तलायां तत्रभवान् कण्वो मुहूर्त्तमात्रं विश्रम्य तान् वटतरुच्छायायां, सन्दिश्य च दुष्मन्तश्रवणोचितं वाक्यजातम्, उपदिश्य च तनयां विनयादिगुणमहिम्ना पतिमनुरञ्जयितुं पतिगृहे, प्रतिबोध्य च भूयो भूयः, आश्वास्य च तां प्रणतिपरां त्वरितं गन्तुमादिदेश। अत्रान्तरे सख्यावपि "प्रत्यभिज्ञानमन्थरश्चेत् राजर्षिस्तदा प्रदर्श्यतामिदमङ्गुरीयकम्" इत्याख्याय प्रियसखीं शकुन्तलां तूष्णीमभवताम्। कण्वोऽपि विषण्णो भावितनयाविरहेण पुनराश्रमा-गमनकाङ्क्षिणीं प्रबोध्य च तनयां समुचितवाक्यप्रपञ्चेन, व्यसर्जयत्। ततः शकु-न्तलाविरहविधुरं सखीद्वयं समाश्वास्य स्निग्धवचसा, विचिन्त्य च लब्धमिदानीं स्वास्थ्य-मिति प्रियंवदाऽनसूयासहितं स्वालयं प्रस्थितः। इति।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"वि, ए" इत्युपनामक श्रीमज्जीवा-नन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण-श्रीमन्नित्यबोध विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां चतुर्थोऽङ्कः ॥४॥

---

# पञ्चमोऽङ्कः ।

[ ततः प्रविशति कञ्चुकी ] । (१)

कञ्चु । अहो बत! कीदृशीं वयोऽवस्थाम् आपन्नोऽस्मि! (२)—

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय (३) ॥१॥

---

(१) कञ्चुकी—अन्तःपुरचरो वृद्धो विप्रविशेषः ।—"अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥ जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी ॥" इत्युक्तलक्षणात् ।

(२) अहो—आश्चर्य्यं, बत—खेदे । वयोऽवस्थां—वयसः जीवनकालस्य अवस्थां विशेषम्—"विशेषः कालिकोऽवस्था" इत्यमरः । आपन्नः,—प्राप्तः ।

(३) आचार इति ।—अधिकृतेन अधिकारस्थितेन [अत्र अवहितेनेति पाठे,—सावधानेन इत्यर्थः] मया शक्तेनापीत्यर्थः, राज्ञः अवरोधगृहेषु अन्तःपुरगृहेषु आचार इति नियम इति, रक्षाधिकारिणा अवश्यमेव वेत्रयष्टिः ग्रहीतव्या इत्याचारादित्यर्थः, या वेत्रयष्टिः गृहीता, अवरोधेषु अन्यायवर्त्तिनां शासनार्थमिति भावः ; बहुतिथे बहूनां पूरणे [बहुशब्दात् पूरणे अर्थे "तस्य पूरणे डट्" (५।२।४८ पा०) इति डटि, तस्मिन् परे "बहुपूगगणसङ्घस्य तिथुक्" (५।२।५२ पा०) इति तिथुगागमः । ] काले आयुर्लक्षणे गते अतीते सति, सैव वेत्रयष्टिरेव प्रस्थाने गमनारम्भे विक्लवा स्खलनबाहुल्यात् विधुरा गतिः पदनिक्षेपो यस्य तादृशस्य मम अवलम्बनाय आश्रयाय जाता । साम्प्रतम् ईदृग्दुर्बलता जाता, यत् यष्टिं विना पदमपि चलितुं न शक्नोमीति भावः । [न चात्र प्रस्थान-गतिशब्दयोः उपादाने अर्थगतपुनरुक्तिदोषः सम्भावनीयः ; तयोरन्यतरानुपादाने मनोगतमपि वैक्लव्यं प्रतीयते, इति उभयोः गतिवैक्लव्यविशेषे तात्पर्य्यात् गतिशब्दस्य ज्ञानार्थत्वे वा तत्परिहारात् । अत्र गतिवैक्लव्यात् अवलम्बनाय जाता इति पदार्थहेतुकं काव्यलिङ्गम्] । वसन्ततिलकं वृत्तम् ॥१॥

यावदभ्यन्तरगताय देवाय स्वम् अनुष्ठेयम् अकालक्षेपार्हं (४) निवेदयामि । [ स्तोकम् अन्तरं (५) गत्वा । ] किं पुनस्तत्? (६) [ विचिन्त्य । ] आं ज्ञातं, कण्वशिष्याः तपस्विनो देवं द्रष्टुम् इच्छन्ति, भोः ! चित्रम् एतत् ! (७)—

क्षणात् प्रबोधमायाति लङ्घ्यते तमसा पुनः ।
निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः (८) ॥२॥

[ परिक्रम्यावलोक्य च ।] एष देवः ।—

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा,
निषेवते श्रान्तमना विविक्तम् ।
यूथानि सञ्चार्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः (९) ॥ ३ ॥

---

(४) अभ्यन्तरगताय—अन्तःपुरवर्त्तिने देवाय । अनुष्ठेयं—कर्त्तव्यं, वक्तव्यमिति यावत् । अकालक्षेपार्हं—कालविलम्बासहम् ।

(५) स्तोकम्—अल्पम् । अन्तरं—दूरम् ।

(६) तत्—अनुष्ठेयमित्यर्थः । किं पुनः ?—न स्मर्य्यते इत्यर्थः । [अत्र विस्मृति-रूपणम्] ।

(७) आम् इति—स्मरणार्थे अव्ययम् । ज्ञातं—स्मृतं, वार्द्धक्यात् क्षणे क्षणे मतिविभ्रमादिति भावः । 'किं पुनः तत् स्मृतिगोचरीभूतम् ?' इत्याह, कण्वशिष्या इति ।—[अत्र कण्वशिष्या इति विशेषणात् अवश्यज्ञातव्यत्वं सूचितम्] । चित्रम्—आश्चर्य्यम् । एतत्—क्षणात् स्मरणं विस्मरणञ्च इत्यर्थः ।

(८) क्षणादिति ।—जरतः स्थविरस्य मतिः बुद्धिः निर्वास्यतः निर्वाणं गमिष्यतः प्रदीपस्य शिखेव क्षणात् प्रबोधं प्रकृष्टं बोधं स्मरणमित्यर्थः, स्फुरणञ्च आयाति प्राप्नोति, पुनः क्षणात् तमसा मोहेन तिमिरेण च लङ्घ्यते आक्रम्यते । [अत्र श्लेषानुप्राणितोपमाऽलङ्कारः] । पथ्यावक्त्रं वृत्तम् ॥२॥

(९) प्रजा इति ।—स्वाः स्वकीयाः प्रजा इव पुत्रानिव ("प्रजा स्यात् सन्ततौ जने" इत्यमरः) प्रजाः लोकान् तन्त्रयित्वा संव्यवहार्य्य पोषयित्वेत्यर्थः, श्रान्त मनो यस्य तथाभूतः उद्विग्नचित्तः सन्, यूथानि स्ववर्ग्यान् गजानिति भावः,

भोः ! सत्यं धर्म्मकार्य्यमनतिपात्यं देवस्य, तथापि शङ्कित-वानस्मि इदानीमेव धर्मासनादुत्थिताय देवाय कण्वशिष्यागमनं निवेदयितुम्। अथवा कुतो विश्रामो लोकपालानाम्? (१०) तथाहि,—

भानुः सकृद्युक्ततुरङ्ग एव,
रात्रिन्दिवं गन्धवहः प्रयाति।

समर्थ्य सम्यक् चारयित्वा, रविणा सूर्य्येण प्रतप्तः द्विपेन्द्रः गजपतिः शीतं शीतलं गुहास्थानमिव पर्वतगह्वरमिव विविक्तं विजनं निषेवते अधिवसति ("विविक्तौ पूतविजनौ" इत्यमरः)। [अत्र "दिवा स्थानमिव" इति पाठे—दिवा दिवसे शीतं स्थानमिव इत्यन्वयः। अत्र दिवापदेन रात्र्यादिव्यावर्त्तनात् परितापाधिक्यं द्योत्यते। अत्रोपमयोः सजातीययोः संसृष्टिः]। उपजातिः वृत्तम् ॥२॥

(१०) धर्मेति।—धर्म्मकार्य्यं—धर्म्मस्य प्रजापालनादिरूपस्य, कार्य्यम्—अनुष्ठानम्। अनतिपात्यं—कालातिक्रमादिना नातिक्रमणीयम्, इति सत्यं यथार्थमेव। [अनेन खलु वृद्धस्य बहुकालात् परिज्ञातपूरुवंशसदाचारस्य कञ्चुकिनः वाक्येन राज्ञः प्रति-बिम्बितधर्म्मभीरुताबोधनात् नायकगतः कोऽपि उत्कर्षातिशयः ध्वन्यते]। बहुदर्शित्वेन विदितनिखिलराजकर्त्तव्यतया अविश्रामं राजकार्य्यमिति कृत्वा प्रागुक्तमाक्षिपन्नाह, अथवेति।—लोकपालानां—जगत्पालयितॄणाम्। विश्रामः कुतः? इति पूर्वेणान्वयः। [अत्र "अविश्रमोऽयं लोकतन्त्राधिकारः" इति पाठे—लोके तन्त्राधिकारः प्रधाना-धिकारः, अविश्रमः तस्य विश्रमो नास्तीत्यर्थः।—"तन्त्रं प्रधाने सिद्धान्ते" इत्यमरः। अनेन खलु सर्ववृत्तान्तदर्शिनः कञ्चुकिनोऽपि उत्कर्षातिशयः ख्यापितः]।

(११) तदेव दर्शयति, भानुरिति।—भानुः सूर्य्यः सकृत् एकवारं युक्ता रथे नियमितास्तुरङ्गा येन तथोक्तः एव [अनेन सूर्य्यस्य तुरङ्गमात्रयोजनेऽपि अविश्रान्तिः ध्वनिता, 'यस्य खलु तुरङ्गयोजने अविश्रान्तिः, तस्य अन्यस्मिन् कर्म्मणि किमु वक्तव्यम्' इति गमनेऽपि अविश्रामः ध्वन्यते।] अविश्रामं रथारूढ़ः स्वमनुष्ठेयं निर्वाहयतीति भावः। गन्धस्य वहः गन्धवहः वायुः रात्रिन्दिवं सर्वदा इत्यर्थः ["अचतुर—" (५।४।७७ पा०) इत्यादिना अच्प्रत्ययः समासान्तः] प्रयाति वहति, नास्य विश्राम इति भावः। [अत्र गन्धवहपदोपादानात् न केवलं वाति—गच्छति, अपि तु गन्धमपि

शेषः सदैवाहितभूमिभारः,
षष्ठांशवृत्तेरपि धर्म्म एषः (११) ॥ ४ ॥

[ इति परिक्रामति ]।

[ ततः प्रविशति राजा विदूषको विभवतश्च परीवारः। ] (१२)

राजा। [ अधिकारखेदं निरूप्य। ] (१३) सर्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः, राज्ञान्तु चरितार्थता दुःखोत्तरैव। (१४) कुतः ?—

औत्सुक्यमात्रमवसादयति प्रतिष्ठा,
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।

---

वहति इति भारवहनपूर्वकगमनात् अतिश्रान्तिः, रात्रिन्दिवं पदेन नितराम् अविश्रान्तिश्च सूच्यते। ] शेषः नागराजः सदैव आहितः अवलम्बितः धृत इत्यर्थः, भूमेः भारः येन तथाविधः, नासौ क्षणमपि विश्रामसुखं लभते इति भावः। षष्ठांश उत्पन्नशस्यादीनां षष्ठभागः वृत्तिर्जीवनोपायो यस्य तथोक्तस्य, प्रजाभ्यः षष्ठमंशं करत्वेन आदाय जीवतः इत्यर्थः, राज्ञ इति शेषः। अपिरत्र समुच्चये। एष—स्वीकृतभूमिभारत्वरूपः; अत्र भारः रक्षणरूपः; यद्वा एष—अविश्रामरूपः, धर्म्मः नियमः; एतच्छब्दस्य पूर्ववस्तुपरामर्शित्वात् [ अत्र सार्वकालिकत्वरूपसामान्यधर्म्मस्य सकृदयुक्तपदेन रात्रिन्दिवपदेन सदैवपदेन च पृथङ्निर्द्देशात् मालाप्रतिवस्तूपमाऽलङ्कारः; तथा दुष्मन्तस्य इति विशेषे वक्तव्ये षष्ठांशवृत्तेरिति सामान्येन कथनात् अप्रस्तुतप्रशंसा च ]। इन्द्रवज्रा वृत्तम्,—"स्यात् इन्द्रवज्रा यदि तौ जगौ गः" इति लक्षणात् ॥ ४ ॥

(१२) विभवतः,—ऐश्वर्य्यानुसारतः। [ अत्र "विभववतः" इति पाठः साधीयान्। विभववतः,—ऐश्वर्य्यशालिनः राज्ञः इत्यर्थः ]। परीवारः—परिजनः।

(१३) अधिकारखेदं—राजकार्य्यजनितपरिश्रमम्। निरूप्य—अभिनीय।

(१४) प्रार्थितम्—इष्टं, वाञ्छितमित्यर्थः। अधिगम्य—प्राप्य। सम्पद्यते—भवति। चरितार्थता—सिद्धकामता। दुःखोत्तरा एव—दुःखप्रधाना एव, दुःखाधिकैव इत्यर्थः।

(१५) तत्र हेतुमाह, औत्सुक्यमिति।—प्रतिष्ठा अलब्धलाभेन अर्जिता सर्वोत्कृष्टा ख्यातिः, औत्सुक्यमात्रं कथमदो लभ्यते इति यावद्विषयकम् उत्कण्ठामात्रम् अवसादयति नाशयति। [ अवसाययतीति पाठे—स एवार्थः ]। अनाप्तस्य तु यत्किञ्चिद्वस्तुविषयिणी समुत्पन्नोत्कण्ठा तथैव तिष्ठति तत्तद्विषया-

नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् (१५) ॥५॥

[ नेपथ्ये वैतालिकौ । ] जयति जयति देवः । (१६)

एकः । स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते सृष्टिरेवंविधैव ।

---

लाभात्, राज्ञान्तु फललाभात् उत्कण्ठानिवृत्तिः; एतावदेव राज्ञामाभिमानिकं सुखमिति भावः। ततः लब्धस्य प्राप्तस्य परिपालनवृत्तिः,—परि सर्वतोभावेन, सम्यग् इत्यर्थः, पालनं रक्षणं, तत्र या वृत्तिः वर्त्तनं, कदाचित् सर्वरात्रजागरणं, कदाचित् अविच्छिन्नधारावृष्टि-विषमवात्याद्यनुभवः, कदाचिद्वा मध्याह्नप्रखर-रविकिरणस्य मूर्ध्नि विधारणमित्यादिरूपा एनं राजानं क्लिश्नाति एव, दुःखयति एव; विना क्लेशेन नास्य पालनं भवेदिति भावः। अतः कारणात् राज्य स्वहस्तेन धृतः दण्डो यस्य तादृशम्, आतपात् सौरतापात् त्रायते इति आतपत्रं छत्रमिव, न अतिश्रमापनयनाय अतिशयेन श्रमशान्तये न भवति, यथा श्रमाय भवतीति शेषः। [ अनेन पुनः श्लोकसमुदयेन 'राज्यादिरूप आपातरम्यः विषयः अत्यन्तसुखप्रदः इति भ्रान्त्या न नितरामासक्तिमता भवितव्यम्' इति महानुपदेशोऽपि व्यज्यते,—"आपातरम्या विषयाः पर्य्यन्तपरितापिनः" इत्यनुशासनात्। अत्रोपमाऽलङ्कारः; तथा "श्रमाय नातिश्रमापनयनाय" इति अप्रश्नपूर्विका शाब्दी परिसङ्ख्या च; इत्यनयोः साङ्कर्य्यम्। अत्र केचन "राज्यं श्रमकारणं लब्धपरिपालनजनितक्लेशप्रदत्वात् स्वहस्तधृतदण्डच्छत्रवत्" इत्यनुमानं, तथा "श्रमाय अतिश्रमापनयनाय" इति यथासङ्ख्यमपि व्याचक्षते ]। वसन्ततिलकं वृत्तम् ॥ ५ ॥

(१६) नेपथ्ये—यवनिकाभ्यन्तरे। वैतालिकौ—बोधकरौ, "वैतालिका बोधकराः" इत्यमरः। जयति—सर्वोत्कर्षेण वर्त्ततामित्यर्थः। ( जिधातोर्लुपः तिप्। )

(१७) 'सर्वः प्रार्थितमधिगम्य इत्यादिना यः खेदः भवता प्रकटितः, स च निःस्वार्थपरोपकारप्रवृत्तानां भवादृशां राज्ञां तत्स्वाभाव्यात् न खेदमध्ये परिगणनीयः' इति श्लोकद्वयेन स्तौति, स्वसुखेति।—प्रतिदिनं, न तु एकदिनं, न वा पक्षमाहम्, अपि तु प्रत्यहं, निरन्तरमित्यर्थः; स्वस्य सुखेषु निरभिलाषः निष्कामः न कदाचिदपि तव स्वार्थपरता कुत्रापि दृश्यते; न वा प्रासङ्गिकसुखाय अपि ते प्रवृत्तिः इति भावः। 'ननु कुतः ज्ञायते स्वसुखनिरभिलाषत्वम्?' इत्याह, लोक इति।—लोकानां जगतां हेतोः शान्ति-

अनुभवति हि मूर्द्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् (१७) ॥६॥

द्वितीयः । नियमयसि विमार्गप्रस्थितानात्तदण्डः,
प्रशमयसि विवादं कल्पसे रक्षणाय ।
अतनुषु विभवेषु ज्ञातयः संविभक्ता-
स्त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम् (१८)॥७॥

---

विश्रामार्थमिति भावः, प्रतिदिनं खिद्यसे परिश्राम्यसि । 'खिद्यसे इति यदुक्तं तत्तु अन्येषामपि सम्भवति, प्रतिनियतपरोपकारप्रवृत्तानां भवादृशां न क्लेशदायकम्' इति विभाव्य, पूर्वोक्तमाक्षिपति, अथवेति ।—अथवा पूर्वाक्षेपे, ते तव वृत्तिः निर्माणम् एवं-विधैव ईदृश्येव ; जगतां शुभविधानार्थं विधात्रा त्वं परिश्रमस्वभाव एव निर्मित इति भावः । [ वृत्तिरित्यत्र "वृत्तिः" इति पाठे,—वर्त्तनमित्यर्थः ] । हि तथाहि, पादपः पादान् चरणान् पाति रक्षति इति पादपः, रक्षणस्वभाव इत्यर्थः, (अत एव न वृक्षादि-पदमुपात्तम् ) तरुः मूर्द्ध्ना शिरोभागेण ( न तु अधोदेशेन ) तीव्रं दुःसहम् उष्णम् उत्तापम् अनुभवति स्वयं सहते, किन्तु छायया अनातपदानेन पालनेन च ( "छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः" इति विश्वः ) संश्रितानां तलस्थितानाम्, आश्रितानाञ्च इति भावः, परितापं सौरतापं तज्जनितखेदञ्च शमयति नाशयति । [ अत्र पादपरूपोपमानधर्मस्य प्रतिबिम्बनात् दृष्टान्तालङ्कारः, तथा "अथवा" इत्यनेन स्वोक्तप्रतिषेधात् निषेधाभास-आक्षेपश्च ; एवं पूर्वार्द्धे काव्य-लिङ्गमपि ] । मालिनी वृत्तम् ॥६॥

(१८) "खिद्यसे लोकहेतोः" इति यदुक्तं तत् अपरः विशदीकृत्य दर्शयति, नियमयसीति ।—आत्तः गृहीतः दण्डो येन तथाभूतः दण्डधरः सन्नित्यर्थः, विमार्ग-प्रस्थितान् उन्मार्गगामिनः [ "कुमार्गस्थितान्" इति पाठे,—स एवार्थः । ] दुराचारान् इत्यर्थः, नियमयसि दण्डयसि, सन्मार्गस्थान् करोषि इत्यर्थः । विवादं परस्परविरोधं प्रशमयसि शान्तिं नयसि, तव राज्ये कोऽपि कलहकारी नास्तीत्यर्थः । तथा रक्षणाय लोकानामिति शेषः, कल्पसे प्रभवसि, [ अत्र रक्षणाय इति "क्लृपि सम्पद्यमाने च" ( वा० ) इति चतुर्थी । ] ज्ञातयः स्वजनाः, स्वजनानामिति शेषः, अतनुषु अनल्पेषु, बहुषु इत्यर्थः, विभवेषु सम्पत्सु संविभक्ताः सम्यक् विभागं प्राप्ताः, [ अत्र "सन्तु नाम" इति पाठे,—नाम सम्भावनायां, सन्तु भवन्तु इत्यर्थः । ] तु किन्तु जनानां बन्धुकृत्यं स्वजनकृत्ययोगक्षेमपरिदर्शनादिकमिति भावः, त्वयि परिसमाप्तं त्वदधीन-

राजा। [आकर्ण्य साश्चर्यम्।] **एतेन कार्य्यानुशासनपरिश्रान्ताः पुनर्नवीकृताः स्मः।** (१९)

विदू। [विहस्य।] **भोः! गोविन्दारअ त्ति भणिदस्स विसभस्स किं परिस्समो णस्सदि?** (क) (२०)

राजा। [सस्मितम्।] **ननु क्रियतामासनपरिग्रहः।**

[उभौ उपविष्टौ, परिजनश्च यथास्थानं स्थितः।]

[नेपथ्ये वीणाशब्दः।] (२१)

विदू। [कर्णं दत्त्वा]। **भो वअस्स! सङ्गीदसालब्भन्तरे कण्णं देहि, ताललअसुद्धाए वीणाए सरसंजोओ सुणीअदि, जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति।** (ख) (२२)

(क) भो! गोवृन्दारक इति भणितस्य वृषभस्य किं परिश्रमो नश्यति?

(ख) भो वयस्य! सङ्गीतशालाभ्यन्तरे कर्णं देहि, तालशुद्धाया वीणायाः स्वरसंयोगः श्रूयते, जाने तत्रभवती हंसवती वर्णपरिचयं करोतीति।

मिति यावत्; लोकानां स्वजना बहुसम्पद्भागिनः अपि ते तान् स्वजनान् न पर्य्यवेक्षन्ते, त्वमेव तान् तत्तत्कार्य्येषु विपत्सु च पर्य्यवेक्षसे इति भावः। [अत्र पराद्धवाक्यार्थं प्रति पूर्वार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गम्; तथा परार्द्धे स्वजनापेक्षया राजनि बन्धुकृत्यपरिसमाप्तिरूपाधिक्य कथनात् व्यतिरेकश्च; इत्यनयोः साङ्कर्य्यम्। अनेन खलु वैतालिकवाक्येन सकलराजकर्त्तव्यप्रतिपालनतत्परोऽयमिति सूचनात् नायकगतः कोऽप्यतिशयः ध्वनितः]। मालिनी वृत्तम्॥ ७॥

(१९) एतेनेति।—कार्य्यस्य—राजकार्य्यस्य, अनुशासनेन—सम्पादनेन; परिश्रान्ताः,—क्लिष्टाः। एतेन—वैतालिकवचनेन इत्यर्थः, उत्साहवर्द्धनादिति भावः, पुनः नवीकृताः,—प्रोत्साहिताः, राजकार्य्यानुशासने इति शेषः।

(२०) गोवृन्दारक इति।—गवां वृन्दारकः यूथपतिः, श्रेष्ठ इति यावत्,—"वृन्दारकः सुरे श्रेष्ठे मनोज्ञे यूथपातरि" इति व्याडिः। इति—इत्युक्तिमात्रेण, भणितस्य—प्रशंसितस्य वृषभस्य, परिश्रमः,—खेदः। 'नश्यति किम्?' इति प्रश्ने; चणमत्र स्थीयतामिति भावः। [दृष्टान्तोऽयम्]।

(२१) नेपथ्ये—यवनिकाभ्यन्तरे, वीणाशब्दः,—वीणाध्वनिः।

(२२) तालेति।—तालः,—सङ्गीतस्य कालक्रियामानप्रकारविशेषः, लयः,—गीत-

राजा। तूष्णीं भव, यावत् आकर्णयामि।

कञ्चु। [विलोक्य।] अन्यासक्तो देवः, तदवसरं प्रतिपालयामि। (२३) [इत्येकान्ते स्थितः]।

[नेपथ्ये गीयते]।—

अहिणवमहुलोहभाविदो
तह परिचुम्बिअ चूअमञ्जरीं।
कमलवसदिमेत्तणिव्वुदो
महुअर! विम्हरिदोसि णं कहं? (ग)(२४) ॥८॥

(ग) अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम्।
कमलवसतिमात्रनिर्वृतो मधुकर! विस्मृतोऽस्येनां कथम्?॥

वाद्ययोः साम्यं, यतिविशेष इत्यर्थः,—"तालः कालक्रियामानं लयः साम्यम्" इत्यमरोक्तेः। तेन शुद्धा—निर्दोषा तस्याः वीणायाः। [अत्र "कलविशुद्धायाः गीतेः" इति पाठान्तरम्। तत्र कला अस्फुटमधुरा विशुद्धा तदाख्या तस्याः। तथा च रत्नाकरे,—"गीतयः पञ्च शुद्धाख्या भिन्ना गौड़ा निवेसरा। साधारणी विशुद्धा स्यात् अवक्रैः ललितैः स्वरैः॥" इति]। स्वरसंयोगः,—स्वरैः निषादादिभिः सप्तभिः, संयोगः सम्यक् योजना, स्वरालाप इत्यर्थः। हंसवती—काचित् अन्तःपुरिका देवी। वर्णपरिचयं—वर्णस्य सङ्गीताचरस्य परिचयः अभ्यासः तम्; आरोह्यावरोह्यात्मकगानक्रियाभ्यासमित्यर्थः।

(२३) अन्यासक्तः,—अन्यस्मिन् विषये, अन्यस्यां नायिकायां वा इति श्लेषो व्यङ्गः, आसक्तः,—तत्परः, अभिनिविष्ट इत्यर्थः। अवसरं—अवकाशम्। प्रतिपालयामि—प्रतीक्षे। [अनेन कञ्चुकिगतमौचित्यं ध्वनितम्]।

(२४) अभिनवेति।—हे मधुकर! त्वम् अभिनवस्य नूतनस्य। "राग. [illegible] नवत्वं प्रत्ययत्वेन समर्थविशेषोचितत्वेन च बोध्यम्" आश्रयस्य, अगतिकस्य इत्यर्थः। मोचः,—विमोहित इत्यर्थः सन्, चूतमञ्जरीम् इत्यर्थः।

तृप्तिः भवति, तथैव सर्वतोभावेन दग्धभावेन; यद्वा—चिपताकस्य मध्यमातर्ज्जनीभ्यां आस्वाद्येत्यर्थः, इदानीं कमले मित्यर्थः। एनां—हंसवतीं, सान्वय—कोपात् निवर्त्तय। या वसतिः वासः (न तु ऊर्जनीयतामुपलभ्य सनिर्वेदमाह, कंति।—का गतिः?—कः; एनां चूतमञ्जरीं कथं विस्मना नास्ति मे गत्यन्तरमित्यर्थः।—"गतिर्मार्गे दशायाञ्च ज्ञाने अभिनवस्य अनास्वादितपूर्विणः; नृपवचनमनतिक्रमणीयमिति भावः।

राजा। अहो! रागपरिवाहिणी गीतिः!! (२५)

विदू। भो वअस्स! किं दाव से गीदिआए अवि गहीदो भअदा अक्खरत्थो? (घ) (२६)

राजा। [सस्मितम्।] सकृत्कृतप्रणयोऽयं जन इत्यक्षरार्थः। तदहं देवीं हंसवतीमन्तरेण उपालम्भनम् आयातोऽस्मि। सखे माधव्य! मद्वचनादुच्यतां देवी हंसवती, सम्यगुपालब्धः अस्मीति। (२७)

(घ) भो वयस्य! किं तावदस्या गीतिकाया अपि गृहीतो भवता अक्षरार्थः?

चूतमञ्जरीं चूतमञ्जरीमिव कामपि नायिकां परिचुम्ब्य—परि समन्तात् कपोलादिषु इत्यर्थः, चुम्बित्वा कमलवसतिमात्रनिर्वृतः,—कमलाया लक्ष्म्या वसतिः तया निर्वृतः, विभवमात्रसन्तुष्ट इत्यर्थः, [अत एव मधुकरः इति साभिप्रायविशेषणम्] हे मधुकर कामुक! ("मधुव्रते मधुकरः कामुकेऽपि प्रकीर्त्तितः" इति विश्वः) एनां पूर्वोपभुक्तां कथं विस्मृतः? इत्युपालम्भः। [एतेन राज्ञः शकुन्तलाविस्मरणं सूचितम्। इदञ्च प्रच्छेदकाख्यं लास्याङ्गम्; तदुक्तं दर्पणे,—"अन्यासक्तं पतिं मत्वा प्रेमविच्छेद-मन्युना। वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः॥" इति। अत्र च शकुन्तला-विस्मरणरूपस्य रहस्यस्य उद्भेदात् क्षिप्तिः नाम गर्भाङ्गम्; यदाह दर्पणे,—"रह-स्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्" इति। मतान्तरे—आक्षेपनामाङ्गम्। यथा दशरूपके,—"गर्भबीजसमुद्भेदादाक्षेपः परिकीर्त्तितः" इति। अत्र च अनेन तृतीयं पताकास्थान-मुक्तम्। यदुक्तं दर्पणे,—"अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत्। श्लिष्टप्रत्युत्तरो-पेतं तृतीयमिदमुच्यते॥" प्रत्युत्तर...परिस्फुटत्वेऽपि राजानं प्रति तस्य गम्यमान-...त्मानः,—क्लिष्टाः। एतेन-- ...मलङ्कारः]। अपरवक्त्रं वृत्तम्।—"अयुजि पुनः नवीकृताः,—प्रोत्साहिताः, राजकार्य्या..." इति॥ ८॥

(२०) गोवृन्दारक इति।—गवां वृन्दारकः यूथ...थः, प्रेमोल्लासिनीति यावत्। सुरे श्रेष्ठे मनोज्ञे यूथपातरि" इति व्याडिः। इ...पयतीति तथोक्ता।—"रागस्तु प्रशंसितस्य वृषभस्य, परिश्रमः,—खेदः। 'नश्यति कि...' इति मेदिनी। ...क्षीयतामिति भावः। [इष्टान्तोऽयम्]। ...अक्षरार्थः,—शब्दार्थः, किं

(२१) नेपथ्ये—यवनिकाभ्यन्तरे, वीणाशब्दः,—वीणा...

(२२) तालेति।—तालः,—सङ्गीतस्य कालक्रियामानप्र...तथाभूतः, अयं जनः,—

विदू। जं भवं आणवेदि। [उत्थाय।] भो वअस्स! गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो, ता वीदराअस्स असरणअस्स णत्थि मे मोक्खो। (ङ) (२८)

राजा। सखे! गच्छ, नागरिकवृत्त्या सान्त्वयैनाम्। (२९)

विदू। का गई? (च) (३०)

[इति निष्क्रान्तः]।

(ङ) यद्भवानाज्ञापयति। भो वयस्य! गृहीतः त्वया परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लः; तद्वीतरागस्य अशरणकस्य नास्ति मे मोक्षः।

(च) का गतिः?

हंसवतीलक्षण इत्यर्थः। अक्षरार्थः,—शब्दार्थः, गानस्य तात्पर्य्यमिति यावत्; सकृत्कृतप्रणयं जनं त्यक्त्वा स्थितं प्रियं प्रत्युक्तिरियमिति भावः। हंसवतीमन्तरेण—हंसवतीं विना, तत्सन्निधावगमनेन इति भावः ["पृथग्विना—" (२।३।३२ पा०) इत्यादिना विनाशब्दयोगे द्वितीया]। उपालम्भनं—तिरस्कारम्। आगतः,—प्राप्तः। सम्यक्—सम्पूर्णं यथा तथा, उपालब्धः,—तिरस्कृतः।

(२८) परकीयाभ्याम्—अन्यदीयाभ्यां, शिखण्डके—शिखायां, शिरसि इत्यर्थः। [अवच्छेदे सप्तमी]। अच्छभल्लः—भल्लूकः, ("ऋक्षाच्छभल्लभाल्लूकाः" इत्यमरः) यः खलु नखरदशनैः विदारयितुं शक्नोति तादृश इत्यर्थः। यथा स्वयमशक्तः भल्लूकशिखण्डकग्रहणाय नियुक्तं परं मृत्युमुखे पातयति, तथा कोपनां देवीमनुनेतुं स्वयमशक्तः त्वं मां तत्र नियोज्य देवीहस्तेन निग्रहीतासि इति भावः। [अत्र अप्रस्तुतप्रशंसानामालङ्कारः]। वीतरागस्य—परित्यक्तकेशाद्यनुभवस्य। "रागः क्लेशादिके रक्ते" इति शाश्वतः। अशरणस्य—अनाश्रयस्य, अगतिकस्य इत्यर्थः। मोक्षः,—मोचनम्; नास्ति—देव्याः सकाशादित्यर्थः।

(२९) नागरिकवृत्त्या—विदग्धस्वभावेन; यद्वा—त्रिपताकस्य मध्यमातर्ज्जनीभ्यां वक्राभ्यामधोमुखं कम्पिताभ्यामित्यर्थः। एनां—हंसवतीं, सान्त्वय—कोपात् निवर्त्तय।

(३०) आदेशस्य अवर्ज्जनीयतामुपलभ्य सनिर्वेदमाह, केति।—का गतिः?—कः उपायः? तदनुष्ठानं विना नास्ति मे गत्यन्तरमित्यर्थः।—"गतिर्मार्गे दशायाञ्च ज्ञाने यात्राभ्युपाययोः" इति विश्वः; नृपवचनमनतिक्रमणीयमिति भावः।

राजा। [स्वगतम्।] किं नु खलु गीतमेवंविधमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि ? अथवा,(३१)—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि (३२) ॥९॥

(३१) दुर्वाससः शापात् विस्मृतशकुन्तलाव्यापारोऽपि गाढ़तमानुरागानुभवेन दृढ़तरसंस्कारात् जन्मान्तरीयादिव अनुद्बुद्धरूपात् स्मरणमप्रतिपद्यमानः वितर्कयन्नाह, किमिति।—किं नु—वितर्के, खलु—निश्चितम्। एवंविधम्—ईदृशानुरागव्यञ्जकम्। इष्टजनविरहादृतेऽपि—प्रियजनविच्छेदं विनापि ; शापादित्युक्तम्। वस्तुतः तस्मादेव। बलवत्—अत्यर्थम्। उत्कण्ठितः,—चिन्ताकुलितः। उत्कण्ठाबीजं किञ्चित् विभाव्याह,—अथवेति।

(३२) रम्याणीति।—यत् यतः, सुखितोऽपि अविरही अपि, विरहिणां तु किमु वक्तव्यमिति अपिशब्दार्थः ; जन्तुः प्राणी, रम्याणि मनोहराणि वस्तूनीति शेषः, ["विशेषणेनैव विशेष्यावगतेः" नात्र विशेष्यपदोपादानम्, अत एव विशेष्यगतप्रक्रमभङ्गदोषः] वीक्ष्य दृष्ट्वा, मधुरान् श्रुतिसुखकरान् शब्दांश्च निशम्य, पर्य्युत्सुकः,—परितः सर्वतः उत्सुकः उत्कण्ठितः भवति, तत् तस्मात् नूनं निश्चितं चेतसा करणेन, भावेन वासनया, संस्कारेण इत्यर्थः, स्थिराणि दृढ़तरसंस्कारविषयान् जननान्तरस्य अन्यस्य जन्मनः, सौहृदानि प्रणयान्, अत एव अबोधपूर्वं विषयविशेषज्ञानाभावपूर्वकं सामान्यतः रम्यशब्दादीनाम् उद्‌बोधकत्वेऽपि जननान्तरव्यवधानात् न विशेषे संस्कारस्य उद्‌बुद्धता ; अत एव तादृशं यथा तथा स्मरति। रम्यवस्तुदर्शनेन मधुरगीतश्रवणेन च चित्तस्य पर्य्युत्सुकतायाः कारणं तदानीं केनापि प्रसङ्गेन अबुद्धस्य पूर्वकृतस्य प्रणयस्य स्मरणमिति सम्भावयामीति निष्कर्षः। [अनेन स्वस्य शकुन्तलाविषये जन्मान्तरीय इव शापाच्छादितः दृढ़तरानुरागः गम्यते ; एतेन च अनुरागस्य स्थायित्वमपि ध्वनितम्। अत्र विशेषे अहमिति प्रस्तुते जन्तुरिति सामान्येन कथनात् अप्रस्तुतप्रशंसा ; तथा पदार्थ-वाक्यार्थहेतुकयोः काव्यलिङ्गयोः सजातीययोः संसृष्टिः। 'अबोधपूर्वं स्मरति' इत्यत्र शब्दशक्तिमूलः विरोधाभासो व्यङ्ग्यः]। वसन्ततिलकं वृत्तम् ॥९॥

[ इत्यप्रतिनिमित्तमुन्मनस्कत्वं रूपयति । ] (३३)

कञ्चु। [उपसृत्य।] जयति जयति देवः। एते खलु हिमगिरे-रुपत्यकारण्यवासिनः कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः सम्प्राप्ताः ; श्रुत्वा देवः प्रमाणम्। (३४)

राजा। [सविस्मयम्।] कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः ? (३५)

कञ्चु। अथ किम्।

राजा। तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः, अमून् आश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति। अहमपि एतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि। (३६)

कञ्चु। यथाज्ञापयति देवः।

[ इति निष्क्रान्तः ]।

(३३) रूपयति—अभिनयति ।

(३४) उन्मनस्कतया तूष्णीं स्थितं राजानम् अवलोक्य अवसरश्चोऽयम् "अवसरोऽयम्" इति मत्वा उपगम्याह, जयति इति।—जयति—सर्वोत्कर्षेण वर्त्तताम्। हिमेति—हिमगिरेः,—हिमाचलस्य, उपत्यका—आसन्नभूमिः, ("उपत्यकाद्रेरासन्ना भूमिः" इत्यमरः) तत्र यदरण्यं तद्वासिनः। [एतेन इन्द्रसहिष्णवः एते मुनयः इति सूचनात् गौरवातिशयः ध्वन्यते]। सम्प्राप्ताः,—उपस्थिताः। प्रमाणम्—इतिकर्त्तव्यतायाः हेतुरित्यर्थः ; यत् कर्त्तव्यं तत् करोतु इति भावः।

(३५) कण्वसन्देशहारिणः,—कण्वस्य मुनेः वाचिकमादाय समागताः। सस्त्रीकाः,—स्त्रीजनसहिताः। अत एव सविस्मयमिति कविवाक्यम्।

(३६) उपाध्यायः,—वृत्तिभोगी शिक्षागुरुविशेषः, तथा च मनुः।—"एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः। योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते॥" इति। "द्वारपण्डितः" इति यस्य प्रसिद्धिः। सोमरातः इति।—तस्य उपाध्यायस्य नाम। श्रौतेन—श्रुतिर्वेदः तद्विहितेन, विधिना—कल्पेन, नियमेन इत्यर्थः। सत्कृत्य—सम्मान्य, स्वयमेव—आत्मनैव, न तु अन्यद्वारेण इत्येवकारव्यवच्छेद्यः। [अनेन गौर-

राजा । [ उत्थाय । ] वेत्रवति ! अग्निशरणमार्गम् आदेशय । (३७)

प्रतीहारी । इदो इदो एदु देवो । [ परिक्रम्य । ] एसो अहिणवसम्मज्जणरमणीओ सण्णिहिदहोमधेणु अग्गिसरणालिन्दो, (३८) ता आरोहदु देवो । (क)

राजा । [ आरुह्य परिजनांसावलम्बी तिष्ठन् । ] वेत्रवति ! किम् उद्दिश्य तत्रभवता कण्वेन मत्सकाशमृषयः प्रेषिताः ?—

किन्तावद् व्रतिनामुपोढ़तपसां विघ्नैस्तपो दूषितम् ?
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ? ।

(क) इत इत एतु देवः । एषोऽभिनवसम्मार्ज्जनरमणीयः सन्निहितहोमधेनुः अग्निशरणालिन्दः, तदारोहतु देवः ।

वातिशयः ध्वनितः] । तपस्वीति ।—मुनिदर्शनयोग्ये स्थाने । [एतेन तदानीं सर्वत्र विलासभवनादौ मुनीनाम् अतिथिसत्कारयोग्यं स्थानं नासीदिति गम्यते] । प्रतिपालयामि—प्रतीक्षे ।

(३७) अग्निशरणमार्गं—होमगृहस्य पन्थानम् । आदेशय—दर्शय । प्रतीहारी—सन्धिविग्रहादिकार्य्यजातनिवेदनकारिणी रमणी, तल्लक्षणं मातृगुप्ताचार्य्यैरुक्तं,—"सन्धिविग्रहसंबद्धं नानाकार्य्यसमुत्थितम् । निवेदयन्ति याः कार्य्यं प्रतीहार्य्यस्तु ताः स्मृताः ॥" इति । अथ वेत्रवतीति प्रतीहारीनाम ।

(३८) अभिनवेति ।—अभिनवेन नूतनेन सम्मार्ज्जनेन रमणीयः मनोज्ञः । सन्निहितेति ।—सन्निहिता समीपवर्त्तिनी होमधेनुः यस्य तथोक्तः । अग्निशरणेति ।—अग्निशरणस्य होमगृहस्य अलिन्दः द्वारदेशस्थचतुरस्रप्रदेशः । [विशेषणद्वयेनात्र पवित्रतातिशयः द्योत्यते । स्वभावोक्तिरियम्] ।

(३९) किमिति ।—व्रतिनां नियमवताम्, आरब्धयज्ञानामिति यावत्, ("आदेष्टा त्वध्वरे व्रती । यष्टा च यजमानश्च" इत्यमरः) उपोढ़म् अधिकं तपो येषाम् ("उपोढ़ः कथितोऽप्यूढ़े समासन्ने विवाहिते" इति धरणिः) तथोक्तानां तापसानामित्यर्थः, तपः यागादि कर्म्म, विघ्नैः यज्ञव्याघातकराक्षसादिप्रत्यूहैः, दूषितं व्याहतं किं तावत् ? उत अथवा, केनचित् दुराचारेण इति शेषः, धर्मारण्यचरेषु

आहोस्वित् प्रसवो ममापरिचितैर्विष्टम्भितो वीरुधाम् ?
इत्यारूढ़बहुप्रतर्कमपरिच्छेदाकुलं मे मनः (३९) ॥१०॥

प्रती। देवस्स भुअदण्डणिव्वुदे अस्समपदे कुदो एवं ? किन्तु सुचरिदाहिणन्दिणो इसीओ देवं सभाजइदं (४०) आअदे त्ति तक्केमि। (ज)

[ ततः प्रविशन्ती गौतमीसहितौ शकुन्तलामादाय काश्यपशिष्यौ, पुरतश्चैषां पुरोहितकञ्चुकिनौ । ]

कञ्चु। इत इतो भवन्तः ।

शार्ङ्गरवः। सखे शारद्वत !—

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।

(ज) देवस्य भुजदण्डनिर्वृत्ते आश्रमपदे कुत एवम् ? किन्तु सुचरिताभिनन्दिन ऋषयो देवं सभाजयितुम् आगता इति तर्कयामि ।

तपोवनवासिषु प्राणिषु जीवेषु असत् मन्दं, वक्तुमपि अशक्यमिति भावः, यथा तथा चेष्टितम् आचरितम् ? आहोस्वित् किंवा, मम अपरिचितैः अज्ञातैः दुर्द्रैरिति भावः, वीरुधां लतानां प्रसवः फलं पत्र पुष्पञ्च इत्यर्थः, ("फलं पत्रञ्च पुष्पञ्च वृक्षाणां प्रसवं विदुः" इति धरणिः) विष्टम्भितः प्रतिबद्धः, अपहृत इति यावत् ; इति इत्थम् आरूढ़ः उद्भूतः बहुः विविधः प्रतर्कः यस्मिन् तथाभूतं मे मम मनः अपरिच्छेदेन अनिर्द्धारणेन आकुलम् उत्कण्ठितं भवतीति शेषः। शार्दूलविक्रीड़ितं वृत्तम् ॥१०॥

(४०) देवस्य—राज्ञः। भुजदण्डेति।—भुजौ दण्डाविव ताभ्यां निर्वृते सुस्थीकृते, निर्विघ्ने इत्यर्थः। आश्रमपदे—तपोवनभूमौ। [अनेन प्रतापातिशयः सूचितः]। 'तदा कुतः समागताः ?' इत्यत आह,—किन्त्विति।—सुचरितेति।—सुचरितं सत्कार्य्यम् अभिनन्दन्तीति तथोक्ताः। सभाजयितुं—सम्मानयितुं, प्रीणयितुमित्यर्थः।

(४१) जनसङ्कुलं राजकुलमवलोक्य विविक्तवासित्वात् सभयमाह, महाभाग इति।—अभिन्ना अव्याहता स्थितिः मर्य्यादा, सदाचारपद्धतिरित्यर्थः, येन तथाभूतः, शिष्टाचारपरिपालकः असौ नरपतिः, कामं सम्यक् महाभागः महानुभावः। 'कुतः

तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव (४१) ॥११॥

शारदतः। शार्ङ्गरव! स्थाने खलु पुरप्रवेशात् तव ईदृशः संवेगः। अहन्तु (४२)—

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव प्रबुद्ध इव सुप्तम्।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि (४३) ॥१२॥

शायते अभिन्नस्थितिलमस्य?' इति तदर्थयन्नाह, नेति।—तथा च वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां मध्ये कश्चित् अपकृष्टोऽपि नीचोऽपि अपथं कुमार्गं न भजते न आश्रयति ; सर्वे खलु सदाचारसम्पन्ना राज्येऽस्मिन्निति भावः। तथापि एवं शिष्टाचारपन्नत्वामपि इत्यर्थः, इदं जनाकीर्णं राजसदनमिति शेषः, शश्वत् सततं परिचितम् अभ्यस्तं विविक्तं विजनं येन तादृशेन मनसा उपलक्षितः हेतुना वा, सततनिर्जनस्थानप्रियेण इत्यर्थः, हुतवहपरीतम् अग्निव्याप्तं गृहमिव सभय-प्रवेशमिति भावः, मन्ये जानामि। अत्र 'मन्ये' इति पदं वितर्कमात्रं प्रतिपादयति, सुतरां नोत्प्रेक्षावाचकम्। [अत्र "हुतवहपरीतं गृहमिव" इति सामान्यधर्म-सम्बन्धादुपमा ; तथा हुतवहपरीतत्वरूपं कार्य्यं तदीयकारणाभावनिबन्धनमिति विभावना ; तद्विरुद्धकारणकलापसत्त्वेऽपि तादृशकार्य्याभाव इति विशेषोक्तिः ; अनयोः साधकबाधकप्रमाणाभावात् सन्देहसाङ्कर्य्यम्। श्लोकेनात्र वक्तुः वैराग्यं व्यज्यते]। शिखरिणी वृत्तं,—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति। तल्लक्षणात् ॥११॥

(४२) स्थाने—युक्तं,—"युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः। पुरप्रवेशात्—नगर-प्रवेशात्, ईदृशः,—उक्तप्रकारः। संवेगः,—सम्भ्रमः। तु—किन्तु, अहम् 'अवैमि' इति श्लोकेनान्वयः।

(४३) अभ्यक्तमिवेति।—इह राजधान्यां सुखसङ्गिनं विषयसम्भोगसुखरतं जनं, स्नातः जनः अभ्यक्तं सर्वाङ्गेषु तैलाक्तं जनमिव, अवैमीत्यनेन सर्वत्र सम्बन्धः। अभ्यङ्गलक्षणन्तु,—"मूर्द्ध्नि दत्तं यदा तैलं भवेत् सर्वाङ्गसङ्गतम्। स्रोतोभिस्तर्पयेत् बाह्यं अभ्यङ्गः स उदाहृतः॥" इति। [अनेन खलु पापक्लिष्टोऽयं जनसङ्घः जलस्नानेनेव सदनुष्ठानेन अचिरात् पापमुक्तो भवितुं समर्थः इति गम्यते।] शुचिः पवित्रो जनः अशुचिमिव अपवित्रं जनमिव [अनेन पुनः अपत्यादिस्नेहानुविद्धो जनः साधुनाऽप्यधि-

पुरोधाः। अत एव भवद्विधा महान्तः। (४४)

शकुन्तला। [ दुर्निमित्तम् (४५) अभिनीय। ] अम्भो ! किं मे वामेदरं णअणं विफ्फुरदि !! (झ) (४६)

गौतमी। जादे ! प्पडिहदं अमङ्गलं, सुहाइं दे होन्तु। (ञ) (४७)                [ इति परिक्रामति ]।

पुरो। [ राजानं निर्दिश्य। ] भो भोः तपस्विनः ! असौ अत्रभवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः, (४८) पश्यतैनम्।

(झ) अहो ! किं मे वामेतरत् नयनं विस्फुरति !!

(ञ) जाते ! प्रतिहतममङ्गलं शुभानि ते भवन्तु।

कारीति व्यज्यते। ] प्रबुद्धः जागरितो जनः, सुप्तं निद्रितं जनमिव [ एतेन अज्ञानसमाच्छन्नोऽयं साम्प्रतमिति गम्यते। ] तथा स्वैरगतिः स्वेच्छाचारी जनः, बद्ध कारावासिनं जनमिव [अनेन च प्रयत्नसहस्रेणापि मोक्षपथमानेतुं दुष्करोऽयमिति सूच्यते। ] अवैमि मन्ये। [अनेन च सुक्तिमहिम्ना शार्ङ्गरवात् समधिकज्ञानवान् प्रकृतिगम्भीरश्चायं शारद्वत इति नितरां गम्यते। मालोपमाऽलङ्कारः। तदुक्तं दर्पणे,—"मालोपमा यदेकस्योपमानं बहु दृश्यते" इति ]। आर्य्या जातिः ॥१२॥

(४४) तयोरुक्ति-प्रत्युक्तिनिचयमाकर्ण्य सगौरवमाह, अत इति।—अत एव—भवताम् ईदृग्हृदयभावाविर्भावादेव, भवद्विधाः,—भवादृशाः, महान्तः,—उदाराः।

(४५) दुर्निमित्तं—दुर्लक्षणम्।

(४६) वामेतरत्—दक्षिणम्। विस्फुरति—स्पन्दते।—"वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः" इति सामुद्रिकवचनात् स्त्रीणां दक्षिणाङ्गस्फुरणममङ्गलनिदानमिति भावः।

(४७) प्रतिहतं—विध्वस्तं, भवतु इति शेषः ; तव दक्षिणाक्षिस्पन्दनसूचितम् अशुभं विनश्यतु इत्यर्थः।

(४८) "वनेचरा इमे, अज्ञातराजसमाचाराः" इत्यभिमानाध्मातहृदयः शिक्षयन्निव आह, भो इति।—भोः भोः इति सम्बोधनसूचकमव्ययम्। [ सम्भ्रमे द्विरुक्तिः। ] तपस्विनः,—तापसाः !—"तपोऽनुष्ठातुमेव समर्थाः, न तु अन्यत् किमपि" इति

गार्ङ्ग। भो महात्मन्! काममेतद् अभिनन्दनीयं, तथापि वयम् अत्र मध्यस्थाः। (४९) कुतः ?—

भवन्ति नम्रास्तरवः फलोद्गमैः,
नवाम्बुभिर्दूरविलम्बिनो घनाः।

---

गूढ़ाभिप्रायः। असौ—पुरी वर्त्तमानः। अत्रभवान्—पूज्यः। वर्णाश्रमेति।—वर्णाश्रमाणां—वर्णाः ब्राह्मणादयः, आश्रमा ब्रह्मचर्य्यगार्हस्थ्यवानप्रस्थसन्न्यासाः, तेषां, रक्षिता—पालयिता, [ अनेन भवताम् अस्मदादीनाञ्च न जातु साहाय्यपालनयोग्यता इति सूच्यते। "वर्णाश्रमाणाम्" इत्यत्र शेषे षष्ठी, तृन्योगे षष्ठीनिषेधात् ]। प्रागेव—पूर्व्वमेव, भवताम् आगमनादिति शेषः, मुक्तम् आसनं येन तथोक्तः, आसनं परित्यजन् इत्यर्थः, [ एतेन विनयातिशय्यं ध्वन्यते ]। प्रतिपालयति—अपेक्षते, वः,—युष्मान्। [ अनेन च भक्त्यतिशयः व्यङ्ग्यः ]।

(४९) वनवासित्वेऽपि तपोऽनुभावात् विदितसकललोकसमाचारः तदभिप्रायं बुद्धा अनुरूपं प्रत्युत्तरयति, भोः इति।—महात्मन्!—महानुभव! [ सोल्लुण्ठनोक्तिरियम्। "महाब्राह्मण!" इति पाठे—राजपुरोहितत्वात् निन्दितब्राह्मणः इत्यर्थः, पक्षे चात्र सुतरामेव उपहासः व्यज्यते ]। एतत्—आसनत्यागपूर्व्वकम् अस्मदपेक्षणमिति भावः। कामं—यथेष्टम्। अभिनन्दनीयं—प्रशंसनीयम्। 'यद्येवं, तर्हि कुतो नाभिनन्द्यते ?' इत्यत आह, तथापीति।—कामम् अभिनन्दनीयत्वेऽपि वयं तापसाः परिज्ञातलोकवृत्तान्ताः, इत्यादयः बहुवचनेन सूचिताः ]। अत्रेति।—अत्र—एतस्मिन् विषये, मध्यस्थाः,—उदासीनाः, एतत् प्रशंसने नास्ति नः प्रवृत्तिः इत्यर्थः; नैसर्गिकेषु कार्य्येषु का प्रशंसेति भावः।

(५०) मध्यस्थत्वे कारणं दर्शयति, भवन्तीति।—तरवः वृक्षाः [ अत्र सामान्यवाचकोऽपि तरुशब्दः फलवद्वृक्षविशेषवाचकः लक्षणया; वनस्पत्यादिसकलवृक्षवाचकत्वे फलोद्गमैरित्युक्त्यसङ्गतेः; तथा सत्पुरुषाणां विशिष्टानामुपमेयत्वात् उपमानताऽपि अस्य न सम्भवति। अत एव उत्तरत्र मेघपदमपहाय निविड़मेघवाचकघनशब्दोपादानमपि सङ्गच्छते। ] फलानाम् उद्गमैः उद्भवैः [ अत्र "आगमैः" इति पाठे,—आ समन्तात् गमैः प्राप्तिभिः; अनेन समृद्धिपराकाष्ठा तेषां दर्शिता। ] नम्राः विनताः विनीताश्च भवन्ति, भरेण इति भावः। घनाः मेघाः सान्द्राश्च नवाम्बुभिः नवजलैः [ अनेन वर्षाकालारम्भः ध्वन्यते; तदानीमेव मेघस्य दूरविलम्बित्वसम्भवात् ]

अनुद्धताः सत्पुरुषाः समृद्धिभिः,
स्वभाव एवैष परोपकारिणाम् (५०) ॥१३॥

प्रती। देव ! पसण्णमुहा इसीओ दीसन्ति। (ट) (५१)

राजा। [शकुन्तलां निर्वर्ण्य।] अये ! अत्र,—

केयमवगुण्ठनवती नातिपरिस्फुटशरीरलावण्या।
मध्ये तपोधनानां किसलयमिव पाण्डुपत्राणाम् (५२)॥१४॥

(ट) देव ! प्रसन्नमुखा ऋषयो दृश्यन्ते।

भृता इति शेषः, दूरात् विलम्बन्ते इति दूरविलम्बिनः भवन्तीति शेषः। [अत्र "भूमिविलम्बिनः" इति पाठे—भूमौ भूमिनिकटे विलम्बन्ते इति। यथा फलभरेण वृक्षा नताः सन्तः भूमिपतनयोग्या भवन्ति, मेघा अपि नवजलभारेण तथा भवन्ति इति अनयोः साम्यं भवति।] तथा सन्तः पुरुषाः समृद्धिभिः सम्पद्भिः, अनुद्धताः अगर्विणः, विनीता इत्यर्थः, भवन्तीति शेषः ; एष परोपकारिणां स्वभाव एव। फलवन्तो वृक्षाः, जलपूर्णा मेघाः, ऐश्वर्य्यशालिनः साधवः, परोपकारिणो जनाश्च नम्राः भवन्तीत्येषाम् एवमेव प्रकृतिः इति निष्कर्षः। [अत्र सामान्येन विशेषसमर्थनरूपेण अर्थान्तरन्यासेन वाक्यत्रयगतेः विनयरूपसाधारणधर्म्मस्य नम्र-दूरविलम्बि-अनुद्धतादिपदैः पृथक् निर्देशात् मालाप्रतिवस्तूपमाऽलङ्कारेण, तथा द्रुमन्त इति विशेषे वक्तव्ये सत्पुरुषा इति सामान्येन कथनात् अप्रस्तुतप्रशंसाऽलङ्कारेण, तथा तरुघनयोरचेतनयोः नम्रत्वाभ्यां दूरविलम्बित्वाभ्याञ्च वस्तुतो भिन्नाभ्यामभेदेनाध्यवसितत्वादतिशयोक्त्यलङ्कारेण च अङ्गाङ्गिभावेन सङ्कीर्य्यते। वंशस्थविलं वृत्तम् ॥१३॥

(५१) प्रशान्तमानसान् सौम्यमूर्त्तीन् मुनीनवलोक्य आत्मभक्तिपरिप्लुतमानसा प्रतीहारी तापसतपोविघ्नशङ्किनः राज्ञः संशयमपनेतुमाह, देवेति।—प्रसन्नमुखाः,—प्रसन्नानि प्रसादवन्ति मुखानि येषां तादृशाः। [एतेनाजातदुःखत्वमवगम्यते। इतः परं "आणामि विस्सद्धकज्जा इसीओ" इत्यधिकः पाठः दृश्यते। तत्र—"जानामि विस्रब्धकार्य्या ऋषयः" इति (सं)। अत्र विस्रब्धम् अक्रूरं कार्य्यं येषां ते तादृशाः]।

(५२) केयमिति।—पाण्डुपत्राणां पक्वपलाशानां मध्ये किसलयमिव नवपल्लवमिव [इत्युपमा। अस्याश्च उपमानभूतस्य किसलयस्य भिन्नलिङ्गत्वेऽपि कोमलत्वादेः साधारणधर्म्मस्य गम्यमानत्वात् सहृदयानां नितरां हृदयरञ्जकत्वमिति लिङ्गव्यत्ययजनितं नानौचित्यं दोषः। तथा च दण्डी,—"न लिङ्गवचने भिन्ने न

प्रती । भट्टा ! कुदूहलगब्भो प्पड़िहदो ण मे तक्को प्पसरदि, दंसणीआ उण से आकिदी लक्खीअदि । (ठ) (५३)

राजा । भवतु, अनिर्वर्ण्यं खलु परकलत्रम् । (५४)

शकु । [ उरसि हस्तं दत्त्वा स्वगतम् । ] हिअअ ! किं एव्वं

(ठ) भर्त्तः ! कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति, दर्शनीया पुनरस्या आकृतिः लक्ष्यते ।

---

हीनाधिकताऽपि वा । उपमादूषणायाऽलं यत्रोद्वेगो न धीमताम् ॥" इति । ] तपोधनानां मध्ये अवगुण्ठनवती सशिरोमुखप्रच्छादनवती, अत एव न अतिशयेन परिस्फुटं शरीरस्य लावण्यं कान्तिविशेषो यस्याः, तथाभूता ; [ लावण्यलक्षणन्तु,—"मुक्ताफलेषु छायायाः तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्य-मिहोच्यते ॥" इति । ] अथवा—नातिपरिस्फुटे शरीरलावण्ये यस्याः सा, [ न चात्र शरीरपदेनैव लावण्यस्यापि प्राप्तेः तदुपादाने पौनरुक्त्यमिति शङ्कनीयम्, उभयोरेव विधेयत्वात् ; अत एव अति-परि-रूपयोः उपसर्गयोः उपादानम् । ] ईषत्प्रकाशितेत्यर्थः । इयं का ? [ अत्र का स्विदिति पाठे,—स्विद्वितर्के । उपमाऽलङ्कारः, वाक्यार्थहेतुकं काव्यलिङ्गमपि । अनेन पुनः राजवचनेन शापा-च्छादिताऽपि स्थायिनी सुदृढ़तमा रतिः ध्वन्यते ] । आर्य्या जातिः ॥१४॥

(५३) भर्त्तः इत्यादि ।—भर्त्तः !—प्रभो ! कुतूहलगर्भः,—कुतूहलम् औत्सुक्यं गर्भे मध्ये यस्य तथाभूतः, मे मम तर्कः, तपोधनानामागमनविषयकः संशय इति भावः, प्रतिहतः,—अन्तरा व्याहतः सन्, न प्रसरति—न स्फुरति ; अत्र ममापि कौतुकं वर्त्तते, न निर्णेतुं शक्नोमि इत्यर्थः । ( इति राजप्रश्नस्योत्तरम् ) । नीचा सेविकेयम् इति हीनत्वज्ञापकं स्वहृदयभावमाविष्कुर्वन्तो आह, दर्शनीयेति ।—पुनः,—किन्तु, अपरञ्चे-त्यर्थः, अस्याः कामिन्याः आकृतिः, दर्शनीया—दर्शनयोग्या, सुदर्शनेत्यर्थः, लक्ष्यते—ज्ञायते इत्यर्थः ; अत्र वितर्केणालं, रूपमेव पश्यतु भवान् इति प्रतीहार्य्या अभिप्रायः ।

(५४) नृपस्तु तस्याः कुत्सितमभिप्रायं बुद्ध्वा तद्वचनम् आक्षिप्याह, भवतु इति ।—'भवतु'—इति निषेधे,—"अस्तु भवतु पूर्य्यते इति निषेधे" इत्युक्तेः । अनिर्वर्ण्यम्—अनवलोकनीयम् । परकलत्रं—परनारी । [ अनेन राज्ञः औचित्यमपि ध्वनितम् ] ।

(५५) उरसि—वक्षसि । हस्तं दत्त्वा इति कविवाक्यम् । [शङ्कितस्वभावोक्तिः ] ।

वेवसि ? अज्जउत्तस्स तादिसभावाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बस्स। (ड) (५५)

पुरो। [पुरो गत्वा।] स्वस्ति देवाय। देव ! एते खलु विधिवत् अर्चिताः तपस्विनः, कश्चिदेतेषु उपाध्यायसन्देशः (५६) अस्ति, तं देवः श्रोतुमर्हति।

राजा। अवहितोऽस्मि।

शिष्यौ। [हस्तमुद्यम्य।] भो राजन् ! विजयतां भवान्।

राजा। सर्वान् अभिवादये वः।

शिष्यौ। स्वस्ति देवाय।

राजा। अपि निर्विघ्नं तपः ?

शिष्यौ। कुतो धर्मक्रियाविघ्नः सतां रक्षितरि त्वयि।
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ? (५७) ॥१५॥

(ड) हृदय ! किमेवं वेपसे ? आर्य्यपुत्रस्य तादृशभावानुबन्धं स्मृत्वा धीरत्वं तावत् अवलम्बस्व।

किं—कथम्। एवम्—ईदृशं, तथा शङ्काकारणमुत्प्रेक्ष्य इत्यर्थः ; वेपसे—कम्पसे, शङ्कसे इत्यर्थः। तादृशभावानुबन्धं—तथाविधानुरागपरम्पराम्। स्मृत्वा—स्मृतिपथमानीय, धीरत्वं—धैर्य्यम्, अवलम्बस्व—आश्रय, धीरं भव इत्यर्थः। 'न हि तादृशस्य प्रेम्णः परिणतिः, कदापि विसदृशी भवितुमर्हति' इति भावः।

(५६) स्वस्ति—मङ्गलं, भवतु इति शेषः। [अत्र स्वस्तिशब्दयोगे "नमःस्वस्ति—" (२।३।१६ पा०) इत्यादिना चतुर्थी]। एते—पुरोवर्त्तिनः, (इति हस्तेन निर्देशः)। विधिवत्—यथाविधि, श्रौतेन विधिना इत्यर्थः ; राज्ञः पूर्वं तथैवोपदेशात्। अर्चिताः,—पूजिताः। उपाध्यायसन्देशः,—उपाध्यायस्य—आचार्य्यस्य, सन्देशः,—वाचिकम्।

(५७) कुत इति।—त्वयि रक्षितरि शासितरि, सतां साधूनां, धर्म्मक्रियायाः धर्म्मानुष्ठानस्य विघ्नः व्याघातः कुतः ? [अत्र सकलमेव पदकदम्बं विधेयमित्यवमन्तव्यम्]। तथा च—यत्र च राज्ये भवान् रक्षिता, तत्र सर्व्व एव सन्तः, तत्र च तेषां क्रियाभावविघ्नोऽपि न सम्भाव्यते, धर्म्मक्रियायान्तु सुतरामेव विघ्नाभावः इत्यर्थः।

राजा । [आत्मगतम् ।] सर्वथा अर्थवान् खलु मे राजशब्दः ! (५८) [प्रकाशम् ।] तत्रभवान् कुशली काण्वः ? (५९)

शार्ङ्ग । राजन् ! स्वाधीनकुशलाः सिद्धिमन्तः । स भवन्तम् अनामयप्रश्नपूर्वकम् (६०) इदमाह—" ।

राजा । किम् आज्ञापयति भगवान् ?

शार्ङ्ग । "—यन्मिथः समयात् इमां मदीयां दुहितरं भवान् उपयेमे, तन्मया प्रीतिमता युवयोरनुज्ञातम् । (६१) कुतः ?—

अत्र दृष्टान्तमाह,—घर्म्मांशौ सूर्य्ये तपति सति, तमः अन्धकारः कथम् आविर्भविष्यति ? प्रसरिष्यति ? यस्य खलु सूर्य्यस्य उदयाचलशिखरारोहणमात्रेणैव न तमसामाविर्भावसम्भावना, तस्मिन् सकलतेजस्विवर्य्ये सूर्य्ये तपति सुतरामेव तदभाव इति भावः । [सूर्य्योद्गमे तमसामभाव इव त्वयि रक्षितरि धर्मविघ्नाभावः इति प्रतिबिम्बनात् दृष्टान्तालङ्कारः ; एवं त्वयि शासितरि क्रियामात्रविघ्नसम्भावनाऽभावात् धर्मक्रियाविघ्नसम्भावना तु सुतरामेव नास्तीति अर्थापत्तिश्च ] । पथ्यावक्त्रं वृत्तम् ॥ १५ ॥

(५८) अर्थवान्—अन्वर्थः, राजते लोकान् रञ्जयतीत्यर्थयोगादिति भावः ।

(५९) तत्रभवान्—पूज्यः । कुशली—मङ्गलवान् ?—"ब्राह्मणं कुशलं पृच्छेत्" इति मनूक्तेः तादृशप्रश्नः । [अत्र "अथ भगवान् लोकानुग्रहाय कुशली काण्वः ?" इति पाठान्तरे—लोकानां जनानां भुवनानां वा,—"लोकस्तु भुवने जने" इत्यमरः । अनुग्रहाय—मङ्गलविधानार्थमित्यर्थः । अनेन त्रिभुवनानुग्राहकत्वेनास्य 'लोकोत्तरा तपःसिद्धिः' इति सूचितम् ] ।

(६०) स्वाधीनेति ।—सिद्धिमन्तः,—सिद्धार्थाः पुरुषाः, स्वाधीनकुशलाः,—स्वस्य अधीनम् आयत्तं, स्वेच्छामात्रसुलभमित्यर्थः, कुशलं मङ्गलं येषां तथाभूताः ; महर्षीणां सिद्धत्वात् कुशलं स्वायत्तमेव, न परसाहाय्यम् अपेक्षते इति भावः । अनामयप्रश्नपूर्वकम्—आरोग्यप्रश्नपुरःसरम् । तथा च मनुः,—"ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्" इति ।

(६१) मिथः,—अन्योऽन्यं, समयात्—प्रतिज्ञां कृत्वा इत्यर्थः, [ल्यब्लोपे पञ्चमी] गान्धर्वेण विधिनेति यावत्,—"गान्धर्वः समयान्मिथः" इति शास्त्रात् । [अनेन सकलशास्त्रपारदृश्वनः काण्वस्य अनुमोदनहेतुः प्रदर्शितः ] । इमां—पुरोवर्त्तिनीम्, उपयेमे—

त्वमर्हतामग्रसरः स्मृतोऽसि नः,
शकुन्तला मूर्त्तिमतीव सत्क्रिया।
समानयंस्तुल्यगुणं वधूवरं,
चिरस्य वाच्यं न गतः प्रजापतिः (६२) ॥१६॥

तत् इदानीम् आपन्नसत्त्वेयं गृह्यतां सहधर्मचरणाय" इति। (६३)

परिणीतवान् ["उपाद्यमः स्वकरणे" (१।३।५६ पा०) इत्यात्मनेपदम्]। प्रीतिमता—सन्तुष्टेन, अनुज्ञातम्—अनुमोदितम्।

(६२) ननु तदज्ञातकृतोद्वाहस्य साहसैकवृत्तेः सत्यसन्तोषकारणे कुतः प्रीतिरित्यतः हेतुं प्रदर्शयन्नाह, त्वमिति।—त्वम् अर्हतां योग्यानां, पूज्यानामिति यावत्, ["अर्हः प्रशंसायाम्" (३।२।१३३ पा०) इति शतृ] अग्रसरः श्रेष्ठः नः अस्माकं स्मृतः ज्ञातः [अत्र "प्राग्रहरः" इति पाठे, स एवार्थः।—"पराद्ध्याग्र्याः प्राग्रहराः" इत्यमरः] असि; त्वां पूजनीयाग्रगण्यं जानीम इति भावः। शकुन्तला मद्दुहिता मूर्त्तिमती देहधारिणी सत्क्रिया सत्कारः, पूजेति यावत्, ततश्च पूजा पूज्यमेवाश्रयतीति भावः। [अनेन खलु त्रिभुवनपूज्यत्वमस्याः ध्वनितम्] तस्मात् तुल्यगुणम् अन्योऽन्यानुरूपगुणशालिनं, वधूश्च वरश्च तयोः समाहारः वधूवरं मिथुनमित्यर्थः, समानयन् संयोजयन्, विवाहविधिना मेलयन्नित्यर्थः, प्रजापतिः विधाता, चिरस्य चिरं, भाविकालेऽपि इत्यर्थः [विभक्तिप्रतिरूपकमव्ययम्,—"चिराय चिररात्राय चिरस्याद्याः चिरार्थकाः" इत्यमरोक्तेः] वाच्यम् अपवादम्, अयोग्ययोजनजनितमिति भावः, न गतः न प्राप्तः; अन्यत्र यत्र जगति वरवधू मेलयति, तत्र अतुल्यगुणम्, इह तु तुल्यगुणतया नूतनमेव, अत एव चिरस्य इत्युक्तिः; तथा च अनेन दृष्टान्तेन परतोऽपि वाच्यत्वाभावः विधातुरिति भावः। [अत्र आनुरूप्येण योग्यवस्तुनः प्रशंसनात् समालङ्कारः, 'मूर्त्तिमतीव' इति वाच्योत्प्रेक्षा, तथा 'समानयन् अत एव वाच्यं न गतः' इति काव्यलिङ्गमित्येषां संसृष्टिः]। वंशस्थविलं वृत्तम् ॥१६॥

(६३) आपन्नसत्त्वा—गर्भवती। सहधर्मचरणाय—अनया सह धर्मं गार्हस्थ्योचितं कर्त्तव्यकलापम् आचरितुमिति यावत्,—"सस्त्रीको धर्ममाचरेत्" इति शास्त्रात्। [अनेन विधिवदूढ़त्वं ध्वन्यते]।

गौत। भद्दमुह! किम्पि वत्तुकामम्हि, ण मे वश्रणाव-सरो अत्थि। (ढ) (६४)

राजा। आर्य्ये! कथ्यताम्।

गौत। णावेक्खिदो गुरुश्रणो इमिए, तुए वि ण पुच्छिदो बन्धू।

एक्कक्कस्स अ चरिए किं भणादु एक्क एक्कस्सिं?(ण)(६५)॥१७॥

शकु। [आत्मगतम्।] किस्सु क्खु अज्जउत्तो भणिस्सदि! (त)

राजा। [साशङ्कमाकर्ण्य।] अये! किम् इदम् उपन्यस्तम्! (६६)

(ढ) भद्रमुख! किमपि वक्तुकामाऽस्मि, न मे वचनावसरोऽस्ति।

(ण) नापेक्षितो गुरुजनोऽनया, त्वयापि न पृष्टो बन्धुः।

एकैकस्य च चरिते किं भणतु एक एकस्मिन्॥

(त) किं नु खलु आर्य्यपुत्रो भणिष्यति?

(६४) किमपि—किञ्चित्। वक्तुकामाऽस्मि—वक्तुं कामः यस्याः सा ["तुङ्काम-मनसोरपि" का० इति तुमो मलोपः] किञ्चिद्वक्तुमिच्छामि इत्यर्थः। परस्परं गाढ़प्रणयम् अनुसृत्य आक्षिप्याह, न मे इति।—वचनावसरः,—वाक्प्रसरस्य अव-काशः, न अस्ति; शिष्यद्वयेन महर्षिणेव सर्वस्योक्तत्वादिति भावः।

(६५) स्वोक्ताक्षेपकारणं स्पष्टयति, नापेक्षित इति।— अनया शकुन्तलया गुरुजनः अस्मदादिरिति भावः, न अपेक्षितः न गणितः, त्वयाऽपि बन्धुः स्वजनः अस्या इति शेषः, न पृष्टः, अस्याः पाणिग्रहणार्थमिति भावः; एकैकस्य अन्योऽन्यस्य, शकुन्तलायाः तव च इत्यर्थः; तृतीयनिरपेक्षस्येति भावः। एकस्मिन् अभिन्ने, गुरुजना-ऽनवेक्षारूपसमानापराधजनिते इत्यर्थः, चरिते अनुष्ठिते, कार्य्ये इति शेषः, अत्यनु-रागवशंवदतयेति भावः, एकः अपरः कश्च: अहं वा इत्यर्थः, किं भणतु? एत-दतिरिक्तं किं वक्तव्यमस्ति? इत्यर्थः; अथवा—एकस्मिन् उभयोरन्यतरस्मिन्नित्यर्थः, विषये किं भणतु? ब्रवीतु? न किमपि वक्तुं युज्यते। अन्योऽन्यानुरागेण उभाभ्या-मेव विहितमिदं, तत्र एकः पर्य्यनुयोज्यः न भवति इति भावः। इयं गाथा॥१७॥

(६६) शापव्यवहितचित्तवृत्तिः दुष्मन्तः तापसानां शकुन्तलास्वीकारणरूपं वचन-प्रपञ्चमाकर्ण्य अलीकमेतदिति दृढ़प्रत्ययः, जनसंसदि आत्मदोषं विशङ्कमानः आह, अये इति।—अत एव साशङ्कमिति कविवाक्यम्। अये—विस्मये, इदं शकुन्तला-स्वीकाररूपं युष्मभिरुक्तं तत् किम् उपन्यस्तम्? किं वक्तुमारब्धम्? [आदिकर्मणि

राजा। [आत्मगतम्।] ह्द्दी! ह्द्दी! सावलेवो से वअणावक्खेवो। (य) (६७)

शार्ङ्ग। किं नाम, किमिदम् उपन्यस्तमिति? ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः। (६८)—

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते।

(य) हा धिक्, हा धिक्! सावलेपोऽस्य वचनावक्षेपः!

कः।—"उपन्यासस्तु वाङ्मुखम्" इत्यमरोक्तेः।] अथवा,—उपन्यस्तम्—उपन्यासरूपम्? उपकथा कथ्यते किम्? इति भावः। [अनेन नायकगतमौचित्यं ध्वनितम्]।

(६७) सावलेपः,—साहङ्कारः। [अत्र पावक इति पाठे—वह्निरित्यर्थः। अत्र च व्यस्तरूपकम्]। वचनावक्षेपः,—वाग्विन्यासः; [अत्र "वचनोपन्यासः" इति पाठे—स एवार्थः]। वाक्यस्य स्वानभिमतत्वेन कार्कश्यप्रतीतेः सावलेपत्वोक्तिः।

(६८) शार्ङ्गरवस्तु अज्ञातशापवृत्तान्तः राजकृतशकुन्तलास्वीकारे सुतरामकृतसन्देहः नृपस्योक्तौ उपन्यस्तमित्यस्य न्यासरूपमर्थं मन्वानः, तदनुरूपम् उत्तरयति, किमिति।—इदं—शकुन्तलारूपम्, उपन्यस्तं—कण्वसमीपे न्यासीकृतं किम्? इति यदुक्तं, तत् किं नाम? नाम अत्र सम्भावनायाम्; किं सम्भवति? इत्यर्थः। ननु कथं नाम न्यासः सम्भवति? तथाविधस्यापि क्वचिद् दर्शनादित्यतः तत्र लोकवृत्तान्तं दर्शयित्वा तमधिक्षिपति, नन्विति।—ननु—प्रश्ने, भवन्त एव—विषयिणः इत्यर्थः, 'न तु तापसाः' इति एवकारेण व्यवच्छेद्यम्। सुतरां—सम्यक्। लोकवृत्तान्तनिष्णाताः,—लोकाचारविचक्षणाः,—"नियततपोऽनुष्ठानपरायणे तादृश ऋषिप्रवरे भवत्परिणीता आपन्नसत्त्वा रमणी तथाविध वनस्थले चिरं न्यासीकृता स्थातुमर्हति न वा" तल्लोकव्यवहारविदः भवन्त एव जानन्तीति निष्कर्षार्थः।

(६९) ननु "सत्यं परिणीता मया, राजानो हि बहुपत्नीकाः, तदत्र कथं भवद्भिः असन्देशमानीता?" इत्याह, सतीमिति।—जनः भर्तृमतीं सभर्तृकां, सधवामित्यर्थः, नारीं स्त्रीमात्रं, ज्ञातिकुलं पितृकुलम्, एकसंश्रयः—एकः तन्मात्र इत्यर्थः, संश्रयो यस्याः तथाविधां सतीमपि साध्वीमपि अन्यथा असतीत्वेन इति भावः, [अत्र जनसंसदि तापसस्योक्तौ अनौचित्यदोषपरिहाराय कविना दुष्टेत्यादि-

अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः (६९) ॥१८॥

राजा । किम् अत्रभवती मया परिणीतपूर्वा ? (७०)

शकु । [सविषादमात्मगतम् ।] हिअअ ! संपदं संवुत्ता दे आसङ्का । (ट) (७१)

शार्ङ्ग । किं कृतकार्य्यद्वेषाद्धर्मं प्रति विमुखतोचिता राज्ञः? । (७२)

(ट) हृदय ! साम्प्रतं संवृत्ता ते आशङ्का !

पदमपहाय अन्यथेत्युक्तम् ] विशङ्कते विशेषेण आशङ्कते । अतः कारणात् स्वबन्धुभिः आत्मीयजनैः, पित्रादिभिरित्यर्थः, प्रमदा नारी, प्रकृष्टः मदः यौवनजनितः यस्याः तादृशी नारी वा इत्यर्थः ; (वाहुके तस्याः पितृभवनावस्थाने जनानां दोषशङ्काऽभावादिति भावः) [अत एव स्त्रीसामान्यवाचकपदमपहाय प्रमदेति विशेषपदमुपात्तम् ] प्रिया अप्रिया वा भर्त्तुरिति शेषः, परिणेतुः पत्युः समीपे इष्यते रक्षणीयेति शेषः । [अनेनात्र शार्ङ्गरववाक्यसमुदायेन अर्थविशेषणं नाम नाट्यालङ्कारः दर्शितः । तथा च दर्पणे,—"उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा । उपालम्भविशेषेण तत् स्यादर्थविशेषणम् ॥" इति । अप्रस्तुतप्रशंसाऽलङ्कारः ] । वंशस्थविलं वृत्तम् ॥ १८ ॥

(७०) "भवत्परिणीतेयम्" इति शार्ङ्गरवस्य भृशं दृढवचनमाकर्णयतः मुनिशापात् विस्मृतशकुन्तलापरिणयस्य स्वस्य शकुन्तलास्वीकरणमवधार्य्य आह, किमिति । परिणीतपूर्वा—पूर्वं परिणीता [पचे पूर्वनिपातः ] ।

(७१) संवृत्ता—उपस्थिता । आशङ्का—उद्वेगः ।

(७२) कण्वप्रेषितायाः तस्यैव दुहितुः शकुन्तलायाः स्वयं रहसि कृतपरिणयास्वीकरणं राजवचनेनावगम्य सरोषं भर्त्सयन्नाह, किमिति ।—कृतस्य स्वानुष्ठितस्य पित्रादेरननुमतावपि शकुन्तलापरिणयरूपस्य कार्य्यस्य द्वेषात् अविहिताचरितत्वेन सम्यगवधारणात् धर्म्मं प्रति विमुखता पराङ्मुखता परिणयास्वीकारादिति शेषः, [प्रतिशब्दयोगे द्वितीया ] किं राज्ञः उचिता ? युक्ता ? यः खलु प्रजानां धर्म्मरक्षार्थमेव दण्डधरः वर्त्तते इति भावः । इति तु श्लोकस्य पूर्वाङ्कम् ; पराईं राजवाक्यानन्तरं द्रष्टव्यम् ।

राजा। कुतोऽयम् असत्कल्पनाप्रसङ्गः ? (७३)

शार्ङ्ग। [सक्रोधम्।]—

मूर्च्छन्त्यमी विकाराः प्रायेणैश्वर्यमत्तानाम् (७४)॥१९॥

राजा। विशेषेण अधिक्षिप्तोऽस्मि। (७५)

गौत। [शकुन्तलां प्रति।] जादे ! मुहुत्तअं मा लज्ज, अवणइस्सं दाव दे अवगुण्ठणं, तदो भट्टा तुमं अहिजाणिस्सदि। (घ)(७६)

[इति तथा करोति।] *

राजा। [शकुन्तलां निर्वर्ण्य स्वगतम्।]—

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवत्यध्यवस्यन्।

(घ) जाते ! मुहूर्त्तं मा लज्जस्व, अपनेष्यामि तावत् ते अवगुण्ठनं, ततो भर्त्ता त्वामभिज्ञास्यति।

---

(७३) असत्कल्पनाप्रसङ्गः,—असत्याः मिथ्याभूतायाः कल्पनायाः स्वयमुद्भावित-व्यापारस्य इत्यर्थः, प्रसङ्गः प्रसक्तिः, प्राप्तिः इत्यर्थः ; कुतः,—कस्मात् ? न जातु मिथ्या-भूतमेतत् मयि सम्भवति इत्यर्थः।

(७४) असत्कल्पनाप्रसङ्गं निरस्यति, मूर्च्छन्तीति (पूर्वार्द्धेन)।—ऐश्वर्यमत्तानाम् ऐश्वर्येण वैभवेन मत्तानां गर्वितानां प्रायेण बाहुल्येन अमी उक्तप्रकाराः विकाराः प्रकृतिविपर्ययाः मूर्च्छन्ति वर्द्धन्ते, प्रकटीभवन्ति इत्यर्थः। [अत्र सामान्येन विशेषसम-र्थनरूपोऽर्थान्तरन्यासालङ्कारः]। इयमार्य्या ॥१९॥

(७५) अधिक्षिप्तः—तिरस्कृतः।

(७६) अहो ! मुग्धेयं तापसी, नृपस्याज्ञाने अवगुण्ठनमेव कारणं मन्यमाना तदुन्मोचनेन प्रत्यभिज्ञापयितुमाह, जाते ! इति।—मुहूर्त्तं क्षणकालं, मा लज्जस्व, लज्जां परिहर। अवगुण्ठनम् आवरणम् अपनेष्यामि मोचयिष्यामि। अभिज्ञास्यति— अभिज्ञानदर्शनेन परिचयं ते प्राप्स्यति।

* इत आरभ्य षष्ठाङ्कसमाप्तिपर्यन्तं विमर्षसन्धिः, अयन्तु प्राचां मते अवगन्तव्यः।

(७७) त्रिभुवनललामभूतमनुपमं शकुन्तलारूपमवलोक्य स्थायिनः अनुरागस्य रूपं स्फुरणात् शापव्यवधानेन च सम्यग्निश्चेतुमशक्यतया संशयदोलाचलचित्तवृत्तिः

भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम् (७७) ॥२०॥

[ इति विचारयन् स्थितः ]।

प्रती। [ स्वगतम्। ] अम्मो ! धम्मावेक्खिदा भट्टिणो, ईदिसं णाम सुहोवणदं रूवं पेक्खिअ को अण्णो विआरेदि ? (न) (७८)

शार्ङ्ग। भो राजन् ! किमिति जोषमास्यते ? (७९)

(न) अहो ! धर्मापेक्षिता भर्तुः, ईदृशं नाम सुखोपनतं रूपं प्रेक्ष्य कोऽन्यो विचारयति ?

नरपतिः वितर्कयन्नाह, इदमिति।—अक्लिष्टा अम्लाना कान्तिः यस्य तथाभूतम् [अनेन प्रथमं यौवनं सूचितम्] एवं सहसेत्यर्थः, अतर्कितमिति यावत्, उपनतम् उपस्थितम् इदम् अयत्नप्राप्तमित्यर्थः, रूपं, 'प्रथमं प्राक् परिगृहीतं परिणीतं स्यात् न वा ?' इति अध्यवस्यन् वितर्कयन्, सन्दिहान इत्यर्थः, सन्, निशान्ते प्रातः [अत्र "विभाते" इति पाठे,—स एवार्थः। "अत्र निशान्ते" इति पदोपादानात् अनन्तरं रविकिरणेन दूरमपनीते तुषारे मधुनः यथा अवश्यमुपभोगसम्भावना तद्वदभिज्ञानेन शापे गते शकुन्तलायाः स्वीकरणमपि अवश्यं भविष्यति इति सूचितम्। तेन च प्रणयिनोः स्थायी अनुरागः ध्वन्यते। ] अन्तर्गतः तुषारः हिमं यस्य तथाभूतं कुन्दं कुन्दपुष्पं भ्रमर इव, तुषाराच्छन्नत्वात् मधुन इति भावः, [अत्र प्रकृतेऽपि शापस्य तुषारस्थानीयत्वेन आच्छादकत्वं बोध्यम् ] सपदि सहसा, भोक्तुं सेवितुं न खलु नैव शक्नोमि, मोक्तुं परित्यक्तुमपि न शक्नोमि। [ उपमाऽलङ्कारः, तेन च सन्देहालङ्कारः सङ्कीर्यते। अत्र च संशयोद्भावनात् संशयनामकं नाटकलक्षणं प्रदर्शितम्। यथाह दर्पणे,—"संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद् यदनिश्चयः" इति]। मालिनी वृत्तम् ॥२०॥

(७८) धर्मापेक्षिता—धर्मम् अपेक्षन्ते अनुसरन्ति, तेषां भावः धर्मापेक्षिता—धर्मनिष्ठा। भर्तुः,—स्वामिनः। सुखोपनतम्—अयत्नोपस्थितम्। विचारयति—तर्कयति ? न कोऽपि इत्यर्थः।

(७९) जोषं—तूष्णीम्। आस्यते—स्थीयते।

राजा। भोः तपस्विनः! चिन्तयन्नपि न खलु स्वीकरणम् अत्रभवत्याः स्मरामि, तत्कथम् इमाम् अभिव्यक्तसत्त्वलक्षणाम् आत्मानम् अक्षत्रियं मन्यमानः प्रतिपत्स्ये? (८०)

शकु। [स्वगतम्।] हद्धी! हद्धी! कधं परिणए ज्जेव सन्देहो? भग्गा दाणिं दूरारोहिणी आसालदा!! (प) (८१)

---

(प) हा धिक्! हा धिक्! कथं परिणय एव सन्देहः? भग्नेदानीं दूरारोहिणी आशालता!!

(८०) स्वीकरणं—पाणिग्रहणम्। अभिव्यक्तसत्त्वलक्षणाम्—अभिव्यक्तं प्रस्फुटं सत्त्वलक्षणं गर्भचिह्नं यस्याः तथोक्ताम्; गर्भलक्षणेन अस्याः पुरुषान्तरसहयोगस्य निश्चितत्वात् परनारीत्वे सिद्धे कथमस्याः परिग्रहः सम्भवेत्? इति भावः। अक्षत्रियं—नाहं क्षत्रियः राजा इति अक्षत्रियः तम्, राजवंशबहिर्भूतमित्यर्थः; राज्ञः परनारीस्पर्शस्य अतीव दूषितत्वादिति भावः। [अक्षेत्रिणमिति पाठे— क्षेत्रं नारी अस्यास्तीति क्षेत्री, न क्षेत्री अक्षेत्री, तं,—"क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान्" इति शास्त्रात्। अहं न क्षेत्री न अस्याः पतिरिति यावत्, तथोक्तम् आत्मानं मन्यमानः जानन्; परिणीतायामपि नियोगविधिना अन्येन उत्पादितः पुत्रः क्षेत्रजो भवति तदभिप्रायेण अपि नेयं ग्राह्येति भावः। "क्षेत्रिणम्" इति पाठे तु—क्षेत्रं पत्नी अस्य अस्ति इति क्षेत्री, तं क्षेत्रिणम्;—"क्षेत्रं पत्नीशरीरयोः" इत्यमरः; तादृशम् आत्मानं मन्यमानः इत्यर्थः; यदियं गर्भिणी मया चेत् साम्प्रतं गृह्येत, तदाऽहं क्षेत्री स्यां, न तु बीजी; एतद्गर्भजातमपत्यमपि क्षेत्रजं स्यात्, न तु औरसम्; तत् तु औरसात् हीनम् इत्येका शङ्का, अपरा च—अन्यपरिगृहीताया ग्रहणे अहं क्षेत्री स्यां, तथा च अस्याः क्षेत्रत्वमेव स्यात्, न तु धर्मपत्नीत्वमिति नञर्हितं भावार्थः।] प्रतिपत्स्ये—ग्रहीष्यामि। [एतेन धर्मभीरुताप्रदर्शनेन नायकगतः नितरामुत्कर्षः ध्वन्यते]।

(८१) भग्नेत्यादि।—दूरारोहिणी—दूरम् आरोहतीति तथोक्ता, "अहं राजमहिषी भूत्वा एवमेवंप्रकारेण सुखमनुभविष्यामि" इत्येवंरूपेति भावः; आशा एव लता, सा इदानीं भग्ना विच्छिन्ना। राज्ञः वचनेन समूलमुत्पाटितत्वादिति भावः। [अत्र रूपकालङ्कारः]।

शार्ङ्ग। मा तावत्,—

कृतावमर्षामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन (८२) ॥२१॥

शार। शार्ङ्गरव! विरम त्वम् इदानीम्। शकुन्तले! वक्तव्यमुक्तम् अस्माभिः, सोऽयम् अत्रभवान् एवमाह, दीयताम् अस्मै प्रत्ययप्रतिवचनम्। (८३)

---

(८२) कृतावमर्षामिति।—कृतः अवमर्षः धर्षणं, स्पर्शनादिः इति यावत्, यस्याः तादृशीम् [ अनेनास्य अत्यन्तापराधकारित्वं ध्वन्यते। ] सुतां कन्याम् अनुमन्यमानः अनुमोदमानः मुनिः तपोधनः [ अत्र मुनिशब्देन सापराधेऽपि त्वयि मुनिस्वभावात् सहजकृपालुतया तस्य तादृशकृपा युज्यते इति ध्वनितम् ] त्वया, ईदृशापराधं कृत्वा तस्य स्मरणमपि अकुर्वता इत्यर्थः, मा—न, इति चूर्णकस्थ-मा-पदेनान्वयः; विमान्यः? अवज्ञेयः? अपि तु विमान्य एव; इति काकुः। सुताऽभिमर्षणापराधः तु तेन सोढः, अतः परम् अवमानना न सहिष्यते इति पाठ्यमवगन्तव्यम्। [अत्र केचन "मा" विमान्यः न विमाननीयः इति निषेधत्वेन विधेयं मन्यन्ते, तत् तु आदेशानर्हे राज्ञि नितराम् असङ्गतं, तथा मुनिशिष्यशार्ङ्गरवचरित्रेऽपि कलङ्कारोपः सम्भवतीति न बहु मन्यतेऽस्माभिः ]। नाम इति क्रोधे। मुष्टम् अपहृतं स्वम् अर्थं प्रतिग्राहयता प्रत्यर्पयता येन दस्युरिव मलिम्लुच इव पात्रीकृतः असि। पितरमवमत्य तदनुमतिमन्तरेण तत्कन्या त्वया बलात् गृहीता; स तु महात्मा आत्मनः अवमाननामगणयित्वा तुभ्यमेव दस्युभूताय पुनः तां कन्यां दानाय प्रेषितवान्, तथापि तदवमाननमित्यतीवौद्धत्यं दृश्यते इति भावः। [ अत्र 'अवमानने मुनिः कुपितः तव दण्डं विधास्यति' इति सूक्ष्मार्थस्य इङ्गितेन संलक्षणात् सूक्ष्मालङ्कारः; तथा, 'एवं गर्हितमाचरतः नृपस्य कन्यादानेन सन्तोषार्थं प्रवृत्तस्य मुनेः, स सन्तोषो दूरमास्तां परं विमानना एव' इति आरब्धस्य वैफल्यात् विरूपस्य च सम्भवात् विषमालङ्कारभेदः, आभ्याञ्च उपमाऽलङ्कारः सङ्कीर्यते ]। उपजातिः वृत्तम् ॥ २१॥

(८३) अनयोः खलु शिष्ययोः निसर्गगम्भीरस्वभावः शारद्वतः इयन्तं कालमुभयोः

शकु। [स्वगतम्।] इमं अवत्थन्तरं गदे तादिसे अणुराए किंवा सुमराविदेण? अथवा अत्ता दाणिं मे सोधणीओ (८४) होदु त्ति किंञ्चि वदिस्सं। [प्रकाशम्।] अज्जउत्त!—" [इत्यर्द्धोक्ते] अथवा संसइदो दाणिं एसो समुदाआरो,—"पोरव! जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तधा समअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं। (फ) (८५)

---

(फ) इदमवस्थान्तरं गते तादृशेऽनुरागे किं वा स्मारितेन? अथवा आत्मा इदानीं मे शोधनीयो भवतु इति किञ्चिद्वदिष्यामि। आर्य्यपुत्र!—" [इत्यर्द्धोक्ते] अथवा संशयित इदानीमेष समुदाचारः,"—पौरव! युक्तं नाम तव पुरा आश्रमपदे सद्भावोत्तानहृदयमिमं जनं तथा समयपूर्वकं सम्भाव्य साम्प्रतमीदृशैः अक्षरैः प्रत्याख्यातुम्?

---

आकर्ण्य वचन-प्रतिवचने साम्प्रतं वाक्प्रपञ्चस्य वैफल्यमाकलय्य मितभाषितया पर्य्यवसितमाह, शार्ङ्गरवेति।—विरम त्वमिदानीं, वाक्यव्ययेनालमित्यर्थः; शकुन्तलामप्याह, शकुन्तले इति।—तव सम्बन्धे सर्व्वमेव उक्तमित्यर्थः। प्रत्ययप्रतिवचनं—विश्वासजनकमुत्तरम्।

(८४) शोधनीयः,—शुद्धिं नयनीयः, निर्दोषः करणीय इत्यर्थः।

(८५) समुदाचारः,—"आर्य्यपुत्र" इति सम्बोधनपदप्रतिपाद्यः पतिः, सम्बोधनरूप आचारः वा; यद्वा एष समुदाचारः नृपतेः अभिप्रायः, "समुदाचाराख्वभिप्रायाः" इति त्रिकाण्डशेषः। संशयितः,—संशयापन्नः; तथा च आर्य्यपुत्रेति भर्त्तुः सम्बोधनमेव, तद् यदि भर्त्तर्य्येव सन्देहः, तर्हि सम्बोधनमपि संशयितं तवेति भावः। सद्भावोत्तानहृदयं—सद्भावेन प्रणयातिशयेन उत्तानं स्फीतं, प्रफुल्लमित्यर्थः, हृदयं यस्य तादृशम्। तथा—तेन प्रकारेण, यथा न कदाचित् स्खलनं भवति तथेत्यर्थः, समयपूर्व्वकं—प्रतिज्ञापूर्वकम्; "परिग्रहबहुत्वेऽपि" इत्यादिना प्रतिज्ञां कृत्वा इत्यर्थः; अथवा कालनियमपूर्वकं "चिचतुरदिनमध्ये अथवा पञ्चषदिनाभ्यन्तरे कोऽपि पुरुषः मया प्रेष्यते" इत्यादिप्रकारेण इत्यर्थः। अत एव वक्ष्यति "एकैकमत्र दिवसे दिवसे मदीयं नामाक्षरं गणय गच्छसि यावदन्तम्" इति। [अत्र अक्षरैरित्यनेन

राजा। [कर्णौ पिधाय।] शान्तं शान्तम् (८६)।—

व्यपदेशमाविलयितुं समीहसे माञ्च नाम पातयितुम्।
कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च (८७)॥ २२॥

शकु। भोदु, जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं, ता अहिण्णाणेण केण वि तुह आसङ्कं अवणइस्सं।(ब)(८८)

---

(ब) भवतु, यदि परमार्थतः परपरिग्रहशङ्किना त्वया एवं प्रवृत्तं, तदभिज्ञानेन केनापि तव आशङ्कामपनेष्यामि।

वाग्आवेश प्रत्याख्यानं, न तु तत्त्वतः; उत्तरत्र परिग्रहस्य वक्ष्यमाणत्वात् इति कवेरभिप्रायः सूच्यते; तेन च स्थायिनी रतिः ध्वन्यते]। सम्भाव्य—समाहूय, [अत्र 'प्रत्याय्य' इति पाठे—विश्वासमुत्पाद्य इत्यर्थः]। ईदृशैः,—अवमाननासूचकैः। अक्षरैः,—वर्णैः, प्रत्याख्यातुं—निराकर्त्तुं, परित्यक्तुमिति यावत्। तव—भवादृशस्य, युक्तम्—अनुरूपम्। तथाऽनुष्ठिते त्वयि पुरुवंशललामभूते सकलगुणभूषिते प्रवञ्चनारूपदोषेण नितरां कलङ्कस्पर्शः सम्भाव्येत इति पौरवेति सम्बोधनाभिप्रायः।

(८६) शकुन्तलावचनेन 'कुलटेयं काऽपि चातुर्य्यं प्रकटयन्ती मां वशमानेतुमभिलषति' इति मत्वा आह, शान्तमिति।—शान्तं शान्तं—निवर्त्त्यताम्, एतादृशं वचनं मा वदेति भावः; अथवा,—शान्तम्—अलीकम्;—"अलीके शान्तमव्ययम्" इत्युक्तेः। द्विर्भावस्तु अलीकत्वदार्ढ्येच्छया।

(८७) व्यपदेशमिति।—कूलं तटं कषति शातयति, भिनत्तीति यावत्, तथोक्ता, [अत्रोपमाने कूलङ्कषेति विशेषणम् उपमेये व्यपदेशमाविलयितुमिति साधर्म्यरक्षार्थं बोध्यम्।] सिन्धुः नदी ("देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्" इत्यमरः) प्रसन्नं स्वच्छं निर्मलमित्यर्थः, ओघं प्रवाहं तटतरुञ्च इव, व्यपदिश्यते कीर्त्त्यते अनेन इति व्यपदेशः कुलं, तत् आविलयितुं कलुषीकर्त्तुं माञ्च पातयितुं पतितं कर्त्तुं [त्वन्तु पतितैव इति णिचा ध्वन्यते] समीहसे सम्यक् चेष्टसे; ।मय स्वीकृतायां त्वयि, मम नाम्नि कुले च दोषः स्यादिति भावः। [उपमाऽलङ्कारः तथा समुच्चयालङ्कारोऽपि।] आर्य्या जातिः॥२२॥

(८८) परमार्थतः,—यथार्थतः। [अत्र तृतीयायां तसिल्प्रत्ययः, प्रकृत्यादित्वात् तृतीया च]। परपरिग्रहशङ्किना—परस्त्रियं सन्दिहानेन। प्रवृत्तं—कर्त्तुमारब्धम्

राजा। प्रथमः कल्पः। (८९)

शकु। [मुद्रास्थानं परामृश्य।] हद्धी! हद्धी! अङ्गुलीअअसुस्सा मे अङ्गुली!! (भ) (९०)

[इति सविषादं गौतमीमुखमीक्षते।]

गौत। णूणं दे सक्कावदारे सचीतित्थोदअं वन्दमणाए पब्भट्टं (९१) अङ्गुलीअअं। (म)

राजा। [सस्मितम्।] इदं तावत् प्रत्युत्पन्नमतित्वं स्त्रीणाम्।(९२)

(भ) हा धिक्! हा धिक्! अङ्गुरीयकशून्या मे अङ्गुली!!

(म) नूनं ते शक्रावतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टमङ्गुरीयकम्

इत्यर्थः। अभिज्ञानेन—अभिज्ञायते सम्यक् बोध्यते अनेनेति अभिज्ञानं, सम्यक् परिचायकं चिह्नं, तेन। आशङ्कां—सन्देहम्, 'ऊढा अहं पररमणी वा?' इत्येवं-रूपामित्यर्थः। अपनेष्यामि—निराकरिष्यामि।

(८९) प्रथमः,—मुख्यः, [अत्र उदारः इति पाठे—स एवार्थः]। कल्पः,—विधिः, उपाय इति यावत्।

(९०) मुद्रास्थानं—अङ्गुरीयकधारणस्थानम्, अङ्गुलीप्रदेशमिति यावत्। परामृश्य—स्पृष्ट्वा इत्यर्थः। हा धिक्! हा धिक्!—हा खेदे, धिक्—निन्दायां,—"धिङ् निर्भर्त्सननिन्दयोः" इत्यमरः; प्रमादिनीं मां निन्दामीत्यर्थः।

(९१) शक्रावतारेति।—शक्रस्य इन्द्रस्य अवतारः अवतरणं यस्मिन् तथोक्तः, तदाख्यया प्रसिद्धः कश्चित् गङ्गाऽवतरणघट्टः; तदाख्यो वा देश इति केचित्। तत्र शच्या इन्द्राण्या कृतम् आवाहितं तीर्थोदकम्। पुरा शक्रेण सहागतया तत्पत्न्या तत्र गङ्गाऽवतरणदेशे सर्वाणि तीर्थानि—"गङ्गे च यमुने चैव गोदावरि सरस्वति। नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु॥" इति मन्त्रेण आवाह्य स्नातवतीति तस्य शचीतीर्थत्वप्रसिद्धिरित्यनुसन्धेया। अत्र शचीकृतः जाह्नव्याः घट्टविशेषः इति कश्चित्। वन्दमानायाः,—अर्चयन्त्याः, प्रणमन्त्याः वा। प्रभ्रष्टं—निपतितम्।

(९२) अनयोर्वाक्यं चातुर्यमात्रप्रकाशकमिति मत्वा आह, इदमिति।—इदम् अङ्गुरीयकान्वेषणम् अङ्गुरीयकस्य प्रभ्रष्टत्वकथनञ्च। प्रत्युत्पन्नमतित्वम्—उपस्थित-बुद्धित्वं, प्रतिभोज्ज्वलत्वमिति यावत्।—"तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः

शकु। एत्थ दाव विहिणा दंसिदं पभुत्तणं दे। अवरं कधइस्सं। (य) (९३)

राजा। श्रोतव्यम् इदानीं संवृत्तम्। (९४)

शकु। णं एक्कदिअहे वेदसलदामण्डवे णलिणीवत्तभाअण-गदं उदअं तुह हत्थे सण्णिहिदं आसी—"। (र)

राजा। शृणुमस्तावत्।

शकु। "—तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअ-पोदओ उवट्ठिदो ; तदो तुए "अअं दाव पढमं पिअदु" त्ति अणु-कम्पिणा उवच्छन्दिदो उदएण ; ण उण सो अपरिचिदस्स दे

(य) अत्र तावद्विधिना दर्शितं प्रभुत्वम्, अपरं ते कथयिष्यामि।

(र) ननु एकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतमुदकं तव हस्ते सन्निहितम् आसीत्—"।

(ल) "—तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गो नाम मृगपोतक उपस्थितः, ततः त्वया "अयं तावत् प्रथमं पिबतु" इति अनुकम्पिना उपच्छन्दित उदकेन ; न पुनः

स्मृता।" इति सुधाकरवचनात्। [ अत्र "इदं तत्प्रत्युत्पन्नमति स्त्रैणमिति यदुच्यते" इति पाठान्तरे,—प्रत्युत्पन्नमति—प्रतिभान्वितबुद्धि, स्त्रैणं—स्त्रीसमूहः, इति यदुच्यते—इति यत् प्रसिद्धं जगति, तत् इदं परिदृश्यमानमित्यर्थः ; स्त्रीशब्दात् "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (४।१।८७ पा०) इति भवार्थे अपि नञि च पुनः समूहार्थे अण्प्रत्ययः ]।

(९३) अत्र—एतस्मिन् विषये, अङ्गुरीयकदर्शने इत्यर्थः, विधिना—दैवेन, मम प्रतिकूलेन इत्यर्थः। प्रभुत्वं—प्रभावः, मद्वैमुख्ये सामर्थ्यमिति भावः। अत्र अङ्गुरीयका-प्राप्त्या भवदुक्तमेव विजयते इति भावः। अपरम्—अभिज्ञानमित्यर्थः।

(९४) इदानीं—सम्प्रति, श्रोतव्यं—श्रवणयोग्यं, संवृत्तं—सञ्जातम्। अत्र संवृत्तपदेन भवत्यः खलु कल्पनायत्तं विधाय अलीकवचनोपन्यासं करिष्यन्ति, न चेत् मया श्रूयते, तदा अश्रवणजनितापराधः एव स्यात् [ इति प्रयोजनाभावेऽपि श्रोतव्य-मेव मया इति द्योत्यते ] अत एव उत्तरत्र राजवाक्ये "शृणुमः तावत्" इति ; न तावत् अराम इत्यर्थः।

इत्यादो उदग्रं उवगदो पादुं, पच्चा तस्सिं ज्जेव उदए मए गहोदे किदो तेण पणग्रो। एत्यन्तरे विहसिय तुए भणिदं,—"सव्वो स्सगणे विस्ससिदि, जदो दुवे वि तुम्हे आरस्सकाओ" त्ति। (ल) (९५)

राजा। आभिस्तावत् आत्मकार्य्यप्रवर्त्तिनीभिः मधुराभिः अनृतवाग्भिः आकृष्यन्ते विषयिणः। (९६)

गौत। महाभाग! णारिहसि एव्वं मन्तिदुं, तवोवण-संवड्डिदो क्खु अग्रं जणो, अणभिष्णो कइदवस्स। (व) (९७)

सोऽपरिचितस्य ते हस्तात् उदकम् उपगतः पातुं, पश्चात् तस्मिन्नेव उदके मया गृहीते कृतः तेन प्रणयः। अत्रान्तरे विहस्य त्वया भणितं,—"सर्वः स्वगणे विश्वसिति, यतो द्वे अपि युवाम् आरण्यके" इति।

(व) महाभाग! न अर्हसि एवं मन्त्रयितुं, तपोवनसंवर्द्धितः खलु अयं जनः, अनभिज्ञः कैतवस्य।

(९५) पुत्रकृतकः,—पुत्रत्वेन परिगृहीतः, कृत्रिमपुत्र इत्यर्थः। दीर्घापाङ्गः नाम—दीर्घौ आयतौ अपाङ्गौ नेत्रप्रान्तौ यस्य तथोक्तः, तदाख्यया प्रथित इत्यर्थः। मृगपोतकः,—हरिणशावकः। अनुकम्पिना—दयमानेन। उपच्छन्दितः,—अभ्यर्थितः, सादरं पानार्थम् अनुरुद्ध इत्यर्थः। प्रणयः,—पानार्थमाग्रह इत्यर्थः। स्वगणे—स्ववर्ग्ये, [अत्र 'सगन्धे' इति पाठे,—स एवार्थः]। यतः,—यस्मात् कारणात्, युवां—मृगपोतश्च त्वञ्च इति युवाम् [ इत्येकशेषे परलिङ्गता ]। आरण्यके—वनवासिनौ। [ अत्र भवार्थे अरण्यशब्दात् वुञ्प्रत्ययः ]।

( ९६ ) आत्मकार्य्यप्रवर्त्तिनीभिः,—स्वकार्य्यसाधिनीभिरित्यर्थः। मधुराभिः,—प्रियाभिः, अनृतवाग्भिः,—मिथ्यावाक्यैः, आकृष्यन्ते—बाध्यन्ते, वशीक्रियन्ते इति यावत्। विषयिणः,—इन्द्रियसुखपराः, कामिनः इत्यर्थः। [अत्र "आत्मकार्य्यनिर्वर्त्तिनीनामनृतमयवाङ्मधुभिः" इति पाठान्तरे,—आत्मकार्य्यनिर्वर्त्तिनीनां स्वकार्य्यसाधनतत्पराणां, स्त्रीणामित्यर्थः। [ अनृतमयवाङ्मधुभिरिति एकदेशविवर्त्ति रूपकं, तेन "रमणीनां लतात्वं" "विषयिणाञ्च भ्रमरत्वं" रूप्यते इत्यवगन्तव्यम्]।

(९७) तपोवनसंवर्द्धितः,—तपोवनप्रतिपालितः, [ अनेन अत्यन्तचातुर्य्यानभिज्ञत्वं सूच्यते]। अनभिज्ञः,—अज्ञाता। कैतवस्य—कपटव्यवहारस्य।

राजा । अयि तापसवृद्धे (९८) !—

स्त्रीणामशिक्षितपटुत्वममानुषीणां
संदृश्यते किमुत याः परिबोधवत्यः ?
प्रागन्तरिक्षगमनात् स्वमपत्यजातम्
अन्यद्विजैः परभृताः किल पोषयन्ति (९९) ॥२३॥

शकु । [ सरोषम् । ] अणज्ज ! अत्तणो हिअआणुमाणेण किल

(९८) गौतमीवाक्यमाकर्ण्य तत्रापि चातुर्य्यमाकलय्य सोपहासमाह, अयि ! इति ।—तापसवृद्धे—तापसीषु वृद्धा, अथवा—तापसी चासौ वृद्धा च [ इति कर्म्मधारयः समासः ] तस्याः सम्बोधने, [ अनेन 'तव वार्द्धक्यमुपजातं, तथापि भूयोदर्शनजन्या अभिज्ञता न संवृत्ता' इति 'तापसानां वृद्धत्वात् जन्मारभ्य केवलतपोऽनुष्ठाने नियतव्यग्रचित्तत्वाच्च वाह्यविषयानभिज्ञता तव सुतरामेव' इति च ध्वन्यते ] ।

(९९) अस्याः अपि चातुर्य्यं प्रकटयितुं दृष्टान्तेनाह, स्त्रीणामिति ।—अमानुषीणां मानवजातिभिन्नानां, वञ्चनाकौशलव्यञ्जकवागादिव्यवहाररहितानामित्यर्थः, पशुपक्षिणीनामपि इति भावः, स्त्रीणां—विशेषतः पुंभिन्नानाम्, अशिक्षितपटुत्वं—शिक्षां विनापि चातुर्य्यम्, अनुपदिष्टवञ्चनाकौशलमित्यर्थः, संदृश्यते सम्यक् लक्ष्यते ; याः परिबोधवत्यः सम्यक् ज्ञानवत्यः, वागादिव्यवहारकुशला इत्यर्थः, मानव्यः, ताः किमुत ? किं वक्तव्याः ? इत्यर्थः ; का कथा तासामिति भावः । [अर्थापत्त्यलङ्कारः । यदुक्तं दर्पणे,—"दण्डाऽपूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते" इति ] । उक्तमर्थं समर्थयते, प्रागिति ।—परभृताः परैः अन्यैः पक्षिभिः भ्रियन्ते पुष्यन्ते इति तथोक्ताः ; [ साभिप्रायविशेषणमेतत् ] कोकिलाः [ जातित्वेऽपि अजादित्वात् न ङीष् ] अन्तरिक्षगमनात् [ अन्तरिक्षम्—"अन्तरि मध्ये क्षयति" इति व्युत्पत्तिः ; "अन्तः ईक्ष्यते यस्य" इति वाक्ये दीर्घमध्यत्वम् । ] उड्डयनात् प्राक् उड्डयनशक्तेः पूर्व्वमिति यावत्, स्वम् अपत्यजातं शावकवृन्दम् अन्यैर्द्विजैः पक्षिभिः, प्रसिद्धैः काकैरित्यर्थः, पोषयन्ति पालयन्ति ; किलेति वार्त्तायाम् । [विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ; तथा शकुन्तला इति विशेषे वक्तव्ये स्त्रीणामिति सामान्येन कथनात् अप्रस्तुतप्रशंसा च । तदेवम् एतेषां त्रयाणां परस्परनिरपेक्षाणां संसृष्टिः ] । वसन्ततिलकं वृत्तम् ॥२३॥

सव्वं पेक्खसि। को णाम अस्सो धम्मकञ्चुअव्ववदेसिणो तिणच्छ्ण्णकूवोवमस्स तुह अणुआरी (१००) भविस्सदि? (अ)

राजा। [ आत्मगतम्। ] वनवासात् अविभ्रमः पुनः अत्रभवत्याः कोपो लक्ष्यते। तथाहि, (१)—

(अ) अनार्य्ये! आत्मनो हृदयानुमानेन किल सर्वं प्रेक्षसे। क नामान्यो धर्म्मकञ्चुकव्यपदेशिनः तृणच्छन्नकूपोपमस्य तवानुकारी भविष्यति?

---

(१००) नृपवाक्येण सदोषस्य दृढ़तासम्पादकेन जनसंसदि मर्म्मणि भृशं ताड़िता धर्म्मभीरुरीदृशावमाननामकुलजनोचितामसहमाना आह, अनार्य्ये!—अभद्र! आत्मनः,—स्वस्य, हृदयानुमानेन—मम हृदयं यथा वञ्चनापरं तथा अन्यस्यापीति अनुमानेन, सर्वं जनं वञ्चकमिति शेषः। धर्मकञ्चुकव्यपदेशिनः,—धर्म एव कञ्चुकः वाह्याङ्गावरणविशेषः, न तु आन्तरो धर्म इति भावः, तेन व्यपदिशति आत्मानं धार्मिकं ख्यापयतीति तथोक्तस्य; वहिर्द्धर्म्मभावं प्रकटय्य अन्तः दोषं निगूहयतः इत्यर्थः; अत एव तृणच्छन्नकूपोपमस्य—तृणैः छन्नः आच्छादितमुखः यः कूपः स एव उपमा उपमानं यस्य तथाभूतस्य। [ छन्नः इति।—"वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः" (७।२।२७ पा०) क्तप्रत्ययेन निपातनात् सिद्धः ]। अनुकारी—सदृशकर्मा; न कोऽपि भवादृशः वञ्चनापरः विद्यते इत्यर्थः। [अत्र धर्म्मकञ्चुकेत्याद्यंशे रूपकम् उपमा च। न च शकुन्तलायाः सहजमुग्धायाः जन्मारभ्य तपोवनप्रतिपालितायाः अनार्य्येति सम्बोधनेन प्रगल्भताप्रतिपादनात् मुग्धात्वहानिः नायिकागतचरित्रदूषणञ्च समाशङ्कनीयम्; धर्म्मभीरुतया लोकानां परीवादस्य विशेषतः पतिव्रतानां सतीत्वभ्रंशापवादस्य नितरां दुःसहनीयतया मरणादपि बलीयस्त्वात् तदानीं तथोक्तेः नास्ति दोषावकाशः। अथ च "चेतसङ्क्रामिताः दोषाः खलु अपत्येषु" इति तादृशवर्णने कवेः नैपुण्यमेव विलसति, यथास्वभाववर्णनात् इति दिक् ]।

(१) वनवासात्—तपोवननिवासहेतोः, अविज्ञातचटुलनागरीस्वभावत्वादिति भावः। अविभ्रमः,—विभ्रमशून्यः, अकृत्रिम इत्यर्थः। अत्रभवत्याः,—मान्यायाः, कोपः लक्ष्यते—दृश्यते; नागरीणान्तु कोपः कृत्रिमविविधविलासपूर्णतया नेदृशः सम्भवति इत्यभिप्रायः। तद्दर्शयितुमाह, तथाहीति।—[अनेन प्रणयस्य स्थायित्वं निगूढ़ं व्यज्यते ]।

न तिर्य्यगवलोकितं, भवति चक्षुरालोहितं,
वचोऽपि परुषाक्षरं, न च पदेषु सङ्गच्छते ।
हिमार्त्त इव वेपते सकल एव बिम्बाधरः,
प्रकामविनते भ्रुवौ युगपदेव भेदं गते (२) ॥२४॥ *

अपि च । सन्दिग्धबुद्धिं मामधिकृत्य अकैतव इवास्याः कोपः सम्भाव्यते । तथा हि अनया (३)—

(२) नेति ।—'अस्याः' इति पूरणीयम् । अवलोकितं दृष्टिः तिर्य्यक् वक्रं न, सविभ्रमे कोपे तु दृष्टिः आकेकरा भवति इति प्रसिद्धमेवेति भावः ; किन्तु चक्षुः आलोहितं सम्यक् रक्तं भवति । [कृत्रिमे तु कोपे दृष्टेः लोहितत्वेऽपि न सम्यक् लौहित्यं भवति, इति सविभ्रमत्वव्यवच्छेदः । ] वचः वाणी परुषाणि कर्कशानि क्रोधव्यञ्जकानि अक्षराणि यत्र तथाभूतम् अपि, किन्तु पदेषु स्थानेषु, वचनप्रयोगविषयेषु इति यावत्, न सङ्गच्छते न सङ्गतं भवतीत्यर्थः, [ "समो गम्यृच्छिभ्यां" (१।३।२९ पा० ) इत्यात्मनेपदम् ] सविभ्रमे तु कोपे नारीणाम् उक्तवैपरीत्यमेव लक्ष्यते इति भावः । [ संसज्जते इति पाठे—पदेषु वाक्यांशभूतेषु सुप्तिङन्तरूपेषु न च संसज्जते न स्खलति ; आर्षसंस्कारेण वाग्जड़ता नास्तीति भावः ] । सकल एव ( न तु अग्रभागमात्रमित्यर्थः ) बिम्बमिव अधरः दशनच्छदः हिमार्त्तः शीतार्त्त इव वेपते कम्पते । भ्रुवौ प्रकामं सम्यक् विनते, किन्तु युगपदेव समकालमेव भेदं विच्छेदं, भङ्गिमिति यावत्, गते प्राप्ते ; कृतककोपे इत्थं लक्षणं न सम्भवतीति भावः । [ एवेत्यत्र एष इति पाठान्तरम् । अत्र "बिम्बाधरः" इत्यंशे उपमा, "हिमार्त्त इव" इत्युत्प्रेक्षा च, समुदाये स्वभावोक्तिश्च अलङ्कारो बोद्धव्यः ] । पृथ्वी वृत्तं—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः" इति तल्लक्षणात् । सप्तदशाक्षरपादवत्सु छन्दःसु वृत्तमिदं हि पृथ्वी नाम सार्द्धसप्तशताधिक-षष्टाविंशत्सहस्रतमं प्रस्तारं गणनीयम् ॥२४॥

* मुम्बय्यादिमुद्रितपुस्तकेषु "वनवासात्" इत्यारभ्य "न तिर्य्यग्" इति श्लोकान्तः पाठो न दृश्यते ।

(३) सन्दिग्धेति ।—सन्दिग्धा मयेयं परिणीतपूर्वा न वेति सन्देहवती बुद्धिः यस्य, तादृशं माम् अधिकृत्य उद्दिश्य, अकैतव इव अकपट इव, यथार्थ इव इति यावत् । [ अत्र इवशब्देन उत्प्रेक्षावाचकेन कापटताविलसितमेतत् इति स्वाभिप्रायः सूच्यते ] । तदेव समर्थयितुमाह,—तथाहीति । – अनयेति पदं वक्ष्यमाणश्लोकेनान्वितम् ।

मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य (४) ॥२५॥

[प्रकाशम्।] भद्रे! प्रथितं दुष्मन्तस्य चरितं, प्रजास्वपि इदं न दृश्यते। (५)

(४) मयीति।—एवम् इत्थम् अस्मरणेन दारुणा निष्ठुरा चित्तवृत्तिः मनोवृत्तिः यस्य तादृशि, अत एव रहः एकान्ते वृत्तं जातं प्रणयम् अप्रतिपद्यमाने अमन्यमाने अस्वीकुर्वति इत्यर्थः; 'नास्ति स्मरणं यस्य तदस्मरणम्, अत एव दारुणं यच्चित्तं, तस्मिन् वृत्तिः वर्त्तनं यस्य' इति वा विग्रहः। मयि सति; अथवा "मयि" [इति विषयाधिकरणे सप्तमी। अतिरुषा अतिक्रोधेन अतिलोहिते अतिरक्ते अक्षिणी यस्याः तथाभूतया; अथवा—अतिरुषा अतिकोपया इति शकुन्तलाविशेषणम्; अत एव अतिलोहिताक्ष्या इति पदस्य हेतुत्वेनोपन्यस्तम्। अनया कुटिलयोः भ्रुवोर्भेदात् तच्छलेन इत्यर्थः, स्मरस्य कामस्य शरासनं धनुः भग्नमिव। [अत्र सापह्नवोत्प्रेक्षा, तथा पदार्थहेतुकं काव्यलिङ्गमपि। उत्प्रेक्षया च कोपस्य आतिशय्यं सूचयित्वा तात्त्विकोऽयं कोप इति वस्त्वपि ध्वन्यते; तेन च प्रणयस्यापि स्थायित्वं सुतरां सूक्ष्ममुद्घाटितम्। तथाच "शकुन्तला। सरोषम्" इत्यादिना एतदन्तेन संफेटो नाम विमर्षाङ्गं प्रदर्शितम्। तथा च दर्पणे,—"संफेटो रोषभाषणम्।" इति। वसन्ततिलकं वृत्तम् ॥२५॥

(५) प्रथितमिति।—दुष्मन्तस्य चरितं—परस्त्रीस्पर्शवैमुख्यरूपमिति भावः, प्रथितं—प्रसिद्धं, दुष्मन्तः कदापि परस्त्रियं न कामयते इति भावः। प्रजासु—अधिकृतजनेषु इत्यर्थः, दुष्मन्तस्य इति शेषः, अपि इदं—परनारीधर्षणरूपं चरितमित्यर्थः, न दृश्यते न वीक्ष्यते; अथवा—दुष्मन्तस्य पुरुवंशप्रभवस्य (स्वतः प्रसिद्धनामधेयस्य इत्यर्थान्तरसङ्क्रमितम्, अत एव ममेत्यपहाय स्वनामोत्कीर्त्तनम्) चरितं—व्यवहारः, परप्रतारणाराहित्यगर्भमिति यावत्, प्रथितं—विख्यातं, तदिदं किं प्रजास्वपि न दृश्यते? अपि तु दृश्यते एव; इति काकुः; न हि मे प्रजासमूहा अपि वञ्चका इति भावः। [क्वचित् पुस्तके "प्रजास्वपीदं न दृश्यते" एतत्स्थाने—"तथापीदं न लक्षये" इति पाठो दृश्यते। तत्र तथापि—त्वत्प्रदर्शितैतादृक्प्रमाणेषु सत्स्वपि इत्यर्थः। इदं—भवत्याः परिणयरूपं, न लक्षये—न स्मरामि]।

शक।–
तुम्हे ज्जेव पमाणं जाणध धम्मत्थिदिं च लोअस्स।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ(ष)(६)॥२६॥
सुट्ठु दाव अत्तच्छन्दाणुचारिणी गणिआ समुवट्ठिदा !! (स)(७)

गौत। जादे ! इमस्स पुरुवंसप्पच्चएण मुहमहुणो हिअअ-
विसस्स हत्थं समुवगदासि ! (ह) (८)

[ शकुन्तला पटान्तेन (९) मुखमाच्छाद्य रोदिति। ]

(ष) यूयमेव प्रमाणं जानीथ धर्म्मस्थितिञ्च लोकस्य।
लज्जाविनिर्जिता जानन्ति न किमपि महिलाः॥

(स) सुष्ठु तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता ?

(ह) जाते ! अस्य पुरुवंशप्रत्ययेन मुखमधोर्हृदयविषस्य हस्तं समुपगताऽसि !!

(६) नृपवाक्येण मर्म्मणि पीड़िताऽपि सहजधैर्य्येण संवृत-हृदयभावा सव्याजं प्रशंसन्ती आह, यूयमिति।—यूयमेव पुरुषप्रवरा इत्यर्थः, प्रमाणं कर्त्तव्याकर्त्तव्य-निर्णायकाः, प्रभव इति यावत्; अथवा—प्रमाणं शास्त्रतत्त्वं, लोकस्य धर्म्मस्थितिं धर्मस्य वैधकर्मणः स्थितिं मर्य्यादां, पद्धतिमिति यावत्, जानीथ वित्थ। लज्जया विनिर्जिताः पराभूताः अतीव लज्जाशीलाः इत्यर्थः, [ अनेन "भवादृशाः निर्लज्जाः" इति सूचितम् ] प्रमदाः नार्य्यः किमपि न जानन्ति न ज्ञातुं शक्नुवन्ति इत्यर्थः। अतः 'कथं भवतः सुपरिशुद्धं सर्वलोकविख्यातं चरितं ज्ञातुं शक्नोमि?' इति सोपहासोक्तिः। [अत्र स्तुत्या निन्दावगमात् व्याजस्तुतिः, तथा विशेषे वक्तव्ये 'प्रमदाः' इति सामान्येन कथनात् अप्रस्तुतप्रशंसा च, अनयोः अङ्गाङ्गित्वम् ]। आर्य्या जातिः॥२६॥

(७) सुष्ठु—सम्यक् इत्यर्थः। आत्मनः,—स्वस्य, छन्दः,—आशयः,—"छन्दोऽभि-प्राय आशयः" इत्यमरः; तम् अनुचरति अनुवर्त्तते इति तथोक्ता, स्वेच्छाचारिणी इत्यर्थः। गणिका—वेश्या। समुपस्थिता—आगता, अहमिति शेषः।

(८) जाते !—वत्से ! पुरुवंशप्रत्ययेन—पुरुवंशः अतीव सदाशयत्वेन महत्त्वेन च प्रथितः, तस्य प्रत्ययेन विश्वासेन। मुखमधोः—मुखे मधु यस्य तादृशस्य, किन्तु हृदयविषस्य—हृदये विषं यस्य तथाभूतस्य, जनस्य इति शेषः; [ अत्र विषपदेन कापट्यस्य निगरणात् अतिशयोक्तिः ]। हस्तं समुपगताऽसि—हस्ते पतिताऽसि। [ विशेषणद्वयेन अत्यन्तखलस्वभावोऽयम् इति ध्वन्यते ]।

(९) पटान्तेन—वसनाञ्चलेन।

शार्ङ्ग। इत्थम् अप्रतिहतं चापल्यं दहति। (१०) —

अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् (११) ॥२७॥

राजा। अयि! भोः किम् अत्रभवतीप्रत्ययादेव अस्मान् असम्भृतदोषैः अधिक्षिपन्ति (१२) भवन्तः ?

(१०) अप्रतिहतम्—अबाधितं, स्वजनैः अप्रतिषिद्धम् इत्यर्थः। चापल्यं—चाञ्चल्यम्, अविमृष्यकारित्वरूपमिति यावत्, स्वेच्छाचारित्वरूपमिति वा। इत्थम्—अनेन प्रकारेण, अतिदुःसहभावेन इत्यर्थः। दहति—सन्तापयति, चापल्यकारिणम् इति शेषः; अविमृष्यकारितायाः स्वेच्छाचारितायाश्च फलमेतत् परिणामदुर्वहं भुङ्क्ष्व इति भावः। [ अत्र "आत्मकृतं प्रतिहतं चापलम्" इति पाठे,—चापल्यं कुतश्चित् कारणात् प्रतिहतं सत् इत्थं सन्तापयतीत्यर्थः ]।

(११) अत इति।—अतः एतस्मात् कारणात् अविमृष्यकारिताया दहनकारित्वादित्यर्थः, रहः निर्जने सङ्गतं सौहार्दं विशेषात् परीक्ष्य विचार्य्य कर्त्तव्यं करणीयम्; अथवा—सङ्गतं मैत्रं परीक्ष्य विविच्य कर्त्तव्यं, विशेषात् रहः एकान्ते सङ्गतं सम्मेलनं, परीक्ष्य कर्त्तव्यमिति योजना। अज्ञातं अविदितं व्यवहारेण इति शेषः, हृदयं येषां तेषु सौहृदं प्रणय एवम् इत्थम् अनुभूतप्रायं यथा तथा वैरीभवति शत्रूभवति, तापयतीति भावः। [अत्र वैधर्म्येण सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः; तथा तयोः सङ्गतेः कर्त्तव्ये विशेषे प्रस्तुते वक्तव्ये अप्रस्तुतसङ्गतमात्रेण सामान्येन कथनादप्रस्तुतप्रशंसाऽलङ्कारश्च ]। पथ्यावक्त्रं वृत्तम् ॥ २७ ॥

(१२) अत्रभवतीप्रत्ययात्—अत्रभवत्याः मान्यायाः पूज्यायाः इत्यर्थः, प्रत्ययादेव पूज्येयं सच्चरित्रा च इति विश्वासादित्यर्थः; [ अत्र एवकारः युक्त्यन्तरव्यवच्छेदकः; अस्मान् विशुद्धपुरुवंशोत्पन्नान् नियतधर्म्मपरायणान् इत्यादि धर्म्मशतं बहुवचनेन व्यज्यते ]। असम्भृतदोषैः,—अकृतदोषैः, अकृतापराधैः इत्यर्थः। अधिक्षिपन्ति—तिरस्कुर्वन्ति। [ अत्र संयुतदोषाचरैः चिणुथ" इति पाठान्तरे,—सम्यक्, न तु ईषत्, युतः सम्पृक्तः, न तु स्पृष्टः दोषः येषु, तादृशानि आचरणानि येषु तैः वचनैः इत्यर्थः; चिणुथ—हिंस्थ इत्यर्थः ]।

शार्ङ्ग । [सासूयम् ।] (१३) श्रुतं भवद्भिरधरोत्तरम् (१४) ।—

आ जन्मन: शाठ्यमशिक्षितो य:
तस्याप्रमाणं वचनं जनस्य ।
पराभिसन्धानमधीयते यै:
विद्येति ते सन्तु किलाप्तवाच: !! (१५) ॥२८॥

राजा । अहो ! सत्यवादिन: ! अभ्युपगतं तावत् अस्माभि: एवंविधा एव वयं, किं पुनरिमाम् अभिसन्धाय लभ्यते ? (१६)

---

(१३) सासूयम्—असूया—गुणेषु दोषारोपणं, तत्सहितम् ; वस्तुतो राज्ञो दोषो नास्ति, दुर्वाससः शाप एव एवं विसंवादहेतुः ; शार्ङ्गरवस्तु एतदज्ञात्वा राज्ञ एव दोष इति मन्यते इत्यत: सासूयमित्युक्तम् ।

(१४) भवद्भि:,—सोमरातप्रभृतिभि:, अधरोत्तरं—निकृष्टमुत्तरम् ; स्वदोषाच्छादनादिति भाव: ।

(१५) तदेव समर्थयते—आ जन्मन इति ।—य: आ जन्मन: उत्पत्तिमारभ्य इत्यर्थ:, शाठ्यं कैतवं न शिक्षित:, स्वेन अन्येनापि इत्यर्थ:, तस्य जनस्य वचनम् अप्रमाणम् ? प्रमीयते अनेन इति प्रमाणं—यथार्थज्ञानकारणं, तन्न भवति ; असत्यम् एव ? इत्यर्थ: । यै: जनै: परेषाम् अन्येषाम् अभिसन्धानं वञ्चनं विद्येति विद्यारूपत्वेन इत्यर्थ: अधीयते ; यथा विद्या सद्गुरुसकाशात् शुभदिने विधाय ब्रह्माञ्जलिम् अनध्यायवर्ज्जं संयतात्मभि: सद्भि: अधीयते, तद्वदेतैरपि परवञ्चनमिति भाव: ; ते जना: आप्तवाच:,—आप्ता प्रत्यायिता: वाच: येषां तादृशा: भ्रमप्रमादरहितवाच: सन्तु किल भवन्तु !! किलात्र सम्भावनायाम् ; न केवलं तेषां यत्किञ्चित् वाक्यं प्रमाणम्, अपि तु ते व्यासवशिष्ठादिवत् आप्तवाच: इत्यर्थ: । राजनीति: केवलं परपराजयार्थं विविधकैतवपूर्णा तदनुशीलिनो राजान: सुतरां परवञ्चका भवन्तीति भाव: । [ अत्र 'शकुन्तला वचनं सत्यं, दुष्मन्तवचनम् असत्यम्', इति विशेषे प्रस्तुते सामान्येन कथनात् वैधर्म्येणाऽप्रस्तुतप्रशंसाऽलङ्कार: ; अथवा "अप्रमाणम्" इत्यत्र "अपि तु न ?" इति काकौ "ते आप्तवाच: ?" इत्यत्र च तथैव काकौ साधर्म्येणैवाप्रस्तुतप्रशंसा ; तथा पराभिसन्धानं विद्येति तादात्म्यारोपणात् रूपकालङ्कारश्च । तथा "शकुन्तला । सुष्ठु तावत्' इत्यादिना एतदन्तेन द्रवो नाम विमर्षाङ्गम् । तल्लक्षणं यथा दर्पणे,— "द्रवो गुरुव्यतिक्रान्ति: शोकावेगादिसम्भवा" इति ] । उपजाति: वृत्तम् ॥२८॥

(१६) अहो ! इति—सम्बोधने । [ सोल्लुण्ठनोक्ति: । "भो: सत्यवादिन्" इति

शार्ङ्ग। विनिपातः। (१७)

राजा। विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत्। (१८)

शार। शार्ङ्गरव! किमत्र उत्तरैः? अनुष्ठितो गुरुनियोगः, सम्प्रति प्रतिनिवर्त्तामहे वयम्। (१९) [ राजानं प्रति ]।—

तदेषा भवतः पत्नी, त्यज वैनां गृहाण वा।
उपपन्नुर्हि दारेषु प्रभुता सर्वतोमुखी (२०) ॥२९॥

गौतमि! गच्छाग्रतः।

[ इति सर्वे प्रस्थिताः ]।

---

दर्पणोद्धृतपाठः ]। अभ्युपगतं—स्वीकृतम्। एवंविधाः,—पराभिसन्धायिन इत्यर्थः। इमां—शकुन्तलाम्। अभिसन्धाय—प्रतार्य्य। किं लभ्यते?—किमस्माकं लाभः? इत्यर्थः।

(१७) विनिपातः,—लोकावमानना, दैवादिकृतव्यसनं वा। "विनिपातोऽवमाने स्यात् दैवादिव्यसनेऽपि च" इति विश्वः।

(१८) विनिपात इति।—अश्रद्धेयम् अविश्वास्यं, पौरवाणाम् अतिधार्म्मिकत्वात् न तेषां कथमपि विनिपातो भवितुमर्हति, अधार्म्मिका एव विनिपातं लभन्ते इति भावः। [ अत्र "अहो! सत्यवादिनः" इति राजवाक्यमारभ्य एतदन्तेन अक्षमा नाम नाट्यालङ्कारः उपनिबद्धः। तथा च दर्पणे,—"अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते" इति ]।

(१९) सहजमितभाषितया इयन्तं कालमाकर्ण्य तयोः अकिञ्चित्करं वचनजातं सम्प्रति "किमेतैः शुष्ककलहैः" इति मन्वानः फलितमाह, शार्ङ्गरवेति।—अत्र—एतस्मिन् विषये, उत्तरैः,—बहुवचनात्, पुनः पुनः प्रतिवचनैरित्यर्थः, किम्? फलोदयासम्भवात् नास्ति किमपि प्रयोजनमित्यर्थः। ननु 'यदि प्रतिवाक्येन नास्ति प्रयोजनं तदा कथमत्रागमोऽस्माकम्?' इत्यतः आह, अनुष्ठित इति।—गुरुनियोगः, गुरोः,—कण्वस्य, नियोगः,—आदेशः, अनुष्ठितः,—पालितः; तदपालने तु अस्माकं प्रत्यवायः सम्भाव्येत इति भावः। 'तर्हि साम्प्रतं किं कर्त्तव्यम्?' इत्यत आह, सम्प्रति इति।—प्रतिनिवर्त्तामहे—प्रतिगच्छामः, सम्पादितगुरुनिर्देशादिति भावः।

(२०) उपसंहरन्नाह, तदिति।—तत् इत्युपसंहारे, तावत् एषा तव पुरःस्थिता शकुन्तला भवतः पत्नी त्वत्कर्तृकयज्ञफलभोक्त्री [ "पत्युर्नो यज्ञसंयोगे" (४।१।३३पा०)

शकु। अहं दाणिं इमिणा किदवेण विप्पलद्धा, (२१) तुम्हे वि मं परिच्चअध ? (क)

[ इत्यनुप्रस्थितां गौतमीमनुगच्छति ]।

गौत। [ स्थित्वा परिवृत्यावलोक्य च। ] वच्छ सङ्गरव ! अणुगच्छदि णो करुणपरिदेविणी सउन्तला, पच्चादेसपरुसे भत्तरि किं करेदु तवस्सिणी ? (ख) (२२)

शार्ङ्ग। [ सरोषं प्रतिनिवृत्य। ] आः पुरोभागिणि ! किमिदं स्वातन्त्र्यम् (२३) अवलम्बसे ?

[ शकुन्तला भीता वेपते। ]

(क) अहमिदानीम् अनेन कितवेन विप्रलब्धा, यूयमपि मां परित्यजथ ?

(ख) वत्स शार्ङ्गरव ! अनुगच्छति नः करुणपरिदेविनी शकुन्तला, प्रत्यादेशपरुषे भर्त्तरि किं करोतु तपस्विनी ?

इत्यनेन नकारान्तादेशः ङीप् च ] एनां त्यज वा गृहाण वा। हि यतः, उपयन्तुः परिणेतुः [ अत्र उपपन्ना इति पाठे—युक्ता इत्यर्थः ]। दारेषु पत्न्यां सर्वतोमुखी सर्वप्रकारा प्रभुता कर्त्तृत्वम् अस्तीति शेषः ; तथा च स्वामी धर्म्मपत्नीं त्यक्तुं ताड़यितुं स्वीकर्त्तुम् अन्येभ्यः प्रदातुं वा शक्नोति इत्यर्थः ; तेन त्वं यथेच्छमाचर इति भावः। [ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥२९॥

(२१) कितवेन—धूर्त्तेन। विप्रलब्धा—प्रतारिता।

(२२) करुणपरिदेविनी—करुणं यथा तथा विलपन्तीत्यर्थः। प्रत्यादेशपरुषे—परित्यागदारुणे। तपस्विनी—वराकी, अनुकम्पार्हा इत्यर्थः ;—"तपस्वी तापसे चानुकम्पार्हे च" इति विश्वः।

(२३) 'स्वदोषमननुसन्धाय केवलं परदोषमात्रम् उत्प्रेक्षमाणा सम्प्रति कथमनुगच्छति ?' इत्यत आह,—पुरोभागिनि !—दोषैकदर्शिनि ! दोषकारिणीत्यर्थः, अविमृश्यकारिणीति भावः,—"दोषैकदृक् पुरोभागी" इत्यमरः। किमिदं—कथं, स्वातन्त्र्यं—स्वाधीनताम्, अवलम्बसे—आश्रयसि ? 'यौवने भर्त्तुरधीनत्वेन एव स्थातुमुचितं, त्वया तु तत् कथं नाश्रीयते ?' इति भावः। तथा चोक्तं,—"पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्रश्च स्थविरे रक्षेन्न स्त्री स्वातन्त्र्यमर्हति॥" इति।

शार्ङ्ग। शकुन्तले ! शृणोतु भवती ।—

यदि यथा वदति क्षितिपस्तथा
त्वमसि, किं पुनरुत्कुलया त्वया ?
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम् (२४) ॥३०॥

तिष्ठ, साधयामो (२५) वयम् ।

राजा। भोः तपस्विन् ! किम् अत्रभवतीं विप्रलभसे ! ! कुतः ? (२६)—

कुमुदान्येव शशाङ्कः, सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः (२७) ॥३१॥

(२४) यदीति ।—क्षितिपो नृपतिः यथा वदति नाहमस्याः परिणेतेति कथयति, यदि त्वं तथा असि अनेन अपरिणीता भवसि, तदा त्वया उत्कुलया—उद्गतं कुलं यस्याः तया किं पुनः ? न किमपि फलमस्तीत्यर्थः । ['पुनः' इत्यत्र 'पितुः' इति पाठे—पितुः कण्वस्य इत्यर्थः । तु इति—पूर्वाक्षेपे । अथ यदि त्वम् आत्मनः स्वस्य शुचि पवित्रं निर्दोषमित्यर्थः, व्रतं नियमं पातिव्रत्यमिति भावः, वेत्सि जानासि, तदा पतिगृहे तव दास्यमपि कैङ्कर्य्यमपि क्षमं योग्यम्, उचितम् इत्यर्थः । द्रुतविलम्बितं वृत्तं,—"द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात् ॥३०॥

(२५) साधयामः—गच्छामः ; "प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते" इति नाट्यशास्त्रात्, दर्पणोक्तेश्च ।

(२६) भोः तपस्विन् !—तपोधन ! [ 'तपःप्रभावेणैव सर्वं ज्ञातुं शक्यत्वात् ईदृशी निन्दा न युक्ता' इति सम्बोधनाभिप्रायः ]। विप्रलभसे—परित्यजसि ? भवतामनुगमनार्थमिति शेषः । समुचिते कर्म्मणि न ते युक्तः उपालम्भः, अहमत्र पराङ्मुख एव इति भावः । तत्र हेतुमाह—'कुतः' इति ।

(२७) कुमुदानीति ।—शशाङ्कः चन्द्रः कुमुदान्येव, न तु पङ्कजानीत्येवकारार्थः, सविता सूर्य्यः पङ्कजान्येव कमलान्येव, न तु कुमुदानीत्येवकारार्थः, प्रबोधयति विकासयति ; हि तथाहि, वशिनां जितेन्द्रियाणां धार्मिकाणामिति यावत्, वृत्तिः व्यवहारः, परपरिग्रहस्य परनार्य्याः, संश्लेषात् समालिङ्गनात्, सम्पर्कादिति यावत्, पराङ्मुखी

शार्ङ्ग । राजन् ! अथ पूर्ववृत्तं व्यासङ्गात् विस्मृतं भवेत्, तदा कथम् अधर्म्मभीरोः (२८) दारपरित्यागः ?

राजा । [ पुरोधसं प्रति । ] भवन्तमेव अत्र गुरुलाघवं ( २९ ) पृच्छामि ।—

मूढः स्यामहमेषा वा वदेन्मिथ्येति संशये ।
दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ?(३०)॥३२॥

निवृत्तेत्यर्थः ; दूरमास्तां परपरिग्रहस्य स्वीकारकथा, तत्सम्पर्कोऽपि दूरतः त्यज्यते वशिना इति भावः ; अत एव संश्लेषपदोपन्यासः । [ अत्र अप्रस्तुतप्रशंसाऽनुप्राणित-मालादृष्टान्तालङ्कारः, पूर्वार्द्धे वैधर्म्येण विम्बप्रतिविम्बबोधनात् ; अप्रस्तुतप्रशंसाऽलङ्कारस्य दृष्टान्तोत्थापकत्वेन प्राधान्यावगमादेवाङ्गित्वमित्येतेषां गुणप्रधानभावेनाव-स्थितेरङ्गाङ्गित्वेन सङ्करः ]। आर्य्या वृत्तम् ॥३१॥

(२८) राज्ञः अभिप्रायानुरूपमुत्तरयति, अथेति।—अथ—यदि, पूर्ववृत्तं—पूर्वजातं परिणयनमिति भावः, व्यासङ्गात्—कार्य्यान्तरव्यापृतचित्तत्वादित्यर्थः, मोहात् वा। [ अनेन दुर्वाससः शापः सूचितः कविना ]। अधर्म्मभीरोः,—पापात् भयशीलस्य, ( साभिप्रायविशेषणमेतत् ) ; तथा च यदि ते अधर्म्मात् भीतिः, तदा दारत्यागः कथम् अनुष्ठीयते ?—तत्रापि अधर्म्मसम्भवादिति भावः । [ अनेन उत्प्रासनं नाम नाट्यालङ्कारः प्रदर्शितः ; तथा च दर्पणे,—"उत्प्रासनं तूपहासो योऽसाधौ साधु-मानिनि" इति लक्षणात् ।

(२९) अधर्म्मभीरोरिति सोल्लुण्ठनवाक्यमाकर्ण्य आह, गुर्विति।—गुरुलाघवं—गुरुश्च लघुश्च तौ गुरुलघू, तयोर्भावः गुरुलाघवं तत्, उत्तरपदवृद्धिः ; ग्रहणं गुरु वा लघु, त्यागश्च गुरुः वा लघुरिति भावः ।

(३०) मूढ़ इति।—अहं मूढ़ः व्यासङ्गात् अजातस्मरणः स्यां भवेयं, वा अथवा एषा शकुन्तला मिथ्या अनृतं वदेत्, इति संशये सन्देहे अहं दारत्यागी स्वीय-स्त्रीपरित्यागी भवामि ? आहो अथवा, परस्त्रीस्पर्शात् परनारीग्रहणात् पांशुलः कल-ङ्कितः पापीत्यर्थः भवामि ? इति ब्रूहि ; इति प्रश्नः । दारत्यागात् परस्त्रीस्वीकार एव सुतरां पापजनक इति राजाभिप्रायः । [ अत्र "राजा । अहो सत्यवादिनः" इत्यादिना एतदन्तेन विरोधनामकमङ्गम् उपक्षिप्तम् ;—"उत्तरोत्तरवाक्यन्तु विरोध इति संज्ञितः" इत्युक्तेः ]। पथ्यावक्त्रं वृत्तम् ॥३२॥

पुरो। [विचार्य्य।] यदि तावदेवं क्रियताम्—"।

राजा। अनुशास्तु (३१) मां गुरुः।

पुरो। "—अत्रभवती तावत् आ प्रसवात् अस्मद्गृहे तिष्ठतु।

राजा। कुत इदम्?

पुरो। "—त्वं साधुनैमित्तिकैरुपदिष्टपूर्वः प्रथममेव चक्रवर्त्तिनं पुत्रं जनयिष्यसि इति, स चेन्मुनिदौहित्रः तल्लक्षणोपपन्नो भविष्यति, ततोऽभिनन्द्य शुद्धान्तम् एनां प्रवेशयिष्यसि, विपर्य्यये तु अस्याः पितुः समीपगमनं स्थितमेव। (३२)

राजा। यथा गुरुभ्यो रोचते।

पुरो। [उत्थाय।] वत्से! इत इतोऽनुगच्छ माम्।

शकु। भअवदि वसुन्धरे! देहि मे अन्तरम्। (ग) (३३)

[इति सह पुरोधसा गौतमीतपस्विभिश्च रुदती निष्क्रान्ता। राजा शापव्यवहितस्मृतिः शकुन्तलागतम् एव चिन्तयति।] (३४)

[नेपथ्ये।] आश्चर्य्यम्! आश्चर्य्यम्!!

(ग) भगवति वसुन्धरे! देहि मे अन्तरम्।

(३१) अनुशास्तु—उपदिशतु।

(३२) साधुनैमित्तिकैः,—निमित्तं लक्षणं जानन्तीति नैमित्तिकाः, दैवज्ञा इत्यर्थः, साधवश्च ते नैमित्तिकाश्चेति साधुनैमित्तिकाः तैः, [साधुशब्देनात्र तद्वाक्यस्य विश्वसनीयत्वं सूचितम्]। उपादिष्टपूर्वः,—पूर्वमुक्तः। चक्रवर्त्तिनं—सम्राजं, तल्लक्षणान्वितमित्यर्थः। स मुनिदौहित्रः,—मुनेः कण्वस्य दुहितुः पुत्रः। तल्लक्षणोपपन्नः,—चक्रवर्त्तिलक्षणलक्षितः। [विशेषणद्वयम् अभिनन्दने हेतुः]। ततः अभिनन्द्य—आहृत्य। शुद्धान्तम्—अन्तःपुरम्। विपर्य्यये—तदन्यथात्वे, चक्रवर्त्तिलक्षणत्वाभावे इत्यर्थः। पितुः समीपगमनं—तपोवनगमनमित्यर्थः। स्थितमेव—निश्चितमेव।

(३३) नितान्तमवमानिता सनिर्वेदमाह, भगवतीति।—अन्तरम्—अवकाशम्, स्थानमित्यर्थः, [प्रवेशाय इत्यार्थम्]। अस्मात् मरणमपि श्रेयः इत्यभिप्रायः; तस्य अमङ्गलवाचकाश्लीलत्वात् नोपात्तम्।

(३४) शापव्यवहितस्मृतिः,—शापेन दुर्वाससः अभिसम्पातेन व्यवहिता तिरोहिता

राजा। [ कर्णं दत्त्वा। ] किं नु खलु स्यात्?

पुरो। [ प्रविश्य सविस्मयम्। ] देव! अद्भुतं खलु संवृत्तम्!!

राजा। किमिव?

पुरो। देव! परावृत्तेषु (३५) काण्वशिष्येषु,—

सा निन्दन्ती स्वानि भाग्यानि बाला
बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता,—"। (३६)

राजा। ततः किम्? (३७)

पुरो। "—स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारात्
उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत् (३८) ॥३३॥

[ सर्वे विस्मयं रूपयन्ति ]।

ध्वनिः यस्य तथोक्तः। शकुन्तलागतं—शकुन्तलासम्बद्धं, चिन्तयति। [अनेन स्थायिनः प्रणयस्य अनुसन्धानं सूचितं कविना स्ववाक्येन ]।

(३५) परावृत्तेषु—प्रतिनिवृत्तेषु, काण्वशिष्येषु—शार्ङ्गरवादिषु। ( इदञ्च श्लोकेनान्वितम् )।

(३६) सेति।—सा बाला, स्वानि निजानि भाग्यानि-अदृष्टानि [स्वामिभाग्यानि इति पाठे—स्वामिनः भाग्यानि स्वामिसम्बद्धस्वभाग्यानीत्यर्थः ] निन्दन्ती अधिक्षिपन्ती सती बाहूत्क्षेपं बाहू उत्क्षिप्य [ णमुल्प्रत्ययः ] अथवा—बाहूकृतक्षेपौ यस्मिन् तद् यथा तथा, रोदितुं क्रन्दितुं प्रवृत्ता च। [ यतो बाला अत एव बाहूत्क्षेपं रोदितुं प्रवृत्ता इति बालास्वभावोक्तिः ]। एतत्पर्य्यन्तमस्य श्लोकस्य पूर्वार्द्धं, विस्मयवैशिष्ट्यज्ञापनाय मध्ये राजवाक्योपन्यासः इति ध्येयम्।

(३७) 'इदन्तु ज्ञातमेव, अनन्तरं किं वृत्तम्?' इति राजा पृच्छति, ततः किमिति।—ततः तस्मात् परं किं संवृत्तमित्यर्थः।

(३८) पुरोधाः तदभिप्रायगर्भमुत्तरयति, स्त्रीसंस्थानमिति।—स्त्रिया इव संस्थानम् आकृतिः यस्य तादृशं, तेजोरूपत्वेन स्पष्टमलक्ष्यमाणमित्यर्थः [ अत एव संस्थानपदोपादानम्। एतेन परपुरुषासंस्पर्शित्वं ध्वनितम्। ] ज्योतिः; अप्सरस्तीर्थम् अप्सरसां तीर्थं गङ्गाऽवतरणघट्टविशेषं, ( अप्सरसः समागत्य गङ्गायां यत्र स्नानादिकं



"—उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत्"। (२७२ पृष्ठे)।

Engraved and Printed by the Mohila Press, Cal.

राजा। भगवन्! प्रागेव अस्माभिरेषोऽर्थः प्रत्यादिष्टः, किं मृषा तर्केण अन्विष्यते? (३९) विश्राम्यताम्।

पुरो। विजयस्व।

[ इति निष्क्रान्तः ]।

राजा। वेत्रवति! पर्य्याकुलोऽस्मि, (४०) शयनीयगृह-मार्गम् आदेशय।

प्रती। इदो इदो देवो। (घ)

[ इति प्रस्थिता ]।

(घ) इत इतो देवः।

कुर्वन्तीति) लक्ष्यीकृत्य इति शेषः, आरात् दूरादेव आगत्य इत्यर्थः,—"आराद्दूर-समीपयोः" इत्यमरः; अथवा अप्सरस एव तीर्थं योनिः उत्पत्तिस्थानं यस्य तादृशं ज्योतिः, "ततः शरीरीति विभाविताकृतिः" इति माघोक्तिवत् प्रथमतः सामान्यस्यात्म-कत्वबुद्धिः, पश्चात् अतिसामीप्यादेव 'अप्सरस' इति विशेषेण परिग्रहः इति भावः। एनां बालाम् अङ्के क्रोड़े उत्क्षिप्य निधाय तिरोऽभूत् अन्तर्द्धानम् अगात्। [ अत्र 'जगाम' इति पाठे,—आरात् दूरतः एनाम् अङ्के उत्क्षिप्य अप्सरस्तीर्थं जगाम इति योजना। अत्र स्त्रीसंस्थानमित्यंशे उपमा, क्रियासमुच्चयश्च अलङ्कारः। अनेन च अद्भुतरसः व्यज्यते। तथाऽत्र विरोधस्य प्रशमनात् शक्तिर्नाम विमर्षाङ्गम्; तथा च दर्पणे,—"शक्तिः पुनः भवेत् विरोधस्य प्रशमनम्" इति ]। शालिनी वृत्तं,—"मात्तौ गौ चेच्छालिनी वेदलोकैः" इति तल्लक्षणात् ॥३३॥

(३९) एषः अर्थः,—शकुन्तलारूपः विषयः; मानुषत्वेन सन्देहात् अर्थशब्देन निर्देशः कृतः इति विभावनीयम्। प्रत्यादिष्टः,—निराकृतः। मृषा—मिथ्या। तर्केण—तद्गतविचारेण, अन्विष्यते—अनुसन्धीयते।

(४०) शापावसानस्य नैकट्यात् शापावसानसम्भाव्यायाः नृपगतव्याकुलतायाः अतर्किताया: प्रदर्शने सामाजिकानां रसात् रसान्तरस्य बोधं प्रति विमुखता समापते-दिति क्रमेण तद्दर्शयितुम् अभिनयेन सन्नियोजितः दुष्मन्तः आह, वेत्रवतीति।—पर्य्याकुलोऽस्मि,—परि—सम्यक्, आकुलः,—उत्कण्ठित इत्यर्थः, अस्मि—भवामि।

राजा । [ परिक्रम्य स्वगतम् । ]

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् (४१) ॥३४॥

[ इति निष्क्रान्ताः सर्वे ] ।

इति पञ्चमोऽङ्कः ॥ ५ ॥

(४१) पर्य्याकुलत्वे बीजमाह, काममिति ।—प्रत्यादिष्टां निराकृतां, परित्यक्तामित्यर्थः, मुनेः कण्वस्य तनयां शकुन्तलाम् [ अत्र मुनितनयामित्यनेन किमप्याभिजात्यं सूचयित्वा प्रत्ययनं प्रति बीजमुपन्यस्तमिति विभावनीयम् ] कामं सम्यक्, केनापि प्रकारेण इति भावः, परिग्रहं परिणीतां स्वां पत्नीं न स्मरामि, तु किन्तु बलवत् अत्यर्थं दूयमानं तप्यमानं हृदयं मां प्रत्याययतीव विश्वासयतीव, [अथवा बलवत् प्रत्याययतीव इति क्रियाविशेषणमेतत् ] मुनितनया इयं परिगृहीता मया इति बोधयतीव इत्यर्थः । [ जन्मान्तरगतस्येव शापव्यवहितचित्तवृत्तेः ईदृशवाक्येन प्रणयस्य स्थायित्वं ध्वनितम् ] । न हि जगति किमपि त्रिकालाबाधितं सत्यं कोऽपि कदापि अन्यथयितुं शक्नोति,—न हि शिल्पसहस्रेणापि घटं पटयितुमीष्टे ; यदिह तपःप्रभावसम्पन्नस्य महर्षेः दुर्वाससः तादृशाभिशापोऽपि दुष्मन्तहृदयस्थितं शकुन्तलागतयथार्थप्रणयं नालमपनेतुमित्यहो ! प्रणयविकाशसन्दर्शने कवेः वैचित्र्यमेव विजयते । [ उत्प्रेक्षाऽलङ्कारः ; सन्तापस्य कारणाभावेऽपि तत्कथनात् विभावना च । अत्र च मुनेस्तनयेति गुरुकीर्त्तनात् प्रसङ्गो नाम विमर्षाङ्गम् ; यदाह दर्पणे,—"प्रसङ्गो गुरुकीर्त्तनम्" इति ] । आर्य्या जातिः ॥३४॥

# पञ्चमाङ्कस्य सङ्क्षिप्त-विवृतिः ।

( निरोष्ठ्यम् । )

अथ साकेतनगरागतात् ऋषितनयासहितात् ऋषिशिष्यात् आकर्णितऋषिसन्देशः कालेन जराजीर्णे देहे स्खलितगतिः राजान्तर्गृहरक्षकः कियत्कालं रहसि निजजराजाततदशां निरतिशयं कथयन्—"राज्ञः कृत्स्नराज्यशासनक्लान्तस्य सकाशे इदानीं कथम् ऋषिजनकथिता कथा कथ्यते ?" इति क्षणं चिन्तयन्, चिन्तयंश्च—"सकलजनहितैषिणां नास्ति कदा च शान्तिः" इति राजान्तिकं चलितः ।

अत्रान्तरे नरनाथश्च निजस्निग्धसख-सहायः आसीनः शयनगृहे अधिकारखेद-खिन्नः क्षणकालं राज्यरक्षेयं नितान्तक्लेशकरीति कथयन् सहसा चारणास्यनिःसृतं तदानीन्तनक्लान्तिहरं रचितललितगानं कर्णाकर्णनशक्तं तदाकर्णयत् ।

आकर्ण्य च हृष्टचित्तः सह स्निग्धेन सख्या कियन्तं कालं कलयन् सङ्गीतशालान्तरात् रागरसधारासञ्चारिणीं तन्त्रीनिर्गतां गीतिं ललनाजनगीतां निजकर्णान्तर्गतां चकार । आकर्ण्य अकथयच्च सखायं—"सखे ! निश्चितं सकृत्कृतरागेयं ललना, तत् कथ्यतां गच्छन्नेतदन्तिके,—"यथेष्टं तिरस्कृतः कान्तः एष नरनाथः" इति । स च तथेति राजादेशरक्षणार्थं "का गतिः" इति गिरन् निरगात् । नरेन्द्रश्च जायारहितचेतसि अनेकं तर्कयन् चञ्चलचेता अकाण्डे अन्तर्गृहरक्षकेण कथितं—"ललनाजनेन सह ऋषी आगच्छतः निजाचार्य्यसन्देशकथनाय, तदत्र यथाकार्य्यं क्रियतां राज्ञा" इति आकर्णयत् । ततश्च सः "आचार्य्यसन्देशहारिणः ऋषयः आगताः तत्र च स्त्रीजनसहिताः" इति साश्चर्य्यः सन् "एते श्रान्तिहरणार्थं निजाचार्य्यान्तिकं शीघ्रं नीयन्तां, यथाशास्त्रं सयत्नञ्चैतेषामातिथ्यञ्च क्रियतां राजादेशादाचार्य्येण, अहञ्च ऋषिदर्शनार्हे स्थाने तिष्ठेयं, नात्र सन्देहः कार्य्यः" इत्यादिशन्नस्थात् ।

अनन्तरं दासजनेन सह अग्निशरणालिन्दं गच्छन्, तर्कयंश्च चेतसि ऋषीणां सहसान्तिकागतिकारणं क्षणं तिष्ठन् अन्तर्गृहरक्षकानीतान् तान् सस्त्रीकान् ऋषिगणान् दृष्टिसङ्गतानाचरंश्च अनेकतर्कनिरतः स्थितः ।

अत्रान्तरे यती च नरेन्द्रस्य आचार्य्येण सह आगत्यान्तिके, आख्याय च साश्चर्य्यं राजचरितं, "जय जय" इति आशास्य च राजानं तत्तनयाग्रहणादिकं निजाचार्य्यसन्देशं यथाकथितं दृष्टान्तः अकथयतां राज्ञे ; अगिरताञ्च राजानं "निकटस्थितेयं सा आचार्य्यतनया अन्तःसत्त्वाना तद्गृह्यतां श्रेयस्करकार्य्यकरणाय" इति ।

ततस्तेषां तां गिरं सहसा आकर्ण्य ऋषिशङ्कया संहृतचित्तशक्तिः नरेन्द्रः "नैषा ज्ञायते, न च अस्याः करः गृहीतः" इति कथयन् तल्ललनादर्शितानि सकलदर्शनीयचिह्नानि अन्यानि च कथनीयानि असत्यानि जानन्, संशयानः, सहैकेन ऋषिणा अनेकं तर्कयन् च चिरं, गते च तां तातायज्ञातकार्य्यकारिणीं तिरस्कृत्य, सह आचार्य्यकनीयस्या तदङ्गनारहिते ऋषिजने, संसन्निषीदज्जनसकाशे तस्याः ललनायाः स्थितिं निजाचार्य्यास्यादेशेन तद्गृहे आ तनयजननादादिदेश । सा च कातरा कान्तकृततिरस्कारेण क्रन्दन्ती, गच्छन्ती च नरेन्द्राचार्य्यसहिता, सहसा जनन्यादिष्टया विदशाङ्गनया तत्तेजसाक्रान्तदेहा गगनसरण्या अनीयत । नरेन्द्रश्च इत्थं साश्चर्य्यं निजाचार्य्यगिरा आकर्णयन् क्षणं ध्यायंश्च तद्गतं निरगात् । इति ।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"वि, ए" इत्युपनामक श्रीमज्जीवानन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण-श्रीमन्नित्यबोध विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां पञ्चमोऽङ्कः ॥५॥

---

# अथ पञ्चमाङ्कांशोऽङ्कावतारः । *



[ ततः प्रविशति नागरकश्यालः पश्चाद्बाहुबद्धं पुरुषमादाय रक्षिणौ च । (१)

रक्षिणौ । [ पुरुषं ताड़यित्वा । ] **अले कुम्भिलआ ! कधेहि कहिं तुए एशे महामणिभाशुले उक्किण्णणामक्खले लाअकीए अङ्गुलीअए शमाशादिदे ? (क) (२)**

---

(क) अरे कुम्भिलक ! कथय, कुत्र त्वया एतन्महामणिभासुरमुत्कीर्णनामाक्षरं राजकीयमङ्गुरीयकं समासादितम् ?

---

* "अङ्कान्ते सूचितः पात्रैः तदङ्कस्याविभागतः । यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ॥" इति लक्षणात् अङ्कावतारनामा अयमर्थोपक्षेपकः ; अत एव दर्पणकृताऽपि एष एव दृष्टान्तीकृतः । प्राञ्चस्तु—नीचपात्रप्रयोजितत्वात् प्रवेशकोऽयम् इति मन्यमानाः अन्तर्भावयन्ति षष्ठाङ्कस्यादौ । इति नव्यप्राचीनमतयोः वैषम्यमुपमन्तव्यम् ।

(१) नागरकश्यालः,—नगरं रक्षतीति नागरः, ततः स्वार्थे कन्प्रत्ययः, तस्य श्यालः पत्नीभ्राता, "श्यालाः स्युर्भ्रातरः पत्न्याः" इत्यमरः ; अथवा—नागरः,—नगररक्षकः, स एव श्यालः, राजश्याल इत्यर्थः । राज्ञः बहुभार्य्यत्वात् कोऽपि तत्पत्नीभ्राता नगररक्षाकार्य्ये नियुक्त इत्यर्थः । पश्चाद्बाहुबद्ध—पृष्ठोपरि बाहुद्वयं कृत्वा बद्धमित्यर्थः । पुरुषं—धीवरमित्यर्थः । रक्षिणौ—प्रहरिणौ ।

(२) कुम्भिलकः,—चौरः ।—"कुम्भिलः श्यालमीने च चौर-श्लोकार्थचौरयोः" इति मेदिनी । महामणिभासुरं—महता मणिना रत्नेन उपरिनिहितेन इति भावः, भासुरं समुज्ज्वलम् । उत्कीर्णनामाक्षरम्—उत्कीर्णानि अङ्कितानि नामाक्षराणि यस्मिन तथोक्तम् । राजकीयं—नृपसम्बन्धि, समासादितं—प्राप्तम् । [ अत्र मागधी भाषा बोद्धव्या ।—"मागधी राक्षसादेः स्यात्" इति भरतोक्तेः । तत्र आदिपदे धीवरशकारादीनामपि ग्रहणात् ] ।

पुरुष: । [ भीतिनाटितकेन । ] पशीदन्तु पशीदन्तु मे भाविमिश्शे ! ण हग्गे ईदिशश्श अकज्जश्श कालके । (ख) (३)

एक: । किण्णु क्खु शोहणे व्वह्मणे शि त्ति कदुअ लण्णा दे पडिग्गहे दिण्णे ? (ग) (४)

पुरुष: । शुणुध दाव, हग्गे क्खु शक्कावदालवाशी धीवले—" । (घ) (५)

द्वितीय: । अले पाडच्चला ! किं तुमं अह्मेहिं वशदिं जादिं च पुच्छीअशि ? (ङ) (६)

नाग । शूअअ ! कधेदु शव्वं अणुक्कमेण, मा अन्तरा पडिबन्धेअ । (च) (७)

(ख) प्रसीदन्तु प्रसीदन्तु मे भावमिश्रा: ! न अहमीदृशस्य अकार्य्यस्य कारक: ।

(ग) किं नु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्त: ?

(घ) शृणुत तावत्, अहं खलु शक्रावतारवासी धीवर:,—" ।

(ङ) अरे पाटच्चर ! किं त्वमस्माभि: वसतिं जातिञ्च पृच्छ्यसे ?

(च) सूचक ! कथयतु सर्वमनुक्रमेण, मा अन्तरा प्रतिबध्नीया: ।

(३) भीतिनाटितकेन—भयमभिनीय इत्यर्थ: । प्रसीदन्तु—अनुगृह्णन्तु । "मान्यो भावस्तु वक्तव्य:" इति भरतोक्ते: भावेति सम्बोधनम् । भावमिश्रा:,—भावा:,—विद्वांस:, तेषु मिश्रा:,—श्रेष्ठा: ।—"भावो विद्वान्" इत्यमर: । अकार्य्यस्य—चौर्य्यस्य इत्यर्थ: । कारक:,—कर्त्ता, न मया चौर्य्यं कृतमित्यर्थ: ।

(४) सोपहासमाह, किमिति ।—शोभन: प्रकृष्ट: ब्राह्मण इति कृत्वा—विप्रं मत्वा इत्यर्थ: । ते—तुभ्यं, प्रतिग्रह:,—स्वीकार्य्य:, पारितोषिक: इत्यर्थ: ।

(५) शक्रावतारवासी—गङ्गातीरस्थित: देशविशेष: शक्रावतार:, तन्निवासी इत्यर्थ: । धीवर:,—कैवर्त्त: ।—"कैवर्त्ते दाशधीवरौ" इत्यमर: ।

(६) पाटच्चर:,—चौर: । "दस्यु: पाटच्चर: स्तेन:" इति हैम: । त्वं वसतिं जातिञ्च पृच्छ्यसे ।—[अत्र प्रच्छधातो: दुहादित्वात् द्विकर्म्मकत्वेन कर्मणि वाच्ये गौण-कर्मण: उक्तत्वात् त्वमित्यत्र प्रथमा ] ।

(७) सूचक इति रक्षिणोरेकतरस्य नाम । अनुक्रमेण—पौर्वापर्य्यक्रमेण

उभौ। जं आवुत्ते आणवेदि। लवेहि ले। (छ) (८)

धीव। "—शो हग्गे जालवलिशप्पहुदिहिं मच्छबन्धणोवाएहिं कुडुम्बभलणं (९) कलेमि। (ज)

नाग। [विहस्य।] विशुद्दो दाणिं शे आजीवो! (झ) (१०)

धीव। भट्टके! मा एव्वं भण। (ञ) (११)—

शहजे किल जे विणिन्दिदे
ण हु शे कम्म विवज्जणीअए।
पशुमालणकम्मदालुणे
अणुकम्पामिदुके वि शोत्तिए (ट) (१२) ॥१॥

(छ) यदावुत्त आज्ञापयति। लप रे।

(ज) "—सोऽहं जालवडिशप्रभृतिभिः मत्स्यबन्धनोपायैः कुटुम्बभरणं करोमि।

(झ) विशुद्ध इदानीमस्याजीवः!

(ञ) भर्त्तः! मैवं भण।

(ट) सहजं किल यद्विनिन्दितं न तु तत् कर्म विवर्जनीयकम्।
पशुमारणकर्मदारुणोऽनुकम्पामृदुकोऽपि श्रोत्रियः॥

इत्यर्थः। अन्तरा—मध्ये, वाक्यस्य इति शेषः। प्रतिबध्नीयाः,—विघ्नमुत्पादयेः इत्यर्थः। [प्रतिपूर्वात् बन्धधातोः क्र्यादिगणीयात् विधिलिङ् यास्]।

(८) आवुत्तः,—भगिनीपतिः,—"भगिनीपतिरावुत्तः" इत्यमरः। लप—कथय।

(९) कुटुम्बभरणं—परिवारपालनम्।

(१०) आजीवः,—जीविका, जीवनोपाय इत्यर्थः। विशुद्धः,—निर्दोषः; (सोल्लुण्ठनोक्तिरियम्)।

(११) स्वजीविकायाः निन्दामाकर्ण्य प्रतिषिध्यन्नाह, भर्त्तः इति।—एवम्—ईदृशं, मा भण—मा कथय, जीविकानिन्दनन्तु भवतामयुक्तमित्यभिप्रायः।

(१२) तत् कुतः ? इति दृष्टान्तेन दर्शयन्नाह, सहजमिति।—यत् विनिन्दितं विगर्हितं कर्म सहजं किल नैसर्गिकम् एव, कुलक्रमागतमेव इत्यर्थः, तत् कर्म न तु विवर्जनीयकं नैव परित्याज्यम्;—"येनास्य पितरो याता येन याताः पितामहाः। तेन यायात् सतां मार्गं तेन गच्छन् न दुष्यति॥" इति शास्त्रादिति भावः। अनुकम्पया

नाग। तदो तदो ? (ठ)

धीव। "—एक्कश्शिं दिअशे मए लोहिदमच्छके पाविदे, तदो खण्डशो कप्पिदे, जाव तश्श उदलब्भन्तले पेक्खामि, दाव एशे महालअणभाशुले अङ्गुलीअए पेक्खिदे ; पच्छा इध विक्कअत्थं दंशअन्ते ज्जेव गह्णीदे भावमिश्शेहिं। एत्तिके दाव एदश्श आगमे, अध मं मालेध कुट्टेध वा। (ड) (१२)

(ठ) ततस्तत: ?

(ड) "—एकस्मिन् दिवसे मया रोहितमत्स्य: प्राप्त:, तत: खण्डश: कल्पित:, यावत् तस्य उदराभ्यन्तरे प्रेक्षे, तावदेतन्महारत्नभासुरमङ्गुरीयकं प्रेक्षितम् ; पश्चादिह विक्रयार्थं दर्शयन्नेव गृहीतो भावमिश्रै:। एतावांस्तावदेतस्यागम:, अथ मां मारयत कुट्टयत वा। दयया मृदुकोऽपि सुकोमलप्रकृतिरपि श्रोत्रिय: वेदवित् ब्राह्मण:,—"श्रोत्रियच्छान्दसौ समौ" इत्यमर:। पशुमारणकर्मणा यज्ञकर्मणि पशुवधकार्य्येण बौद्धादिभि: निन्दितेन इति भाव:, दारुण: निष्ठुर: दृश्यते इति शेष:। तस्मात् सदोषमपि कौलिकं कर्म अनुष्ठेयमेव, तदत्र निन्दा न युक्ता इति भाव:। उक्तञ्च गीतायाम्।—"सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत्" इति। [अत्र धीवरस्य मत्स्याजीवे प्रस्तुते, कर्मेति सामान्यकथनात् अप्रस्तुतप्रशंसा ; तथा कृपापरवशस्यापि श्रोत्रियस्य पशुविनाशकर्म्मपरित्यागवत् निन्दितमपि चिराचरितं कार्य्यं कस्यापि न विवर्ज्जनीयमिति प्रतिबिम्बनात् वैधर्म्येण दृष्टान्तालङ्कारश्च ; अनयो: अङ्गाङ्गित्वम् ]। सुन्दरी वृत्तम्। तल्लक्षणं यथा,—"अयुजोर्यदि सौ जगौ युजो:, सभरा ल्गौ यदि सुन्दरी मता" इति। इदं हि अर्द्धसमवृत्तम्। तत्र प्रथम तृतीययो: पादयो: दशाक्षराणि, द्वितीय-चतुर्थयोश्च एकादशाक्षराणि सन्ति। अतश्च दशाक्षरपादवृत्तेषु एतदयुक्पादद्वयम् अष्टाचत्वारिंशदधिकद्विशततमस्य, तथा युग्मपादग तद्वृत्तन्तु एकादशाक्षरपादच्छन्द:सु अष्टोनसप्तशततमस्य प्रस्तारस्य अन्तर्भूतम् ॥ १ ॥

(१२) खण्डश:,—खण्डं खण्डम् [ इति वीप्सायां शस्प्रत्यय:। अव्ययमेतत् क्रियाविशेषणम् ]। कल्पित:,—कर्त्तित:,—"कल्पनं कर्त्तनं कृतौ" इति विश्व: ; कृत: इति वा। महारत्नभासुरं—महामणिसमुज्ज्वलं, भावमिश्रै:,—मान्यैरित्यर्थ:। आगम:,—प्राप्ति:। कुट्टयत—चूर्णयत इत्यर्थ:। [ न चात्र ग्राम्यतादोष: हालिकप्रयुक्तशब्दप्रयोगादिति वाच्यं—"ग्राम्यत्वमधमोक्तिषु" इत्युक्ते: अधमवाक्ये तस्य गुणत्वस्य सम्भवात्। अत्र मुञ्चेत इति पाठान्तरम् ]।

नाग। [ अङ्गुरीयकमाघ्राय। ] जालुअ! मच्छोदलब्भन्तलगदो त्ति णत्थि शन्देहो, जदो अअं आमिशगन्धो बाअदि, आगमो दाणिं एदश्श एशो विमरिशिदव्वो। ता एध, लाअउलं ज्जेव गच्छह्म। (ढ) (१४)

रक्षिणौ। [ धीवरं प्रति। ] गच्छ ले गण्ठिच्छेदअ! (१५) गच्छ। (ण) [ इति सर्वे परिक्रामन्ति ]।

नाग। शूअअ! इध गोउलदुआले अप्पमत्ता परिपालेध मं, जाव लाअउलं पवेशिअ णिक्कमामि। (त) (१६)

(ढ) जालुक! मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः, यतोऽयमामिषगन्धो वाति, आगम इदानीमेतस्यैष विमर्ष्टव्यः। तदेत, राजकुलमेव गच्छामः।

(ण) गच्छ रे ग्रन्थिच्छेदक! गच्छ।

(त) सूचक! इह गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं मां, यावद्राजकुलं प्रविश्य निष्क्रामामि।

(१४) जालुक इति द्वितीयपुरुषस्य नामधेयम्। आमिषगन्धः,—मत्स्यगन्धः, आगमः,—प्राप्तिवृत्तान्तः। एतस्य—धीवरोक्तस्य अङ्गुरीयकस्य, एषः,—आगमः, विमर्ष्टव्यः,—सत्यमेतत् न वेति सम्यक् ज्ञातव्य इत्यर्थः। एत—आगच्छत, राजकुलं—नृपभवनम्;—कुलशब्दमुपक्रम्य "भवने च तनौ क्लीवम्" इति मेदिन्युक्तेः। [अत्र "विश्शगन्धी गोहादी मच्छबन्धी एव्व णिश्शंशअं। अङ्गुलीअअदंशणं शे विमरिशिदव्वं" इति पाठे—"विस्रगन्धी गोधादी मत्स्यबन्ध एव निःसंशयम्। अङ्गुरीयकदर्शनमस्य विमर्षयितव्यम्" इति (सं)। तत्र विस्रगन्धी—आमगन्धयुक्तः;—"विस्रं स्यादामगन्धि यत्" इत्यमरोक्तेः। गोधादी—गोधाभक्षकः, मत्स्यबन्धः,—धीवरः। निःसंशयम्—अत्र संशयो नास्ति इत्यर्थः। अन्यत् सुगमम् ]।

(१५) ग्रन्थिच्छेदकः,—चौरः, तस्य सम्बोधने। "गाँट्काटा" इति भाषा।

(१६) गोपुरद्वारे—"पुरद्वारन्तु गोपुरम्" इत्यमरोक्तेः पौनरुक्त्यं, तेन "गोपुर"-नामकं द्वारमिति विग्रहः; नगरद्वारम् इत्यर्थः। अप्रमत्तौ—अवहितौ, यथाऽयं न पलायितुं शक्नोति, सावधानीभूय तथा त्वया स्थातव्यम् इति भावः। प्रतिपालयतम्—अपेक्षेथाम्। निष्क्रामामि—प्रत्यावर्त्ते इत्यर्थः। [ "क्रमः परस्मैपदेषु" (७।३।७६ पा०) इति दीर्घः ]।

उभौ। पविशदु आवुत्ते शामिप्पशादत्थं। (थ)

[ नागरकश्यालः परिक्रम्य निष्क्रान्तः। ]

सूच। जालुअ! चिलाअदि (१७) क्खु आवुत्ते। (द)

जालु। णं अवशलोवशप्पणीआ (१८) लाआणो होन्ति। (ध)

सूच। फुल्लन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं। (न) (१९)

धीव। णालिहदि भावे अआलणमालके भविदुं। (प)

जालु। [ विलोक्य। ] एशे अह्माणं ईश्शले पत्ते गेह्णिअ लाअशाशणं आअच्छदि, शम्पदं एशे शउलाणं मुहं पेक्खदु, अहवा गिद्धशिआलाणं बली होदु। (फ) (२०)

---

(थ) प्रविशतु आवुत्तः स्वामिप्रसादार्थम्।

(द) जालुक! चिरयति खलु आवुत्तः।

(ध) ननु अवसरोपसर्पणीया राजानो भवन्ति।

(न) स्फुरतो मेऽग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितुम्।

(प) नार्हति भावोऽकारणमारको भवितुम्।

(फ) एषोऽस्माकमीश्वरः पत्रे गृहीत्वा राजशासनमागच्छति, साम्प्रतमेष स्वकुल्यानां मुखं प्रेक्षताम्, अथवा गृध्रशृगालानां बलिर्भवतु।

---

(१७) चिरयति—विलम्बते।

(१८) अवसरोपसर्पणीयाः,—अवसरे समये, समयं विचार्य इत्यर्थः; उपसर्पणीयाः गन्तव्याः, उपगम्य निवेदनीया इति भावः; न हि राजभवनं गत्वैव राजानमुपगन्तुं शक्यते, तस्य सर्वदा समीपगमनस्य प्रतिषिद्धत्वात्; अतोऽत्र विलम्बः इति भावः।

(१९) स्फुरतः,—स्पन्देते, अग्रहस्तौ—हस्ताग्रभागौ, करतलौ इत्यर्थः। व्यापादयितुं—ताड़यितुमित्यर्थः।

(२०) ईश्वरः,—प्रभुः, नागरिकश्याल इत्यर्थः। राजशासनं—राजाज्ञां, पत्रे गृहीत्वा—पत्रारोपितं कृत्वा इत्यर्थः। एष—धीवरः, स्वकुल्यानां—पुत्रादीनां, मुखं प्रेक्षतां—पश्यतु; अस्माकं हस्तात् मुक्तो भवतु इत्यर्थः। बलिः,—उपहारः, भवतु; अस्माभिः व्यापाद्यमानो भवतु इत्यर्थः; दण्ड-मुक्त्योरेकतरस्य सम्भावनात् इति भावः।

नाग। [प्रविश्य।] "शिग्घं शिग्घं एदं—" । (व) [इत्यर्द्धोक्ते]। (२१)

धीव। हा, हदो ह्मि !! (भ) (२२)

[इति विषादं नाटयति]। (२३)

नाग। "—मुञ्चध जालोवजीविणं। उववस्से शे अङ्गुलीअअश्श आगमे, अह्म श्शामिणा जाव कधिदं। (म) (२४)

सूच। जहा आणवेदि आवुत्ते; जमवशदिं गदुअ प्पडिणिउत्ते क्खु एशे !! (य) (२५) [इति धीवरं बन्धनान्मोचयति।]

धीव। भट्टके ! शम्पदं तुह केलके मे जीविदे। (र) (२६)

[इति पादयोः पतति।]

---

(व) शीघ्रं शीघ्रमेतम्—"

(भ) हा, हतोऽस्मि !

(म) "—मुञ्चत जालोपजीविनम्। उपपन्नोऽस्य अङ्गुरीयकस्यागमः अस्मत्स्वामिना यावत् कथितम्।

(य) यथाज्ञापयत्यावुत्तः; यमवसतिं गत्वा प्रतिनिवृत्तः खलु एषः !!

(र) भर्त्तः ! साम्प्रतं तव क्रीतकं मे जीवितम्।

(२१) अर्द्धोक्ते—"शीघ्रं शीघ्रम् एतं मुञ्चत जालोपजीविनम्" इति समुदितवाक्यस्य अर्द्धे कथिते इत्यर्थः।

(२२) धीवरस्तु सहजभयाकुलचित्तः, "मारयत, कुट्टयत" इत्यादि क्रियामनुमाय आह, हेति।—हा इति—खेदसूचकमव्ययम्। हतोऽस्मि—व्यापादितोऽस्मि इत्यर्थः।

(२३) विषादं नाटयति—विषस्रभावम् आङ्गिकाभिनयेन दर्शयति इत्यर्थः।

(२४) उपपन्नः—युक्तः, सत्यमेवोक्तमनेनेति भावः। यावत् यदा, अस्मत्स्वामिना राज्ञा कथितं, तदा उपपन्नः धीवरोक्तः अङ्गुरीयकागमवृत्तान्तः, इति योजना।

(२५) यमवसतिं—यमभवनं, मृत्युमुखमित्यर्थः। प्रतिनिवृत्तः,—प्रत्यागतः। यदि ईदृशः नृपादेशः न स्यात् तदा अस्माभिः नूनं व्यापादितो भवेत् इत्यर्थः।

(२६) तव—त्वया इत्यर्थः, क्रीतकं क्रीतमेव [तवेति सम्बन्धविवक्षया षष्ठी। क्रीतकमित्यत्र स्वार्थे कन्] जीवितं—प्राणाः, त्वदधीना मम प्राणा इति समुदितार्थः।

नाग। उट्ठेहि, एशे भट्टिणा अङ्गुलीअअमुल्लशम्मिदे पारिदोशिए दे प्पशादीकिदे, ता गेह्ण एदं। (ल) (२७)

[ इति धीवराय कटकं (२८) ददाति । ]

धीव। [ सहर्षं सप्रणामञ्च प्रतिगृह्य । ] अणुग्गहीदो ह्मि। (व)

श्यालु। एशे क्खु रञ्ञा तधा अणुग्गहीदे जधा शूलादो ओदालिअ हत्थिक्खन्धे शमालोविदे। (श) (२९)

सूच। आवुत्ते! पालिदोशिएण जाणामि महालिहलदणेण अङ्गुलीअएण शामिणो बहुमदेण होदव्वं। (ष)

नाग। ण तश्शिं भट्टिणो महालिहलदणं त्ति कदुअ पलिदोशो, एत्ति उण तक्केमि,—"। (स)

उभौ। किं उण? (ह)

(ल) उत्तिष्ठ एतद्भर्त्रा अङ्गुरीयकमूल्यसम्मितं पारितोषिकं ते प्रसादीकृतम्; तद् गृहाणैतत्।

(व) अनुगृहीतोऽस्मि।

(श) एष खलु राज्ञा तथाऽनुगृहीतः यथा शूलादवतार्य्य हस्तिस्कन्धे समारोपितः।

(ष) आवुत्त! पारितोषिकेण जानामि महार्हरत्नेन अङ्गुरीयकेण स्वामिनो बहुमतेन भवितव्यम्।

(स) न तस्मिन् भर्त्तुः महार्हरत्नमिति कृत्वा परितोषः, एतत्पुनस्तर्कयामि—"।

(ह) किं पुनः?

(२७) अङ्गुरीयकमूल्यसम्मितं—अङ्गुरीयकमूल्यसमानमूल्यं, पारितोषिकं,—पुरस्कारः, ते—तुभ्यं [ क्रियाग्रहणात् चतुर्थी ] प्रासादीकृतम्—अनुग्रहेण दत्तम् इत्यर्थः।

(२८) कटकं—वलयम्।

(२९) शूलात्—मनुष्यमारणसाधनकीलात्, अवतार्य्य—आक्षिप्य, हस्तिस्कन्धं—गजोपरि, समारोपितः,—स्थापितः।

नाग। "—तस्स दंसणेण भट्टिणा को वि अहिमदो जणो सुमरिदो त्ति, जदो मुहुत्तअं पइदिगम्भीरो वि पज्जुस्सुअमणा आसी। (क) (३०)

सूच। दोसिदे सोइदे अ दाणिं भट्टा आवुत्तेण! (ख) (३१)

जालु। णं भणेमि इमस्स मच्छअत्तुणो किदे। (ग) (३२)

[ इति धीवरमसूयया पश्यति। ] (३३)

धीव। भट्टालके! इदो अद्धं तुम्हाणम्पि सुलामुल्लं होदु। (घ) (३४)

---

(क) "—तस्य दर्शनेन भर्त्ता कोऽपि अभिमतो जनः स्मृत इति, यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत्।

(ख) तोषितः शोचितश्च इदानीं भर्त्ता आवुत्तेन!

(ग) ननु भणामि अस्य मत्स्यशत्रोः कृते।

(घ) भट्टारक! इतोऽर्द्धं युष्माकमपि सुरामूल्यं भवतु।

---

(३०) अभिमतः—अभीष्टः, प्रिय इत्यर्थः। स्मृतः,—ध्यातः, मनसि कृत इत्यर्थः। ननु कुतः ज्ञायते तदित्याह, यत इति।—यस्मात् प्रकृतिगम्भीरोऽपि—स्वभाव-धीरोऽपि। [एतेन धीरोदात्तत्वं सूचितम्]। पर्य्युत्सुकमनाः,—उत्कण्ठितचित्तः। तादृ-शौत्सुक्येन ज्ञातं मया, प्रियस्मरणं तस्य तदानीं जातमिति प्रतिवाक्यतात्पर्य्यम्।

(३१) तोषितः,—प्रीणितः, अङ्गुरीयकार्पणादिति भावः। शोचितः,—शोकं प्रापितः, प्रियजनस्मारकत्वादिति भावः। आवुत्तेन—भवता इत्यर्थः।

(३२) मत्स्यशत्रोः,—मीनविनाशकस्य, धीवरस्य इति यावत्। [अत्र "मच्छअत्तुणो" इत्यत्र "मच्छिआभत्तुणो" इति पाठे,—"मात्स्यिकभर्त्तुः" इति (सं)।—मत्स्येन जीवन्तीति मात्स्यिकाः धीवराः तेषां भर्त्तुरित्यर्थः]। कृते—निमित्तम्। [अव्ययमेतत्]।

(३३) असूयया—गुणेषु दोषाविष्करणमसूया तया; भाग्यवशात् 'अहन्तु केवलं दुःखमनुभूतवान्, धनलाभभागी त्वयम्' इत्यसूयाकारणमिति भावः। (इति कविवाक्यम्)।

(३४) इतः,—अस्मात् वलयात्, सुरामूल्यं—मद्यमूल्यम्। [अत्र सुमनोमूल्यमिति पाठे,—पुष्पमूल्यमित्यर्थः]।

जानु। धीवल ! महत्तले शम्पदं अह्माणं पिअवअश्शके शंवुत्ते शि, कादम्बलीशक्खिके (३५) क्खु पढमं शोहिदे इच्छी-अदि, ता एहि शुण्डिआलअं ज्जेव गच्छह्म। (ङ)

[ इति निष्क्रान्ताः सर्वे ]।

इति अङ्कावतारः। (३६)

---

(ङ) धीवर ! महत्तरः साम्प्रतमस्माकं प्रियवयस्यः संवृत्तोऽसि, कादम्बरीसाचिकं खलु प्रथमसौहृदमिष्यते, तदेहि शौण्डिकालयमेव गच्छामः।

---

(३५) कादम्बरीसाचिकं—कादम्बरी सुरा, सा साक्षी यत्र तत्।

(३६) अङ्कावतारलक्षणन्तु पूर्व्वमुक्तम्। अनेन खलु 'अङ्गुरीयकरूपाभिज्ञाना-वाप्तिः,' तथा च राज्ञः दुष्मन्तस्य 'शकुन्तलापरिणयस्मरणात् सम्प्रति विरहसम्भावनया पर्य्याकुलचित्तता', इति च सूचितम्।

---

## पञ्चमाङ्कांशाङ्कावतार-विवृतिः।

अथ इत्थं संप्रवृत्ते शकुन्तलाव्यापारे, राज्ञः नगररक्षकः कश्चित् रक्षिपुरुषद्वयेन सार्द्धं धीवरमेकं गृहीतराजनामाङ्किताङ्गुरीयकं "तस्करोऽयम्" इति मन्यमानः अग्रहीत्, अपृच्छत् च भीतिविह्वलमेनं "कुत इदं राजनामाङ्कितमङ्गुरीयकं समासादितम् ?" इति ; स च समाकर्ण्य वाक्यमेतत्, निवेद्य च जालधृतरोहितमत्स्याभ्यन्तरात् प्राप्तमिदमिति जोषमासीत्। अनन्तरं नगराध्यक्षः आमिषगन्धेन धीवरवाक्येऽकृतसन्देहोऽपि तदर्थं राजान्तिकगमनमेव सङ्गतं मत्वा, रक्षित्वा च रक्षिणोरभ्यासे जालोपजीविनं, राजकुलमगात्। क्षणेन च निर्गत्य नृपभवनात्, त्वरयित्वा च धीवरमोचनार्थं रक्षिद्वयं, धीवरं प्रति नृपतिप्रसादं व्यजिज्ञपत्।

अथ रक्षिणौ विमुच्य जालग्राहिणं, श्रुत्वा च नागरिकात् राज्ञः अङ्गुरीयकदर्शनात् प्रभृति सकरुणमुदन्तजातम्, आरोप्य च धीवरस्कन्धोपरि नृपोत्कण्ठासम्पादकमपराधं, स्वीकार्य्य च धीवरमुखात् नृपदत्तप्रसादार्द्धसमर्पणं, तेन सार्द्धं मद्यपानार्थं शौण्डिकालयमविशताम्। इति।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"वि, ए" इत्युपनामक-श्रीमज्जीवानन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण-श्रीमन्नित्यबोध-विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां पञ्चमाङ्कांशाङ्कावतार-विवृतिः।

# षष्ठोऽङ्कः ।

[ ततः प्रविशति आकाशयानेन मिश्रकेशी । ] (१)

मिश्र । णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसन्दिट्टं, ता जाव साहुजणस्स अहिसेअकालो भवे दाव सम्पदं इमस्स राएसिणो बुत्तन्तं पच्चक्खीकरिस्सं । णं मेणआसम्बन्धेण

---

(क) निर्वर्त्तितं मया पर्य्यायनिर्वर्त्तनीयमप्सरस्तीर्थसन्दिष्टं, तद्यावत् साधुजनस्य अभिषेककालो भवेत् तावत् साम्प्रतमस्य राजर्षेः वृत्तान्तं प्रत्यक्षीकरिष्यामि । ननु

(१) भर्त्तृमुखेन रमण्याः गुणातिशयप्रख्यापनं प्रगाढ़प्रेमप्रकटनञ्च कन्यायाः तन्मातुः तन्मातृकुलसम्बन्धिनो वा श्रुतिगोचरीभूतं सत् हृदयं पीयूषधारासम्पातसंवादि च भवति, भवति च तत्साचाद्द्रष्टॄणां सामाजिकानां चेतसि सुतराम् अलौकिकचमत्कारातिशयसञ्चारः इति हृदये समानीय, शकुन्तलायाः मातृस्वजनं मिश्रकेशीम् [पाठान्तरे सानुमतीम्] अवतारयति कविः, तत इति ।—आकाशयानेन —विमानेन । मिश्रकेशी—तदाख्या काचिदप्सराः ।

(२) निर्वर्त्तितं—सम्पादितम् । पर्य्यायनिर्वर्त्तनीयं—पर्य्यायेण—वारक्रमेण, निर्वर्त्तनीयं—सम्पादनीयम् । अप्सरस्तीर्थसन्दिष्टम्—अप्सरसां तीर्थे घट्टे, अथवा अप्सरस्तीर्थैः,—अप्सरोयोनिभिः, मेनकादिभिः इत्यर्थः ; सन्दिष्टम्—कर्त्तव्यत्वेन अप्सरोभिः उपदिष्टमित्यर्थः । [ अत्र "अप्सरस्तीर्थसान्निध्यं यावत् साधुजनस्य अभिषेककाल इति" इति पाठान्तरे—अप्सरस्तीर्थे—तन्नामकगङ्गाऽवतरणघट्टे, सान्निध्यम्—उपस्थितिः, यावत्—यत्कालपर्य्यन्तं, साधुजनस्य—सज्जनस्य, कुबेरस्य वा ; देवयोनिषु मध्ये तस्यैव वार्द्धुषिकत्वात् ;—"साधुर्वार्द्धुषिके चारौ सज्जने चापि वाच्यवत्" इति विश्वः । अभिषेककालः,—स्नानसमयः । इति—तावत्कालपर्य्यन्तमित्यर्थः ] । तथा च तत्र गङ्गायाः अप्सरस्तीर्थनामकघट्टे एकैकस्मिन् दिवसे साधुजनस्नानपर्य्यन्तम् एकैकाभिः अप्सरोभिः स्थातव्यमिति नियमोऽस्ति ; तस्मिन् दिवसे मिश्रकेश्या वार आसीत्, तथा च तत्कार्य्यमनुष्ठितमित्यर्थः । साम्प्रतम्—अधुना, अस्य राजर्षेः,—

सरीरभूदा दाणिं मे सउन्तला, ताए अ दुहिदुणिमित्तं सन्दिट्ठ-पुव्वम्हि। (२) [समन्तादवलोक्य।] (३) किण्णु क्खु उवत्थिदुच्छवे वि दिअहे णिरुच्छवारम्भं विअ एदं राअउलं दीसदि? अत्थि मे विहवो सव्वं प्पणिधाणेण जाणिदुं, किन्तु सहीए मए आदरो माणइदव्वो। भोदु इमाणं ज्जेव उज्जाणवालआणं पास्स-परिवत्तिणी भविअ तिरक्करिणीए विज्जाए पच्छण्णा उव-लहिस्सं। (क) (४)

[इति नाट्येनावतीर्य स्थिता]।

---

मेनकासम्बन्धेन शरीरभूता इदानीं मे शकुन्तला, तया च दुहितृनिमित्तं सन्दिष्ट-पूर्वाऽस्मि। [समन्तादवलोक्य] किं न खलु उपस्थितोत्सवेऽपि दिवसे निरुत्सवारम्भमिव एतद्राजकुलं दृश्यते? अस्ति मे विभवः सर्वं प्रणिधानेन ज्ञातुं, किन्तु सख्या मया आदरो मानयितव्यः। भवतु एषामेवोद्यानपालकानां पार्श्वपरिवर्त्तिनी भूत्वा तिर-स्करिण्या विद्यया प्रच्छन्ना उपलप्स्ये।

एतस्य दुष्मन्तस्य, वृत्तान्तं—वार्त्तां, प्रत्यक्षीकरिष्यामि—द्रक्ष्यामि। मेनकासम्बन्धेन—मेनकायां प्रीतिमत्तया इत्यर्थः। शरीरभूता—आत्मदेहतुल्या। तयेति।—तया च मेनकया दुहितृनिमित्तं—दुहितुः कन्यायाः शकुन्तलायाः निमित्तम्। सन्दिष्टपूर्वा—पूर्वं सन्दिष्टा—आदिष्टा, शकुन्तलाविरहे राजवार्त्तोपलब्धये इति शेषः।

(३) समन्तात्—चतुर्दिक्षु।

(४) उपस्थितोत्सवे—उपस्थितः आगतः, उत्सवः वसन्तोत्सवः यस्मिन्, तादृशे। निरुत्सवारम्भं,—नास्ति उत्सवारम्भः यस्मिन्, तादृशम्। विभवः,—शक्तिः। प्रणि-धानेन—ध्यानेन। सख्याः,—मेनकायाः, आदरः,—प्रत्यक्षदर्शनाय अनुरोधः, मानयि-तव्यः,—पालनीय इति यावत्, सख्या यथा राजवार्त्ताज्ञानाय उपदिष्टं तथा मया अनुष्ठातव्यमिति निष्कर्षः। एषां—पुरःस्थितानाम्, उद्यानपालकानाम्—उपवनरक्षकाणां, पार्श्ववर्त्तिनी—सन्निहिता इत्यर्थः। [अनेन तेषाम् आगमन-सूचनम्]। तिरस्करिण्या—अदृश्यकारिण्या, विद्यया—मन्त्रेण इति यावत्, प्रच्छन्ना—अलक्षितेत्यर्थः। उपलप्स्ये—ज्ञास्यामि। [अनेन खलु मिश्रकेशीवाक्येन, आत्म-श्लाघायाः कथनात् विचलनं नाम विमर्शाङ्गं प्रदर्शितं,—यदाह दशरूपके,—"विकत्थनं विचलनम्" इति।

[ ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठेऽपरा च। ]

प्रथमा। कधं उवत्थिदो महुमासो ? (ख) (५)—

आतम्महरिअवेण्टं उस्ससिअं विअ वसन्तमासस्स।
दिट्ठं चूअङ्कुरअं छणमङ्गल्लं णिअच्छामि (ग) (६) ॥१॥

द्वितीया। परहुदिए ! किं एदं एआइणी मन्तेसि ? (घ) (७)

प्रथमा। महुअरिए ! चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि। (ङ) (८)

द्वितीया। [ सहर्षं त्वरया उपगम्य।] कधं उवत्थिदो महुमासो ! (च)

(ख) कथमुपस्थितो मधुमासः ?

(ग) आताम्रहरितवृन्तम् उच्छ्वसितमिव वसन्तमासस्य।
दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि॥

(घ) परभृतिके ! किमिदमेकाकिनी मन्त्रयसे ?

(ङ) मधुकरिके ! चूतकलिकां प्रेक्ष्य उन्मत्ता खलु परभृतिका भवति।

(च) कथमुपस्थितो मधुमासः !

---

(५) मधुमासः,—वसन्तमासः, चैत्रमास इत्यर्थः।—"स्यात् चैत्रे चैत्रिको मधुः" इत्यमरः।

(६) आताम्रेति।—आताम्रम् आरक्तम् ईषत् लोहितमित्यर्थः, हरितं श्यामं, वृन्तं बन्धनं यस्य तथोक्तं, क्षणमङ्गल्यम् उत्सवरूपमङ्गलाय हितं ("क्षणः पर्वोत्सव-व्यापारेषु" इति मेदिनी ) चूताङ्कुरकम् [ स्वार्थे कः ] आम्रमुकुलं वसन्तमासस्य उच्छ्वसितं जीवितमिव नियच्छामि निश्चिनोमि [ निपूर्वात् यमधातोः लटि रूपम् ] "नियमो यन्त्रणायाञ्च प्रतिज्ञानिश्चये व्रते" इति मेदिनी। [ उत्प्रेक्षालङ्कारः ]। छन्दश्चात्र गाथा ॥१॥

(७) परभृतिका इति प्रथमायाः नामधेयम्। एकाकिनी—एकला, स्वगत-मित्यर्थः। मन्त्रयसे—आलपसि।

(८) मधुकरिके ! इति।—मधुकरिका इति द्वितीयायाः चेट्याः नाम। उन्मत्ता—अत्यर्थमुल्लासिनी इत्यर्थः। परभृतिका अहमिति भावः कोकिला च।

प्रथमा। महुअरिए! तवावि एसो कालो मदविब्भमुग्गीदाणं। (छ) (९)

द्वितीया। सहि! अवलम्बस्स मं, जाव अग्गपदे परिट्ठिदा भविअ चूअप्पसवं गेह्णिअ सम्पादेमि कामदेवस्स अच्चणं। (ज) (१०)

प्रथमा। जइ एव्वं, ता ममावि अद्धं अच्चणफलस्स? (झ)(११)

द्वितीया। सहि! अभणिदे वि एदं सम्पज्जइ एव्व, जदो एक्कं ज्जेव णो एदं सरीरं द्विधा भिण्णं पजावइणा। (१२)

---

(छ) मधुकरिके! तवापि एष कालो मदविभ्रमोद्गीतानाम्।

(ज) सखि! अवलम्बस्व मां, यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्य अर्चनम्।

(झ) यदि एवं, तन्ममापि अर्द्धमर्चनफलस्य?

(ञ) सखि! अभणितेऽपि इदं सम्पद्यत एव। यत एकमेवावयोरिदं शरीरं

---

(९) मदविभ्रमोद्गीतानां—मदेन उल्लासेन यः विभ्रमः विलासः, तेन उद्गीतानि उच्चैर्गानानि, तेषाम्। [अत्र छलतः भ्रमरी इति व्यज्यते। अत एव एतच्चातुर्य्यसूचनार्थं कविना चेट्योरीदृशं नामद्वयमुपन्यस्तम्]।

(१०) अवलम्बस्व—पतनप्रतिबन्धाय धारय इत्यर्थः। अग्रपदे—पादाग्रे, अङ्गुलीमात्रनिर्भरेण इत्यर्थः। ["परिस्थिता" इत्यत्र "उपसर्गाः क्रियायोगे" (१।४।५९ पा०) इति सूत्रेण उपसर्गसंज्ञाप्राप्तौ "अधिपरी अनर्थकौ" (१।४।९३ पा०) इति सूत्रेण अनर्थकार्थपरीतिनिपातस्यैव कर्मप्रवचनीयत्वात् अत्र तदर्थाभावात् "परितः स्थिता" इति विग्रहवाक्याच्च "उपसर्गात् सुनोति—" (८।३।६५ पा०) इति सूत्रेण षत्वाभावः। उपसर्गत्वे तु "परिष्ठिता" इति]। चूतप्रसवं—चूताङ्कुरम्। गृहीत्वा—अवचित्य। सम्पादयामि—निष्पादयामि; कामदेवस्य—मदनस्य, अर्चनं—पूजनम्। (वसन्तोत्सवे कामदेवार्चना प्रसिद्धा)।

(११) सव्याजमाह, यदीति।—एवम्—ईदृशं, यदि आम्रमुकुलावचयने अहं तव सहायिनी भूत्वा त्वां धारयामि इत्यर्थः, तदा ममापि अर्चनफलस्य—पूजनफलस्य, अर्द्धं समानमित्यर्थः, भवत्विति शेषः; कर्त्तुः अनुमन्तुः प्रयोक्तुश्च फलभागित्वादिति भावः।

(१२) अभणितेऽपि—अनुक्तेऽपि। सम्पद्यते एव—भवत्येव। कुतः इत्याह, यत

[ सखीमवलम्ब्य चूतप्रसवं गृहीत्वा । ] अम्महे ! अप्पबुद्धो वि चूअ-प्पसवो बन्धणभङ्गसुरही रामदि । (१३) [कपोतहस्तं (१४) कृत्वा ] । णमो भअवदो मअरद्धअस्स । (ञ) (१५)—

अरिहसि मे चूअङ्कुर ! दिण्णो कामस्स गहिदचावस्स ।
पहिअजणजुअइलक्खो पञ्चन्तरिओ सरो होदुं (ट) (१६) ॥२॥

---

द्विधा भिन्नं प्रजापतिना । अहो ! अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभिः राजते ।
नमो भगवते मकरध्वजाय ।

(ट) अर्हसि मे चूताङ्कुर ! दत्तः कामस्य गृहीतचापस्य ।
पथिकजनयुवतिलक्ष्यः पञ्चान्तरितः शरो भवितुम् ॥

---

इति ।—यतः,—यस्मात्, एकमेव—अभिन्नमेव, शरीरं—देहः, प्रजापतिना—स्रष्ट्रा, द्विधा भिन्नं—द्विधा विभक्तम् । [ इत्यतिशयोक्तिः । अनया सौहार्द्दातिशयः ध्वन्यते ] ।

(१३) अप्रबुद्धः—अप्रस्फुटितः । बन्धनभङ्गसुरभिः,—वृन्तभङ्गेन सौरभवान् । राजते—शोभते ।

(१४) कपोतहस्तं—कपोतः पारावतः स इव हस्तः तम्, अञ्जलिविशेषमित्यर्थः; "कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ । प्रणामे गुरुसम्भाषे" इति सङ्गीतरत्नाकरोक्तेः ।

(१५) भगवते—सर्वशक्तिमते । मकरध्वजाय—कामाय । [ नमः इत्यत्र "नमः स्वस्ति—" ( २।३।१६ पा० ) इत्यादिना चतुर्थी । प्राकृते तु चतुर्थ्यन्तपदप्रयोगाभावात् "मअरद्धअस्स" इत्यत्र "चतुर्थ्याः षष्ठी" इति सूत्रेण षष्ठीविभक्तिः ] ।

(१६) अर्हसीति ।—हे चूताङ्कुर ! हे आम्रमुकुल ! मे मया इत्यर्थः, [ सम्बन्धविवक्षया कर्त्तरि षष्ठी ] दत्तः अर्पितः त्वं, गृहीतचापस्य धनुर्धरस्य [ अनेन सर्वदा सज्जत्वं ध्वनितम् ] कामस्य, पथिकजनानां प्रोषितानां युवतयः लक्ष्याणि शरव्याणि यस्य तथाभूतः ; पञ्चान्तरितः पञ्चानां मध्ये अन्तरितः अन्तर्गतः, [ अत्र 'पञ्चाभ्यधिकः शरो भव' इति पाठे,—पञ्चभ्यः अभ्यधिकः अतिरिक्तः षष्ठ इत्यर्थः ; अत एव असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः । कामस्य पञ्च शरास्तु—"अरविन्दमशोकञ्च शिरीषं चूतमुत्पलम् । पञ्चैतानि प्रकीर्त्त्यन्ते पञ्चबाणस्य सायकाः ॥" इति । ] शरो भवितुम् अर्हसि । [ भवितुमित्यत्र "शकधृषज्ञाग्लाघट—" ( ३।४।६५ पा० ) इत्यादिना तुमुन्प्रत्ययः ] । इयमपि गाथा ॥२॥

कञ्चुकी । [प्रविश्य सक्रोधम् ।] मा तावत् । अनात्मज्ञे ! (१७) देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे ?

उभे । [भीते ।] पसीददु पसीददु अज्जो, अगहिदत्था (१८) अह्मे । (ठ)

कञ्चु । हुं, न किल श्रुतं भवतीभ्यां—यद्वासन्तैस्तरुभिः अपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च ? तथाहि,(१९)—

चूतानां चिरनिर्गताऽपि कलिका बध्नाति न स्वं रजः,
सन्नद्धं यदपि स्थितं कुरुवकं तत् कोरकावस्थया ।

---

(ठ) प्रसीदतु प्रसीदतु आर्य्यः, अगृहीतार्थे आवाम् ।

(१७) राज्ञा दुर्मनायमानेन प्रतिषिद्धेऽपि वसन्तोत्सवे आभ्यां क्रियमाणं तमवलोक्य भर्त्सयन्नाह, मेति ।—मा इति निषेधसूचकं विभिन्नपदम् । तावदिति—वाक्यालङ्कारे । अनात्मज्ञे !—आत्मज्ञानरहिते ! [द्विवचनान्तं पदमिदं सम्बुद्धौ] मूढे इत्यर्थः । आत्मानं चेटीम् अवधारयन्त्या अपि राजादेशलङ्घनानौचित्यप्रतिपादनार्थम् 'अनात्मज्ञे' इति सम्बोधनं कृतम् ।

(१८) अगृहीतार्थे—अगृहीतः अज्ञातः, अर्थः वसन्तोत्सवप्रतिषेधरूपः याभ्यां, तथाभूते ; अतो नावयोरत्र दूषणमिति भावः ।

(१९) हुम् इति—कोपसूचकम् । वासन्तैः,—वसन्तकालोद्भवैः, तत्कालोद्गतकुसुमैरित्यर्थः । तरुभिरपि—अचेतनैरित्यर्थः । प्रमाणीकृतं—सभयं गृहीतमिति यावत् । तदाश्रयिभिः,—तद्वासन्ततरुनिलयैः पक्षिभिरित्यर्थः । [अनेन खलु चेतनाचेतनसाधारणैः राजशासनस्य प्रतिपालनोक्त्या राज्ञः अलौकिकप्रतापातिशयः ध्वन्यते, ध्वन्यते च ततो राज्ञोऽपि अलौकिकोत्कर्षः ] । राजशासनस्य प्रामाण्यं दर्शयति, तथाहीति ।—[पूर्ब्बवाक्ये असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिरलङ्कारः] ।

(२०) चूतानामिति ।—चिरं दीर्घकालं निर्गताऽपि शिशिरावसानप्रोद्भिन्नापि चूतानाम् आम्राणां कलिका कोरकः [जातावेकवचनम्] स्वं स्वकीयम्, आत्मीयमित्यर्थः ; [अनेन अत्यावश्यकत्वं सूचितम्] रजः परागं न बध्नाति न जनयति, नाविष्करोतीत्यर्थः ; [यथा काचित् बाला प्रौढ़ाऽपि रजोदर्शनं न याति तद्वदिति ध्वनिः] । यदपि कुरुवकं तदाख्यपुष्पमुकुलं सन्नद्धं मुकुलितं आसीत्, तत् कुरुवकं

कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम् (२०) ॥३॥

मिश्र। णत्थि एत्थ सन्देहो, महाप्पहावो क्खु राएसी। (ड) (२१)

प्रथमा। अज्ज! कदिचि दिअसाइं मित्तावसुणा रट्ठिएण भट्टिणो पादमूलं पेसिदा अह्मे इध प्पमदवणे चित्तकम्म अप्पिदुं, ता आगन्तुअदाए ण स्सुदपुव्वो अह्मेहिं एसो वुत्तन्तो। (ढ) (२२)

(ड) नास्त्यत्र सन्देहः, महाप्रभावः खलु राजर्षिः।

(ढ) आर्य्य! कतिचित् दिवसानि मित्रावसुना राष्ट्रियेण भर्त्तुः पादमूलं प्रेषिते आवाम् इह प्रमदवने चित्रकर्मार्पयितुं, तदागन्तुकतया न श्रुतपूर्व्व आवाभ्यामेष वृत्तान्तः।

कोरकावस्थया स्थितं, न तु विकसितुं शक्तमिति भावः; [ अत्रापि जातावेक-वचनम्। तथाऽत्र कोरकत्वं न जहाति इति वक्तव्ये तद्विरुद्धत्वेन कथनम् ]। शिशिरे गतेऽपि अतीतेऽपि, वसन्तागमेऽपीत्यर्थः, पुंस्कोकिलानां ( न तु कोकिलसामान्यानां, कोकिलानान्तु स्वत एव स्वरस्खलनस्य सम्भवात् अत एव पुंपदम् ) रुतं शब्दः कण्ठेषु स्खलितं लीनं किञ्चित् निर्गत्यैव भग्नमिति यावत्; कोकिलशब्दोऽपि अस्फुटो जातः इत्यर्थः; अतः शङ्के मन्ये—स्मरोऽपि कामोऽपि चकितः भीतः सन् राजशासना-दिति शेषः, तूणात् तूणीरात् अर्द्धकृष्टम् अर्द्धाकृष्टं शरं संहरति, पुनः तूण एव स्थापयति इत्यर्थः। [ अत्र प्रथमतः पादत्रये चिरनिर्गतत्वादिकारणकलापसत्त्वेऽपि कार्य्यानुत्पादात् मालाविशेषोक्तिः। चतुर्थपादे च कामस्य भीतत्व-बाणसंहरणत्वयोः सम्भावनामात्रत्वात् उत्प्रेक्षा। कामस्य च कुसुमशरतया कुसुमोद्गमाभावात् अवश्यमेव बाणसंहारः इति चतुर्थपादगतवाक्यं प्रति पादत्रयगतवाक्यार्थानां हेतुत्वात् वाक्यार्थ-हेतुकं काव्यलिङ्गञ्च; इत्येषां यथासम्भवं साङ्कर्य्यम् ]। शार्दूलविक्रीड़ितं वृत्तम् ॥३॥

(२१) स्त्रीणान्तु यथाश्रुतग्राहित्वमात्रस्वभावात् इमे अपि राज्ञः प्रतापातिशय-वर्णनमाकर्ण्य तादृशमेव उत्तरयतः, नास्तीति।—अत्र सन्देहः नास्ति—भवदुक्तं सर्व्वं सत्यमेव इत्यर्थः। [ अत्र राजर्षिपदं महाप्रभावत्वं द्योतयति ]।

(२२) राष्ट्रियेण—राजश्यालेन, ("राजश्यालस्तु राष्ट्रियः" इत्यमरः) नगराध्यक्षेण

कञ्चु। तेन हि न पुनरेवं प्रवर्त्तितव्यम्। (२३)

उभे। [सकौतूहलम्।] अज्ज! जइ इमिणा जणेण सोदव्वं, (२४) ता कधेदु अज्जो, किं णिमित्तं भट्टिणा वसन्तुच्छवो पड़िसिद्धो त्ति? (ण)

मिश्र। उच्छवप्पिआ क्खु राआणो होन्ति, ता एत्थ गुरुणा कारणेण होदव्वं। (त) (२५)

कञ्चु। [स्वगतम्।] बहुलीभूतः (२६) अयमर्थः, तत् किं न कथ्यते? [प्रकाशम्।] अस्ति भवत्योः कर्णपथमायातं शकुन्तलाप्रत्यादेशकौलीनम्? (२७)

उभे। अज्ज! सुदं रट्ठिअमुहादो अङ्गुलीअअदंसणं जाव। (थ)

(ण) आर्य्य! यदि अनेन जनेन श्रोतव्यं, तत् कथयतु आर्य्यः किं निमित्तं भर्त्रा वसन्तोत्सवः प्रतिषिद्ध इति?

(त) उत्सवप्रियाः खलु राजानो भवन्ति, तदत्र गुरुणा कारणेन भवितव्यम्।

(थ) आर्य्य! श्रुतं राष्ट्रियमुखादङ्गुरीयकदर्शनं यावत्।

---

इत्यर्थः। आगन्तुकतया—नवागतत्वात् उदासीनतया। श्रुतपूर्वः,—[सुप्सुपेति समासः] पूर्वं श्रुत इत्यर्थः। एष वृत्तान्तः,—वसन्तोत्सवप्रतिषेधरूप इत्यर्थः।

(२३) कारणमाकर्ण्य प्रशमितकोपः आह, तेनेति।—एवम् ईदृशम्, अन्याय्यमित्यर्थः। प्रवर्त्तितव्यम्—आचरितव्यम्।

(२४) अनेन जनेन—चेटीजनेन, श्रोतव्यम्—श्रवणयोग्यमित्यर्थः; (इति विनयप्रदर्शनम्)।

(२५) तिरस्करणीप्रच्छन्ना आह, उत्सवेति।—खलु—निश्चितम्, उत्सवप्रियाः,—इष्टोत्सवाः, आनन्दजनकव्यापारं बहु मन्यन्ते इत्यर्थः। [अत्र 'मनुष्याः' इति पाठे,—मानवाः इत्यर्थः। [एतदुक्तिस्तु अप्सरोमुखेण सुतरां शोभते]।

(२६) बहुलीभूतः,—प्रायशः प्रकटितः।

(२७) शकुन्तलाप्रत्यादेशकौलीनं—शकुन्तलायाः प्रत्यादेशः निराकृतिः, तदेव कौलीनं लोकवादः।—"स्यात् कौलीनं लोकवादः" इत्यमरः।

कञ्चु। तेन हि स्वल्पं कथयितव्यं, यदैव अङ्गुरीयकदर्शनात् अनुस्मृतं देवेन सत्यमूढ़पूर्वा रहसि मया तत्रभवती शकुन्तला मोहात् प्रत्यादिष्टेति, तदा प्रभृत्येव पश्चात्तापमुपगतो देवः। तथाहि, (२८)—

रम्यं द्वेष्टि, यथा पुरा प्रकृतिभिर्न प्रत्यहं सेव्यते,
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो, यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीड़ावनम्रश्चिरम् (२९)॥४॥

(२८) स्वल्पं कथयितव्यम्—वक्तव्यविषयस्य अल्पमात्राऽवशिष्टोऽस्ति इत्यर्थः। ऊढ़-पूर्वा—पूर्वमूढ़ा, पूर्वपरिणीता इत्यर्थः। रहसि—निर्जने, तत्रभवती—मान्या। मोहात् —अज्ञानात्, विस्मरणादिति यावत्। प्रत्यादिष्टा—निराकृता, परित्यक्ता इत्यर्थः। तदा प्रभृत्येव—तदारभ्यैव, पश्चात्तापमुपगतः,—अनुतप्तः। अनुतापप्रकारमाह,—तथाहि इति।

(२९) रम्यमिति।—रम्यं रमणीयं वस्तु, वसन्तोत्सवादिकं स्रक्चन्दन-चन्द्र-किरणादिकञ्च द्वेष्टि नाद्रियते, न चक्षुषाऽपि पश्यति इत्यर्थः। यथा पुरा पूर्व-वत् (पूर्वन्तु कार्य्यापेक्षितया अधुना तु अवसरापेक्षया इत्यर्थः) प्रकृतिभिः प्रधानपुरुषैः मन्त्र्यादिभिरित्यर्थः, ("प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इत्यमरः) प्रत्यहं न सेव्यते नोपास्यते; पूर्वं प्रतिदिनम्, इदानीन्तु न तथा इत्यर्थः; राजकार्य्यं सम्यक् न पश्यतीति भावः। उन्निद्रः निद्राशून्य एव, शय्यानां (न तु शय्यायाः) उपान्तेषु (न तु मध्ये) विवर्त्तनैः विलुण्ठनैः (न तु निद्रया), अथवा शय्यायाम् उपान्तविवर्त्तनैः पार्श्वपरिवर्त्तनैः, क्षपाः रात्रीः (न तु एकां क्षपां) गमयति यापयति (न तु ताः गच्छन्ति)। यदा च दाक्षिण्येन औदार्य्येण [अनेन आवश्यकत्वं ध्वनितम्] समानुरागत्वेन वा, ("अनेक-महिलासु समरागो दक्षिणः कथितः" इति साहित्यदर्पणम्) अन्तःपुरेभ्यः शुद्धान्त-महिलाभ्यः उचिताम् अवश्यवक्तव्यामिति भावः, वाचं वाक्यं ददाति, ताभिः सह उचितमालपतीति भावः, (अनर्थकोपहासवाक्यादिकन्तु सुतरामेव न कथयतीति हृदयम्) तदा गोत्रेषु नामसु स्खलितः, अन्यस्या नाम्नि उच्चार्य्यमाणे शकुन्तलेति नामोच्चारणात् अप्रतिभ इति भावः, चिरं बहुक्षणं व्रीड़या लज्जया अवनम्रः, "अहो! ममापि दुष्मन्तस्य ईदृशी अवस्था जाता" इति अधोमुखश्च भवति। [अत्र

मिश्र। पिअं मे पिअं। (द)

कञ्चु। अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः। (३०)

उभे। जुज्जदि। (ध)

[ नेपथ्ये। ] एदु एदु भवं। (न)

कञ्चु। [ कर्णं दत्त्वा ]। अये! इत एवाभिवर्त्तते देवः, तत् गच्छतं स्वकर्मानुष्ठानाय। (३१)

उभे। तह। (प) [ इति निष्क्रान्ते। ]

[ ततः प्रविशति पश्चात्तापसदृशवेशो राजा, विदूषकः, प्रतीहारी च। ]

कञ्चु। [ राजानं विलोक्य। ] अहो! सर्वासु अवस्थासु रामणीयकम् आकृतिविशेषाणाम्। तथा हि एवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः। (३२) य एषः,—

---

(द) प्रियं मे प्रियम्।

(ध) युज्यते।

(न) एतु एतु भवान्।

(प) तथा।

पश्चात्तापादिरूपे कारणे वक्तव्ये कार्य्यस्य रम्यद्वेषादेरुत्कीर्त्तनात् पर्य्यायोक्तालङ्कारः, तथा काव्यलिङ्गमपि ]। शार्दूलविक्रीड़ितं वृत्तम् ॥४॥

(३०) अस्मात्—अस्मात् कारणात्, प्रभवतः,—प्रकर्षेण सतः, वैमनस्यात्—विकृतमनस्कत्वात्, उद्वेगादित्यर्थः। प्रत्याख्यातः,—प्रतिषिद्धः। [ अत एव द्युतिर्नाम विमर्षाङ्गम्; यदाह दर्पणे,—"तर्जनोद्वेजने प्रोक्ता द्युतिः" इति ]।

(३१) अभिवर्त्तते—आगच्छति। स्वकर्म्मानुष्ठानाय—निजकार्य्यमनुष्ठातुं [ "तुमर्थाच्च भाववचनात्" ( २।३।१५ पा० ) इति सूत्रेण चतुर्थी ]।

(३२) अहो!—विस्मये, सर्वासु अवस्थासु—सर्वस्मिन् भावे, सुखे दुःखे च इत्यर्थः। रामणीयकं—रमणीयत्वम् [ भावे कण् ]। आकृतिविशेषाणां—विशिष्टाकृतीनामित्यर्थः। समर्थ्यमान आह, तथाहीति।—वैमनस्यपरीतोऽपि—उत्कण्ठितोऽपि, विरही अपि इत्यर्थः। प्रियदर्शनः,—सौम्यमूर्त्तिः [ एतदवस्थाया अन्यत्र तु सुतरामेव प्रियदर्शनत्वमित्यपिना द्योत्यते; अत एव पूर्ववाक्ये विशेषपदोपादानम्। अत्र परवाक्यं प्रति पूर्ववाक्यस्य समर्थकत्वात् अर्थान्तरन्यासः, स च सामान्येन विशेषसमर्थनरूपः]।

प्रत्यादिष्टविशेषमण्डनविधिर्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनमेकमेव वलयं श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयनः, तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिव क्षीणोऽपि नालक्ष्यते(३३)॥५॥

(३३) प्रत्यादिष्टेति ।—प्रत्यादिष्टः परित्यक्तः विशेषमण्डनं स्वस्य आहार्यशोभा-सम्पादनार्थम् अङ्गुरीयक-केशसंस्कारादिरूपम् अलङ्करणं, तस्य विधिर्व्यापारः येन तथाभूतः, अवश्यविधारणीयभूषणजातन्तु अगत्या न परित्यक्तमित्यर्थः ; अत एव वाम-प्रकोष्ठे वामहस्तमणिबन्धे, (न तु दक्षिणप्रकोष्ठे, सन्तापाधिक्येन तत्र वोढुमशक्यत्वात् ; अत एव वलयमित्येकवचनम् ; विशेषमण्डनविधेस्त्यागात् कथञ्चित् किञ्चिद्धारणं सर्वाङ्गीणमण्डनं नेति भावः) श्लथं शिथिलं शोकेनाङ्गकार्श्यादिति भावः, एकमेव, (न तु द्वितीयं, तस्य धारणासामर्थ्यात्) [एतेन सन्तापातिशयः सूचितः । ] काञ्चनं सौवर्णं, (न तु धात्वन्तरादिमिश्रितम्) । [अनेन शैत्योपचारोऽपि ध्वन्यते, काञ्चनस्य निसर्गशैत्यात्] वलयं कटकं बिभ्रत् दधानः । श्वासेन विरहित्वात् उष्णेन दीर्घेण च, उपरक्तः पीड़ितः पाटलो वा, अधरः यस्य तथाभूतः, ['श्वासापरक्ताधरः' इति पाठे—श्वासेन अपरक्तः अपगतरागः अधरो यस्य तथोक्तः । अत्र अधरः निम्नोष्ठः (न तु उत्त-रोष्ठः, तत्र निश्वासार्पणासम्भवादिति भावः) । [एतेन तादृशावस्थायामपि शोभातिशयः ध्वनितः] चिन्तया शकुन्तलागतया यत् जागरणं निद्राराहित्यं, तेन प्रताम्रे आरक्ते नयने यस्य तथाभूतः । क्षीणोऽपि विरहशीर्णोऽपि आत्मनः स्वस्य तेजोगुणैः अनु-भावसम्पद्भिः, अन्यत्र—स्वकान्तिभिः, संस्कारेण शाणप्रदानादिना उल्लिखितः उद्ध-र्षितः, परिष्कृत इति भावः, महामणिरिव न आलक्ष्यते न प्रतीयते, क्षीणत्वेनेति भावः । [महामणिरित्यत्र महापदेन गुणातिशयः महिमातिशयश्च सूचितः ; तथा महामण्युपमानेनास्य क्षीणत्वेऽपि अन्तःसारवत्ता, सर्वदा दृश्यमानत्वेऽपि अविदग्धता च ध्वन्यते । अत्र महामणिरिव इत्युपमा, स्वभावोक्तिः, परिकरश्च । तथाऽत्र श्लोके चिन्ता-पदेन सङ्कल्पः, जागरणपदेन निद्राच्छेदः, क्षीणपदेन तनुता, प्रत्यादिष्टेति पदेन विषयनिवृत्तिश्च इति चतस्रः कामावस्थाः सूचिताः । मतान्तरे,—प्रवासोचिताः कामदशाः, तथा च दर्पणे,—"अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशताऽरुचिः । अधृतिः स्यादनालम्बः तन्मयोन्मादमूर्च्छनाः ॥ मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥" इति । तत्रापि प्रत्यादिष्टेति-पदेन अङ्गेष्वसौष्ठवं, क्षीणः इत्यनेन कृशता, 'रम्यं द्वेष्टि'

मिश्र। [ राजानं विलोक्य। ] ठाणे क्खु पच्चादेसविमाणिदा वि इमस्स किदे सउन्तला किलिस्सदि। (फ) (३४)

राजा। [ ध्यानमन्दं परिक्रम्य। ] (३५)

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम्।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम्! (३६) ॥६॥

मिश्र। णं ईदिसाइं तवस्सिणीए भागधेआइं। (ब) (३७)

(फ) स्थाने खलु प्रत्यादेशविमानिताऽपि अस्य कृते शकुन्तला क्लिश्यति।

(ब) ननु ईदृशानि तपस्विन्या भागधेयानि।

---

इति पूर्वार्द्धेनैव अरुचिः, दाक्षिण्येन इत्यनेन च धृतिः तन्मयस्य सूचिता: इति विभावनीयम् ]। शार्दूलविक्रीडितं वृत्तम् ॥५॥

(३४) प्रत्यादेशविमानिताऽपि—परित्यागेन अवमानिताऽपि, अस्य—राज्ञः, कृते—निमित्तम्, शकुन्तला क्लिश्यति—क्लेशमनुभवति। स्थाने—युक्तम्। [ अव्ययमेतत् ]।

(३५) ध्यानेत्यादि।—ध्यानेन—शकुन्तलागतचिन्तया, मन्दम्—अलसं, शनैरित्यर्थः। [अनेन अनालम्बनताख्या प्रवासोचिता कामदशा सूचिता। तथा चोक्तं दर्पणे,—"अनालम्बनता चापि शून्यता मनसः स्मृता" इति ]।

(३६) शकुन्तलायाः ताहशप्रत्यादेशमनुस्मृत्य सानुशयमाह, प्रथममिति।—सारङ्गाक्ष्या सारङ्गः मृगः, तस्य अक्षिणी इव अक्षिणी यस्याः तया, मृगनयनया, [अनेन तद्दर्शनमात्रेण प्रतिबोधः उचित इति ध्वन्यते ] तत्रापि प्रियया अत्यन्तहृद्यया शकुन्तलया, प्रथमं पूर्वं, प्रतिबोध्यमानमपि स्वतः एव प्रबोधोचिते विविधप्रयत्नेन स्मरणार्थं प्रेर्य्यमाणमपीति सुप्तं निद्रितं, चैतन्यं न प्राप्तमित्यर्थः, अत एव इदं हतहृदयं सम्प्रति अनुशयदुःखाय पश्चात्तापदुःखप्राप्तये इत्यर्थः, विबुद्धं जागरितं, चैतन्यं प्राप्तमित्यर्थः। [ अत्र पूर्वार्द्धे, सुप्तस्य कारणाभावात् कार्य्यस्य उत्पत्तेः, परार्द्धे च कारणाभावात् कार्य्योत्पत्तेः विभावना ; तथा सारङ्गाक्ष्या इत्यत्र उपमा च ]। आर्य्याजातिः ॥६॥

(३७) राजवचनेन तयोः गाढ़प्रणयमनुमाय शकुन्तलायाः भाग्यमेव निन्दन्ती आह, नन्विति।—ईदृशानि—इति राजवचनानुवादः। ननुरवधारणे। तपस्विन्या

विदू। [अपवार्य।] हुं, भूओ वि लङ्घिदो एसो सउन्तला-वादेण, ण आणे कधं चिकिच्छिदव्वो भविस्सदि ! (भ) (३८)

कञ्चु। [उपसृत्य।] जयति जयति देवः। देव ! प्रत्यवेक्षिताः प्रमदवनभूमयः, यथाकाममध्यास्तां विनोदस्थानानि देवः। (३९)

राजा। वेत्रवति ! मद्वचनादमात्यपिशुनं ब्रूहि,—"अद्य चिर-प्रबोधान्न सम्भावितम् अस्माभिर्धर्मासनमध्यासितुं यत्प्रत्यवेक्षितम् आर्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यताम्" इति। (४०)

(भ) हुं, भूयोऽपि लङ्घित एष शकुन्तलावातेन, न जाने कथं चिकित्सितव्यो भविष्यति !

—वराकाः, अनुकम्पार्हाया: इत्यर्थः। भागधेयानि—भाग्यानि ; भाग्येनैव एतत् संवृत्तं, न चात्र राज्ञः दोष इति भावः।

(३८) राज्ञः मुखात् पुनः शकुन्तलाविषयकं वाक्यमाकर्ण्य सवितर्कमाह, हुम् इति।—हुं—वितर्के। शकुन्तलावातेन—शकुन्तलारूपवातरोगेण, लङ्घितः,—अभिभूतः, आक्रान्त इत्यर्थः ; [अत एव रूपकालङ्कारः। यथा हि युवजनसंसर्गविनाश्य-यौवनसङ्कटाख्यरोगेण समाक्रान्तायां मनसा परममभीकायां युवत्यां "भूतादि-प्रवातसंलग्नेयम्" इति कथ्यते, तद्वदत्रापि सोपहासोक्तिरिति। अत्र "शकुन्तला-व्याधिना" इति पाठे,—स एवार्थः मन्तव्यः]। कथं—केन प्रकारेण। चिकित्सितव्यः,—प्रतिविधेयः।

(३९) प्रत्यवेक्षिता—सम्यगवलोकिता ; नृपस्य निःशङ्कगमनार्थं प्रत्यवेक्षणं नीतिशास्त्रानुमोदितमेव, अधुनाऽपि तथा धनिकाद्यागमने दृश्यते। प्रमदवनभूमयः,—विहारोचितस्थानानि इत्यर्थः ; तथा च हलायुधः,—"विज्ञेयं प्रमदवनं नृपस्तु यस्मिन्, शुद्धान्तैः सह रमते पुरोपकण्ठम्" इति। यथाकामं—यथेच्छम्, [अनतिक्रमार्थे अव्ययीभावः] अध्यास्ताम्—अधितिष्ठतु। विनोदस्थानानि—विहारदेशान्, [अत्र "अधिशीङ्स्थासां कर्म्म" (१।४।४६ पा०) इति सूत्रेण अधिकरणस्य कर्म्मसंज्ञा]।

(४०) मद्वचनात्—मम राज्ञः वाक्यात्, राज्ञा इदमुच्यते इत्युक्त्वा इत्यर्थः। अमात्यपिशुनं—पिशुननामधेयं सचिवम् ; चिरप्रबोधात्—विलम्बेन निद्राभङ्गात्,

प्रती। जं देवो आणवेदि। (म)

[इति निष्क्रान्ता]।

राजा। पार्वतायन! त्वमपि स्वनियोगमशून्यं कुरु। (४१)

कञ्चु। यदाज्ञापयति देवः।

[इति निष्क्रान्तः]।

विदू। किदं भअदा णिम्मक्खिअं, सम्पदं सिसिरविच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं विणोदेहि। (य) (४२)

राजा। [निश्वस्य।] वयस्य! यत् उच्यते रन्ध्रोपपातिनः अनर्था इति, तत् अव्यभिचारि। पश्य, (४३)—

(म) यत् देव आज्ञापयति।

(य) कृतं भवता निर्मचिकं, साम्प्रतं शिशिरविच्छेदरमणीयेऽस्मिन् प्रमदवनोद्देशे आत्मानं विनोदय।

अतिजागरणादित्यर्थः। न सम्भावितं—न पारितम्। धर्म्मासनं—विचारासनम्, अध्यासितं—तव उपवेष्टुमित्यर्थः, [अत्रापि "अधिशीङ्स्थासां कर्म" इति अधिकरणस्य कर्म्मता]। प्रत्यवेचितं—पर्य्यालोचितं, पत्रमारोप्य—लिखित्वा इत्यर्थः। प्रस्थाप्यतां—प्रेष्यताम्। [अनेन राज्ञः अन्यानिर्भरत्वकथनात् कर्त्तव्यनिष्ठता धर्म्मप्रवणता च ध्वन्यते]।

(४१) स्वनियोगं—स्वाधिकारम्। अशून्यं कुरु—स्वकार्य्यम् अनुतिष्ठ इत्यर्थः।

(४२) निर्मचिकं—नास्ति मचिकापि यत्र तादृशं, निर्जनमिति भावः, स्थानमिति शेषः। [अत्यन्ताभावार्थे अव्ययीभावः]। शिशिरविच्छेदरमणीये—शिशिरस्य शीतसमयस्य विच्छेदेन व्यपगमेन, वसन्तागमेन इत्यर्थः, रमणीयं तस्मिन्। [अत्र "शिशिरातपच्छेदरमणीये" इति पाठे—नातिशीतोष्णमनोज्ञ इत्यर्थः]। विनोदय—सुखय।

(४३) रन्ध्रोपपातिनः,—रन्ध्रे छिद्रे सति उपपतन्ति आगच्छन्तीति तथोक्ताः। अनर्थाः,—विपदः; इति यदुच्यते इति योजना, पूर्व्वैरिति शेषः।—"छिद्रेष्वनर्था बहुलीभवन्ति" इत्युक्तेरिति भावः। अव्यभिचारि—नियतं सत्यम् इत्यर्थः। तदेव दर्शयति,—पश्येति।

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः ।
मनसिजेन सखे ! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः (४४) ॥७॥

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम् ।
अनुशयादनुरोदिमि चोत्सुकः,
सुरभिमाससुखं समुपैति च (४५) ॥८॥

(४४) मुनीति ।—हे सखे ! मुनिसुतायां शकुन्तलायां ( राज्ञः मुनिसुतात्वेन प्रत्यभिज्ञानात् तथोक्तिः ) प्रणयः प्रेम तस्य स्मृतिं रुणद्धीति तथोक्तेन तमसा च मोहेन च मम इदं मनः मुक्तं त्यक्तं, प्रहरिष्यता मनसिजेन कामेन धनुषि स्वकार्म्मुके चूतशरः आम्रमुकुलरूपः बाणः निवेशितश्च योजितश्च ; मम तद्वियोगो वसन्तकालश्च युगपत् सम्प्रवृत्त इत्यर्थः ; प्रणयस्मरणरूपं रन्ध्रं प्राप्य कामो मां हन्तुं प्रवृत्त इति भावः । [अत्र चकारद्वयं यौगपद्यसूचकं, ततश्च क्रियाद्वयस्य यौगपद्यात् समुच्चयालङ्कारः । तथा च दर्पणम्,—"समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके । खले कपोतिकान्यायात् तत्करः स्यात् परोऽपि चेत् ॥ गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ॥" इति । कण्ठाभरणे भोजराजस्तु—"अत्र मुनिसुताप्रणय-स्मृतिरोधिना तमसा मे मनो वियुक्तम् इति अदृष्टकृतं स्मरणमिदम्" इत्युक्त्वा स्मरणालङ्कारमाह ] । द्रुतविलम्बितं वृत्तं,—"द्रुतविलम्बितमाह नभौ भरौ" इति तल्लक्षणात् ॥७॥

(४५) उपहितेति ।—अङ्गुलिमुद्रया अक्षरयुक्ताङ्गुरीयकचिह्नेन,—("अङ्गुरीयक-मूर्म्मिका । साक्षराङ्गुलिमुद्रा स्याद्" इत्यमरः ) उपहिता जनिता स्मृतिः स्मरणं यस्य तथाभूतः, अत एव उत्सुकः उत्कण्ठितः व्याकुल इत्यर्थः, सन्, अनिमित्तनिराकृताम् अकारणपरित्यक्तां प्रियतमाम् अतिशयेन प्रियां शकुन्तलाम् अनु उद्दिश्येत्यर्थः, अनुशयात् अनुतापात् रोदिमि क्रन्दामि च, सुरभिमाससुखं वसन्तागमजनितः उल्लास इत्यर्थः, समुपैति च समागतश्च ; प्रियाविरहदुःखावकाशमासाद्यैव वसन्तकालः समायात इत्यर्थः । [ अत्रापि क्रियायाः यौगपद्यात् समुच्चयालङ्कारः, काव्यलिङ्गमपि । भोजमते तु—पूर्ववदलङ्कारः इत्यपि बोध्यम्] । द्रुतविलम्बितं वृत्तम् ॥८॥

विदू। भो वअस्स ! चिट्ठ दाव जाव इमिणा दण्डकट्ठेण कन्दप्पबाणं णासेमि । (र) (४६)

[ इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति ] ।

राजा। [ सस्मितम् । ] भवतु दृष्टं ब्रह्मवर्चसं, सखे ! क्व इदानीम् उपविष्टः प्रियायाः किञ्चिदनुकारिणीषु ( ४७ ) लतासु दृष्टिं विनोदयामि ?

विदू। णं भअदा, आसण्णपरिचारिआ लिविअरी मेहाविणी (४८) आदिट्ठा, माहवीलदाहरए इमं वेलं अदिवाहिस्सं ; तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउन्तलाए पड़िकिदिं आणेहि त्ति । (ल)

---

(र) भो वयस्य ! तिष्ठ तावत्, यावदनेन दण्डकाष्ठेन कन्दर्पबाणं नाशयामि ।

(ल) ननु भवता आसन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा, माधवीलतागृहे इमां वेलामतिवाहयिष्यामि, तत्र चित्रफलके मे स्वहस्तलिखितां तत्रभवत्याः शकुन्तलायाः प्रतिकृतिमानयेति ।

(४६) शकुन्तलास्मरणेन राज्ञः अत्यन्तं मनसो व्याकुलतामुपलभ्य हर्षयितुमाह, भो इति ।—अनेन—हस्तस्थितेन, दण्डकाष्ठेन—लगुड़ेन, कन्दर्पबाणं—कामशरं, चूताङ्कुरमित्यर्थः । [ अत्र कन्दर्पव्याधिमिति पाठे,—कन्दर्परूपो व्याधिः यस्मादिति विग्रहे चूताङ्कुररूप एवार्थः कल्प्यते । अस्मिन् पक्षे रूपकालङ्कारः । अनेन च स्वशक्तेः कथनात् व्यवसायनाम विमर्शाङ्गम् ;—"व्यवसायः स्वशक्त्युक्तिः" इति रूपकोक्तेः । अनेन च हास्यरसः व्यज्यते ] ।

(४७) ब्रह्मवर्चसं—ब्रह्मतेजः । [ब्रह्मणः वर्चः इति तत्पुरुषे "ब्रह्महस्तिभ्यां वर्चसः" (५।४।७८ पा०) इति सूत्रेण समासान्तः अच् प्रत्ययः] । किञ्चिदनुकारिणीषु—ईषत्सादृश्यवतीषु ; नास्ति तस्याः सम्यक् सादृश्यं कुत्रापि इत्यभिप्रायः । [ व्यतिरेकालङ्कारः ] ।

(४८) आसन्नपरिचारिका—सन्निहितसेविका । परिचारिकालक्षणमुक्तं मातृगुप्ताचार्य्यैः,—"संवाहने च गन्धे च तथा चैव प्रसाधने । तथाऽऽभरणसंयोगमाल्य-

राजा। ईदृशमेव हृदयाश्वासनं, तत्तदेवादेशय (४९) माधवीलतागृहम्।

विदू। इदो इदो एदु भवं। (व)

[ इत्युभौ परिक्रामतः। मिश्रकेशी अनुगच्छति ]।

विदू। एसो मणिसिलावट्टसणाहो माहवीलदामण्डवो विवित्तदाए उवहाररमणीज्जदाए णिसग्गमारुदेण अ साअदेण विअ पड़िच्छदि (५०) तुमं, ता पविसिअ णिसीददु भवं। (श)

[ उभौ प्रविश्य उपविष्टौ ]।

(व) इत इत एतु भवान्।

(श) एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततया उपहाररमणीयतया निसर्गमारुतेन च स्वागतेनेव प्रतीच्छति त्वां, तत् प्रविश्य निषीदतु भवान्।

संग्रथनेषु च॥ विज्ञेया नामतः सा तु नृपतेः परिचारिका॥" इति। लिपिकरी—चित्रकरी। मेधाविनी—धीमती, अथवा तदाख्या। [स्वहस्तलिखितामित्यनेन कलानैपुण्यमपि राज्ञः सूचितम्]।

(४९) ईदृशमिति।—ईदृशमेव—तस्या आलेख्यमेव, हृदयस्य आश्वासनं शान्त्युपाय इत्यर्थः। आदेशय—दर्शय।

(५०) एषः,—पुरःस्थितः। [अनेन गमनप्रयासोऽपि नास्ति, इति सूच्यते]। मणिशिलेति।—मणिमयप्रस्तरफलकयुक्तः, माधवीलतामण्डपः,—माधवीलतावेष्टितगृहं, कुञ्ज इत्यर्थः। [अनेन छायाबाहुल्यात् सन्तापहारकत्वं ध्वनितम्]। विविक्ततया—विजनतया। उपहारेति।—उपहारेण—पुष्पगुच्छादिसज्जया, रमणीयतया—मनोहरतया। निसर्गमारुतेन—स्वभाववायुना, मन्दपवनेन इत्यर्थः, [अत्र 'निसर्ग' इत्यनेन मान्द्य, लतागृहगतत्वेन शैत्यं, लताकुसुमसंसर्गेण च सौगन्ध्यं वायोः ध्वनितम्]। प्रतीच्छति—परिगृह्णाति, सादरं प्रत्युद्गच्छतीव इत्यर्थः। [अत्र उत्प्रेक्षालङ्कारः; तथा स्वभाववायुना स्वागतेन इति व्यस्ततया तादात्म्यकथनात् तस्य च प्रकृतोपयोगित्वात् परिणामः; इत्यनयोः अङ्गाङ्गित्वम्। अनेन च अवस्थानयोग्यत्वं ध्वन्यते ]।

मिश्र। लदासंस्सिदा पेक्खिस्सं दाव पिअसहीए पड़िकिदिं, तदो से भत्तुणो बहुमदं (५१) अणुराअं णिवेदइस्सं। (ष)

[इति तथा कृत्वा स्थिता]।

राजा। [निश्वस्य]। सखे! सर्वमिदानीं स्मरामि शकुन्तलायाः प्रथमदर्शनवृत्तान्तं, यं कथितवानस्मि भवते। स भवान् प्रत्यादेशसमये मत्समीपगतो नासीत्, किन्तु पूर्वमपि न त्वया कदाचित् सङ्कीर्त्तितं तत्रभवत्या नामादिकं, कच्चिदहमिव विस्मृतवांस्त्वमपि? (५२)

मिश्र। अदो ज्जेव महीवदिहिं क्खणम्मि सहिअआओ सहाआओ ण विरहिदव्वाओ। (स) (५३)

(ष) लतासंश्रिता प्रेक्षिष्ये तावत् प्रियसख्याः प्रतिकृतिं, ततोऽस्या भर्त्तुर्बहुमतमनुरागं निवेदयिष्यामि।

(स) अत एव महीपतिभिः क्षणमपि सहृदयाः सहाया न विरहयितव्याः।

---

(५१) लतासंश्रिता—लताऽधिष्ठिता। प्रतिकृतिं—प्रतिमूर्त्तिं, चित्रस्थितामिति शेषः। बहुमतम्—अत्यादृतम्। [अत्र बहुमुखमिति पाठे,—अनेकप्रकारमित्यर्थः]।

(५२) निश्वस्य—निश्वासत्यागमभिनीय, दीर्घमुष्णञ्च इति शेषः, विरहेण तथा सम्भवात्। यमिति।—यं प्रथमदर्शनवृत्तान्तं कथितवानस्मि भवते, तदानीमिति शेषः। [भवते इत्यत्र क्रियाग्रहणात् चतुर्थी]। प्रत्यादेशसमये—परित्यागसमये। पूर्वमपि—शकुन्तलागमनात् प्रागपि, सङ्कीर्त्तितम्—उल्लेखितं, तत्रभवत्याः,—मान्यायाः, नामादिकम्,—[अत्र आदिपदेन मृगयार्थं तपोवनगमनं यज्ञविघातक-राक्षसावसादनमित्यादिपरिग्रहः]। कच्चित्—किम्?—"कच्चित् कामप्रवेदने" इत्यमरः। चिरपरिचितायाः अपि शकुन्तलाया अनतिचिरविस्मरणरूप स्वदोषपरिहाराय माधव्यस्यापि तादृशदोषप्रकाशनमभिमतमस्येति भावः।

(५३) बहुकार्य्यव्यापृतस्य राज्ञः नियतास्मरणमुत्प्रेक्ष्य आह, अत एवेति।—अत एव—एतस्मात् विस्मरणरूपकारणादेव, महीपतिभिः,—राज्य पालयद्भिरित्यर्थः। क्षणमपि—मुहूर्त्तमपि, सहृदयाः,—सामाजिकाः, सकलविषयतत्त्वज्ञाः इत्यर्थः।

विदू। ण विसुमरामि, किन्तु सव्वं कहिअ अवसाणे उण तुए भणिदं परिहासविअप्पिओ एसो ण भूदत्थो त्ति, मए वि मन्दबुद्धिणा तधा ज्जेव गहिदं, अधवा भविदव्वदा (५४) क्खु एत्थ बलवदी। (ह)

मिश्र। एवस्सेदं। (क) (५५)

राजा। [क्षणं ध्यात्वा।] सखे! परित्रायस्व माम्। (५६)

(ह) न विस्मरामि, किन्तु सर्वं कथयित्वा अवसाने पुनस्त्वया भणितं—"परिहासविजल्पित एष: न भूतार्थ:" इति, मयाऽपि मन्दबुद्धिना तथैव गृहीतम्, अथवा भवितव्यता खलु अत्र बलवती।

(क) एवम् इदम्।

सहाया:,—सखाय:। न विरहयितव्या:,—न त्यक्तव्या:। [रह त्यागे। इति चौरादिकस्य रहधातो: रूपम्]। अयन्तु विदूषक: सहृदय: इति सुष्ठु सूचितम्।

(५४) परिहासविजल्पित:,—परिहासेन कथित:।—"परिहासविजल्पितं सखे!" इति पूर्वमुक्तत्वात्। भूतार्थ:,—यथार्थ:। "युक्ते क्ष्मादावृते भूतम्" इत्यमर:। मन्दबुद्धिना—मूर्खेण, [अत्र मृत्पिण्डबुद्धिना इति पाठे—मृत्पिण्डवत् बुद्धि: यस्य, तेन, निर्बोधेन इत्यर्थ:। अत एव उपमाऽलङ्कार:]। तथैव—इत्थेव, (उपहासवाक्यमेतत्) गृहीतं—बुद्धम्, अवधारितमित्यर्थ:। ननु 'उपहासवाक्यस्यापि कदाचित् कथनसम्भवात् तदपि स्निग्धे मयि कथं नोक्तम्?' इति पूर्वोक्तमाचिप्याह, अथवेति।—भवितव्यता—अवश्यम्भाविनी दैवगतिरित्यर्थ:। 'न कोऽपि पाकाभिमुखस्य जन्तो: द्वाराणि सम्यक् पिधातुमीष्टे' इति भाव:। [भविष्यतीति भवितव्यं, कर्त्तरि तव्य:, तस्य भाव: भवितव्यता]।

(५५) दृढ़प्रणयस्य सहसा एतादृशविपर्य्ययासम्भवमुत्प्रेक्ष्य दैवपक्षमेव अभ्युपगम्याह, एवमिति।—इदं—प्रत्याख्यानादिरूपम्, एवम्—दृढ़ं, दैवकृतमेव इत्यर्थ:; नाव पुरुषदोषसम्भव इति भाव:।

(५६) क्षणं ध्यात्वा—शकुन्तलाया: प्रत्याख्यानात् परं तस्या: शोचनीयामवस्थां मुहूर्त्तं विचिन्त्य इत्यर्थ:। 'सखे!' इति स्वाभिप्रायसम्बोधनम्; रक्षणे तस्यैव उपयोगित्वात्। परित्रायस्व—रक्ष, मषा तत्परित्यागजनितपापादित्यर्थ:।

विदू। भो वअस्स ! किं एदं तुह उववसं? ण कदावि सप्पुरिसा सोअचित्ता होन्ति, णं पवादेवि णिक्कम्पा ज्जेव गिरिओ। (ख) (५७)

राजा। वयस्य ! निराकरणविक्लवायाः ते सख्यास्तामवस्थामनुस्मृत्य बलवदशरणः (५८) अस्मि । सा हि,—

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।

---

(ख) भो वयस्य ! किम् एतत् तव उपपन्नं ? न कदापि सत्पुरुषाः शोकचित्ता भवन्ति, ननु प्रवातेऽपि निष्कम्पा एव गिरयः ।

(५७) अत्यन्तशोकमग्नं राजानमवलोक्य प्रबोधयितुमाह, भोः इति ।—एतत्—शोककातरत्वं, किं तव—सर्वदा धीरस्य राज्ञः स्वयं दुष्मन्तस्य इत्यर्थः । उपपन्नं—युक्तम् ? तत्र अप्रस्तुतेन प्रशंसन्नाह, नेति ।—सत्पुरुषाः,—सज्जनाः, कदापि—जात्वपि, शोकचित्ताः,—शोकाकुलमनसः इत्यर्थः । [अत्र 'शोकवक्तव्या' इति पाठे,—शोके सञ्जाते अन्येन वक्तव्या इत्यर्थः ; अत एव अप्रस्तुतप्रशंसाऽलङ्कारः] । तत्र दृष्टान्तमाह, प्रवाते इति ।—प्रवातेऽपि—प्रकृष्टे बलवतीत्यर्थः, वाते वायौ अपि, वहत्यपि इत्यर्थः । निष्कम्पाः,—निश्चलाः, गिरयः तिष्ठन्तीति शेषः । [ दृष्टान्तालङ्कारः । अनेन खलु राज्ञः गिरिवत् सहजगाम्भीर्य्यं परैरनतिक्रमणीयत्वं मानौन्नत्यञ्च ध्वन्यते ] ।

(५८) निराकरणविक्लवायाः,—परित्यागकातरायाः । ताम्—पूर्वानुभूताम्, अवस्थां—दुर्द्दशाम्, अनुस्मृत्य—चिन्तयित्वा । बलवत्—अत्यर्थम् । अशरणः,—अनाश्रयः, अतिकातरः इत्यर्थः ।

(५९) तामेव अवस्थां वर्णयति, इत इति ।—इतः अस्मात् स्थानात् मत्तो वा प्रत्यादिष्टा निराकृता सती स्वजनं गौतम्यादिम् अनुगन्तुम् व्यवसिता उद्युक्ता प्रयत्नं कुर्वाणा, ततः गुरुसमे गुरुतुल्ये कण्वतुल्ये इत्यर्थः, गुरुशिष्ये पितुरन्तेवासिनि शार्ङ्गरवे ( नात्र गुरुपदे 'कथितपदतादोषः' शङ्कनीयः, तात्पर्य्यभेदेन लाटानुप्रासस्य विषयत्वात् ; तात्पर्य्यञ्चात्र प्रथमपदे प्रतिबिम्बत्वेन शासनार्हत्वम्, उत्तरत्र च वचनाकारित्वे भयकारणत्वमिति ।) 'तिष्ठ' इति उच्चैर्वदति सति स्थिता निवृत्तगतिः, दण्डायमाना इत्यर्थः, सती क्रूरे निष्ठुरे मयि (तादृशाकारणवधके निर्दये अकृतज्ञे च

पुनर्दृष्टिं वाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम् (५८)॥९॥

मिश्र। अम्महे! ईदिसी परवसदा इमस्स मम्पि (६०) सन्दावेदि। (ग)

विदू। भो! अत्थि मे तक्को (६१) केण उण तत्थभोदी आआससञ्चारिणा णीदेत्ति? (घ)

राजा। वयस्य! कः पतिव्रतां तामन्यः परामर्ष्टुमुत्सहते?

(ग) अहो! ईदृशी परवशता अस्य मामपि सन्तापयति।

(घ) भो! अस्ति मे तर्कः, केन पुनस्तत्रभवती आकाशसञ्चारिणा नीतेति।

इत्याद्यर्थान्तर-सङ्क्रमितम्) पुनः यत् वाष्पप्रकरेण अश्रुभरेण कलुषाम् आविलां दृष्टिम् अर्पितवती दत्तवती, तत् दृष्ट्यर्पणं सविषं विषदिग्धं शल्यमिव अस्त्रविशेष इव,—("शल्यं शङ्कौ शरे वंशकम्बिकायाञ्च तोमरे" इति विश्वः) मां दहति भृशमन्तस्तापयति इत्यर्थः। [अत्र दृष्टेः दाहकत्वासम्भवात् मुख्यार्थवाधात् जन्य-जनकभावसम्बन्धेन सन्तापं लक्षयन् तदतिशयं प्रयोजनभूतं व्यञ्जयति। लक्षणा चात्र अत्यन्ततिरस्कृतवाच्या। अत्र च 'गुरुसमे' 'शल्यमिव' इति च पदद्वये उपमालङ्कृतिः परस्परनिरपेक्षत्वेन स्थितत्वात् संसृष्टा]। शिखरिणीवृत्तम्॥९॥

(६०) परवशता—अधीरता, व्याकुलता इत्यर्थः, [अत्र "स्वकार्य्यपरता! अस्य सन्तापेन अहं रमे" इति पाठान्तरे,—स्वकार्य्यपरता आत्मकार्य्यतत्परता, ईदृशी एतादृश्येव। अत्र अर्थान्तरन्यासः। अस्य सन्तापेन—मनस्तापेन, रमे—मम सन्तोष इत्यर्थः; मम प्रियसखीं शकुन्तलामुद्दिश्य तथा प्रवृत्तिरिति भावः। पक्षे चात्र सन्तापे सम्भवति सन्तोष इति विषमालङ्कारभेदः; यथाऽस्य सन्तापो दृश्यते तथा मन्ये शकुन्तलाऽऽनयनं प्रति यत्नवान् भविष्यतीत्यभिप्रायः]। मामपि—उदासीनामिति भावः।

(६१) स्त्रीसंस्थानमित्यादि सोमरातवाक्यमनुसृत्य शकुन्तलायाः पुरुषान्तरनयनं सम्भाव्य पृच्छति, भो इति।—तर्कः,—प्रश्नकुतूहलम्। आकाश-सञ्चारिणा—आकाशगामिना केन पुनः पुरुषेण इत्यर्थः। नीता—अपहृता। तदुच्यतामिति प्रश्नः।

मेनका किल सख्यास्ते जन्मप्रतिष्ठेति तत्सखीजनादस्मि श्रुतवान्, तत्सहचरीभिस्तया वा नीतेति हृदयम् आशङ्कते। (६२)

मिश्र। सम्मोहे वि विम्हअणीओ क्खु इमस्स पड़िबोधो? (ङ) (६३)

विदू। भो! जइ एव्वं, ता समस्ससदु भवं, अत्थि क्खु समागमो कालेण तत्थभोदीए। (च) (६४)

राजा। कथमिव?

विदू। ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति। (छ) (६५)

(ङ) सम्मोहेऽपि विस्मयनीयः, खलु अस्य प्रतिबोधः।

(च) भो! यद्येवं तत् समाश्वसितु भवान्, अस्ति खलु समागमः कालेन तत्रभवत्याः।

(छ) न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः।

(६२) तदाशङ्कावारकमुत्तरयति, वयस्येति।—पतिव्रता—साध्वी, तां—शकुन्तलां, कोऽन्य—उदासीनपुरुष इत्यर्थः। परामष्टुम्—स्प्रष्टुम्। उत्सहते—प्रभवति? 'तदा केन नीता?' इत्यत्र सयुक्तिकमाह, मेनकेति।—किल इति—निश्चये। जन्मप्रतिष्ठा—उत्पत्तिस्थानं, जननीत्यर्थः।—"प्रतिष्ठा स्थानमात्रके" इति विश्वः। तत्सखीजनात्—शकुन्तलासखीजनात्, अनसूयातः इत्यर्थः; 'श्रुतवान् अस्मि' इति योजना। तेन किम् इत्याह, तदिति।—तत्सहचरीभिः,—मेनकाप्रयुक्तसहचारिणीभिः, तया—मेनकया वा। [पुस्तकान्तरे तु 'तया वा' इति पाठो न दृश्यते]। आशङ्कते—मन्यते।

(६३) सम्मोहे—सम्यक् मुग्धदशायाम् अपि। विस्मयनीयः,—चमत्कारणीयः। प्रतिबोधः—ज्ञानम्, अनुभव इत्यर्थः। [अत्र "सम्मोहः खलु विस्मयनीय न प्रतिबोधः" इति पाठे,—सम्मोहः,—ईदृशमुग्धावस्था, विस्मयनीयः खलु तस्यास्वाभाविकत्वादिति भावः; न प्रतिबोधः विस्मयनीयः इति सम्बन्धः; तस्य स्वाभाविकत्वादिति भावः]।

(६४) शकुन्तलां स्वजनेन नीतामाकर्ण्याह, भो इति।—यदि एवम्—ईदृशं सङ्घटितमिति शेषः। कालेन—कदापि, समागमः,—मेलनम्, अस्ति—भविष्यतीत्यर्थः।

(६५) मातापितराविति।—माता च पिता च इत्यर्थः [माता च पिता च इति

राजा। वयस्य!—

स्वप्नो नु माया नु मतिभ्रमो नु
क्लृप्तं नु तावत् फलमेव पुण्यैः।
असन्निवृत्त्यै तदतीतमेव
मनोरथानामतटप्रपातः (६६) ॥१०॥

द्वन्द्वे "पिता मात्रा" (१।२।७० पा०) इति सूत्रेण वैकल्पिकत्वेन एकशेषाभावात् मातुरभ्यर्हितत्वाच्च मातृशब्दस्य पूर्वनिपाते "आनङ् ऋतो द्वन्द्वे" (६।३।२५ पा०) इति सूत्रेण पितृशब्दे परपदे मातुरानङ्। विकल्पपक्षे तु—'पितरौ' तत्रैकशेषात्; मातरपितरौ च "मातरपितरावुदीचाम्" (६।३।३२ पा०) इति सूत्रेण भवितव्यमिति दिक्]। चिरं—दीर्घकालं, पारयतः,—शक्नुतः।

(६६) 'अवश्यमेव समागमो भविष्यति, किमिदानीमनुतापेन?' इति विदूषकेण अभिहितः राजा आह, स्वप्न इति।—नुशब्दः सर्वत्र वितर्कव्यञ्जकः। तत् शकुन्तलासमागमनरूपं वस्त्वित्यर्थः, स्वप्नः निद्रावस्थायां विषयानुभवः नु?—("स्वप्नो निद्राम् उपेतस्य विषयानुभवस्तु यः" इति साहित्यदर्पणम्)। "अदृष्टमप्यर्थमदृष्टवैभवात् करोति सुप्तिः जनदर्शनातिथिम्" इत्युक्तेः अदृष्टस्यापि निद्राऽवस्थायां कादाचित्कदर्शनसम्भवात् इति भावः। ननु 'यदि स्वप्नोऽयं स्यात् तर्हि जाग्रदवस्थायां नानुभूयेत' इति वितर्कान्तरमाह, मायेति।—माया नु?—ऐन्द्रजालिकव्यापारादिना असतः प्रकटनं किम्? तस्या कपटकृतत्वात् विषयसत्त्वाभावः इति भावः। ननु 'मायैषा सम्भाव्येत यदि अधिष्ठानं न प्रतीयेत' इत्यत आह—मतिभ्रमः नु?—बुद्धेर्भ्रमविलासः किम्? तेन अन्याधिष्ठानेऽपि शकुन्तलाभ्रमसम्भवादिति भावः। ननु 'भ्रमकल्पितस्य व्यवहारयोग्यता न दृश्यते तत्कथमिदमुपपन्नम्?' इत्याह, क्लृप्तमिति।—पुण्यैः मदीयशुभादृष्टैः तावत् तत्परिमितमेव तत्परिमितकालभोग्यमेव इत्यर्थः, (न तु ततोऽधिककालभोग्यमिति भावः) फलं क्लृप्तं नु?—जनितं किम्? तस्मात् कारणात् तत् असन्निवृत्त्यै अपुनरावृत्तये अतीतमेव गतमेव, न पुनः कथमपि लभ्यते इति भावः। [पूर्वोक्तवाक्यत्रयेण अत्यन्तासम्भाव्यत्वं व्यज्यते। वाक्यत्रयञ्च असन्निवृत्त्यै इत्यादिवाक्यार्थे हेतुः, अत एव काव्यलिङ्गम्]। मनोरथानां तद्गताभिलाषाणाम् अतटात् भृगोः ("प्रपातस्त्वतटो भृगुः" इत्यमरः) पर्वतीयोच्चस्थानादित्यर्थः, प्रपातः प्रकर्षेण अधःपतनम्; यथा पर्वतोच्चदेशात् पतिता एव म्रियन्ते, तथा शकुन्तलाविषया मम मनोरथाः विनष्टा इति भावः। ["असन्निवृत्तौ तदतीव मन्ये मनोरथानाम् अतट-

विदू। भो ! मा एव्वं, णं अङ्गुलीअअं ज्जेव एत्थ णिदंसणं। अवस्सभाविणो अचिन्तणीअसमागमा होन्ति। (ज) (६७)

उभौ। [अङ्गुरीयकं विलोक्य।] अये ! इदं तदसुलभस्थानभ्रंशि शोचनीयम्। (६८)—

(ज) भो ! मैवं, ननु अङ्गुरीयकमेव अत्र निदर्शनम्। अवश्यम्भाविनोऽचिन्त-नीयसमागमा भवन्ति।

---

प्रपातम्" इति पाठे—असन्निहत्तौ तस्याम् अपुनराहत्तौ मृतायां, मनोरथानाम् तद्विषयकाभिलाषाणाम् अतीव अत्यन्तम् अतटप्रपातं पर्वतोच्चदेशात् पतनं, विनष्ट-मिति यावत, मन्ये सम्भावयामि इत्यर्थः। उत्प्रेक्षाऽलङ्कारः]। 'एव' इत्यत्र 'एते' तथा "मनोरथानामतटप्रपातः" इत्यत्र च "मनोरथा नाम तटप्रपाताः" इत्यपि पाठान्तरं वर्त्तते; तत्र, एते त्वया कथ्यमानाः मया वा आशास्यमानाः मनोरथाः शकुन्तलासमागमगर्भा इत्यर्थः। नाम इति भिन्नं पदम् अलीकार्थकम्। तटप्रपाताः गङ्गादेः तटपतनतुल्याः;—यथा गङ्गादेः तटाः स्रोतसा पीड्यमाना अहमहमिकया एकोपरि अन्यः, अन्योपरि अपरः, इत्थं निपतन्ति, तद्वत् मम मनोरथा अपि एके उत्पद्यन्ते, अपरे विलीयन्ते, अपरे च उत्पद्यन्ते इति भावः। अत्र 'मनोरथाः तट-प्रपाताः' इति रूपकालङ्कारः। श्लोके चात्र पूर्वोक्ते सन्देहालङ्कारः; अतटप्रपातम् इत्यंशे अतट-प्रपातयोरेकपर्य्यायत्वात् पुनरुक्तवदाभासश्च]। इन्द्रवज्रोपेन्द्रवज्रयोरुप-जातिः वृत्तम् ॥१०॥

(६७) "असन्निहत्थे तदतीतमेव" इत्युक्त्या राज्ञः औदासीन्यमनुभूय तद्वारयितुमाह, भो इति।—मा एवं—इत्थम् अपुनरावृत्तिरूपं न मन्यतामित्यर्थः। तत्र कारणमाह,—अङ्गुरीयकमिति।—निदर्शनम्—उदाहरणम्; तदपि समर्थयते, अवश्यम्भाविन इति।—अवश्यम्भाविनः—अवश्यमुपेयाः इत्यर्थः। अचिन्तनीयेति।—अचिन्तनीयः अवितर्कणीयः, आकस्मिक इत्यर्थः, समागमो येषां तथाभूताः; दैवमेव युवयोः समागमसम्पादकमिति भावः। [अर्थान्तरन्यासालङ्कारः। अनेन च प्ररोचना नाम विमर्षाङ्गं प्रदर्शितम्; यदाह दर्पणे,—"प्ररोचना तु विज्ञेया संहारार्थ-प्रदर्शिनी" इति।

(६८) विदूषकवाक्येण श्रुत्वा, तदङ्गुरीयके कृतदृष्टिनिक्षेपः तदेव उपालभते, अये ! इति।—इदं—पुरोवर्त्ति, अङ्गुरीयकमिति शेषः। तदसुलभस्थानभ्रंशि—तदेव

तव सुचरितमङ्गुरीय ! नूनं
प्रतनु ममेव विभाव्यते फलेन।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु (६८) ॥११॥

मिश्र। जइ अस्सहत्थगदं भवे तदो सच्चं सोअणीअं भवे।

असुलभं दुर्लभं स्थानं, शकुन्तलाया अङ्गुलिरित्यर्थः, तस्मात् भ्रश्यतीति तथोक्तम्, अत एव शोचनीयं—शोकविषयः।

(६८) तवेति।—हे अङ्गुरीय! तव सुचरितं पुण्यं ममेव अल्पेन फलेन नूनं निश्चितं प्रतनु अत्यल्पं विभाव्यते अनुमीयते; [‘ममेव’ इत्यत्र ‘मर्मव’ इति पाठे,—मत्सदृशमित्यर्थः; अत एव उपमाऽलङ्कारः। ममापि यथा क्षीणं पुण्यं तथा तवापि इत्यर्थः]। सुचरितस्य प्रतनुत्वे हेतुमाह, अरुणेति।—यत् यस्मात् अरुणैः नखैः मनोहरासु; अथवा—अरुणाः लोहितवर्णाः नखाः यासु, [नखपदमत्र तत्तलक्षणाप्युपलक्षकम्, ताश्च मनोहराश्च तासु; मनोहरत्वञ्चात्र अनतिकृशस्थूलत्वेन अनतिदीर्घह्रस्वत्वेन अनतिवक्रसरलत्वेन च बोध्यम्। तेन सर्वोत्कृष्टत्वं व्यज्यते। तथा च सामुद्रे स्त्रीलक्षणे,—“नातिह्रस्वा नातिदीर्घा न स्थूला न कृशा अपि। अवक्राः सरला रक्तनखा रक्ततला अपि॥ कोमलाः स्निग्धबन्धाढ्या भङ्गुरा दीप्तिमन्नखाः। तादृगङ्गुलयो यस्याः सा भवेत् राजवल्लभा॥” इति।] तस्याः त्रिभुवनललामभूतायाः मम हृदयसर्वस्वभूतायाः इत्यर्थान्तरसङ्क्रमितम्। शकुन्तलायाः अङ्गुलीषु [स्त्रियाः अङ्गुलीनां सहजतः कृशत्वात् सर्वाङ्गुलीषु विन्याससम्भवात् बहुवचनम्; अथवा—विरहकृशत्वात् मुकुलीकृतासु पञ्चाङ्गुलीषु सन्निवेशनात् तथोपादानम्। यद्वा—प्रेमातिशयेन शकुन्तलायाः सर्वाङ्गस्पर्शाभिप्रायेण बहुवचनमिति विभावनीयम्।] लब्धपदं प्राप्तावकाशं सत् च्युतमसि भ्रष्टमसि। [अत्र पूर्वार्द्धे अनुमानम्। तथा पूर्वार्द्धवाक्यं प्रति पराद्धवाक्यार्थस्य हेतुत्वात् काव्यलिङ्गम्। समुदाये च,—यथा कश्चित् पुरुषः कृतकिञ्चित्पुण्यकर्मानुष्ठानः लब्ध्वा च स्वाराज्यमथ पुण्यापचयात्, “क्षीणे पुण्ये मर्त्यलोकं विशन्ति” इति श्रुतेः पुनः मर्त्यगामी भवति तद्वत् व्यवहारसमारोपात् समासोक्तिरपि]। पुष्पिताग्रा वृत्तम्,—“अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा” इति तल्लक्षणात् ॥११॥

सहि! दूरे वट्टसि, एआइणो ज्जेव कण्णसुहाइं अणु-भवेमि। (झ) (७०)

विदू। भो! इमं णाममुद्दा केण उद्देसेण भअदा तत्त-भोदीए हत्थसंसग्गं पाविदा? (ञ) (७१)

मिश्र। मम वि कोदूहलेण वावारिदो एसो। (ट) (७२)

राजा। वयस्य! श्रूयताम्।—यदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सवाष्पमाह स्म—"कियच्चिरेणार्य्यपुत्रः पुनरस्माकं स्मरिष्यति?" इति—"। (७३)

(झ) यदि अन्यहस्तगतं भवेत् तदा सत्यं शोचनीयं भवेत्। सखि दूरे वर्त्तसे, एकाकिन्येव कर्णसुखानि अनुभवामि।

(ञ) भो! इयं नाममुद्रा केनोद्देशेन भवता तत्रभवत्या हस्तसंसर्गं प्रापिता?

(ट) ममापि कौतूहलेन व्यापारित एषः।

---

(७०) अन्यहस्तगतं—राजेतर-करस्थितं, शोचनीयं—शोकार्हम्; तदानीं शकुन्तलाभरणाभावादिति भावः। शकुन्तलामुद्दिश्याह,—सखीति।—कर्णसुखानि—श्रुतिमधुराणि, वचनानीति शेषः; 'त्वया न श्रोतव्यं श्रुतम्' इत्यभिप्रायः।

(७१) नाममुद्रा—नामाङ्कितम् अङ्गुरीयकम् इत्यर्थः। उद्देशेन—प्रसङ्गेन। [अत्र उद्घातेन इति पाठे,—उपक्रमेण इत्यर्थः]। हस्तसंसर्गं—करसम्बन्धम्। [अत्र हस्ताभ्यासम् इति पाठे,—करान्तिकमित्यर्थः]। प्रापिता—लम्भिता; 'त्वया तस्यै किमर्थं दत्ता' इति राजानं प्रति विदूषकवचने अनौचित्यप्रसङ्गात् एतादृगुक्तिः।

(७२) ममापि—अपरिज्ञाततत्कथाया: अपि, कौतूहलेन—कुतुकेन, श्रवणेच्छया इत्यर्थः, व्यापारितः,—वचनव्यापारवान् कृतः, नियोजितः इत्यर्थः; ममापि एतच्छ्रवणे पूर्वं कौतूहलमासीत्, यदनेन जिज्ञासितमिति तात्पर्य्यम्। [आत्मनश्चेच्छायाः मानव-व्यापाररूपायाश्च कृतेः सामानाधिकरण्येन कार्य्यकारणभावनियमात् तद्व्यपरीत्येनात प्रतिपादनात् असङ्गतिरलङ्कारः। तथा च दर्पणे,—"कार्य्यकारणयोर्भिन्नदेश-तायामसङ्गतिः" इति। अत्र आकारित इति पाठे—आहूत इव, इति मत्यो-त्प्रेक्षाऽलङ्कारः; मम यच्छ्रवणे कौतूहलमासीत्, तदेवानेन पृष्टमिति भावः।

(७३) उत्तरयति, वयस्येति।—श्रूयतामित्यस्य इत्यन्तं कर्म्म। स्वनगराय—हस्तिनापुराय ["गत्यर्थकर्म्मणि—" (२।३।१२ पा०) इत्यादिना चतुर्थी] सवाष्पं—



"एकैकमत्र दिवसे दिवसे मदीयं",—( ३१३ पृष्ठे )

Engraved and Printed by the Mohila Press, Cal.

विदू। तदो तदो ? (ठ)

राजा। "—तदा एनां मुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता—"। (७४)

विदू। किं त्ति ? (ड)

राजा। "—एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम्।
तावत् प्रिये! मदवरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति (७५) ॥१२॥

तच्च दारुणात्मना मया मोहात् (७६) न अनुष्ठितम्।

(ठ) ततस्ततः ?

(ड) किमिति ?

साश्रु, तदानीं विच्छेदोद्गमेन बाष्पोदयादिति भावः। कियच्चिरेण—कियता विलम्बेन, अस्माकं स्मरिष्यति—[ "अधीगर्थदयेशां कर्म्मणि" ( २।३।५२ पा० ) इति षष्ठी। अत्र 'प्रतिपत्तिम्' इति पाठे—वार्त्तामित्यर्थः।—"प्रतिपत्तिः प्रवृत्तौ स्यात्" इति धरणिः ]।

(७४) प्रत्यभिहिता—प्रत्युक्ता।

(७५) एकैकमिति।—अत्र तपोवने स्थितेति शेषः; अथवा—अत्र एतस्यां मुद्रायां, दिवसे दिवसे प्रतिदिनम्, एकैकं मदीयं नामाक्षरं "दुष्मन्त" इति यथाश्रुतवर्णं गणय; यावत् अन्तं समाप्तिं गणनस्येति शेषः, गच्छसि प्राप्नोषि, तावत् तस्मिन् दिने, त्रिचतुर्दिनमध्ये अथवा पञ्चषदिनाभ्यन्तरे इति भावः, मम अवरोधस्य अन्तःपुरस्य निदेशे आज्ञायां वर्त्तते यः सः आज्ञाकरः अन्तःपुरभृत्य इत्यर्थः, जनः तव नेता नेष्यन् [ भविष्यदर्थे तृन्प्रत्ययः ] नयनार्थमिति भावः, समीपम् उपैष्यति आगमिष्यति, इति "प्रत्यभिहिता" इत्यनेन सम्बन्धः। [ अत्र 'मदवरोधगृहप्रवेशम्' इति पाठे—मदवरोधगृहं ममान्तःपुरं तव प्रवेशः तं, नेता प्रापयिता। तृन्नन्तत्वात् कर्म्मणि षष्ठीनिषेधः। काव्यलिङ्गमलङ्कारः ]। वसन्ततिलकं वृत्तम् ॥१२॥

(७६) मया—( विस्मृतताद्दशवृत्तान्तेन अतिदुर्जनेन इत्याद्यर्थान्तरसंक्रमितम्; अत एव दारुणात्मना इत्युक्तम्; ) निर्दयहृदयेन इत्यर्थः। मोहात्—अस्मरणादित्यर्थः।

मिश्र। रमणीओ क्खु अवही विहिणा विसंवादिदो। (ढ) (७७)

विदू। भो! कधं लोहिदमच्छस्स बड़िसं विअ मुहप्पविट्टं एदं आसी? (ण)

राजा। शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद् गङ्गास्रोतसि परिभ्रष्टम्। (७८)

विदू। जुज्जदि। (त)

मिश्र। अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो इमस्स राएसिणो परिणए सन्देहो जादो; अथवा ण ईदिसो अणुराओ अहिण्णाणं अवेक्खदि, ता कधं विअ एदं? (थ) (७९)

(ढ) रमणीयः खलु अवधिर्विधिना विसंवादितः।

(ण) भोः! कथं रोहितमत्स्यस्य वड़िशमिव मुखप्रविष्टमेतदासीत्?

(त) युज्यते।

(थ) अतः खलु तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सन्देहो जातः; अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते, तत् कथमिवैतत्?

(७७) रमणीयः,—शोभनः, अवधिः,—अन्तःपुरानयनसमयसीमा, विधिना—दैवेन शापेन च। विसंवादितः,—प्रतारितः, विपर्य्यासितः इत्यर्थः।

(७८) शचीतीर्थे—शक्रावतारापरपर्य्याये गङ्गायाः घट्टे, वन्दमानायाः,—प्रणमन्त्याः, परिभ्रष्टं—निपतितम्।

(७९) अतः खलु—अभिज्ञानभूतस्य अङ्गुरीयकस्य गङ्गाऽम्भसि पतनादेव, अधर्मभीरोः,—पापात् भयशीलस्य, राजर्षेः,—ऋषितुल्यस्य राज्ञः दुष्मन्तस्य, परिणये सन्देहः,—"इयं मया परिणीता न वा?" इति संशयः जातः। पूर्वोक्तनृपवाक्येण प्रणयस्य दार्ढ्यमाकलय्य प्रागुक्तमाक्षिप्याह, अथवेति।—ईदृशः,—अनन्यसाधारण इत्यर्थः। अनुरागः,—प्रणयः, अभिज्ञानं—स्मरणकारणचिह्नम्, न अपेक्षते—(स्मरणार्थमिति शेषः)। तदेतत् विस्मरणं कथमिव?—न कथमपि सम्भाव्यते इत्यर्थः। शापाज्ञानात् ईदृशी आशङ्का अस्या इति विभावनीयम्।

राजा । उपालप्स्ये (८०) तावदिदमङ्गुरीयकम् ।

विदू । [ सस्मितम् । ] भो ! अहम्पि दाव एदं दण्डकट्ठं उवालहिस्सं, कधं उज्जुअस्स मे कुड़िलं तुमं सि त्ति । (द) (८१)

राजा । [ तत् अनादृत्यैव । ]

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि ? ।

अथवा—

अचेतनं नाम गुणं न वीक्षते,
मयैव कस्मादवधीरिता प्रिया ? (८२) ॥१३॥

(द) भो ! अहमपि तावदेतत् दण्डकाष्ठमुपालप्स्ये, कथमृजुकस्य मे कुटिलं त्वमसीति ।

---

(८०) उपालप्स्ये—तिरस्करिष्यामि । [ अनेन राज्ञः उन्माददशा सूचिता ] ।

(८१) चेतनाचेतनप्रतिपत्तिरहितस्य विरहसन्तापमग्नस्य राज्ञः अङ्गुरीयोपालम्भमाकर्ण्य सान्तर्हासमाह, भो इति ।—ऋजुकस्य—सरलप्रकृतेः, कुटिलं—वक्रं, 'त्वं कथमसि ?' इति योजना । [ सोल्लुण्ठनोक्तिरियम् । अत्र "गृहीतोऽनेन पन्थाः उन्मत्तानाम्" इति पाठान्तरं ;—तत्र 'अयं चिप्तो जातः' इति निष्कृष्टार्थः ] ।

(८२) 'उपालप्स्ये' इति यदुक्तं तदेवाचरति, कथमिति ।—नु इति प्रश्ने, हे अङ्गुरीय ! तं,—यं मया वारंवारं स्वहृदयमानीय अनुभूतं तादृशमित्यर्थः, कोमलाः मृदुलाः बन्धुरा उन्नतानताः सुन्दरा वा ("बन्धुरं सुन्दरे रम्ये" इति विश्वः ) अङ्गुलयो यत्र तथोक्तं, [ विशेषणद्वयेन तत्र नितराम् अवस्थानयोग्यत्वं ध्वन्यते ] करं हस्तं विहाय त्यक्त्वा कथम् अम्भसि सलिले निमग्नं पतितम् असि ? (अलङ्कारस्य दृश्यत्वमेव प्रयोजनं, तत्तु करस्थं चेत् सुतरां भवितुमर्हति ; किञ्च यदिह 'तादृशः अनिन्द्यसुन्दरः करः परिहृतः अम्भसि मग्नेन' तथा 'लोकलोचनादृश्यत्वम् अपि समुपागतं' तदतीव अन्याय्यमाचरितं त्वया इति उपालम्भद्वयं कथंशब्देन सूच्यते ] । 'अचेतनस्य हिताहितविवेकशून्यत्वात् तत्तु सम्भवत्येव' इति स्वोक्तमाक्षिपन्नाह, अथवेति ।—अचेतनं चैतन्यरहितं वस्तु, गुणं न वीक्षते न पश्यति, नाम इति प्रसिद्धौ, अचेतनस्य गुणागुणदर्शनसामर्थ्यं न विद्यते इति प्रसिद्धमेव इति भावः, मया एव चेतनेन अपीति भावः, कस्मात् अकारणं न केवलं स्त्रीमात्रं, अपि तु मम हृदय-

मिश्र। सअं ज्जेव पडिवसो जं अह्मि वत्तुकामा । (ध)(८३)

विदू। भो ! सव्वधा अहं बुभुक्खाए मारिदव्वो । (न)

राजा। [ अनादृत्य । ] प्रिये ! अकारणपरित्यागादनुशयदग्ध-हृदयस्तावदनुकम्प्यताम् अयं जनः पुनर्दर्शनेन । (८४)

चेटी। [ चित्रफलकहस्ता प्रविश्य (८५) । ] भट्टा ! इअं चित्तगदा भट्टिणी । (प) (८६)

[ इति चित्रफलकं दर्शयति ] ।

(ध) स्वयमेव प्रतिपन्नो यदस्मि वक्तुकामा ।

(न) भोः ! सर्वथाऽहं बुभुक्षया मारयितव्यः ।

(प) भर्त्तः ! इयं चित्रगता भट्टिनी ।

सर्वस्वभूता प्रिया शकुन्तला अवधीरिता तिरस्कृता ? न तु परित्यक्ता ; परित्यक्तायाः पुनरुपादाने महापुरुषस्यानौचित्यप्रसङ्गात् । [ अत्र चेतनगतपतनाचेतनगत-पतनयोः भिन्नयोरप्यभेदेनाध्यवसायादतिशयोक्तिः, तथा च लोकव्यवहारप्रतीतेः समासोक्तिश्च ; तथा तृतीये पादे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ; तुरीये तु तिरस्कारस्य कारणाभावेऽपि तदुक्तेः विभावना च अलङ्कारः ; इत्येषां साङ्कर्य्यम् ] । वंशस्थविलं वृत्तम् ॥१३॥

(८३) यदस्मि वक्तुकामा—विवक्षुरस्मि, "अचेतनस्य गुणादर्शित्वरूपं" तत् स्वयमेव—राजा इत्यर्थः, प्रतिपन्नः,—ज्ञातवान्, ज्ञात्वा उक्तवानित्यर्थः ; अथवा—"जम्" इति प्राकृतस्य "यम्" इति संस्कृते कृते—"यम्" अर्थम् इत्यर्थः ; सः अर्थः स्वयमेव आत्मनैव प्रतिपन्नः प्रस्फुटितः, राज्ञो मुखात् इति शेषः ; अतो नास्ति मे वाक्यावसरः इति भावः ।

(८४) अकारणेत्यादि ।—कारणराहित्येन—नायिकापराधरूपकारणं विना यः परित्यागः तस्मात् । अनुशयदग्धहृदयः,—अनुशयेन अनुतापेन दग्धं हृदयं यस्य तथाभूतः । अनुकम्प्यताम्—अनुगृह्यताम् । पुनर्दर्शनेन—भूयो दर्शनं दत्त्वा । [ अनेन चित्रफलकहस्ताया चेट्या आगमनं सूचितम् ] ।

(८५) पुस्तकान्तरे "अपटी-क्षेपेण" इत्यधिकः पाठः दृश्यते, सूचितायाः अपटीक्षेपेण प्रवेशः अतित्वरासूचनाय । अपटी-क्षेपेण यवनिकाम् अपसार्य्य, न तु पटीक्षेपं विना, इत्यर्थः ।—"अपटी काण्डपटीका प्रतिसीरा यवनिका तिरस्करणी" इति हलायुधः ।

(८६) चित्रगता—आलेख्यस्थिता, भट्टिनी—अकृताऽभिषेका भवतः पत्नी ;—

राजा । [ विलोक्य । ] अहो ! रूपमालेख्यगताया अपि प्रियायाः ! तथाहि, (८७)—

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम्(८८)॥१४॥

"देवी कृताऽभिषेकायाम् इतरासु च भट्टिनी" इति गाथोक्तो अमरः। [ अनेन राज्ञः प्रियादर्शनाभिलाषः भङ्ग्या कविनैव सम्पादितः इति द्रष्टव्यम् ] ।

(८७) अहो ! इति ।—विस्मये, आलेख्यगतायाः,—चित्रलिखितायाः । विस्मयकररूपोत्कर्षं दर्शयितुमाह, तथाहीति ।

(८८) दीर्घेति ।—दीर्घेण विशालेन अपाङ्गेन नेत्रयोरन्तेन विसारि विस्तारि नेत्रयुगलं यत्र तथोक्तं, लीलया विलासेन अञ्चिते भूषिते भ्रुवौ लते इव यत्र तादृशं, दन्तानाम् अन्तर्मध्ये परिकीर्णाभिः परितः प्रसृताभिः हासस्य किरणा एव ज्योत्स्नास्ताभिः विलिप्तः व्याप्तः अधरो यस्य तथाभूतम्, [अनेन मुखस्यापि चन्द्रसाम्यं ध्वन्यते ] कर्कन्धोः पक्वबदरीफलस्येव [ बिम्बोष्ठीतिवत् कर्कन्धुपदेन पक्वकर्कन्धुरेव लक्ष्यते ] द्युतिः कान्तिर्यस्य तथोक्तः, अत एव पाटलः श्वेतरक्तः य ओष्ठः तेन रुचिरं मनोज्ञम् ; तथा विभ्रमेण विलासविशेषेण ; यद्वा—विभ्रमेण विपरीततिलकादिधारणेन,—("विभ्रमः त्वरया काले भूषास्थानविपर्ययः" इति दशरूपकम् ) लसन् स्फुरन् प्रोद्भिन्नः प्रकर्षेण उन्मीलितः कान्तिद्रवः लावण्यरसः ( अथवा—प्रोद्भिन्नकान्तिः शरीरकान्तिमपि उद्भिद्य जातः द्रवः धर्मबिन्दुरित्यर्थः, ) यत्र तथाविधं, तस्याः प्रियायाः तत् एतत् ( यदहं पूर्वं लोचनगोचरीकृत्य परमानन्दसन्दोहरसास्वादमनुभूतवान् तादृशमित्यर्थः ) मुखं चित्रेऽपि आलेख्ये अपि, आलपतीव सम्भाषत इव । [ अत्र 'भ्रूलता' इत्यंशे उपमा, 'हासकिरणज्योत्स्ना' इत्यत्र एकदेशविवर्त्ति रूपकम्, 'कर्कन्धुद्युतिः' इति पुनः उपमा, 'कान्तिद्रवः' इत्यंशे च पुनः रूपकम् ; समुदाये च—आलपतीव इति क्रियोत्प्रेक्षाऽलङ्कारः, इत्येषां संसृष्टिः ] । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

विदू। [विलोक्य।] साहु, वअस्स ! साहु, जं तुए महुरो भट्टिणीए दंसिदो भावाणुप्पवेसो, खलदि विअ मे दिट्ठी णिहुदप्पदेसेसुं; किं बहुणा सत्ताणुप्पवेससङ्काए आलवणकोदूहलं मे जणअदि। (फ) (८९)

मिश्र। अह्मो ! एसा राएसिणो वत्तिआलेहाणिउणदा, जाणे पिअसही मे अग्गदो वट्टदि त्ति। (ब) (९०)

(फ) साधु वयस्य ! साधु, यत्त्वया मधुरो भट्टिन्या दर्शितो भावानुप्रवेशः, स्खलतीव मे दृष्टिर्निभृतप्रदेशेषु; किं बहुना सत्त्वानुप्रवेशशङ्कया आलपनकौतूहलं मे जनयति।

(ब) अहो ! एषा राजर्षेर्वर्त्तिका-लेखा-निपुणता, जाने प्रियसखी मे अग्रतो वर्त्तत इति।

(८९) मधुरः,—हृद्यः। [अत्र 'मधुरावस्थानदर्शनीयः' इति पाठे—मधुरावस्थानेन—सुन्दराकृतिविन्यासेन, दर्शनीयः,—हृद्य इत्यर्थः]। दर्शितः,—प्रकटितः। भावानुप्रवेशः,—प्रणयानुबन्धः। स्खलतीव—न पतति इव; प्रकृतमिति मत्वा परस्त्रीगोपनीयाङ्गदर्शनभिया चक्षुः स्खलतीव, तत्तत्स्थाने न तिष्ठतीव इति भावः। निभृतप्रदेशेषु—गुप्तावयवेषु, स्तनादिषु इति भावः। [अत्र 'निम्नोन्नतप्रदेशेषु इति पाठे—उन्नतावनतस्थानेषु इत्यर्थः। वाक्ये चात्र क्रियोत्प्रेक्षालङ्कारः व्यञ्जकसद्भावात् वाच्या]। सत्त्वानुप्रवेशशङ्कया—सत्त्वस्य जीवनस्य, अनुप्रवेशशङ्कया—समावेशसंशयेन। आलपनकौतूहलम्—आलपने सम्भाषणविषये, कौतूहलम् औत्सुक्यम्। जनयति—उत्पादयति; सजीवामिव एनां मत्वा आलपितुमिच्छामि इवेति भावः। [अत्रापि उत्प्रेक्षालङ्कृतिः व्यञ्जकाभावात् प्रतीयमाना]।

(९०) विदूषकोक्तम् आकर्ण्य तदुक्तम् अनुसन्धाय च आह, अहो ! इति।—अहो !—विस्मयसूचकमव्ययम्। राजर्षेः,—ऋषितुल्यस्य राज्ञः, वर्त्तिकालेखानिपुणता—वर्त्तिकया तूलिकया या लेखा चित्रकर्म्म, तत्र निपुणता पाटवम्। [एकतः राजा सकलप्रजाऽनुरञ्जनतत्परः, अपरतश्च ऋषिवत् धर्म्मकर्म्मणि कृतमनोनिवेशः, तत्रापि कलानैपुण्य सर्वजनपरिभावि, इति सुतरां विस्मयकरमेतत् इति सूचनाय 'अहो !' इति पदमुपात्तम्]। अग्रतो वर्त्तते—समीपे एव स्फुरति, 'इति जाने' इत्यनेन सम्बन्धः। [उत्प्रेक्षाऽलङ्कारः]।

राजा। यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा।
तथापि तस्या लावण्यं लेखया किञ्चिदन्वितम् (९१)॥१५॥

तथा हि, (९२)—

अस्यास्तुङ्गमिव स्तनद्वयमिदं, निम्नेव नाभिः स्थिता,
दृश्यन्ते विषमोन्नताश्च वलयो, भित्तौ समायामपि।
अङ्गे च प्रतिभाति मार्दवमिदं स्निग्धप्रभावाच्चिरं,
प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम् (९३)॥१६॥

---

(९१) यदिति।—चित्रे आलेख्यकर्मणि, यत् यत् अङ्कनविषयीभूतं वस्तुः, साधु उत्कृष्टं न स्यात्, तत्तत् अन्यथा क्रियते स्वदोषात् साधुरूपमपि असाधु क्रियते, तादृशशिल्पनैपुण्यस्यासद्भावादित्यर्थः ; [चित्रकरैरिति कर्त्तृपदमवाध्याहार्य्यम्। "चित्रे स्यात्" इत्यत्र "चित्रेऽस्मिन्" इति पाठे,—अस्मिन् चित्रे यत् यत् साधु उत्कृष्टं न भूतं तत्तत् अन्यथा साध्वित्यर्थः क्रियते ; मयेति शेषः।] तथाऽपि तादृश-व्यापारस्य चित्रनिपुणानां स्वभावसिद्धत्वेऽपि, तस्याः शकुन्तलायाः लावण्यं ( लावण्य-लक्षणन्तु प्रागेवोक्तम्।) किञ्चित्—अनिर्वचनीयया लेखया, चित्रार्थं तूलिकाविहितया रेखया इत्यर्थः, अन्वितं युक्तं सम्बद्धं सत् अन्यथा क्रियते सुन्दरमेव क्रियते ; मया इति शेषः ; मया सततमनुध्यानेन तस्या यादृशं रूपं चित्राङ्कनेन प्रकटीकृतं तत् अन्येषां निपुणानामप्यसाध्यमिति भावः। [अत्र "लेखया" इत्यत्र "रेखया" इति पाठे—तूलिकाविहितेन चित्राङ्कनेन, शोभया च इत्यर्थः। पाठेऽस्मिन् शोभया रेखया अन्वितम् इति विरोधाभासालङ्कारः। तत्र रेखालक्षणं यथा सङ्गीतरत्नाकरे —"शिरोनेत्रकरादीनामङ्गानां मेलने सति। कार्य्यस्थितिर्यतो नेत्रहरा रेखा प्रकीर्त्तिता॥" इति]। पथ्यावक्त्रं वृत्तम्॥१५॥

(९२) पूर्वं यदुक्तं तदेव दर्शयितुमाह,—तथा हि इति।

(९३) अस्या इति।—समायामपि अनुन्नतावनतायामपि, भित्तौ फलके, [सर्वत्र योज्यमिदम्]। अस्याः चित्रमय्याः प्रियायाः इदं पुरो दृश्यमानं स्तनद्वयं तुङ्गमिव उन्नतमिव, न तु वास्तवमुन्नतमित्यर्थः ; नाभिः निम्नेव गभीरेव, न तु तत्त्वतः निम्नेत्यर्थः, स्थिता ; तथा वलयः त्वक्तरङ्गाः विषमोन्नताश्च विषमा असमा उन्नताश्च उच्चावचा इत्यर्थः, दृश्यन्ते लक्ष्यन्ते ; न तु तत्त्वत इति भावः। रेखोत्कीर्णं प्रत्यङ्गनिर्म्माणकौशलं दर्शयित्वा सर्वावयवगतं सौन्दर्य्यं दर्शयितुमाह, अङ्गे इति।—अङ्गे अवयवे इदं मार्दवं

मिश्र। सरिसं एव्वं पच्चादावगुरुणो (९४) सिणेहस्स। (भ)

राजा। [ निश्वस्य। ]—

साक्षात् प्रियामुपगतामपहाय पूर्वं
चित्रार्पितामहमिमां बहु मन्यमानः।
स्रोतोवहां पथि निकामजलामतीत्य
जातः सखे! प्रणयवान् मृगतृष्णिकायाम् (९५) ॥१७॥

(भ) सदृशमेवं पश्चात्तापगुरोः स्नेहस्य।

कोमलता, सौकुमार्य्यम् इत्यर्थः, स्निग्धप्रभावात् तैलविशेषस्नानसामर्थ्यादित्यर्थः, चिरं दीर्घकालं प्रतिभाति च स्फुरति च। प्रेम्णा प्रणयेन, मम मुखम् ईषत् अल्पम् ईक्षते इव पश्यतीव, तथा स्मेरा सदुहासा सती शोभाधर्यौः स्नेहसद्भावादित्यर्थः, मां वक्तीव च आलपतीव च। [ उत्प्रेक्षालङ्कारः ]। शार्दूलविक्रीडितं वृत्तम् ॥१६॥

(९४) सदृशं—युक्तम्, अनुरूपमित्यर्थः। पश्चात्तापगुरोः,—पश्चात्तापेन अनुतापेन गुरोः वृद्धिं गतस्य। [ प्राक्तस्यैव गुरुत्वसम्भवात् अस्य स्वाभाविकः स्नेहसद्भावः सूच्यते। अत्र स्नेहस्य इत्यनन्तरम् "अनवलेपस्य" इति पाठे—निर्दोषस्य स्वाभाविकस्य इत्यर्थः ]।

(९५) साक्षादिति।—हे सखे! अहं पूर्वं प्राक् अव्यवहितकाले इत्यर्थः, साक्षात् प्रत्यक्षेण ("साक्षात् प्रत्यक्षतुल्ययोः" इत्यमरः) उपगताम् उप समीपे गतां स्थितां, न तु दूरस्थितां, न वा अश्रुतागमनाम् इत्यर्थः; न तु केवलनारीमात्रम्, अपि तु मम प्रियाम्, अथवा—साक्षादिति प्रियामित्यस्य विशेषणम्, अक्षतिमां प्रियामित्यर्थः; अपहाय अवगणय्य, न तु परित्यज्य; (परित्यक्तस्य पुनरुपादाने राज्ञः दूषणं सम्भवति, इति 'परित्यागार्थः' उपेक्षितः) चित्रार्पिताम् आलेख्यगताम् इमां पुरःस्थितां प्रियां बहु मन्यमानः आद्रियमाणः, बह्वादरेण अवलोकमान इत्यर्थः, सन् [ अत्र 'पुनरिमाम्' इति पाठे—पुनः अनन्तरमित्यर्थः ] पथि मार्गे निकामजलां प्रभूतसलिलां सम्पूर्णजलामित्यर्थः, अत एव स्रोतोवहां प्रवहद्रूपां नदीम् अतीत्य अतिक्रम्य, मृगतृष्णिकायां मरीचिकायाम् ("मृगतृष्णा मरीचिका" इत्यमरः) प्रणयवान् समासक्तः, प्रीतिमान् इति यावत्, जातः संवृत्तः। [ अत्र 'चित्रगतायां प्रियायाम् आसक्तिः मृगतृष्णिकायाम् आसक्तिरिव' इति बिम्बप्रतिबिम्बभावेन पर्य्यवसानात् असम्भवद्वस्तुसम्बन्धरूपा निदर्शना। यथा च दर्पणम्,—"सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि

विदू। भो! तिस्सिआ आइदिओ दीसन्ति, सव्वाओ ज्जेव दंसणीआओ, ता कदमा (९६) एत्थ तत्थभोदी सउन्तला? (म)

मिश्र। अणहिण्णो क्खु एसो सहीए रूवस्स मोहचक्खु, इअं क्खु ण से गदा पच्चक्खदां? (य) (९७)

राजा। त्वं तावत् कतमां तर्कयसि? (९८)

विदू। [निर्वर्ण्य (९९)]। तक्केमि,—जा एसा सिढ़िलबन्धणुव्वन्त-कुसुमेण केसहत्थेण बद्धसेअबिन्दुणा वअणेण—विसेसदो णामिद-

(म) भोः तिस्र आकृतयो दृश्यन्ते, सर्वा एव दर्शनीयाः, तत् कतमा अत्र तत्र-भवती शकुन्तला?

(य) अनभिज्ञः खलु एष सख्या रूपस्य मोघचक्षुः, इयं खलु नास्य गता प्रत्यक्षताम्।

(र) तर्कयामि,—यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन बद्धस्वेदबिन्दुना

कुत्रचित्। यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना॥" इति; तथा 'निकामजलां स्रोतोवहाम्' इत्यत्र हेतुहेतुमद्भावत्वात् काव्यलिङ्गमपि]। वसन्ततिलकं वृत्तम्॥१७॥

(९६) चित्रफलके दत्तदृष्टिः, सखीद्वयोपेतां शकुन्तलाप्रतिकृतिं पश्यन्नाह, भो इति।—आकृतयः,—मूर्त्तयः, प्रतिकृतयः इत्यर्थः। दर्शनीयाः,—दर्शनयोग्याः, रूपवत्यः इत्यर्थः। कतमा—आसां मध्ये का? [बहूनामेकनिर्द्धारणार्थे "वा बहूनां जातिपरि-प्रश्ने डतमच्" (५।३।९३ पा०) इति डतमच्प्रत्ययः]।

(९७) अनभिज्ञः,—अनुभवायोग्यः, मोघचक्षुः,—विफलनयनः। इयं—पुरो लिखिता शकुन्तला, अस्य प्रत्यक्षतां न गता?—अनेन न दृष्टा? इति काकुः। खलुशब्दः प्रश्नसूचकः।

(९८) तर्कयसि—मन्यसे।

(९९) निर्वर्ण्य—दृष्ट्वा,—"निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः।

(१००) शिथिलेति।—शिथिलेन श्लथीभूतेन बन्धनेन हेतुना, उद्वान्तानि मुक्तानि कुसुमानि यस्मात् तथोक्तेन; केशहस्तेन—केशकलापेन,—("पाशः पक्षश्च हस्तश्च कलापार्थाः कचात् परे" इत्यमरः)। [अत्र उद्वान्तशब्दस्य गौण्या वृत्त्या मोचनार्थाभि-धानात् ग्राम्यत्वं दोषः। अत्र च "केशान्तेन" इति पाठान्तरं वर्त्तते, तत्र केशप्रान्तेन इत्यर्थः]। बद्धेति।—बद्धाः जाताः स्वेदबिन्दवः घर्मकणिकाः वृक्षसेचनपरिश्रमा-दिति भावः, यत्र तादृशेन, [अत्रापि 'बद्ध' इति स्थाने 'उद्भिन्न' इति पाठे—उद्गत

साहाहिं बाहुलदाहिं उस्ससिदणीविणा वसणेण अ ईसी-परिस्सन्ता विअ अहिसेअसिणिद्धदरपल्लवस्स बालचूअरुक्खस्स पास्से आलिहिदा, (१००) एसा तत्थभोदी सउन्तला ; इदराओ सहीओ त्ति। (र)

राजा। निपुणो भवान्, अस्त्यत्र ममापि भावचिह्नम्। (१)—

वदनेन—विशेषतो नामितशाखाभ्यां बाहुलताभ्याम् उच्छ्वसितनीविना वसनेन च ईषत्परिश्रान्तेव अभिषेकस्निग्धतरपल्लवस्य बालचूतवृक्षस्य पार्श्वे आलिखिता, एषा तत्रभवती शकुन्तला ; इतरे सख्यौ इति।

इत्यर्थः]। वदनेन—[उपलक्षणे तृतीया]। विशेषतः,—विशेषेण [प्रकृत्यादित्वात् तृतीया "इतराभ्योऽपि दृश्यन्ते" (५।३।१४ पा०) इति तृतीयायाः तसिल्प्रत्ययः], नामिता शाखा याभ्याम् तथोक्ताभ्याम् [अत्र 'णमिदंसआहिं' इति पाठे—नमितांसकाभ्याम्" इति (सं) नतांसाभ्यामित्यर्थः। 'अपहताभ्याम्' इति पाठे तु—नतांसाभ्यामित्यर्थः] बाहुलतिकाभ्यां—भुजलताभ्याम् [उपलक्षणे तृतीया]। उच्छ्वसितेति।—उच्छ्वसिता ईषत् स्खलिता नीविः वसनग्रन्थिर्यस्य तादृशेन, वसनेन—वस्त्रेण [उपलक्षणे तृतीया]। ईषत्—किञ्चित्, परिश्रान्तेव—श्रमार्त्तेव। अभिषेकेति।—अभिषेकेण—जलसेचनेन, [अत्र "अवसेकेन" इति पाठे—सलिलाव-वर्जनेन इत्यर्थः]। स्निग्धतराः,—सुकुमारतराः, अतिमसृणाः इत्यर्थः, पल्लवा यस्य तथोक्तस्य। बालचूतवृक्षस्य—नवीनाम्रतरोः। पार्श्वे—समीपतरप्रदेशे, आलि-खिता—चित्रिता। [एतेन खलु प्रथमदर्शनसमये वृक्षसेचनात् यादृशी समवस्था शकुन्तलायाः राज्ञः नयनपथवर्त्तिनी आसीत् तदनुसारेणैव चित्रिता इति गम्यते। तदानीञ्च "स्रस्तांसावतिमात्रलोहिततलौ" इति यदुक्तं, तत-श्लोकप्रतिपाद्यविषयानु-सारेण चित्रितमिति निपुणैरूह्नेयम्]।

(१) निपुणः,—अभिज्ञः, द्रष्टुं समर्थ इत्यर्थः। अत्र—चित्रमय्यां प्रियायाम्। भावचिह्नं—भावस्य सात्त्विकलक्षणस्य, चिह्नं—स्वेदादिकम् ; यद्वा भावेन—सात्त्विक-भावेन कृतं चिह्नम् [मध्यपदलोपी समासः]।

स्विन्नाङ्गुलिविनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्रासात् (२) ॥१८॥

[ चेटीं प्रति । ] चतुरिके ! अर्द्धलिखितमेतद्विनोदस्थानम् अस्माभिः, तद्गच्छ वर्त्तिकास्तावदानय । (३)

चेटी । अज्ज माढव्व ! अवलम्ब चित्तफलअं, जाव आगच्छम्ह । (ल) (४)

राजा । अहमेवावलम्बे ।

[ इति यथोक्तं करोति । चेटी निष्क्रान्ता ] ।

विदू । भोः ! किं एत्थ अवरं आलिहिदव्वं ? (व)

(ल) आर्य्य माधव्य ! अवलम्बस्व चित्रफलकं, यावद् आगच्छामः ।
(व) भोः किमत्र अपरमालिखितव्यम् ?

(२) 'अत्यत्र भावचिह्नम्' इति यदुक्तं, तदेव स्पष्टं दर्शयति, स्विन्नेति ।— स्विन्नाया: स्वेदार्द्रीयाः अङ्गुलेः विनिवेशात् स्पर्शात्, अर्पणादित्यर्थः, प्रान्तेषु चित्रपट-पार्श्वदेशेषु मलिना श्यामा रेखा दृश्यते लक्ष्यते, मलिनत्वञ्च स्वेदादेव चित्रपटोद्-घर्षणात् ; तथा वर्णकस्य रञ्जनद्रवस्य उच्छ्रासात् उच्छूनत्वात् कपोलयोः लिखिता-कृतिगण्डयोः चित्रकर्मसमये ममेति शेषः, पतितं स्खलितम् अश्रु नेत्रजलञ्च इदं लक्ष्यम् अनुमेयम् । [ अत्र "स्विन्नाङ्गुलिविनिवेशः रेखाप्रान्तेषु दृश्यते मलिनः ।......दृश्यमिदं वर्त्तिकोच्छ्रासात् ॥"इति पाठभेदः पुस्तकान्तरेषु दृश्यते; तत्र—स्विन्नाङ्गुलीनां विनिवेशः विन्यासः, रेखाप्रान्तेषु चित्रकर्मसमये रेखापार्श्वेषु, मलिनः स्वेदप्रभावेण चित्रपटघर्ष-णात् आविल दृश्यते ; तथा वर्त्तिकोच्छ्रासात् वर्त्तिकायाः चित्रपटलेखविशेषस्य स्फीतभावात् सात्त्विकभावोदयेनोत्पन्नं कपोलपतितं चित्रस्थप्रकुन्तलागण्डप्राप्तं नयनजलं दृश्यं दर्शनीयम् इत्यर्थः । स्वभावोक्तिरलङ्कारः । अनेन च हेतुर्नाम लक्षणं दर्शितं, यदुक्तं,—"स हेतुरिति निर्दिष्टो यत् साध्यार्थप्रसाधकम्" इति] । आर्य्या जातिः ॥१८॥

(३) विनोदस्थानं—विरहसन्तापप्रशमनस्थानम्, आलेख्यमित्यर्थः । अर्द्ध-लिखितम्—असम्यक् चित्रितम् । वर्त्तिकाः,—तूलिकाः ।

(४) चित्रफलकं—लिखितपटम् । यावत् आगच्छामः,—आगमनपर्य्यन्तमित्यर्थः ।

मिश्र। जो जो पिअसहीए अहिमदो प्पदेसो, तं तं आलिहिदुकामो त्ति तक्केमि । (४)

राजा। सखे ! श्रूयताम् ।—

कार्य्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम् (५) ॥१९॥

---

(४) यो यः प्रियसख्या अभिमतः प्रदेशस्तं तमालेखितुकाम इति तर्कयामि ।

(५) कार्य्येति ।—सैकतेषु वालुकामयपुलिनेषु ("तोयोत्थितं तत् पुलिनं सैकतं सिकतामयम्"इत्यमरः ; ) लीनानि सङ्गतानि हंसमिथुनानि हंसानां द्वन्द्वानि यस्याः तथोक्ता, [अनेन उद्दीपनविभावस्मरणात् उद्दीपकत्वातिशयः ध्वन्यते। 'सैकतिनी सहंसमिथुना' इति पाठे—सैकतिनी पुलिनवती, तथा सहंसमिथुना हंसद्वन्द्वसमन्वितेत्यर्थः । ] मालिनी नाम स्रोतोवहा स्रोतस्वती कार्य्या आलेख्या । [अत्रापि स्रोतोवहा इत्यनेन नियतजलवाहित्वं, तेन च रमणीयत्वं, तेन च उद्दीपकत्वं ध्वन्यते ]। तां मालिनीम् अभितः मालिन्याः उभयतः तटेषु इत्यर्थः [ "अभितः परितः समया—" वा० इति द्वितीया ] निषण्णाः स्थिताश्चमराः मृगविशेषा येषु तथोक्ताः, [ अनेन अत्यन्तविविक्तत्वं, तेन भृशमुद्दीपकत्वं, तेन च सुरतक्षमत्वं ध्वन्यते ] पावनाः पवित्राः [ अनेन शुचित्वं रम्यत्वञ्च पर्य्यवस्यति ] गौरीगुरोः हिमालयस्य [ अत्र च गौरीगुरुपदेन कन्याजनकत्वबोधनात् कन्याविरहदुःखानुभावात् तत्प्रदेशे निर्बाधविहारत्वं ध्वन्यते ।] पादाः प्रत्यन्तशैलाः ("पादाः प्रत्यन्तपर्वताः"इत्यमरः) कार्य्या इति अनुषङ्गः । तथा शाखासु लम्बितानि वल्कलानि ऋषिपरिधेयानि वृक्षत्वचः इत्यर्थः, यस्य तथाभूतस्य [ एतेन आश्रमानतिदूरवर्त्तित्वेन तस्याः लज्जाशीलत्वं ध्वनितम् ]। तरोः वृक्षस्य अधः तले इत्यर्थः, कृष्णमृगस्य कृष्णसारस्य शृङ्गे वामनयनं वामं सव्यं, सुन्दरं वा, नयनं कण्डूयमानां खर्जनं कुर्वतीं [ अयन्तु स्त्रीस्वभावः । अत्र कण्डूयनन्तु शृङ्गारानुभावसूचकं घर्षणमात्रम् ; अनेन उद्दीपकत्वं ध्वन्यते]। मृगीं निर्मातुं चित्रयितुम् इच्छामि । [ पूर्वं खलु "कार्य्या" इत्युक्त्वा परं निर्मातुमिच्छामि इत्युक्तेस्तु घर्षणादिकं चित्रे लेखनायोग्यमपि इच्छामि, न तु वस्तुतः कर्त्तव्यमिति भावः । अनेन खलु पद्येन पूर्वानुभूतम् उद्दीपनविभावसमूहं स्मरति । ते च स्मृता भमा-

विदू। [स्वगतम्।] जधा मन्तेदि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिहिं लम्बकुच्चाणं वक्कलपरिहाणाणं (६) तावसाणं त्ति। (ष)

राजा। वयस्य! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं (७) लेखितुं विस्मृतमस्माभिः।

विदू। किं विअ? (स)

मिश्र। वणवासस्स कण्णआभावस्स अ जं सरिसं भविस्सदि। (ह) (८)

राजा। कृतं न कर्णार्पितबन्धनं सखे!
शिरीषमागण्डविलम्बिकेशरम्।

(ष) यथा मन्त्रयते तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिः लम्बकूर्चानां वल्कलपरिधानानां तापसानामिति।

(स) किमिव?

(ह) वनवासस्य कन्यकाभावस्य च यत् सदृशं भविष्यति।

कल्पितप्रवासहेतुकं विरहमेव परिपोषयन्ति, तेन च सहृदयानां सामाजिकानां चमत्कारातिशयं चेतसि वितन्वते इति महाकविहृदयम्। अत्र स्वभावोक्तिरलङ्कारः। 'गौरीगुरोः' इति पदेन लोकातिशयसम्पत्तिवर्णनात् उदात्तालङ्कारश्च]। शार्दूलविक्रीड़ितं वृत्तम् ॥१९॥

(६) लम्बकूर्चानां—दीर्घश्मश्रूणाम्। वल्कलपरिधानानां—वृचत्वग्वसनानाम्। [विशेषणद्वयेन तापसेषु अनादरः सूच्यते।]

(७) प्रसाधनम्—अलङ्कारः। अभिप्रेतम्—अभिमतम्।

(८) दुष्मन्तहृदयगतम् अनुमाय आह, वनवासस्येति।—'वनवासस्य' इत्यनेन कुसुमादिकम्। [अनन्तरं "सौकुमार्य्यस्य अविनयस्य" इत्यधिकपाठद्वयं वर्त्तते; तत्र 'सौकुमार्य्यस्य' इत्यनेन कुसुमपल्लवानामपि यत् कोमलतरं तदेकाहर्विधारणम्; 'अविनयस्य' इत्यनेन शेखरादिव्यावर्त्तनम्]। 'कन्यकाभावस्य' इत्यनेन च भालार्पितसिन्दूरादिव्यावर्त्तनम्। यत्सदृशम्—अनुरूपम्।

(९) कृतमिति।—हे सखे! कर्णे अर्पितं न्यस्तं बन्धनं वृन्तं यस्य तादृशम्

न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे (९) ॥२०॥

विदू। किण्णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा (१०) विअ ट्ठिदा? [सावधानं (११) दृष्ट्वा।] आ ह्रीही भो! एसो दासीए पुत्तो

(क) किं नु खलु तत्रभवती रक्तकुवलयशोभिना अग्रहस्तेन मुखमावार्य्य चकित-

---

[अत्र कर्णपदेन भूषणवत्कर्णप्रतीतेः सान्निध्यात् कर्णशिरोऽन्तरालदेशः लक्ष्यते; तेन च परस्परैकक्रियाकरणत्वबोधनात् अन्योऽन्यालङ्कारः व्यङ्ग्यः।] तथा आगण्डम् आकपोलं ["आङ् मर्य्यादाभिविध्योः" (२।१।१३ पा०) इति अव्ययीभावः] विलम्बिनः लम्बमानाः केशराः किञ्जल्काः यस्य तथोक्तम् [अत्रापि परस्परं भूष्यभूषणभावः व्यङ्ग्यः; तेन च यथा कर्णं भूषयति तथा कपोलमपि इत्यपि व्यज्यते।] शिरीषं शिरीषकुसुमं न कृतं न चितितम् [अत्र शिरीषपदेन कोमलत्वं, तेन च तद्योग्यत्वेन शरीरस्यापि तस्याः मार्दवातिशयः ध्वन्यते] तथा स्तनयोरन्तरे मध्ये शरच्चन्द्रस्य शरदिन्दोः मरीचिवत् कोमलं सुकुमारं मृणालसूत्रं मृणालतन्तुः न वा रचितं नैव चिचितम्। [अत्र मृणालसूत्रपदेन तदधिकस्थूलतरहारादेरवकाशासम्भवत्वमभिव्यज्य स्तनयोरतिपीवरत्वं, तेन परस्परोत्पीड़नत्वं, तेन स्वस्य आलिङ्गनयोग्यत्वं, तदलाभात् आत्मनः सुतरां मन्दभाग्यत्वञ्च ध्वन्यते। मृणालसूत्रपदेन अक्षसूत्रादिवत् केचनात्र मृणालनिर्म्मितं हारं व्याचक्षते; तन्न ध्वनेरनुत्थाने वैचित्र्याभावात् उपेक्षितमस्माभिः। अत्र क्रियासमुच्चयालङ्कारः; तथा शरच्चन्द्रमरीचिकोमलमित्यत्र च उपमा; अनयोः अन्योऽन्यानपेक्षावस्थानात् तिलतण्डुलवत् संसृष्टिः। वंशस्थविलं वृत्तम् ॥२०॥

(१०) किमिति।—किन्नु इति—वितर्के, खलु—प्रश्ने, रक्तकुवलयशोभिना—रक्तोत्पलवत् शोभमानेन। [समासगतेयमुपमा; अनेन च ईदृशावस्थायामपि तस्याः सौन्दर्य्यातिशयः व्यज्यते]। आवार्य्य—आच्छाद्य। चकितचकिता इव—भीतभीता इव, अतिभीता इत्यर्थः;—"चकितः शङ्कितः भीतः" इति त्रिकाण्डः। [उत्प्रेक्षेयम्]।

(११) सावधानं—साभिनिवेशम्।

(१२) आशब्दः,—स्मृतौ,—"आप्रगृह्यं स्मृतौ वाक्येऽनुकम्पायां समुच्चये" इत्यमरः। सविसर्गोऽन्न पाठे तु—कोपे, "आस्तु स्यात् कोप-पीड़योः" इति मेदिनी।

कुसुमरसपाडच्चरो दुट्ठमहुअरो तत्थभोदीए वअणकमलं (१२) अहिलसदि। (क)

राजा। ननु वार्य्यतामेष धृष्टः। (१३)

विदू। भो ! तुमं ज्जेव अविणीदाणं सासिदा इमस्स वारणे पहवसि। (ख) (१४)

राजा। युज्यते। अयि भोः कुसुमलताप्रियातिथे ! किमत्र परिपतनखेदमनुभवसि ? (१५)—

---

चकितेव स्थिता ? आ हीही भो ! एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरः तत्रभवत्या वदनकमलमभिलषति।

(ख) भोः त्वमेव अविनीतानां शासिता अस्य वारणे प्रभवसि।

हीहीति—हास्यसूचकम् अव्ययम्।—"हीही शब्दो विस्मयहास्ययोः" इति मेदिनीकोषात्। दास्याःपुत्रः,—नीचः [ समासे षष्ठ्या अलुक् ]। कुसुमरसपाटच्चरः,—पुष्पमधुचौरः। [ एतेन अनेनैव अपराधेन दण्डनीयो भवितुमर्हति, किमुत अपराधान्तरेण इति व्यज्यते ]। दुष्टमधुकरः,—दुष्टभ्रमरः, तत्रभवत्याः,—मान्यायाः शकुन्तलायाः। [ अनेन अत्यन्ताभिलाषायोग्यत्वं व्यज्यते ]। वदनकमलं—मुखपद्मम्। [रूपकमिदं भ्रमराभिलाषस्य उपमाने पद्मे एव विषयतया मुख्यान्वयेन साधकसद्भावात्, तत्रानन्वयेन उपमायां बाधकसत्त्वाच्च; अनेन च भ्रान्तिमदलङ्कारः व्यज्यते ]।

(१३) वार्य्यतां—ताड्यताम्। धृष्टः,—चपलः, प्रगल्भः इत्यर्थः।

(१४) चित्रगतस्य वारयितुमशक्यत्वात् सोपहासं स्वभावोक्तिमाह, भो इति।—अविनीतानां—दुष्टानां, दण्ड्यानामित्यर्थः। शासिता—दण्डयिता, वारणे प्रभवसि—निवारयितुं समर्थः; [ समर्थार्थकधातुयोगे चतुर्थीप्राप्तौ अधिकरणविवक्षया सप्तमी ]।

(१५) दुष्यन्तस्तु तात्त्विकबुद्ध्या प्रत्युत्तरमाह, युज्यत इति।—भवता यदुक्तं तत् युक्तमेव इत्यर्थः। कुसुमेति।—कुसुमयुक्ता लता कुसुमलता [मध्यपदलोपी समासः। अत्र कुसुमग्रहणं लतायां प्रणयाधिक्यसूचनार्थम् ] तस्याः प्रियः अतिथिः; ( न तु यः कश्चिदागन्तुकः ) [ अनेन तत्र तव गमनमुचितमिति ध्वन्यते। ] तस्य सम्बोधने। परिपतनरूप एव खेदः तम् अनुभवसि ? लभसे ? मध्वलाभादिति भावः।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति (१६)॥२१॥

मिश्र। अहिअत्थं क्खु वारिदो ! (ग) (१७)

विदू। भो: ! पड़िसिद्धवामा क्खु एसा जादी । (घ) (१८)

राजा। [सकोपम्।] भो ! न मे शासने तिष्ठसि ? श्रूयतां तर्हि, सम्प्रति हि, (१९)—

(ग) अत्यर्थं खलु वारित: ?

(घ) भो: ! प्रतिषिद्धवामा खलु एषा जाति: ।

(१६) पूर्वं परिपतनस्य व्यर्थताप्रदर्शनेन प्रतिषिध्य सम्प्रति तत्पतनयोग्यं स्थानं प्रलोभ्य प्रदर्शयितुमाह, एषेति ।—एषा पुर:स्थिता चित्रलिखिता वह्निदंशस्थमाधवी-लतासंस्थिता वा मधुकरी कुसुमे निषण्णा उपविष्टा [अत्र 'कुसुमनिषण्णा' इत्यनेन अयत्नसाध्यं नितरामीप्सितञ्च तव तत् स्थानम् इति व्यञ्जितम्]। अनुरक्ता त्वयि अनुरागिणी [अनेन च तव तत्र गमनमुचितमित्यपि ध्वन्यते] अत एव सती साध्वी तृषिताऽपि पिपासिताऽपि, पातुम् अभिलाषवत्यपि (अत्र कुसुमोपवेशनादेव तृषितत्वमस्या इति मन्तव्यम्] भवन्तं त्वां प्रतिपालयति प्रतीक्षते, [अनेन प्रेमातिशय: व्यज्यते] त्वां विना न खलु नैव मधु पिबति । अत: शीघ्रमेव तव तत्र गमनमुचितमिति भाव:। [अत्र प्रस्तुते मधुकर्य्यादौ अप्रस्तुतनायकनायिकाव्यवहारसमारोपात् समासोक्ति: अलङ्कार:]। आर्य्येयम् ॥२१॥

(१७) अत्यर्थम्—अतिमात्रं, वारित:,—प्रतिषिद्ध:। [सोल्लुण्ठनोक्तिरियम्। अत्र "अद्य अभिजातं खलु एष: वारित:" इति पाठे—अधुना अभिजातं न्याय्यं यथा तथा एष मधुकर: वारित: इत्यर्थ: ।—"अभिजात: स्मृतो न्याय्ये" इति विश्व:]।

(१८) प्रतिषिद्धवामा—निवारिताऽपि प्रतिकूला, [विशेषणेन विशेष्यभावापन्नेन कर्मधारय:], अथवा—प्रतिषिद्धेन प्रतिषेधेन [भावे क्त:] वामा इति [तृतीया तत्०]। एषा जाति:,—मधुकरजाति: इत्यर्थ:। [विदूषकस्य सोपहासवाक्यमेतत्]।

(१९) चित्रस्थस्य याथार्थ्यज्ञानेन तत्रापि प्रतिषेधानाकर्णनेन भृशं कुपित आह, भो इति।—शासने—आज्ञायाम्, तिष्ठसि ?—मम राज्ञ: आज्ञां नानुवर्त्तसे ? इत्यर्थ:। 'भवदाज्ञालङ्घने का नो हानि: ?' इत्यत: दण्डप्रदर्शनपूर्वकमाह,—श्रूयतामिति। तर्हि —तदा, सम्प्रति हि—इति उत्तरश्लोकेनान्वय:।

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु।
बिम्बाधरं दशसि चेद् भ्रमर! प्रियाया:
त्वां कारयामि कमलोदरबन्धनस्थम् (२०) ॥२२॥

विदू। भो! एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि।(२१)

(२०) अक्लिष्टेति।—हे भ्रमर! रतोत्सवेषु तया सह रतानि एव उत्सवा: अत्याह्लादकानि कर्म्माणि तेषु महानन्ददायकेषु निधुवनव्यापारेषु इत्यर्थ:, मया तदानीम् उत्कण्ठातिशयवताऽपि सदयमेव पीतं चुम्बितमित्यर्थ:, न तु निर्दयं सन्दष्टमिति भाव:, [अनेन कोमलातिशय: ध्वन्यते] अक्लिष्ट: अम्लान: य: बालतरो: अभिनववृक्षस्य पल्लव:, तद्वत् लोभनीयम्; [अनेन कोमलत्वं लौहित्यातिशयश्च व्यज्यते; तथा तेन च भ्रमरस्य स्पर्शहेतुत्वं गमयित्वा भ्रान्तिमदलङ्कारोऽपि ध्वन्यते], यद्वा—अक्लिष्ट: केनापि न मर्दित: य: बाल: नूतन: तरुपल्लव: तद्वत् लोभनीयम् [अत्र वृक्षस्थितत्वज्ञापनाय तरुपदोपादानं, तेन च सौन्दर्य्यातिशय: ध्वन्यते।] प्रियाया: बिम्बसदृश: अधर:, तम् [अत्र मध्यपदलोपी समास:। तथा च वामन:,—"बिम्बाधर इति वृत्तौ मध्यमपदलोपिन्याम्" इति] चेत् यदि दशसि दन्तक्षतं करोषि, तदा त्वां कमलस्य पद्मस्य उदरम् अभ्यन्तरमेव बन्धनं कारागृहं, तत्स्थं तत्र बद्धमित्यर्थ:, कारयामि; अथवा—कमलस्य जलस्य उदरम् अभ्यन्तरं तदेव बन्धनं तत्स्थं त्वां कारयामि इत्यर्थ:। [अनेन सूर्य्यस्यापि निजाज्ञाकारित्वं तेन च स्वस्यापि प्रभावातिशय: ध्वन्यते। अत्र कमलोदरबन्धनस्य स्वाभाविकस्यापि स्वप्रयोजनविषयाध्यवसायित्वोक्ते: अतिशयोक्ति:, तथा प्रतिनायकव्यवहारसमारोपात् समासोक्तिश्च; प्रथमपादे तथा बिम्बाधरमित्यत्र च उपमा; कमलोदरबन्धनस्थमित्यत्र च रूपकम्; कमलशब्दस्य जलरूपार्थकरणे श्लेषोऽपि। अत्र उन्मादावस्थावर्णनात् नानौचित्यं दोष:। नृपोक्तौ "वार्य्यतामेष धृष्ट:" इत्यादिना "बन्धनस्थम्" इत्यन्तेन तन्मयत्वरूपं प्रवासविप्रलम्भकामदशा दर्शिता:। तथा च—"तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरत: तथा' इति लक्षणात्]। वसन्ततिलकं वृत्तम् ॥२२॥

(२१) सोपहासमाह, भो इति—तीक्ष्णदण्डस्य—उग्रशासनस्य। [चित्रस्थमचेतनमपि दण्डयतीति इत्युपहास:]। ["भीत्रार्थानां भयहेतु:" (१।४।२५ पा०) इति अपादाने प्राप्ते सम्बन्धविवक्षया षष्ठी]। ते—तव।

[ विहस्यात्मगतम् । ] एसो दाव उम्मत्तो, अहम्मि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो । (ङ) (२२)

राजा । निवार्य्यमाणोऽपि कथं स्थित एव ।

मिश्र । अह्मो ! धीरम्मि जणं रसो विआरेदि । (च) (२३)

विदू । [ प्रकाशम् । ] भो ! चित्तं क्खु एदं । (छ)

राजा । कथं चित्रम् ? (२४)

मिश्र । अहम्मि दाणिं अवगदत्था, किं उण जधाचिन्तिदाणुसारी एसो । (ज) (२५)

(ङ) भो ! एवं तीक्ष्णदष्टस्य ते कथं न भेष्यति ? एष तावदुन्मत्तः, अहमपि एतस्य सङ्गेन ईदृश एव संवृत्तः ।

(च) अहो ! धीरमपि जनं रसो विकारयति ।

(छ) भोः ! चित्रं खलु इदम् ।

(ज) अहमपि इदानीम् अवगतार्था, किं पुनः यथाचिन्तितानुसारी एषः !

(२२) सोत्कुण्ठनीक्षावपि यथार्थज्ञानेन कृतविश्वासं नृपम् उन्मत्तप्रायमवलोक्य विहस्याह,—एष इति ।—सङ्गेन—संसर्गेण, ईदृशः,—उन्मत्तः ।

(२३) धीरमपि—निसर्गगम्भीरमपि, रसः,—प्रवासः विप्रलम्भाख्यः शृङ्गारः इति भावः । विकारयति—विकारवन्तं करोति । ( तदानीं मिश्रकेश्या अपि भ्रमरे भ्रमो जातः, केवलं राज्ञः भ्रमरताड़नार्थं कमपि व्यापारम् अकुर्वतः वाक्चातुर्य्यदर्शनेन ईदृशी उक्तिरित्यवगन्तव्यम् ; उत्तरत्र 'अहमपि अवगतार्था' इत्युक्तेः ) । [ अप्रस्तुतप्रशंसेयम् ] ।

(२४) "राजा । युज्यते" इत्यादिना "कथं चित्रम्" इत्यन्तेन भ्रान्तिर्नाम सन्ध्यन्तराङ्गं सूचितम् । तथा च—"भ्रान्तिर्विपर्य्ययज्ञानं प्रसङ्गस्याविनिश्चयात्" इत्युक्तेः ।

(२५) अवगतार्था—ज्ञातार्था, इतः पूर्वं मम वास्तवबुद्धिरासीत्, अधुना तु अवास्तवस्य वास्तविकत्वज्ञानरूपः भ्रमो निराकृत इति भावः । यथाचिन्तितानुसारी—यथाचिन्तितं—यादृशं मनसा कल्पितं, तत्त्वत एव तदनुसारीत्यर्थः । एषः,—राजा । किं पुनः ?—तत्र किमु वक्तव्यम् ? कस्मिंश्चिदवस्तुन्यपि समुत्कण्ठचित्तवशात् सर्वेषामेव तात्त्विकबुद्धिर्भवति ; राज्ञोऽपि तत एव तादृशी समवस्था जाता, तत्र वक्तव्यतैव नासीति भावः ।

राजा। किम् इदम् अनुष्ठितं पौरोभाग्यम्? (२६)—
दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता (२७)॥२३॥
[इति वाष्पं विसृजति]।

मिश्र। पुव्वापरविरुद्धो अपुव्वो (२८) एसो विरहिमग्गो। (भ)

राजा। वयस्य! कथमेवमविश्रामं दुःखमनुभवामि?—
प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः।
वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि (२९)॥२४॥

(भ) पूर्वापरविरुद्धोऽपूर्व एष विरहिमार्गः।

(२६) अनुष्ठितम्—आचरितम्, पौरोभाग्यं—दोषैकदर्शित्वम्; चित्रितशकुन्तलायास्तात्त्विकत्वनिराकरणरूपं सदोषकर्मानुष्ठानमित्यर्थः; येन कर्मणा अनुष्ठितेन केवलं दोष एव सम्भवति, न तु गुणलेशोऽपि, तत्कर्मप्रियत्वमिति यावत्।—"दोषैकदृक् पुरोभागी" इत्यमरः।

(२७) पौरोभाग्यमेव स्पष्टयति,—दर्शनेति।—तन्मयेन शकुन्तलामयेन [साकल्ये मयट्प्रत्ययः] हृदयेन मनसा, साक्षात् प्रत्यक्षमिव दर्शनसुखं प्रियावलोकनानन्दम् अनुभवतः मे मम स्मृतिकारिणा—'नेयं शकुन्तला, परन्तु चित्रमिदम्' इति स्मरणं कारितवता, चित्रस्मारकेण इत्यर्थः, त्वया पुनरपि कान्ता प्रिया चित्रीकृता चित्रलिखितेति ज्ञानविषयिणी कृता इत्यर्थः, अथ च चित्रीकृता साश्चर्य्यीकृता इत्यर्थः। ("आलेख्याश्चर्ययोश्चित्रम्" इत्यमरः।) [अत्र पूर्वार्द्धे 'साक्षादिव' इत्यत्र उत्प्रेक्षा, 'चित्रीकृता' इत्यत्र च सैव गम्या; तथा कान्तायाः चित्रीकरणविरोधात् शब्दशक्तिमूलः विरोधाभासः व्यङ्ग्यः। अत्र भोजराजेन तु—"परप्रयत्नादपि स्मरणे स्मरणालङ्कारः" इत्युक्त्वा तत्रायमेव श्लोक उदाहृतः; तन्मते स्मरणालङ्कारोऽपि]। आर्य्या जातिः॥२३॥

(२८) पूर्वापरविरुद्धः,—पूर्वं सहसा प्रत्याख्यानम्, अपरं तदर्थः शोकातिशय इति विरुद्धः विपरीतः; अथवा—पूर्वं तत्त्वतः चित्रज्ञानं, ततः सत्यतया भ्रमः, ततश्च भ्रमनिरासे शोचनमिति पौर्वापर्य्यविसंवादीत्यर्थः; अत एव अपूर्वः,—नूतनः विचित्रो वा। विरहिमार्गः,—विरहावस्था।

(२९) अहो! दौर्भाग्यं विधिविडम्बितस्य, इत्याह, प्रजागरादिति।—प्रजा-

मिश्र। सव्वधा पमज्जिदं तुए पच्चादेसदुक्खं। पिअसहीए पच्चक्खं ज्जेव सहीजणस्स। (ञ) (३०)

चतुरिका। [प्रविश्य।] जेदु जेदु भट्टा, वत्तिआकरण्डअं (३१) गेह्णिअ इदो अहं पत्थिदह्मि—"। (ट)

राजा। ततः किम्?

चेटी। तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए अहं ज्जेव अज्जउत्तस्स उवणइस्सं त्ति भणिअ सबलक्कारं गहीदं—"। (ठ) (३२)

(ञ) सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य।

(ट) जयति जयति भर्त्ता। वर्त्तिकाकरण्डकं गृहीत्वा इतोऽहं प्रस्थितास्मि—"।

(ठ) तन्मे हस्तात् पिङ्गलिकावेदितया देव्या वसुमत्या "अहमेव आर्य्यपुत्रस्य उपनेष्यामि" इति भणित्वा सबलात्कारं गृहीतम्—"।

भरात् प्रकर्षेण निद्राराहित्यात् [एतेन शकुन्तलास्मरणात् प्रतिरात्रमेव निद्राव्याघातः व्यज्यते।] तस्याः कान्तायाः स्वप्नसमागमः निद्रावस्थायां सङ्गमः खिलीभूतः रुद्धः। वाष्पस्तु अश्रुवारि पुनः चित्रगतामपि (प्रत्यक्षदर्शनन्तु नितरामनुपपन्नमिति अपिशब्दार्थः) एनां कान्तां द्रष्टुं न ददाति। इति अहो! दैवदुर्विलसितमेतत्, "तत्श्चित्रं कर्म स्वपनसमये दर्शनमपि" इत्युक्तेः चित्रादिना विरहविनोदनमपि मम दूरमपास्तमिति भावः। [अत्र जागरण-वाष्परूपहेतुद्वयेन अनिद्रा-अदर्शनरूपयोः हेतुमतोः अभेदकथनात् हेतुरलङ्कारः। यदाह दर्पणे,—"अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह" इति]। पथ्यावक्त्रं वृत्तम् ॥२४॥

(३०) प्रमार्जितं—चालितम्। प्रत्यादेशदुःखं—परित्यागक्लेशः। सखीजनस्य मम प्रत्यक्षमेव समक्षमेव [अक्ष्णः लक्षणम्—"लक्षणेनाभिप्रती—" (२।१।१४ पा०) इति सूत्रेण लक्षणार्थे प्रतिनाऽव्ययीभावः शरदा० समासान्तः अच्प्रत्ययः, क्रियाविशेषणमेतत्]।

(३१) वर्त्तिकाकरण्डकं—तूलिकावर्णकादिनिधानं वंशादिकृतपेटकम्।—"करण्डो वंशादिकृतपेटके मधुकोषके"। इति शब्दाब्धिः।

(३२) पिङ्गलिकावेदितया—पिङ्गलिका नाम काचित् अपरा चेटी, तया

विदू । तुमं कधं विमुक्का ? (ड) (३३)

चेटी । जाव देवीए लदाविड़वलग्गं उत्तरीअञ्चलं पिङ्गलिआ मोआवेदि, दाव णिह्नविदो (३४) मए अप्पा । (ढ)

राजा । वयस्य ! उपस्थिता देवी बहुमानगर्विता च, तद्भवान् इमां प्रतिकृतिं रचतु । (३५)

विदू । अत्ताणम्पि किं त्ति ण भणासि ? (३६) [ चित्रफलकम्

(ड) त्वं कथं विमुक्ता ?

(ढ) यावद्देव्या लताविटपलग्नम् उत्तरीयाञ्चलं पिङ्गलिका मोचयति, तावत् निह्नुतो मयात्मा ।

आवेदितया—"आलेख्यलेखनार्थं वर्त्तिकाकरण्डकमियं स्वामिसकाशं नयतीति पश्य पश्य" इति विज्ञापितया । वसुमत्या—तदाख्यया राज्ञ्या । उपनेष्यामि—सन्निधिं प्रापयिष्यामि । इति भणित्वा—इति कथयित्वा, सबलात्कारं—प्रसह्य इत्यर्थः, गृहीतं—नीतम् ।

(३३) विमुक्ता—परित्यक्ता, तया इति शेषः । [अत्र "दिष्ट्या त्वं विमुक्ता" इति पाठे,—दिष्ट्या—भाग्येन ] ।

(३४) लताविटपलग्न—लतायाः विटपः,—विस्तारः,—("विस्तारो विटपोऽस्त्रियाम्" इत्यमरः) तत्र लग्नं—संसक्तम् । उत्तरीयाञ्चलम्—ऊर्द्ध्वप्रावरणस्य प्रान्तभागं, मोचयति—विटपात् वियोजयति । [ एतेन द्वयोरेव कार्य्यव्यासक्ततया अपसरणावसरः सुष्ठु सञ्जातः इति सूचितम् ] । निह्नुतः—अपलपितः, पलाय्य रक्षितः इति भावः ।

(३५) देव्याः वसुमत्याः आगमनमाकर्ण्य दाक्षिण्येन सञ्जातभीतिः आह, वयस्येति ।—बहुमानगर्व्विता—बहुमानेन अत्यादरेण गर्विता सदर्पा । प्रतिकृतिं—चित्रितां शकुन्तलाप्रतिमां, रचतु—यथा सा न द्रष्टुं शक्नोति तथा करोतु । [ एतेन दाक्षिण्यमस्य प्रदर्शितम् । तथा च दर्पणे,—"एषु त्वनेकमहिलासमरागो दक्षिणः कथितः" इति । अत्र मातलेः प्रवेशसूचनार्थम् उन्मनायमानं नृपं कार्य्यान्तरव्यासक्तचित्तं च विधाय तस्य सहजधैर्य्यप्रदर्शनेन नायकोत्कर्षं प्रख्यापयितुञ्च विदूषकापसारणं कृतमिति भाव्यम् ] ।

(३६) आत्मानमिति ।—आत्मानमपि रक्षेति शेषः, इति किम्—कथं,

आदायोत्थाय च । ] जइ भवं अन्तेउरकूड़वागुरादो मुच्चिस्सदि तदो मं मेहच्छप्पासादे सद्दाविस्सदि, एदस्स तहिं गोवाएमि—जहिं पारावदं उज्झिअ (३७) अस्सो को वि ण पेक्खिस्सदि । (थ)

[ इति द्रुतपदं निष्क्रान्तः । ]

मिश्र। अह्मो ! अस्ससंकन्तहिअओवि पढमसम्भावणं रक्खदि थिरसोहिदो (३८) दाव एसो । (त)

(थ) आत्मानमपि किमिति न भणसि ? यदि भवान् अन्तःपुरकूटवागुरातो मोच्यते, तदा मां मेघच्छन्नप्रासादे शब्दायिष्यते, इदञ्च तत्र गोपायामि—यत्र पारावतमुज्झित्वा अन्यः कोऽपि न प्रेक्षिष्यते ।

(त) अहो ! अन्यसंक्रान्तहृदयोऽपि प्रथमसम्भावनं रक्षति, स्थिरसौहृदस्तावत् एषः ।

---

न भणसि ?—न कथयसि ? न केवलं प्रतिकृतिरेव रक्षणीया, अपि तु आत्मापि रक्षणीय इत्यर्थः । अत्र आत्मशब्देन राजा विदूषकश्च इत्युभावेव गृह्येते । अनेन खलु प्रतिकृतिरक्षणेन उभयमपि रक्षितं भवतः इति भावः । देव्यामागतायामात्मनोऽपि कीदृशी दशा भविष्यति, तदपि चिन्त्यतामिति तात्पर्य्यम् ] ।

(३७) अन्तःपुरकूटवागुरातः,—अन्तःपुरम् अन्तःपुरवर्त्तिनी स्त्री, तस्याः कूटं माया, तदेव वागुरा बन्धनजालम् । [ यद्यपि वागुराशब्दः मृगबन्धनजालमात्रवाची तथापि अत्र लक्षणया सामान्यबन्धनजालं बोधयतीति बोध्यम् ; अथवा अन्तःपुरम् अवरोधवर्त्तिनी रमणी लक्षणया बोध्यते । "ताच्छ्यात्" इति क्षीरस्वामी । तदेव कूटवागुरा यन्त्रमयमृगबन्धनी,—"कूटं यन्त्रेऽनृते राशौ" इति विश्वः । तस्याः इत्यपादानपञ्चम्याः तसिल्प्रत्ययः । एकदेशविवर्त्तिरूपकम् । अनेन राज्ञोऽपि मृगरूपत्वं गम्यते । अत्र "अन्तःपुरकालकूटात्" इति पाठे—अन्तःपुरमेव कालकूटं विषं यस्यास्वादनेन विषयिणः लुप्तचेतनाः भवन्ति तस्मादित्यर्थः ] । मोच्यते—परित्राणं प्राप्स्यति [ कर्मकर्त्तरि लृट् ] । मेघच्छन्नप्रासादे—मेघच्छन्नो नाम दिग्दर्शनार्थमत्युन्नतप्रासादः राजसदनविशेषः, तत्र । मेघैरिव छन्नः मेघच्छन्नः, मेघच्छन्नवत् निर्मितः अतः तस्य मेघच्छन्नसंज्ञेति भावः । [ तस्य च मेघच्छन्नतया गोपनस्थानत्वं सूचितम् ] । शब्दायिष्यते—आकारयिष्यति । गोपायामि—प्रच्छादयामि, पारावतम् उज्झित्वा—कपोतमन्तरेण, यत्र केवलं कपोता एव गन्तुमर्हन्ति इत्यर्थः । [ अनेन अत्युन्नत्यं निर्जनत्वं दुरभिगम्यत्वञ्च व्यज्यते ] ।

(३८) अन्यसंक्रान्तहृदयः,—अन्यस्यां कान्तायां शकुन्तलायामिति भावः,

प्रतिहारी। [पत्रहस्ता प्रविश्य]। जेदु जेदु देवो। (थ) (३९)

राजा। वेत्रवति ! न खलु अन्तरे (४०) त्वया दृष्टा देवी ?

प्रती। देव ! दिट्ठा, पत्तहत्थं मं पेक्खिअ पडिणिउत्ता। (द)

राजा। कार्य्यज्ञा देवी कार्य्योपरोधं (४१) मे परिहरति।

प्रती। देव ! अमच्चो विण्णवेदि—अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं, तं देवो पत्तारोविदं पच्चक्खीकरेदु त्ति। (ध) (४२)

राजा। इतः पत्रं दर्शय।

[प्रतीहारी उपनयति।]

(थ) जयति जयति देवः।

(द) देव ! दृष्टा, पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता।

(ध) देव ! अमात्यो विज्ञापयति—अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितं, तत् देवः पत्रारोपितं प्रत्यक्षीकरोत्विति।

संक्रान्तं आसक्तं हृदयं यस्य तादृशः। प्रथमसम्भावनं—पूर्वप्रणयं, पूर्वस्त्रीप्रेमेत्यर्थः। स्थिरसौहृदः,—स्थिरं दृढं सौहृदं प्रणयो यस्य तथाभूतः, अविचलितप्रणयः, न अस्य प्रणयभङ्गो जायते इति भावः। [अनेनास्य दाक्षिण्यं व्यज्यते। अत्र 'शिथिलसौहृद इदानीम्" इति पाठे—सम्प्रति देव्यागमनश्रवणेन प्रणयस्य शैथिल्यं जातम् इत्यर्थः ]।

(३९) अत्युन्मनायिते नृपे अन्तरा तं प्रकृतिमापाद्य स्वकर्त्तव्यनिष्ठताप्रदर्शनेन राज्ञः औचित्यं प्रख्यापयितुं पत्रारोपितवणिग्व्यसनवृत्तान्तरूपसमुत्कटोद्दीपनेन स्वस्यापि अनपत्यतां तदनु च आपन्नसत्त्वां स्वेनैव प्रत्याख्यातां प्रियतमां शकुन्तलां स्मारयित्वा शापसम्भ्रमजनितप्रवासविप्रलम्भाख्यशृङ्गाररसं सुतरां परिपोष्य सामाजिकानां चेतसि चमत्कारातिशयं सम्पादयितुमेव प्रतीहार्य्याः प्रवेशः कारितः कविना इति विभावनीयम्।

(४०) अन्तरे—मध्ये, वर्त्मनि इति शेषः।

(४१) कार्य्यज्ञा—कार्य्यगौरवज्ञा, कार्य्यावसरज्ञा वा इत्यर्थः, कार्य्योपरोधं—कार्य्यव्याघातम्।

(४२) 'अमात्यो विज्ञापयति' इत्यस्य वक्ष्यमाणं 'प्रत्यक्षीकरोतु इति' एतत् वाक्यं

राजा। [ वाचयति। ] विदितमस्तु देवपादानां, धनवृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः, स चानपत्यः, तस्य चानेककोटिसंख्यं वसु, तदिदानीं राजस्वताम् आपद्यते, इति श्रुत्वा देवः प्रमाणमिति। (४३) [ सविषादम्। ] कष्टं खलु अनपत्यता!! वेत्रवति! महाधनतया बहुपत्नीकेनानेन

---

कर्म। अद्य—भवदनुपस्थितिदिवसे, राज्यकार्य्यस्य—राज्यरक्षणहेतुभूतसामादिकार्य्यस्य, बहुलतया—आतिशय्येन, एकमेव—एकमात्रं, पौरकार्य्यं—पुरवासिनां कार्य्यं (पौरस्य राज्यान्तर्निहितत्वे बहुभिरनङ्गीकृततया पौरकार्य्यस्य राज्यकार्य्यात् पृथग् निर्देशः)। यद्यपि वक्ष्यमाणवणिग्वृत्तान्तोऽपि प्रकृतिकार्य्यतया राज्यकार्य्यमेव, तथापि स्वप्रकृतिपुञ्जेष्वेवास्य वणिजोऽन्तर्भुक्तत्वात् तस्य कार्य्यं पौरकार्य्यत्वेनोक्तम्। [ अत्र "अर्थजातस्य गणनाबहुलतया" इति पाठान्तरे—राज्ञे प्रदेयस्य करकपधनजातस्य गणनाबहुलतया सङ्ख्याकार्य्यबाहुल्येन इत्यर्थः ]। प्रत्यक्षीकरोतु—पश्यतु इत्यर्थः।

(४३) अमात्योक्तमाह, विदितमिति।—देवपादानां—नृपचरणानाम्, [अत्र पादशब्दः गौरवातिशयसूचकः। विदितमिति।—[वर्त्तमाने क्तप्रत्ययात् कर्त्तरि षष्ठी]। वारिपथोपजीवी—वारिपथः वारिणः पन्थाः ["ऋक्पूरब्धूःपथाम्—" (५।४।७४ पा०) इति समासान्तः अच्प्रत्ययः ] जलपथः, तेन उपजीवति वाणिज्येन वर्त्तते इति तथोक्तः। नौव्यसनेन—नावः व्यसनं भ्रंशः, जलमज्जनमिति यावत्;—"व्यसनं विपदि भ्रंशे दोषे कामजकोपजे" इत्यमरः। विपन्नः,—मृतः। अनपत्यः,—न पतति वंशो येन जातेन तदपत्यं, नास्ति अपत्यम् यस्य सः, निःसन्तान इत्यर्थः। अनेकेति।—अनेका बह्व्यः कोटयः शतलक्षमिताः संख्या यस्य तादृशं, वसु—धनम् "रिक्थमृक्थं धनं वसु" इत्यमरः; वर्त्तते इति शेषः। राजस्वतां—राजधनत्वं, राजगामित्वम् इत्यर्थः। अत्र "अनपत्य" इत्यनेन राजपूर्वाधिकारि साकल्यमुपलक्ष्यते, "इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृपः" इति मनुस्मरणात्। अस्यापि वणिजः ब्राह्मणादितरवर्णतया सकलाधिकार्य्यभावे धनं राजगामि भवितुमर्हति इति मन्त्रिणः अभिप्रायः। देवः प्रमाणं—राजा यथोचितकर्त्तव्यत्वनिश्चयकृत्; यद् भवते रोचते तथा क्रियतामित्यर्थः।

(४४) पत्राकूतादृशवणिग्वृत्तान्तश्रवणेन स्वस्यापि अनपत्यतामनुस्मृत्य आह, कष्टमिति।—अनपत्यता—निरन्वयत्वमिति भावः। महाधनतया—बहुधनतया,

भवितव्यं, तदन्विष्यतां यदि काचिदापन्नसत्त्वा अस्य भार्य्या स्यात्। (४४)

प्रती। दाणिं ज्जेव साकेदउरस्स सेट्ठिणो दुहिदा णिव्वुत्त-पुंसवणा (४५) तस्स जाआ सुणीअदि। (न)

राजा। स खलु गर्भः पित्र्यमृक्थमर्हति, (४६) गत्वैव-ममात्यं ब्रूहि।

प्रती। जं देवो आणवेदि। (प)

[ इति प्रस्थिता ]।

राजा। एहि तावत्।

प्रती। [ प्रतिनिवृत्य। ] एसाह्मि। (फ)

(न) इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निर्वृत्तपुंसवना तस्य जाया श्रूयते।

(प) यद्देव आज्ञापयति।

(फ) एषास्मि।

धनिकतया इत्यर्थः। बहुपत्नीकेन—बह्व्यः पत्न्यः भार्य्या यस्य तेन ["नद्यृतश्च" ( ५।४।१५६ पा० ) इति कप्प्रत्ययः, पुंवद्भावश्च ]। आपन्नसत्त्वा—गर्भिणी; अस्य वणिजः भार्य्या स्यात्। [ तथा च कृतयुगे मानवधर्म्मस्य धर्म्मप्रमाणतया मनुना च दायाधिकारक्रमे पत्न्यधिकारः नोल्लिखितः इति भार्य्यासत्त्वेऽपि गर्भान्वेषणं राज्ञा कृतं, मन्त्रिणा च पूर्वं तस्यानुसन्धानमकृत्वैव वणिग्धने राज्ञोऽधिकारः निरूपितः, इति सुष्ठु नृपामात्ययोः भेदः प्रदर्शितः कविना ]।

(४५) साकेतपुरस्य—अयोध्यायाः,—"स्यात् साकेतोऽयोध्यायाम्" इति हैमः। श्रेष्ठिनः,—वणिजः। निर्वृत्तपुंसवना—निर्वृत्तं सञ्जातं पुंसवनं—गर्भिण्याः तृतीय-मासकर्त्तव्यः गर्भपात्रसंस्कारविशेषः, यस्याः तादृशी। [ पुंसवनसंस्कारेण पुत्रीकरणत्व-श्रुतेः निर्वृत्तपुंसवना इत्यनेन अवश्यमेवास्याः पुत्रोत्पत्तिसम्भावना सूच्यते ]।

(४६) स खलु—स एव, गर्भः,—उदरस्थः शिशुः, पित्र्यं—पितृसम्बन्धि, पितु-रागतं वा [यत्प्रत्ययः]। ऋक्थं—धनम्, अर्हति—अधिकरोति। तथा च गौतमः, —"उत्पत्त्यैवार्थं स्वामित्वात् लभेत" इति।

राजा। किमनेन सन्ततिरस्ति नास्तीति ? (४७)—

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना।
स स पापादृते तासां दुष्मन्त इति घुष्यताम् (४८)॥२५॥

प्रती। एदं णाम घोसइदव्वं। [इति निष्क्रम्य पुनः प्रविश्य।] देव ! काले पविट्टं विअ अहिणन्दिदं देवस्स सासणं महाजणेण। (ब) (४९)

(ब) एतन्नाम घोषयितव्यम्। देव ! काले प्रहृष्टमिव अभिनन्दितं देवस्य शासनं महाजनेन।

(४७) गर्भः पितृधनमर्हति, गर्भाभावे राज्ञ एवाधिकार इत्येवमनुसन्धानन्तु निगूढ़स्वार्थपरतादोषकलङ्कितमिति पूर्वोक्तमाक्षिप्याह, किमिति।—सन्ततिः,— सन्तानः। 'अस्ति नास्ति इति'—अनेन—इत्थम् अनुसन्धानेन, किम् ?—नास्ति-प्रयोजनमित्यर्थः।

(४८) तदा किं कर्त्तव्यम् ? इति स्वाभिप्रेतं कर्त्तव्यमाह, येनेति।—प्रजाः जनाः, ("प्रजा स्यात् सन्ततौ जने" इत्यमरः) येन येन स्निग्धेन स्नेहकारिणा बन्धुना स्वजनेन, पुत्रादिना इत्यर्थः, वियुज्यन्ते विरह्यन्ते, पापात् पापीयसः, अथवा—पापजनकात् व्यापारात् स्त्रीणां स्वामित्वादिरूपात्; ऋते विना ["अन्या-रादितरर्त्ते—" (२।३।२९ पा०) इति ऋतेशब्दयोगे पापशब्दात् पञ्चमी] तासां प्रजानां, स स बन्धुः, दुष्मन्तः इति घुष्यतां उच्चैः प्रख्याप्यताम्। [एतेन धनवृद्धि-नाम्नो वणिजः परिजनानाम् अहमेव प्रभुकार्य्यं करिष्यामि, न ते अनाथत्वदुःखं प्राप्नुवन्तु, शैशवपर्य्यन्तञ्च धनजातं मदायत्तं तिष्ठतु, यथा च अन्यः कोऽपि नापहर्त्तुं शक्नोति इति सूचितमिति भावः। बालस्य--"बालदायादिकं रिक्थं ताव-द्राजाऽनुपालयेत्। यावत् स स्यात् समावृत्तो यावच्चातीतशैशवः"॥ इति मनुस्मरणात्। [अनया च घोषणया नृपस्य सर्व्वजनीनत्वप्रख्यापनात् नायकगतोत्कर्षातिशयः ध्वन्यते। अत्र दुष्मन्तस्य तेन तेन बन्धुना सह अभेदारोपात् रूपकालङ्कारः]। पथ्यावक्त्रं वृत्तम् ॥२५॥

(४९) काले—अपेक्षितसमये। प्रहृष्टमिव—प्रकृष्टं वर्षणमिव। अभिनन्दितं—समादृतम्। देवस्य—राज्ञः, शासनम्—आदेशः, महाजनेन—साधुजनेन इत्यर्थः। [अत्रोपमाऽलङ्कृतिः]।

राजा। [दीर्घमुष्णञ्च निश्वस्य।] एवं भोः सन्ततिच्छेदनिरवलम्बना मूलपुरुषावसाने सम्पदः परम् उपतिष्ठन्ते, ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः। (५०)

प्रती। पड़िहदं अमङ्गलं। (भ) (५१)

राजा। धिङ्मामुपनतश्रेयोऽवमानिनम्! (५२)

मिश्र। असंसअं पिअसहीं ज्जेव हिअए कदुअ णिन्दिदो अणेण अप्पा। (म) (५३)

(भ) प्रतिहतम् अमङ्गलम्।

(म) असंशयं प्रियसखीमेव हृदये कृत्वा निन्दितोऽनेनात्मा।

(५०) वणिग्वृत्तान्तपर्य्यालोचनेन स्वस्यापि अनपत्यतामनुस्मृत्य सखेदमाह, एवमिति।—सन्ततीनां सन्तानानां छेदात् विरहात्, निरवलम्बना निराश्रयाः, अस्वामिका इत्यर्थः। मूलपुरुषावसाने—मूलपुरुषस्य धनिनः, अवसाने—मरणे, एवम्—इत्थं, धनवृद्धिधनवत् इत्यर्थः। सम्पदः,—धनानि, परम्—तदितरम्, अन्यम् इत्यर्थः, उपतिष्ठन्ते—संगच्छन्ति, आश्रयन्ति इत्यर्थः। [अत्र "उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्" इति वार्त्तिकसूत्रेण सङ्गतिकरणार्थत्वात् आत्मनेपदम्।] ममापि अन्ते—विनाशे, पुरुवंशश्रियः,—पुरुकुलसम्पदः, एष—ईदृशः, वृत्तान्तः,—प्रकारः, गतिरिति यावत्, धनवृद्धिधनवत् मदितरमेव समाश्रयिष्यन्ति इत्यर्थः। ("वृत्तान्तः स्यात् प्रकरणे प्रकारे कार्त्स्नवार्त्तयोः" इत्यमरः।) [अत्र 'ममाप्यन्ते' इत्यनन्तरं—"पुरुवंशश्रीरकाल इवोप्तबीजा भूरेवं वृत्ता" इति पाठे,—अकाले—अनपेक्षितसमये, उप्तबीजा—प्रोथितशस्या, भूः,—भूमिरिव, एवम्—इत्थं, पुरुवंशश्रीः,—पौरवकुलसम्पत्तिः, वृत्ता—संवृत्ता इत्यर्थः; अत्र च उपमाऽलङ्कारः]।

(५१) प्रतिहतं—नष्टं, भवत्विति शेषः।

(५२) उपनतश्रेयोऽवमानिनम्—उपनतम् उपस्थितं श्रेयः मङ्गलं, ससत्त्वशकुन्तलारूपम् इति भावः, अवमन्यते निराकरोतीति तथोक्तम्। धिक्—निन्दामि इत्यर्थः;—"धिङ् निर्भर्त्सननिन्दयोः" इत्यमरः। [धिक्शब्दयोगे द्वितीया]।

(५३) असंशयं—निश्चितमेव। प्रियसखीं—शकुन्तलां, हृदये कृत्वा—ताम् उद्दिश्य, स्मृत्वा वा, अनेन आत्मा 'निन्दितः'—तिरस्कृतः,—इति योजना।

राजा। संरोपितेऽप्यात्मनि धर्म्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तवीजा (५४) ॥२६॥

मिश्र। अपरिच्चत्ता दाणिं दे भविस्सदि। (य) (५५)

(य) अपरित्यक्तेदानीं ते भविष्यति।

(५४) संरोपित इति।—काले योग्यसमये, उप्तानि निहितानि वीजानि यस्यां तथाभूता, अत एव महते प्रभूताय फलाय फलोत्पत्तये इत्यर्थः [ "क्लृपि सम्पद्यमाने च" वा० इति चतुर्थी ] कल्पिष्यमाणा सम्पत्स्यमाना इत्यर्थः, वसुन्धरा प्रभूतरत्ननिलया पृथिवी इव ; [ अत्र पृथिव्यादिपदमपहाय वसुन्धरेति विशेषवाचकपदाभिधानात् उपमेयभूतायामपि शकुन्तलायां सादृश्यसम्बन्धेन रत्नोपमविनयौदार्य्यधैर्य्यसौन्दर्य्यादि-रमणीललामगुणगणप्राचुर्य्यं ध्वन्यते ; ध्वन्यते चात्र शकुन्तलागर्भनिहितः अतुल्य-वसुप्रतिमः शिशुश्च। ] मया तादृशधार्म्मिकेण तादृशसावधानेन च, आत्मनि संरोपिते गर्भरूपेण सम्प्रवेशितेऽपि, ( "आत्मा वै जायते पुत्रः" इति श्रुतेः ; "पतिर्जायां सम्प्रविश्य गर्भो भूत्वेह जायते" इति स्मरणाच्च ) कुलप्रतिष्ठा कुलस्य वंशस्य प्रतिष्ठा गौरवं स्थितिर्वा यस्यां तादृशी, पुत्रप्रसूतत्वादिति भावः, वंशकीर्त्तिरूपा इत्यर्थः ; धर्म्मस्य पत्नी धर्म्मपत्नी, [अश्वघासादिवत् समासः] वैदिकविधानेन परिणीता शकुन्तला इत्यर्थः, त्यक्ता अवधीरिता, न तु परित्यक्ता इत्यर्थः। नाम इति सम्भावनायाम्। [ अनेन विशेषणद्वयेन सर्वथा त्यागानर्हत्वं सूचितम्। अत्र काले उप्तवीजा अत एव महते फलाय कल्पिष्यमाणा इति हेतुहेतुमद्भावात् पदार्थहेतुकं काव्यलिङ्गं, तथा परस्परसादृश्यनिबन्धनः उपमाऽलङ्कारश्च ; अनयोः मिथः व्यपेक्षमाणत्वात् साङ्कर्य्यम् ]। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥२६॥

(५५) शकुन्तलायाः स्वावासावस्थानं राज्ञश्च ईदृशानुरागं विभाव्य आह, अपरि-त्यक्तेति।—भवान् पुनः तां लप्स्यते इत्यर्थः। [ अत्र "अपरिच्छिण्णा दाणिं दे संददी भविस्सदि" इति पाठे—"अपरिच्छिन्नेदानीं ते सन्ततिः भविष्यति इति ( सं )। अपरिच्छिन्ना—विच्छेदरहिता, ते—तव, सन्ततिः,—सन्तानः, भविष्यति ; तव अनपत्यतानिबन्धनः पश्चात्तापः कदापि नास्ति इत्यर्थः।

चेटी । [ जनान्तिकम् । ] अज्जे ! एदं पत्तं पेसअन्तेण किं विआरिदं अमच्चेण ? पेक्ख दाव भट्टिणो बाहजलप्पबाहो संवुत्तो, अधवा ण एसो सोअं बुद्धिपुव्वअं पड़िवज्जिस्सदि, ता मेह-च्छन्नागारट्ठिदं णिव्वाणसमत्थं (५६) अज्जमाधव्वं गेह्णिअ आअच्छ । (र)

प्रती । सुट्ठु तुए भणिदं । (ल)

[ इति निष्क्रान्ता ] ।

राजा । अहो ! दुष्मन्तस्य संशयमारूढ़ाः पिण्डभाजः !! (५७) कुतः ?—

(र) आर्य्ये ! एतत् पत्रं प्रेषयता किं विचारितम् अमात्येन ? प्रेक्षस्व तावत् भर्त्तुः वाष्पजलप्रवाहः संवृत्तः, अथवा नैष शोकं बुद्धिपूर्वकं परिवर्जयिष्यति, तत् मेघच्छन्नागारस्थितं निर्वाणसमर्थम् आर्य्यमाधव्यं गृहीत्वा आगच्छ ।

(ल) सुष्ठु त्वया भणितम् ।

(५६) किं विचारितम्—किं विवेचितम् ? न सुष्ठु विवेचना कृतेत्यर्थः । वाष्पेति ।—वाष्पजलस्य नयनजलस्य प्रवाहः प्रवृत्तिः, ( "प्रवाहस्तु प्रवृत्तौ स्यादपि स्रोतसि वारिणः" इति मेदिनी ) । न तु स्रोतोरूपोऽर्थः, तथात्वे धैर्य्यच्युतिप्रसङ्गेन धीरो-दात्तत्वहानिः स्यात् । [ न चात्र वाष्पपदेनैव नयनजलार्थबोधनात् जलपदो-पादाने अर्थगतपौनरुक्त्यं शङ्कनीयम् ; धनुर्ज्यादिपदवत् तत्परिहारात् ] । समुप-स्थिते शोके अलमिह मन्त्रिनिन्दया ? 'उपाय एव चिन्त्यः' इति पूर्वोक्तमाचि-ख्याह, अथवेति ।—बुद्धिपूर्वकं—स्वबुद्ध्या, आत्मविवेचनया इत्यर्थः । परिवर्जयि-ष्यति—परित्यक्ष्यति । निर्वाणसमर्थं—प्रशमनपटुं, शोकस्य इति शेषः । [ अत्र निर्वाणपदोपादानात् शोकस्य अनलरूपता व्यज्यते ] ।

(५७) अहो ! इति—विस्मयसूचकमव्ययम् । दुष्मन्तस्य—मम, [ समुपस्थितश्रेयो-ऽवमानिनः मन्दभाग्यस्य इत्याद्यर्थान्तरसंक्रमितवाच्यत्वम् ; अत एव निर्विशेषणनामो-ल्लेखनम् ] । संशयमारूढ़ाः,—"अतः परं वयं पितरः पिण्डं लभेमहि न वा ?" इति सन्देहं गता इत्यर्थः ; पिण्डदाभावादिति भावः । पिण्डभाजः,—पिण्डं आत्मीय-मन्नं भजन्ते अर्हन्तीति तथोक्ताः, पितर इत्यर्थः ।

अस्मात् परं बत यथाश्रुति संहितानि
को नः कुले निवपनानि करिष्यतीति।
नूनं प्रसूतिविकलेन मया प्रसिक्तं
धौताश्रुसेकमुदकं पितरः पिबन्ति (५८) ॥२७॥

(५८) संशयवीजं दर्शयति, अस्मादिति।—बत खेदे। अस्मात् दुष्मन्तात् परम् अवसानानन्तरं, नः अस्माकं कुले, कः यथाश्रुति वेदानतिक्रमेण [अनतिक्रमार्थे अव्ययीभावः] संहितानि सम्प्रयुक्तानि [अत्र "संभृतानि" इति पाठे,—बहुप्रकरणयुक्तानि इत्यर्थः] निवपनानि पित्रर्थदानानि श्राद्धानीत्यर्थः, ("पितृदानं निवापः स्यात्" इत्यमरः) करिष्यति [अत्र "नियच्छति" इति पाठे—नियच्छति ददाति, दास्यतीत्यर्थः। "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१ पा०) इति लट्। अस्मिन्नर्थे निवपनशब्दस्य पितृदानार्थतया पुनः दानार्थकक्रियाप्रयोगे अर्थगतपौनरुक्त्यं स्यात्, निवपनशब्दस्य लक्षणया तर्पणजलादिपरत्वे लक्षणैव दोषः इति विभावनीयम्।] इति हेतोः, नूनम् उत्प्रेक्षे; पितरः प्रसूतिविकलेन अनपत्येन मया प्रसिक्तं दत्तमित्यर्थः, उदकं तर्पणजलमिति यावत्, धौतः क्षालितः [धावधातोः क्ते ऊठि "एत्येधत्यूठ्सु" (६।१।८९ पा०) इति वृद्धिः] अश्रूणां स्वनयनजलानां सेकः येन, तत् यथा तथा इत्यर्थः, पिबन्ति। तथा च पितरः मत्परं पिण्डदाऽभावमुत्प्रेक्ष्य शोकजनितवाष्पप्रवाहेण गण्डं तदनु अधरमपि प्लावयिष्यन्ति; मदर्पिततर्पणजलमासाद्य च अमेध्यं तमश्रुप्रवाहं प्रक्षाल्य अवशिष्टं पास्यन्ति; इत्यहो! दूरमास्तां जलपानजनिततृषानिवृत्तिकथा, परन्तु शोकजनितसन्तापः हृदयदाहकरः तेषाम् इत्यर्थः। [अत्र "धौताश्रुशेषम्" इति पाठे—धौतम् अश्रु येन, तच्च तच्छेषश्चेति तादृशम् इत्यर्थः; स्वकरेणैव नयनजलमार्जनात् जलादानसमये प्रक्षाल्य तत् अवशिष्टं पिबन्ति, तेन च तस्य स्वल्पत्वेन पिपासानिवृत्तिः दुर्लभा इति भावः। एषोऽर्थ एव प्रकटीकृतो यथा,—"मत्परं दुर्लभं मत्वा नूनमावर्ज्जितं मया। पयः पूर्वैः स्वनिश्वासैः कवोष्णमुपभुज्यते॥" इति रघुः। अत्र वाच्योत्प्रेक्षा, उत्प्रेक्षाव्यञ्जकनूनमिति पदप्रयोगात्, तथा वाक्यार्थहेतुकं काव्यलिङ्गञ्च अलङ्कारः; अनयोः अङ्गाङ्गिभावेन साङ्कर्यम्। 'दीर्घमुष्णञ्च निश्वस्य' इत्यादिना एतदन्तेन छलनं नामाङ्गं प्रदर्शितम्। तदुक्तं दण्डिना,—"आत्मावसादनं यत्तु छलनं तदुदाहृतम्" इति]। वसन्ततिलकं वृत्तम् ॥२७॥

मिश्र। हद्धी हद्धी, सदि क्खु दीवे व्ववधाणदोसेण अन्धआरं अणुहोदि राएसी ! (व) (५८)

चेटी। भट्टा ! अलं सन्दाविदेण ? वअत्थो ज्जेव पहू अवरासु देवीसु अणुरूवपुत्तजम्मेण पुव्वपुरुसाणं अणिणो (६०) भविस्सदि। [आत्मगतम्।] ण मे वअणं पड़िच्छदि,—अणुरूवम्पि ओषधं आदङ्कं णिअत्तेदि। (श) (६१)

(व) हा धिक् हा धिक् ! सति खलु दीपे व्यवधानदोषेण अन्धकारमनुभवति राजर्षिः !

(श) भर्त्तः ! अलं सन्तापितेन ? वयःस्थ एव प्रभुः अपरासु देवीषु अनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणी भविष्यति। न मे वचनं प्रतीच्छति,—अनुरूपमपि औषधमातङ्कं निवर्त्तयति।

(५८) सति खलु दीपे—प्रदीपे वर्त्तमाने। व्यवधानदोषेण— व्यवधानं देशान्तरेण अपवारकादिना च स एव दोषः तेन, अन्धकारं—तमः, तिमिरजनितं वस्तु-दर्शनरूपं दोषं वा अनुभवति। [अत्र "सत्यामपि ससत्त्वायां शकुन्तलायां देशान्तर-व्यवधानदोषेण तददर्शनदुःखमनुभवति" इति विशेषे प्रस्तुते वक्तव्ये अप्रस्तुतेन दीपादिना तस्य कथनात् अप्रस्तुतप्रशंसाऽलङ्कारः]।

(६०) प्रभुः,—देवः। वयसि यौवने तिष्ठतीति वयःस्थः युवा, पुत्रोत्पादनसमर्थः इत्यर्थः,—("वयःस्थः तरुणो युवा" इत्यमरः)। अनुरूपपुत्रजन्मना—स्वसदृशपुत्रोत्पत्त्या, पूर्वपुरुषाणां—पितॄणाम्, अनृणः—ऋणविमुक्तः,—"एष वै अनृणी यः पुत्री यज्वा ब्रह्मचारी च, ब्रह्मचर्य्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" इति श्रवणात् ; "ऋणं देवस्य यागेन ऋषीणां दानकर्म्मणा। सन्तत्या पितृलोकानां शोधयित्वा परिव्रजेत् ॥" इति स्मरणाच्च।

(६१) नीचजनतया स्ववाक्यं नास्मै रोचत इति मत्वा आह, न मे इति।—प्रतीच्छति—गृह्णाति, शृणोतीत्यर्थः। अनुरूपम्—उपयुक्तम्, औषधं—भेषजम्, आतङ्कं—रोगं, निवर्त्तयति—निवारयति, शमयिष्यति इत्यर्थः, [वर्त्तमानसामीप्ये लट्। अत्र "भवदनुरूपो माधव्य एव नाहम्" इति प्रस्तुते विशेषे वक्तव्ये अप्रस्तुत-मुखेनाभिधानात् अप्रस्तुतप्रशंसाऽलङ्कारः]।

राजा। [शोकनाटितकेन।] (६२)

**आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजाबन्ध्ये।**

**मय्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः (६३) ॥२८॥**

[इति मोहमुपगतः]।

चेटी। [ससम्भ्रमम्।] **समस्ससदु समस्ससदु भट्टा! (ष)**

मिश्र। **किं दाणिं ज्जेव णिव्वुदं करेमि? अहवा सुदं मए सउन्तलं समास्सासअन्तीए देवजणणीए मुहादो—जसभाअ-**

(ष) समाश्वसितु समाश्वसितु भर्त्ता।

(स) किमिदानीमेव निर्वृतं करोमि? अथवा श्रुतं मया शकुन्तलां समा-

(६२) शोकनाटितकेन—शोकमभिनीयेत्यर्थः।

(६३) आमूलेति।—आ मूलात् आदितः,—एकत्र आदिपुरुषाच्चन्द्रमसः, अन्यत्र—आदिकालात् प्रथमप्रादुर्भावसमयात्; शुद्धा—दोषरहिता, निषेकादिसंस्कारपरिपूता वा, अन्यत्र—पवित्रा; सन्ततिः,—पुत्रपौत्रादीनां परम्परा, अन्यत्र—धारा;—("सन्ततिस्तु तनये दुहितर्य्यपि। परम्पराभवे पङ्क्तौ गोत्रविस्तारयोरपि॥" इति हैमः) यस्य तादृशम्; एतत् पौरवं पुरुसम्बन्धि कुलं पुरुवंशः, अन्यत्र—भूयिष्ठम्; ("प्रभूतं पुरु भूयिष्ठम्" इत्यमरः) सरस्वत्याः नद्याः स्रोत इव प्रवाह इव प्रजाबन्ध्ये निरपत्ये, अन्यत्र—जनशून्ये;—("प्रजा स्यात् सन्ततौ जने" इत्यमरः); अनार्य्ये अभद्रे, अन्यत्र—आर्य्यजातिरहिते अगम्ये म्लेच्छजनाध्युषिते वा, [ऋधातोः गत्यर्थात् ण्यत्प्रत्ययः, ततः नञ्समासः] देश इव, मयि अस्तमितं विलुप्तम्, अन्यत्र—शोषं गतम्। [अत्र उपमानोपमेय-सादृश्यनिबन्धना श्रौती पूर्णोपमा; सा च पौरवप्रभृतिश्लिष्टपदसद्भावात् श्लेषसङ्कीर्णा। अत्र च 'संरोपिते' इत्यादिना एतदन्तेन उपान्त्यकामदशा मूर्च्छारूपा प्रदर्शिता। चरमदशा तु मरणरूपा नाटके प्रतिषिद्धत्वात् प्रत्युज्जीवनं विना अवर्णनीयत्वाच्च नैव वर्णिता कविना। अत्रैव कामावस्थावर्णना परिसमापिता। यथा चोक्तं,—"रसविच्छेदहेतुत्वात् मरणं नैव वर्ण्यते। जातप्रायन्तु तद्वाच्यं चेतसा काङ्क्षितं तथा। वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः॥" इति। कामावस्था दशविधाश्च प्रागेव दर्शिताः, तत्र द्रष्टव्याः]। आर्य्या जातिः ॥२८॥

(६४) राज्ञः शकुन्तलाविरहेण तादृशीमतिशोचनीयामुपान्त्यदशाम् अवलोक्य मर्म्मणि भृशं ताड़ितेवाह,—किमिति।—निर्वृतं—सुखितं, शकुन्तलावृत्तान्तख्यापनेन

समुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति, जह सो भट्टा अइरेण धम्मपदिणीं तुमं अहिणन्दिस्सदि त्ति। (६४) ता ण जुत्तं मे एत्थ विलम्बिदुं, जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समस्सासेमि। (स)

[ इति उद्भ्रान्तकेन (६५) निष्क्रान्ता ]।

[ नेपथ्ये। ] भो अव्वह्मणं अव्वह्मणं !! (ह) (६६)

आश्वसन्त्या देवजनन्या मुखात्—यज्ञभागसमुत्सुका देवा एव तथाऽनुष्ठास्यन्ति, यथा स भर्त्ता अचिरेण धर्मपत्नीं त्वामभिनन्दिष्यतीति। तन्न युक्तं मेऽत्र विलम्बितुं; यावत् अनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि।

(ह) भो अब्रह्मण्यम् अब्रह्मण्यम् !!

इति शेषः। मयैव शकुन्तलावृत्तान्तमुक्त्वा सहसा समाश्वासने राज्ञः तत्र अविश्वासः सम्भाव्येत इति पूर्वोक्तमाक्षिप्याह, श्रुतमिति।—देवजनन्याः,—देवानां मातुरदितेः इत्यर्थः। यज्ञभागसमुत्सुकाः,—यज्ञभागाय समुत्सुकाः, यज्ञाभिलाषिणः इत्यर्थः, [ अत्र "यज्ञभागेन" "यज्ञभागे" वा समुत्सुकाः, इति विगृह्णते केचित्। तन्न, समुत्सुकशब्देन तृतीया सप्तम्योः अप्राप्तेः। ] "सस्त्रीको धर्ममाचरेत्" इति शास्त्रात्, सस्त्रीकेण राज्ञा दुष्मन्तेन दास्यमानयज्ञांशकामित्वेन देवानामेतत्समागमस्य शीघ्रसम्पादनीयत्वादिति भावः। अथवा—'पुत्रदारैः चिरं वियुक्ते राज्ञि दुष्मन्तात् परम् अराजके अस्मिन् भूमण्डले रक्षकाभावात् प्रजानां धर्मविमुखितत्वाच्च स्वभोग्य-यज्ञांश एव दुर्लभो भविष्यति, अधुनाऽपि दुर्मनायमानत्वात् राज्ञः औदासीन्येन यज्ञानुष्ठानसम्भावना दुरापा' इति समागमस्य शीघ्रसम्पादनीयत्वं देवनामिति भावः। [ अनेन वाक्येन मातलिप्रवेशः अनन्तरभाव्यः सूचितः ]। अचिरेण—अविलम्बमेव, धर्मपत्नीं—परिणीतां पत्नीमित्यर्थः, अभिनन्दिष्यति—आदरिष्यते। [अनेन 'भर्त्ता शकुन्तलाम् अभिनन्दिष्यति' इति वीजकार्य्यस्य संगृहीतत्वात् आदानं नाम विमर्ष-सन्धेरङ्गमुपक्षिप्तम्। यदाह दर्पणे,—"कार्य्यसङ्ग्रह आदानम्" इति ]।

(६५) उद्भ्रान्तकेन—उद्भ्रान्तकनाम्नोत्प्लुतिकरणेन। तल्लक्षणन्तु सङ्गीतसुधानिधौ,—"पूर्वं दक्षिणमङ्घ्रिमुत्थापयित्वाथ कुञ्चयेत्। वामं शीघ्रं भ्रमद्वामावर्त्तमुद्भ्रान्तकं विदुः॥ देशीविदान्तु केषाञ्चित् वाह्यभ्रमरिका मता॥" इति।

(६६) अब्रह्मण्यम्—अवध्योक्तिविशेषः,—"ब्राह्मणोऽहं न बध्यः परित्राहि माम्"

राजा । [प्रत्यागतचेतनः (६७) कर्णं दत्त्वा ।] अये ! माधव्यस्येवार्त्त-नादः !! (६८)

चेटी । सो णाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे । (क) (६९)

राजा । चतुरिके ! गच्छ, मद्वचनादनिषिद्धपरिजनां देवी-मुपालभस्व । (७०)

[ चेटी निष्क्रान्ता । नेपथ्ये भूयः स एव शब्दः ] ।

राजा । परमार्थतो भीतिभिन्नस्वरो ब्राह्मणः । (७१) कः कोऽत्र भोः ?

(क) स नाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिः चेटिकाभिः चित्रफलकहस्तः प्रापितो भवेत् ।

---

इत्येवं कातरोक्तिरिति यावत्,—"अब्रह्मण्यम् अवध्योक्तौ" इत्यमरः । [ 'ब्राह्मणोचित-कर्म्मणि अहिंसादौ साधुः' इति साधावर्थे "तत्र साधुः" ( ४।४।९८ पा० ) इति सूत्रेण यत्प्रत्ययः, अनन्तरं विरोधार्थक-नञा तत्पुरुषसमासः ] ।

(६७) प्रत्यागतचेतनः,—लब्धसंज्ञः ।

(६८) माधव्यस्येव—विदूषकस्येव, आर्त्तनादः,—कातरस्वरः ।

(६९) नाम इति—सम्भावनायाम् । सः,—मेघच्छन्नप्रासादस्थितः । तपस्वी—वराकः । पिङ्गलिकामिश्रिताभिः,—पिङ्गलिकाप्रभृतिभिः, चेटिकाभिः,—दासीभिः, [कर्त्तरि तृतीया ; वसुमतीम् इति ऊह्यम्] । चित्रफलकहस्तः,—चित्रफलकं हस्ते यस्य तादृशः, [व्यधिकरणबहुव्रीहिः । ] अङ्कितचित्रहस्त इत्यर्थः । प्रापितः,—धृत्वा नीतः । पिङ्गलिकादयः तं गृहीत्वा देवीसकाशं गतवत्यः इत्यर्थः ।

(७०) मद्वचनात्—मद्वचनमाश्रित्य, [ ल्यब्लोपे पञ्चमी ] राजा इदं वक्ति इत्युक्त्वा इत्यर्थः । अनिषिद्धपरिजनाम्—अनिवारितचेटिकामित्यर्थः । देवीं—कृताऽभि-षेकां राज्ञीं, वसुमतीमित्यर्थः ;– "देवी कृताऽभिषेकायाम्" इत्यमरः । उपालभस्व—तिरस्कुरु ; 'एताः प्रगल्भाः परिचारिका ईदृशमन्याय्यं कर्त्तुमुद्यताः त्वया न वारिता' इत्येवम् इत्यर्थः ।

(७१) परमार्थतः,—तत्त्वतः, [ प्रकृत्यादित्वात् तृतीया, ततः सार्वविभक्तिकः

कञ्चुकी। [प्रविश्य।] आज्ञापयतु देवः।

राजा। निरूप्यतां किम् एवं (७२) माधव्यब्राह्मणः क्रन्दतीति।

कञ्चु। यावत् अवलोकयामि।

[इति निष्क्रम्य ससम्भ्रमं पुनः प्रविष्टः]।

राजा। पार्वतायन! न खलु किञ्चिदत्याहितम्? (७३)

कञ्चु। मैवम्।

राजा। ततः कुतोऽयं वेपथुः? (७४) तथाहि,—

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति।
आविष्करोति सर्वाङ्गमश्वत्थमिव मारुतः? (७५) ॥२९॥

कञ्चु। परित्रायतां सुहृदं महाराजः।

राजा। कस्मात् परित्रातव्यः?

तसिल्प्रत्ययः]। भीतिभिन्नस्वरः,—भयविपरीतस्वरः। ब्राह्मणः,—विदूषकः इत्यर्थः, [अनेन सर्वथा रक्षायोग्यत्वं सहजभीतिस्वभावत्वञ्च ध्वनितम्]।

(७२) निरूप्यतां—दृश्यताम्। किं—कुतः, [हेत्वर्थकमव्ययम्]। एवम्—इत्थम्, अब्रह्मण्यमुक्त्वा इत्यर्थः]।

(७३) खलु इति—प्रश्नसूचकम्। अत्याहितम्—महाभयम्।—"अत्याहितं महाभीतिः" इत्यमरः।

(७४) वेपथुः,—गात्रकम्पः, तवेति शेषः। [वेपधातोः ट्वित्वादथुच्प्रत्ययः]।

(७५) वेपथुमेव सकारणं प्रकटयति, प्रागेवेति।—जरसा वार्द्धक्येन, प्रागेव इतः पूर्वमेव कम्पः शरीरस्पन्दः जातः इति शेषः, सम्प्रति अधुना तु समुपस्थित-व्यापारे तु, सविशेषः अत्यर्थः सन्, कम्पः,—मारुतः वायुः अश्वत्थमिव चलपत्रतरुमिव सर्वाङ्गं सर्वावयवं तवेति शेषः, आविष्करोति सर्वावयवावच्छेदेन व्याप्नोतीति यावत्। अश्वत्थस्य तु सहजत एव चापल्यं वायुनोदितस्य सतः अत्यर्थमेव इति सुतरां सादृश्यसद्भावः। आविष्कारस्य प्रकाशार्थत्वात् फलवत्त्वाविवक्षया अकर्मकत्वेन कथमत्र सर्वाङ्गपदस्य कर्मत्वमिति न वाच्यं, "कालाध्वभावदेशानामन्तर्भूतक्रियान्तरैः। सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते"॥ इति प्राचीनोक्तेः। अन्तर्भूतव्याप्तिक्रियायाः कर्मत्वात्। [उपमाऽलङ्कारः]। पथ्यावक्त्रं वृत्तम् ॥२९॥

कञ्चु। महतः कृच्छ्रात्। (७६)

राजा। अये! भिन्नार्थम् (७७) अभिधीयताम्।

कञ्चु। योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम—"।(७८)

राजा। किं तत्र?

कञ्चु।—"तस्याग्रभागाद् गृहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यशृङ्गात्।
सखा प्रकाशेतरमूर्त्तिना ते
केनापि सत्त्वेन निगृह्य नीतः (७९) ॥३०॥

राजा। [सहसा उत्थाय।] आः ममापि सत्त्वैः अभिभूयन्ते गृहाः!! अथवा बहुप्रत्यवायं नृपत्वम्। (८०)—

---

(७६) कृच्छ्रात्—सङ्कटात्।

(७७) भिन्नार्थम्—उद्घाटिततात्पर्य्यं, प्रकाशमित्यर्थः [क्रियाविशेषणमेतत्]।

(७८) दिगिति।—दिगवलोकनप्रासादः,—अवलोक्यते व्यापारः अनेनेति अवलोकनः, स च असौ प्रासादश्चेति, दिशाम् अवलोकनप्रासादः [अनेन इदानीन्तनवत् तदानीमपि प्रजानां गृहदाहादिरूप-झटितिसमुपस्थित-विपत्ति-पर्य्यवेक्षणार्थं प्रासादोपरि गृहनिर्म्माणं प्रथितमासीदिति सूच्यते।] अत्युच्चत्वात् इति भावः, अत एव मेघच्छन्नः मेघैरुपरिगम्यमानत्वात् प्रायेण तथाऽवभासमान इति तथा व्यपदेशः।

(७९) तस्येति।—गृहनीलकण्ठैः गृहपालितमयूरैः, अनेकविश्रामैः पुनः पुनः विश्रामैः, विलङ्घ्यम् अतिक्रमणीयं [तथा च ये हि नियतमभ्यस्तास्समारोढुं, तद्विधा अपि गृहपालिता नीलकण्ठाः पुनः पुनः स्थाने स्थाने विश्रामम् अकृत्वा यत् न आरोढुं अक्षुवन्ति, तादृशमित्यर्थः। अनेन अत्यौन्नत्यं व्यज्यते।] शृङ्गं शिखरं यस्य तथाभूतस्य तस्य मेघच्छन्नप्रासादस्य अग्रभागात् उपरिदेशात् निगृह्य अभिभूय सनिग्रहं गृहीत्वा इत्यर्थः, प्रकाशेतरा गूढा, अलक्ष्या इत्यर्थः, मूर्त्तिर्यस्य तथाभूतेन, विद्याविशेषणान्तरितविग्रहेण इति यावत्, केनापि सत्त्वेन पिशाचादिना ("सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः। पिशाचादौ" इति हेमचन्द्रः) ते तव सखा नीतः स्थानान्तरं प्रापितः इत्यर्थः। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥३०॥

(८०) कञ्चुकिवाक्यमाकर्ण्य क्रुद्धः सन्नाह, आः इति।—आः,—कोपसूचकम् अव्ययम्। ममापि—अपापिनः, यथाशास्त्रं प्रजाप्रतिपालकस्य विविधयज्ञायनुष्ठातुः

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम्।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम्? (८१) ॥३१॥

[नेपथ्ये।] अविधावेहि भो! अविधावेहि। (ख) (८२)

(ख) अभिधाव भो अभिधाव।

इत्यर्थः। सत्त्वैः,—पिशाचादिभिः। गृहाः,—गृहस्थिताः परिवारा इत्यर्थः। अभिभूयन्ते—आक्रम्यन्ते? नैतत्कथमपि युज्यते इति भावः। [अत्र गृहशब्दः पुंलिङ्गबहुवचनान्तः,—"गृहाः पुंसि तु भूम्न्येव" इत्यमरोक्तेः। [अत्र सावलेपवाक्यप्रयोगात् गर्वो नाम नाट्यालङ्कारः प्रदर्शितः; उक्तञ्च दर्पणे,—"गर्वोऽवलेपजं वाक्यम्" इति]। सम्यक् विमृश्यकारिणोऽपि प्रमादतया कार्य्यभ्रंशात् प्रत्यवायः, तज्जनितमुत्पातादिकञ्च परिलक्ष्यते। प्रजाकृतकर्म्मणः षष्ठांशभागिनः राज्ञः तु सुतरामेव तथा सम्भवति, इति पूर्वोक्तमाक्षिप्याह, अथवेति।—बहुप्रत्यवायं—पापबहुलं, नृपत्वं—राजत्वं, राजकार्य्यमित्यर्थः।

(८१) प्रत्यवायकारणम् अप्रस्तुतमुखेन दर्शयति, अहनीति।—अहनि अहनि प्रत्यहम् [वीप्सायां द्विरुक्तिः] आत्मन एव स्वस्यैव, तावत् प्रमादस्खलितम् अनवधानतया त्रुटितं, विपरीतकरणमित्यर्थः, ज्ञातुं न शक्यम्। प्रजासु स्वविषयवासिजनेषु मध्ये को जनः केन पथा प्रयाति गच्छति इति एतत् अशेषतः कात्स्न्येन [प्रकृत्यादित्वात् तृतीयायाः सार्वविभक्तिकः तसिल्प्रत्ययः] ज्ञातुं कस्य राज्ञः प्रभुत्व शक्तिः? अस्तीति शेषः। [अत्र 'वेदितुमस्ति शक्तिः' इति पाठे—अर्थस्तु सुगमः। प्राचां मते—अर्थापत्तिरलङ्कारः]। "सर्व्वतो धर्म्मषड्भागी राज्ञो भवति रक्षतः। अधर्म्मादपि षड्भागी भवत्यस्य ह्यरक्षतः॥" इति मनुस्मरणात् प्रजाकृताधर्म्मस्यापि षड्भागभागित्वेन रक्षतः ममापि बहुप्रत्यवायं नृपत्वम् इति युक्तमेव। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥३१॥

(८२) अभिधाव—शत्रुं हन्तुं द्रुतम् आगच्छेत्यर्थः। (सम्भ्रमे द्विरुक्तिः)। [अत्र 'अविहा अविहा' इति पाठे—अविहेति खेदे निपातः।—"अविहाविह निर्वेदे" इत्युक्तेः।

राजा। [आकर्ण्य गतिभेदं रूपयित्वा।] (८३) सखे! न भेतव्यं न भेतव्यम्।

[नेपथ्ये।] भो! कधं ण भाइस्सं? एसो मं कोवि पच्चामोडिअ सिरोधरं इक्खुं विअ भग्गत्थिं (८४) करिदुं इच्छदि। (ग)

राजा। [सदृष्टिक्षेपम्।] धनुर्धनुः!

प्रतीहारी। [धनुर्हस्ता प्रविश्य।] जअदु जअदु भट्टा, एदं ससरं सरासणं हत्थावारओ। (घ) (८५)

[राजा सशरं धनुरादत्ते]।

[नेपथ्ये।] एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्मन्तस्तव शरणं भवत्विदानीम् (८६) ॥३२॥

(ग) भोः! कथं न भेष्यामि? एष मां कोऽपि प्रत्यामोड्य शिरोधरामिक्षुमिव भग्नास्थिं कर्त्तुमिच्छति।

(घ) जयति जयति भर्त्ता, एतत् सशरं शरासनं हस्तावारकस्य।

(८३) गतिभेदं—गतिभङ्गम्, द्रुतगमनमित्यर्थः। रूपयित्वा—अभिनीय।

(८४) प्रत्यामोड्य—पश्चाद् मोडयित्वा। शिरोधरां—ग्रीवाम्, इक्षुमिव भग्नास्थिं—खण्डशः इत्यर्थः। ['भग्नास्थिम्' इत्यत्र 'त्रिभङ्गम्' इति पाठे—त्रिखण्डमित्यर्थः। उपमाऽलङ्कारः]।

(८५) हस्तावारकः,—हस्तस्य ज्याघातरक्षणार्थम् आवरणविशेषः। [अत्र 'हस्तावाप' इति पाठे—स एवार्थः]।

(८६) एष इति।—एषः अहम्, अभिनवकण्ठशोणितार्थी अभिनवं नूतनं सद्यः निःसृतं यत् कण्ठशोणितं ग्रीवारुधिरं तदर्थी तदभिलाषी, शार्दूलः व्याघ्रः चेष्टमानम् आत्मत्राणाय इतस्ततः पलायितुं यतमानं पशुमिव मृगमिव, त्वां हन्मि नाशयामि। आर्त्तानां विपन्नानां भयम् अपनेतुम् आत्तं गृहीतं धनुः येन तथाभूतः [विशेषणमेतत् सहजक्रोधावेगवर्द्धनार्थं बोद्धव्यम्। आत्तधन्वेत्यत्र "धनुषश्च"

राजा। [सक्रोधम्।] कथं मामेवोद्दिशति !! आस्तिष्ठ तिष्ठ कौणपापसद ! त्वमिदानीं न भवसि। (८७) [चापमारोप्य।] पार्वतायन ! सोपानमार्गमादेशय।

कञ्चु। इत इतो देवः।

[सर्वे सत्वरमुपसर्पन्ति]।

राजा। [समन्तादवलोक्य।] अये ! शून्यं खलु इदम् !

[नेपथ्ये।] भो ! परित्ताआहि परित्ताआहि, अहं तुमं पेक्खामि, तुमं मं ण पेक्खसि ? मज्जारगहीदो उन्दुरू विअ णिरासोम्हि जीविदे ! (ङ) (८८)

(ङ) भोः परित्रायस्व परित्रायस्व, अहं त्वां प्रेक्षे, त्वं मां न प्रेक्षसे ? मार्ज्जार-गृहीत उन्दुरुरिव निराशोऽस्मि जीविते !

(५।४।१३२पा०) इति सूत्रेण अनङ्‌आदेशः।] दुष्मन्तः इदानीं तव शरणं रक्षिता भवतु।—"शरणं गृहरक्षित्रोः" इत्यमरः। अत्र अभिनवकण्ठशोणितार्थीति विशेषणेन क्षोभणो नाम द्वितीयः बीभत्सरसः ध्वन्यते। उक्तञ्च दशरूपके,—"रुधिरान्त्रकीकस-वसामांसाद्यैरादिभिः क्षोभणः" इति। तत्र शोणितः विभावः। क्षोभजनिता जुगुप्सा स्थायिभावश्च बोद्धव्यः। उपमाऽलङ्कारः]। प्रहर्षिणी वृत्तम्,—"त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम्" इति लक्षणात्। प्रहर्षिणी नाम वृत्तं हि त्रयोदशाक्षरपादच्छन्दसाम् एकाधिकचतुर्दशशततमसंख्यकस्य प्रस्तारस्य अन्तर्गतम्॥ ३२॥

(८७) 'दुष्मन्त' इति स्वनामोत्कीर्त्तनमाकर्ण्य आह, कथमिति।—मामेवोद्दिशति—मामेव लक्ष्यीकृत्य वदतीत्यर्थः। आः इति—क्रोधसूचकमव्ययम्। कौणपापसद !—कुणपः शवः भक्ष्यत्वेन विद्यते येषां ते कौणपाः, प्रेता राक्षसा वा, तेषु अपसदः अधमः, तत्सम्बुद्धौ। न भवसि—लक्ष्यम् इति शेषः। ["राजा। सरोषम्" इत्यादिनैतदन्तेन क्रोधो नाम सन्ध्यन्तराङ्गमुपक्षिप्तम्। तल्लक्षणन्तु,—'क्रोधस्तु चेतसो दीप्तिरपराधादि-दर्शनात्" इति]।

(८८) मार्ज्जारगृहीतः,—विडालधृतः, उन्दुरुरिव—मूषिक इव, जीविते निराशोऽस्मि—निष्प्रत्याशोऽस्मि। [श्रौतोपमाऽलङ्कारः, मार्ज्जारोपमानेन च तत्परि-त्यागेऽपि जीवनाभावः सूच्यते]।

राजा। भोः तिरस्करिणीगर्वित! किम् इदानीं मदीयमस्त्रमपि त्वां न पश्यति? स्थिरो भव, मा च ते वयस्यसम्पर्काद् विश्लेषोऽभूत्। एष तमिषुं सन्दधे (८९)—

यो हनिष्यति बध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम्।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः (९०) ॥३३॥

[इति शस्त्रं सन्धत्ते]।

(८९) तिरस्करिणीगर्वित—तिरस्करिण्या अदृश्यकारिण्या विद्यया गर्वितः अहङ्कृतः; तिरस्करिणीप्रभावेणाहं सर्वं पश्यामि, न मां कोऽपि पश्यतीति अहङ्कारेण उद्धत इत्यर्थः, तत्सम्बोधनम्। वयस्येति।—वयस्यस्य—माधव्यस्य, सम्पर्कात्—देहसङ्गात्, विश्लेषः,—विच्छेदः, [अत्र 'विश्वासः' इति पाठे—प्रत्यय इत्यर्थः] तथा च पृथग्भाव इत्यर्थः, मा भूत्—न भवतु, वयस्यं परित्यज्य पृथक् न तिष्ठति भावः। संश्लिष्टयोरपि युवयोः एकतरस्य बध्यस्य एव बधे मदिषोः सामर्थ्यमस्ति, इति प्रकटनार्थमेव "मा च" इत्यादि वचनमुपन्यस्तम्। तं—तादृशम्, इषुं—शरं, सन्दधे—योजयामि, इति श्लोकेनान्वयः।

(९०) कीदृशोऽयं शरः?—इति तत्स्वरूपमाचष्टे, य इति।—यः शरः, बध्यं बधार्हं त्वां हनिष्यति प्रहरिष्यति, तथा रक्ष्यं रक्षणीयं द्विजं ब्राह्मणं विदूषकमित्यर्थः रक्षिष्यति। [अत्र "रक्षति च द्विजम्" इति पाठान्तरम्। तत्र भविष्यत्सामीप्ये लट्। रक्षिष्यति इत्यर्थः। अस्मिन् पक्षे क्रियाद्वयसमुच्चयबोधकः चकारो युक्त एव]। अस्योभयकारित्वे दृष्टान्तमाह, हंस इति।—हि तथाहि, हंसः क्षीरं दुग्धम् आदत्ते गृह्णाति, तन्मिश्राः दुग्धमिश्रिताः अपः जलानि वर्जयति त्यजति, "तमिषुं सन्दधे" इति चूर्णकेनान्वयः। [अत्रोपमेये शरे उभयस्य अदृष्टत्वेन रूपेण ऐक्यं विवक्षितम्। अत एव अत्र दृष्टान्तालङ्कारः; तथा च दर्पणः,—"दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्" इति। तथाऽत्र राजवाक्ये "भोः तिरस्करिणीगर्वित" इत्यादिना एतद्न्तेन व्यवसायो नाम सन्ध्यन्तराङ्गं प्रदर्शितम्; तथा च दशरूपके,—"व्यवसायः स्वशक्त्युक्तिः" इति; अत्र राज्ञः स्वसामर्थ्यस्य प्रकटनादिति बोद्धव्यम्। एवमिह "नेपथ्ये" इत्यादितः राजवाक्येन रौद्रः रसः ध्वन्यते। तत्र क्रोधः स्थायिभावः, जिघांसादयो विभावाः, शरधनुर्ग्रहणादिकम् अनुभावः, आवेगचापल्यादयः सञ्चारिभावाः बोध्याः]। पथ्यावक्त्रं वृत्तम् ॥३३॥

[ ततः प्रविशति मातलिर्विदूषकश्च ] ।

मातलिः । आयुष्मन् !—(९१)

> कृताः शरव्यं हरिणा तवासुराः,
> शरासनं तेषु विकृष्यतामिदम् ।
> प्रसादसौम्यानि सतां सुहृज्जने
> पतन्ति चक्षूंषि न दारुणाः शराः (९२) ॥३४॥

राजा । [ससम्भ्रममस्त्रमुपसंहरन् ।] (९३) अये ! मातलिः !! स्वागतं देवराजसारथे ! (९४)

(९१) आयुष्मन्—कल्याणिन्,—"आयुष्मन् रथिनं सूतः" इत्युक्तेः सूतस्य सम्बोधनमेतत् ।

(९२) सम्प्रति स्वकार्य्यमाख्यातुं सविनयमाह, कृता इति ।—हरिणा इन्द्रेण, असुराः दैत्याः तव शरव्यं लक्ष्यं कृताः, लक्ष्यत्वेन स्थापिता इत्यर्थः ("लक्ष्यं लक्षं शरव्यञ्च" इत्यमरः) ; तेषु असुरेषु इदं हस्तस्थितं शरासनं धनुः विकृष्यतां सन्धीयताम् [ अनेन तदर्थं ममागमनमत्र इत्यपि ध्वन्यते । ] सतां महात्मनां सुहृज्जने बन्धुवर्गे प्रसादसौम्यानि प्रसन्नतया सुभगानि अनुग्राणि इत्यर्थः, चक्षूंषि पतन्ति ; महात्मानः खलु बन्धुवर्गे प्रणयपूर्णं दृष्टिनिक्षेपमेव कुर्वन्ति इत्यर्थः । दारुणाः मर्म्मभेदिनः प्राणहरा इति भावः, शराः न पतन्तीति शेषः [ 'शराः पतन्ति' इत्यनेन असुरेषु न केवलं शरासनाकर्षणम् अपि तु शरपातोऽपि कर्त्तव्य इत्यपि ध्वन्यते । अत्र पूर्वार्द्धे प्रथमपादवाक्यं प्रति द्वितीयचरणवाक्यस्य हेतुत्वात् काव्यलिङ्गम् ; चक्षूंषि पतन्ति शरा न इति व्यपोहनात् शाब्दी परिसंख्या, तथा सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासश्च ; इत्येषां साङ्कर्य्यम् ; तथा सतां तादृशचक्षुषा सुहृज्जनसम्बन्धप्रतीतेः समालङ्कारश्च व्यज्यते ] । वंशस्थविलं वृत्तम् ॥३४॥

(९३) ससम्भ्रमं—सौत्कण्ठम्, अस्त्रं—बाणम्, उपसंहरन्—गुणात् निवर्त्तयन् ।

(९४) सहसा समुपस्थितं वासवसूतं मातलिं दृष्ट्वा साश्चर्य्यमाह, अये इति ।—अये ! इति—विस्मयसूचकम् । स्वागतं—शुभागमनम् । देवराजसारथे!—वासवसारथे ! मातलेः महत्त्वं खलु देवराजसारथित्वेनैव इति देवराजसारथे इत्युक्तिः बोध्या ।

विदू। भो मणस्सिं! इमिणा अहं पसुमारणं मारिदुं पवित्तो, भवं उण इमं साअदेण अहिणन्ददि! (च) (९५)

मात। [सस्मितम्।] आयुष्मन्! श्रूयतां, यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः।

राजा। अवहितोऽस्मि। (९६)

मात। अस्ति कालनेमिप्रसूतिर्दुर्जयो नाम दानवगणः। (९७)

राजा। अस्ति। श्रुतपूर्वो मया नारदात्। (९८)

मात। सख्युस्ते स किल शतक्रतोरवध्यः
तस्य त्वं रणशिरसि स्मृतो निहन्ता।

---

(च) भो मनस्विन्! अनेन अहं पशुमारणं मारयितुं प्रवृत्तः, भवान् पुनः इमं स्वागतेन अभिनन्दति!

(९५) 'आत्मनः प्रियसखमपि माम् ईदृशं निगृह्णन्तं मातलिं प्रति तव ईदृशाचरणं नैव युज्यते' इति सखेदमाह, मनस्विन् इति।—मनस्विन्!—प्रशस्तमनः! महाशय इत्यर्थः [प्रशंसायां विनिप्रत्ययः]। पशुमारणं—पशुवत् मारणं वधः यत्र तद् यथा तथा, मारयितुं—हन्तुं, प्रवृत्तः,—आक्रान्त इत्यर्थः। [अत्र "इष्टिपशुमारं मारितः" इति पाठे—यज्ञपशुवत् मारित इत्यर्थः। अत्र मारयतेः णमुल्प्रत्ययः तदनुप्रयोगश्च]।

(९६) अवहितः,—एकाग्रचित्तः, [अव-धा-क्तः] श्रोतुमिति शेषः।

(९७) कालनेमीति।—कालनेमिर्नाम असुरः, तस्मात् प्रसूतिरुद्भवः यस्य तथाभूतः, दुर्जयः,—जेतुमशक्यः इत्यर्थः। नाम—सम्भावनायां; कालनेमिसन्तानो दानववर्गः दुर्जय इति सम्भाव्यते इत्यर्थः।

(९८) अस्ति इति।—मातलिवाक्यस्योत्तरमेतत् पृथक् वाक्यम्। श्रुतपूर्वः,—पूर्वं श्रुतः। [राजदन्तादित्वात् पूर्वनिपातः। श्रुत इति कर्मणि क्तप्रत्ययः]।

(९९) प्रस्तुतमाख्यातुमारभते, सख्युरिति।—सः, किल इति प्रसिद्धौ, दानवगणः,

उच्छेत्तुं प्रभवति यन्न सप्तसप्ति-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः (९९) ॥३५॥

स भवान् आत्तशस्त्र एव इदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम् । (१००)

ते तव सख्युः प्राणप्रतिमस्य दयितस्य ("समप्राणः सखा मतः" इत्युक्तेः) [ एतेन आ जन्मनः तव सख्युः वासवस्य एतादृशनियोगः दुष्करोऽपि त्वयि युज्यते एव इति ध्वन्यते ] शतं क्रतवो यस्य तादृशस्य शतक्रतोः इन्द्रस्य "ऐन्द्रपदकामः शताश्वमेधेन यजेत" इति श्रुतेः । [ एतेन येन खलु निखिलमरिकुलं निहत्य शतमश्वमेधयज्ञाः अन्यैः दुष्करा अपि अनुष्ठितास्तस्यापि अवध्यत्वमिति निरतिशयकार्य्यगौरवं सर्वथा कर्त्तव्यञ्च ध्वनितम् । ] अवध्यः हन्तुमशक्यः । [ वधमर्हति इति वधशब्दात् अर्हार्थे यत्प्रत्ययः ; ततः नञ्तत्पुरुषः । अत्र 'अजय्यः' इति पाठे—प्रयत्नसहस्रैरपि जेतुमशक्य इत्यर्थः ।—"क्षय्यजय्यौ शक्यार्थे" (६।१।८१ पा०) इति निपातः ] । अतः रणशिरसि त्वं तस्य दानवगणस्य निहन्ता स्मृतः निर्णीतः, शतक्रतुनेति शेषः । तथाहि सप्त सप्तयोऽश्वा यस्य सः सप्तसप्तिः ("वाजिवाह्यार्वगन्धर्वहयसैन्धवसप्तयः" इत्यमरः) सप्ताश्वः, सूर्य्य इत्यर्थः, यत् नैशं निशासम्बन्धि तमः उच्छेत्तुं नाशयितुं न प्रभवति न शक्नोति, चन्द्रः तत् नैशं तमः अपाकरोति नाशयति । [ अत्र च अनेन मातलिना स्वस्वामिनः वासवस्य सूर्य्योपमानत्वेन तेजस्वित्वं कथयता तद्वाक्यस्य करणेन तदुपजीव्यत्वेन च अस्यापि राज्ञः चन्द्रोपमानत्वं वदता उभयत्रापि औचित्यं ध्वनितम् । अत्र दृष्टान्तालङ्कारः । किञ्च,—सूर्य्यो यथा स्वकीयं ज्योतिर्दत्त्वा चन्द्रमसमुज्ज्वलयति, चन्द्रोऽपि तज्ज्योतिः अवलम्ब्य निहत्यान्धतमसम् आह्लादयति समग्रं जगत्, सूर्य्यज्योतिरलाभे नास्ति च शक्तिः कापि चन्द्रस्य, तथा त्वमपि मघवत एवानुकूल्यं लब्ध्वा वसुन्धरायाम् एतादृक् प्रतिष्ठावान् सञ्जातः ; अतः 'तदाज्ञा शिरोधार्य्या' इति सूक्ष्मत्वद्योतनात् सूक्ष्मालङ्कारोऽपि सूच्यते ] । प्रहर्षिणी वृत्तम् । तल्लक्षण-प्रस्तारौ तु प्रागुक्तौ ॥३५॥

(१००) आत्तशस्त्रः,—गृहीतायुधः । [ आत्तं,—आ + दा + क्तः ] विजयाय—विजेतुं, ["तुमर्थाच्च भाववचनात्" (२।३।१५ पा०) इति चतुर्थी] । प्रतिष्ठतां—प्रस्थानं करोतु, [ "समवप्रविभ्यः स्थः" (१।३।२२ पा०) इति आत्मनेपदम् ] ।

राजा । अनुगृहीतोऽस्मि अनया मघवतः सम्भावनया । अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम् ? (१)

मात । [ सस्मितम् । ] तदपि कथ्यते, किञ्चिन्निमित्तादपि मनःसन्तापादायुष्मान् मया विक्लवो (२) दृष्टः, पश्चात् कोपयितुमायुष्मन्तं तथा कृतवानस्मि । कुतः ?—

ज्वलति चलितेन्धनोऽग्निः, विप्रकृतः पन्नगः फणां कुरुते ।
तेजस्वी सङ्क्षोभात् प्रायः प्रतिपद्यते तेजः (३) ॥३६॥

राजा । युक्तमनुष्ठितं भवद्भिः । [ विदूषकं प्रति । ] वयस्य ! अनतिक्रमणीया दिवस्पतेराज्ञा, तद्गच्छ, परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि । (४)—

(१) मघवतः,—इन्द्रस्य [ पचे—मघोनः ] । सम्भावनया—आज्ञाप्रदानरूपसत्कारेण । अथ—पचान्तरे, प्रश्ने वा । प्रयुक्तम्—अनुष्ठितम् ।

(२) विक्लवः,—अधीरः, क्षुब्धचित्त इत्यर्थः ।

(३) सहसा राज्ञः कोपसम्पादने हेतुं दृष्टान्तेन समर्थयते, ज्वलतीति ।—अग्निः चलितं चलनं प्राप्तम् इन्धनं काष्ठं यस्य तथाभूतः सन् ( "इन्धनन्त्वेध इध्ममेधः समित् स्त्रियाम्" इत्यमरः ) ज्वलति दीप्यते ; पद्भ्यां न गच्छति इति [ पद्-न-गम्-डप्रत्ययः ] पन्नगः सर्पः विप्रकृतः पादादिना आक्रान्तः, ताड़ितः इति यावत् सन्, फणां कुरुते फणामुत्तोलयति, ऊर्द्ध्वमिति शेषः ; तेजस्वी जनः संक्षोभात् सम्यक् क्षोभं विप्रकारं प्राप्येत्यर्थः [ ल्यबर्थे पञ्चमी ] प्रायः प्रायेण बाहुल्येन इत्यर्थः [प्रकृत्यादित्वात् तृतीया ] तेजः प्रतिपद्यते प्रकाशयति ; उत्तेजनार्थमेव मया तथाऽनुष्ठितं, न तु परीतरागेण इति भावः । [अत्र परार्द्धे—"प्रायः स्वं महिमानं क्षोभात् प्रतिपद्यते हि जनः" इति पाठान्तरे—हि निश्चितं, जनः क्षोभात् चित्तक्षौर्थ्यात्, स्वं निजं महिमानं माहात्म्यम् इत्यर्थः, प्रायो बाहुल्येन प्रतिपद्यते इत्यर्थः । अत्र वह्निपन्नगरूपोपमानद्वयसाधर्म्यस्य प्रतिबिम्बनात् मालादृष्टान्तालङ्कारः ; तथा 'भवान्' इति विशेषे प्रस्तुते 'तेजस्वी' इति सामान्येन कथनात् अप्रस्तुतप्रशंसा च ] । आर्य्या जातिः ॥३६॥

(४) दिवस्पतेः,—स्वर्गाधिपतेः । [ दिवः पतिरिति षष्ठीसमासः अलुक् ; कस्कादित्वात् सुट् च । अनेन सर्वथा अनुल्लङ्घनीयत्वं व्यज्यते ] । परिगतार्थं—विदित-

त्वन्मतिः केवला तावत् प्रतिपालयतु प्रजाः ।
अधिज्यमिदमन्यस्मिन् कर्मणि व्यापृतं धनुः (५) ॥२७॥

विदू । जं भवं आणवेदि । (छ)

[ इति निष्क्रान्तः । ]

मात । आयुष्मान् रथमारोहतु ।

[ राजा तथा करोति । इति निष्क्रान्ताः सर्वे ] ।

इति षष्ठोऽङ्कः ॥६॥

(छ) यद्भवान् आज्ञापयति ।

वृत्तान्तम् । मद्वचनात्—मम वाक्यात्, 'राजेदं वक्ति' इत्युक्त्वा इत्यर्थः । पिशुन इति—मन्त्रिणो नाम ।

(५) सम्प्रति सन्देशमाह, त्वन्मतिरिति ।—पूर्वं खलु प्रजाप्रतिपालने उभयमेव व्यापृतमासीत् ; सम्प्रति केवला एकाकिनी तव मतिः बुद्धिः तावत् साकल्येन सम्यक् इत्यर्थः, प्रजाः पालयतु [ एतेन उभयायत्तसिद्धित्वं स्वस्य सूचितम् ] । इदम् अधिज्यं युक्तमौर्वीकं धनुः, ममेति शेषः, अन्यस्मिन् कर्मणि असुरवधरूपे कार्य्ये इति भावः, व्यापृतं नियुक्तम् । [ एतेन उभयलोकरक्षकत्वमस्य सूचयित्वा सर्वेभ्यः प्रभावातिशय्य ध्वन्यते । अधिज्यमित्यनेन च इतः आरभ्य दानवमारणपर्य्यन्तं व्यानुसारत्वं ध्वन्यते ] ॥२७॥

# षष्ठाङ्कस्य सङ्क्षिप्त-विवृतिः ।



अत्र च प्रथमं काचित् सुरललना मिश्रकेशी पर्य्यायनिर्वर्त्तनीयम् अप्सरस्तीर्थ-सन्दिष्टं निवर्त्य स्वतनयार्थं मेनकाऽऽदेशमनुस्मरन्ती दुष्मन्तवृत्तान्तमवेक्षितुम् उपवनान्तिकमागता स्वल्पाकाशयानेन। आगत्य च तत्र समुपस्थितवसन्तोत्सवसमयेऽपि निरुत्सवप्रायं राजकुलमुदीक्षमाणा कारणानि च तस्य विजिज्ञासुः तिरस्करिणी-समाच्छन्नमूर्त्तिः उद्यानपालपार्श्ववर्त्तिनी अतिष्ठत्।

अथ तत्र समागते चेटीद्वये प्रवृत्ते च चूताङ्कुरादिभिः कामोत्सवं कर्त्तुं सहसा समागत्य कञ्चुकी भर्त्सयन् चेटीद्वयं, प्रतिषिध्य च मदनोत्सवं, प्रदर्श्य च राज्ञः प्रतिषेधादेशात् वृक्षादितिर्य्यग्जातीनामपि विस्मयस्तिमितभावं, समाख्याय च तयोरन्तिके अङ्गुरीयकदर्शनात् प्रभृति नृपतिवर्य्यस्य शकुन्तलापरिणयस्मरणेन दुर्मनायमानतां, तथा च तस्य वसन्तोत्सवप्रतिषेधादेशञ्च क्षणमतिष्ठत्।

तदनन्तरं कञ्चुकिमुखात् श्रुत्वा राजवृत्तान्तं प्रस्थिते चेटीद्वये, महाराजः दुष्मन्तः हृदयनिहितप्रियतमोदन्तः स्वान्तस्तापविवर्णदेहकान्तिः सह विदूषकप्रतिहारीभ्यां मनोविनोदनार्थं समागच्छन्नुद्यानाभ्यासे प्रलपन् प्रियाप्रत्याख्यानविषयम् आदिश्य च प्रतिहारीं मन्त्रिपिशुनमुपगम्य “चिरप्रबोधात् मया राजकार्य्यं न शक्यते कर्त्तुं, तदिह भवतैव तत् प्रत्यवेक्ष्य पत्रमारोप्य प्रस्थाप्यताम्” इति। कञ्चुकिनमपि प्रस्थाप्य कार्य्यव्याजेन, रहसि वयस्येन सार्द्धं प्रियाप्रत्याख्यानप्रभृतिकं निखिलव्यापार-कलापं सकरुणमन्वाचष्ट।

अत्रान्तरे तत्र शकुन्तलाप्रतिकृतिमादाय प्रविष्टायां चेट्यां चतुरिकाऽभिधायां दृष्ट्वा च ताम् उपवर्ण्य च तत्र प्रियारूपमविकलम्, अभिलषंश्च तत्र चित्रयितुं तत्सदृशन्यविनोदनस्थानानि समादिशंश्च चेटीं वर्त्तिकानयनाय, भर्त्सयंश्च भ्रमरं चित्रन्यस्तं प्रियाऽधरदंशनोद्यतं आरितश्च चित्रोऽयमिति वदता वयस्येन नितरामन्वतपत्।

अथोपगम्य चेटी विनिवेद्य वसुमत्यादेशात् तत्सहचर्य्या वर्त्मनि वर्त्तिका-ग्रहणव्यापारं, कथयित्वा च ततः कथंकथमपि आत्मविमोचनं राजान्तिके समस्थित।

ततो राजा समाकर्ण्य राज्ञ्याः समागमवृत्तान्तं नितान्तमुद्विग्नमनाः प्रेष्य च वयस्यं वत्प्रतिकृतिरक्षणार्थं मेघच्छन्नप्रासादे प्रतीहार्य्या सचिवार्पितपत्रहस्तया समगच्छत।

दृष्ट्वा च तां, पृष्ट्वा च राज्ञीसमागमविषयं श्रुत्वा च निवृत्तेयं गमनव्यापारादिति, अनुवाच्य च मन्त्रिपत्रं, ज्ञात्वा च ततो धनवृद्धिर्नामवणिक् वाणिज्यार्थं वारिपथमुपगतः नौव्यसनेन विपन्नश्च अनपत्यतया च तद्धनं राजस्वतामापद्यते, तदधुना किं विधेयमिति, व्यादिश्य च अन्तर्वत्नी तस्य पत्नी तद्धनमर्हतामिति, उद्घोष्य च निःसन्तानमावश्यैव सज्जनस्य दुष्मन्त एव सन्ततिस्थानीय इति, तद्वृत्तान्तेन अनुध्यात-निजसन्तानराहित्यः अत्यर्थं विलपनपरो मेघच्छन्नप्रासादात् अकाण्डे "अब्रह्मण्यम्" इति वयस्यस्य उच्चैरार्त्तरवमश्रौषीत्।

तत्र मिश्रकेशी अपि तिरस्करिणीच्छन्नशरीरा आ मूलात् नृपतिवाक्यं सकरुण-माकर्ण्य तेन च वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयितुं पुनराकाशवर्त्मना स्वभवनमयासीत्।

अथ नृपतिः अकाण्डोद्गतमार्त्तरवमाकर्ण्य वयस्यस्य, तत्कारणमनुसन्दिधित्सुः कञ्चुकिनमेव पार्श्ववर्त्तिनमादिश्य, श्रुत्वा च परिज्ञातवृत्तान्तस्य तस्य मुखात् केनचित् सत्त्वेन निगृहीतं वयस्यं गृहीतसज्यधन्वा विग्रहीतुमिच्छन् पुरतः परित्यक्तविदूषकं मातलिमिन्द्रसूतमपश्यत्।

स च मातलिः "दुर्जयकालनेमिप्रसूतदानवभीतेन वासवेन भवदानयनार्थं प्रहितो-ऽहं तद्भवता देवरथमारूढेन तत्र गन्तव्यम्" इति निवेद्य वासवसन्देशं कथयित्वा च तेन पृष्टः केनचित् कारणेन सन्तप्यमानसमुत्क्षोपयितुं भवन्तं मयाऽनुष्ठितोऽयं व्यापार इति नृपादेशव्यपेक्षः क्षणं तस्थौ। दुष्मन्तोऽपि तत्र गमनमुचितमिति मन्यमानः विदूषकञ्च राजकार्य्यपर्य्यवेक्षणादेशप्रचारार्थं सम्प्रेष्य मन्त्रिसकाशे अध्यासितदेवरथः सार्द्धं देव-सूतेन सुरलोकं प्रति प्राचलत्। इति।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"वि, ए" इत्युपनामक-श्रीमज्जीवा-नन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण-श्रीमन्नित्यबोध विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां

षष्ठोऽङ्कः॥ ६॥

# सप्तमोऽङ्कः।

[ ततः प्रविशति आकाशवर्त्मना रथारूढ़ौ राजा मातलिश्च ]। (१)

राजा। मातले! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रिया-विशेषात् अनुपयुक्तमिवात्मानं समर्थये। (२)

(१) ततः,—षष्ठाङ्कानन्तरम्, आकाशवर्त्मना—शून्यमार्गेण,—[अनेन मारीचाश्रमगमनं सूचितम् ]। रथारूढ़ौ,—स्यन्दनस्थः, राजा—दुष्मन्तः, मातलिः,—इन्द्रसारथिः, प्रविशति। [ प्राचां मते—अत्र सप्तमाङ्के समाप्तिं यावत् निर्वहणसन्धिः। नव्यास्तु—शकुन्तलाऽभिज्ञानात् परम् आसमाप्ति निर्वहणसन्धिमाचक्षते। उक्तञ्च दर्पणे,—"शाकुन्तले सप्तमाङ्के शकुन्तलाऽभिज्ञानात् उत्तरोऽर्थराशिः" इति। निर्वहणलक्षणञ्च तत्रैव,—"वीजवन्तो मुखाद्यर्थाः विप्रकीर्णा यथायथम्। एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत्॥" इति। तथाऽत्र "दूराह्वानं वधो युद्धम्" इत्यादिना अङ्के युद्धस्य अवर्णनीयत्वात् उत्तरचरिते विद्याधरमिथुनवत् अन्यद्वारा वाचिकाभिनयेनापि प्रदर्शनस्य प्रकृते अनुपयोगात्, वीररसस्य आधिक्यवर्णने अनङ्गकीर्त्तनरूपरसदोषापाताद्दानवयुद्धं न प्रदर्शितम्; तच्च उपरिष्टात् दुष्मन्तवाक्येनैव व्यक्तीभविष्यति इत्यलम् ]।

(२) सम्प्रति अनुष्ठितकालनेमिप्रसूतिदानवविजयरूपवासवादेशः वासवाशालब्धाऽतिमात्रसत्कारः राजा आह, मातले इति।—अनुष्ठितनिदेशः,—पालितादेशः, विहितदानवविजयरूपवासवाज्ञ इत्यर्थः। [ अनेन "वासवः खलु दानववधार्थं तं नियोजितवान्, सोऽपि तैः दानवैः विग्रह्य पराजित्य च तान् प्रतिनिवृत्तः" इति युद्धादिकं सूचितम् ]। मघवतः,—इन्द्रस्य [ पक्षे मघोनः इत्यपि रूपं भवत्येव ]। सत्क्रियाविशेषात्—सम्माननाऽतिशयात्। अनुपयुक्तमिव—अयोग्यमिव, इन्द्रं प्रतीति शेषः। समर्थये—सम्भावयामि; [यन्मया दानवविजयरूपं कार्य्यमनुष्ठितं तत् इन्द्रसम्माननायाः शतांशेनापि तुलयितुं न क्षममिति भङ्ग्या सूक्ष्मार्थप्रकाशनात् सूक्ष्मालङ्कारः। [एतेन मघवतः प्रत्युपकारपराङ्मुखत्वं विनयित्वं गुणग्राहित्वञ्च, आत्मनोऽपि अभूतवीर्य्यशालित्वं तादृशवासवसम्माननया परमसौभाग्यभाजनत्वञ्च गम्यते ]।

मातलिः । [ सस्मितम् । ] (३) आयुष्मन् ! उभयत्राप्यसन्तोषम् अवगच्छ । (४) कुतः ?—

उपकृत्य हरेस्तथा भवान्
लघु सत्कारमवेक्ष्य मन्यते ।
गणयत्यवदानसम्मितां
भवतः सोऽपि न सत्क्रियामिमाम् (५) ॥१॥

(३) सस्मितमिति कविवाक्यम् । ईषत् नयनयुगं विकाश्य स्रोकमधरस्पन्दनञ्च कृत्वा इत्यर्थः । तथा च दर्पणे,—'ईषद्विकाशिनयनं स्मितं स्यात् स्पन्दिताधरम् ।" इति ।

(४) उभयत्रापि—त्वयि इन्द्रे चेत्यर्थः । असन्तोषम्—अपरितोषम् । अवगच्छ —विद्धि । 'वासवः खलु भवदनुष्ठितं कर्म्म अधिकं मन्यते, त्वं पुनः वासवसम्भावनामधिकां मन्यसे' इति द्वयोरेव असन्तोष इति भावः । [ अत्रापि 'समर्थये' इति पाठे— सम्भावयामि इत्यर्थः ] ।

(५) तमेव असन्तोषं दर्शयति, उपकृत्येति ।—भवान् हरेरिन्द्रस्य, तथा तेन प्रकारेण, उपकृत्य निर्देशम् अनुष्ठायेत्यर्थः, दानवजयं कृत्वेति भावः, सत्कारं सम्माननाम्, इन्द्रकृतमिति शेषः, अवेक्ष्य दृष्ट्वा, लघु आत्मकृतमानुकूल्यमिति भावः, मन्यते सम्भावयति । सोऽपि इन्द्रोऽपि, इमां सत्क्रियां भवतः अवदानसम्मितां कृतकर्म्मसदृशीं, न गणयति न मन्यते । [अत्र पुस्तकान्तरे अन्यथैव श्लोकः दृश्यते, तथा हि—"प्रथमोपकृतं मरुत्वतः प्रतिपत्त्या लघु मन्यते भवान् । गणयत्यवदानविस्मितो भवतः सोऽपि न सत्क्रियागुणान् ॥" इति । तत्र भवान् मरुत्वतः इन्द्रस्य प्रतिपत्त्या गौरवेण पश्चात्कृतेन इत्यर्थः, प्रथमोपकृतं पूर्वमनुष्ठितमुपकारं दानवविजयरूपं लघु स्वल्पं मन्यते ; तथा भवतः अवदानेन वृत्तेन कर्मणा, ("अवदानं कर्म वृत्तम्"इत्यमरः) विस्मितः जातविस्मयः ; सोऽपि वासवोऽपि सत्क्रियायां स्वकृतगौरवे गुणान् यत्रातिशयादीन् न गणयति न साधु मन्यते, तव कर्म स्मृत्वा "मया तस्य सम्मानना कृता" इति चेतस्यपि न करोति इत्यर्थः । [क्रियागुणयोर्विकल्पयोरपि समावेशात् विरोधाभासो व्यङ्ग्यः । अत्र सत्काररूपे कारणे सत्यपि गणनाऽभावात् विशेषोक्तिः ; तथा गणनाऽभावकारणे अविद्यमाने तत्कार्य्यस्य सम्भवात् विभावना च ; इत्यनयोः सन्देहसाङ्कर्य्यम् । परस्परं क्रियाजननात् अन्योऽन्यमपि केचित्] । अत्र अयुक्पादयोः मात्राषट्-

राजा। मातले! मा मैवं, स खलु मनोरथानामपि दूरवर्त्ती—यो विसर्जनावसरे सत्कारः। मम हि दिवौकसां समक्षमर्द्धासनोपवेशितस्य (६)—

अन्तर्गतप्रार्थनमन्तिकस्थं
जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का
मन्दारमाला हरिणा पिनद्धा (७) ॥२॥

कात्, युग्मयोश्च मात्राष्टकात् परं र-ल-ग-गणसद्भावात् वैतालीयम्; एवम् अयुग्मयोः पादयोः स-स-ज-ग-गणसत्त्वात्, युग्मयोश्च स-भ-र-ल-ग-गणसत्त्वात् सुन्दरी वा वृत्तम्। वैतालीयलक्षणन्तु,—"षड् विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः। न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः॥" इति। सुन्दरीलक्षणन्तु प्रदर्शितं प्राक्॥१॥

(६) "भवतः सोऽपि न सत्क्रियामिमाम्" इति इन्द्रस्यापि असन्तोषकारणं यदुक्तं, तत् प्रतिषिध्य स्वस्मिन् गौरवमेवात्यन्तमाचरितमिति दर्शयन् आह, मातले इति।—मा मा एवम्—इत्थं नैव ब्रूहि इत्यर्थः। मनोरथानामपि—संकल्पितानामपि, दूरवर्त्ती—आशातीत इति यावत्, विसर्जनावसरे—प्रस्थापनसमये। सत्कारः,—सम्मानना। मनोरथातिभूमित्वं दर्शयति, ममेति।—मम—हीनस्य मानवस्य; तस्य तादृशसम्माननाऽनर्हस्य इत्यर्थः। तत्रापि दिवौकसां—द्यौः स्वर्गः ओकः निवासः येषां तादृशानां [पृषोदरादित्वात् अकारागमे ओकः इत्यस्य ओकारस्यौकारः; अथवा—दिव्‌धातोः कप्रत्ययात् अकारान्तः दिवशब्दः, ततः सन्धिः।] सकलदेवानां, न तु कस्यचित् एकस्य देवस्य, तत्रापि समक्षं प्रत्यक्षं, न तु केवलं श्रुतिगोचरतया, तत्रापि न केवलम् आसनमात्रे, अपि तु स्वासनार्द्धे, तत्रापि न स्वयम् उपविष्टस्य, अपि तु तेनैव उपवेशितस्य इति। अतःपरं वक्ष्यमाणश्लोकेनान्वयः।

(७) अन्तर्गतेति।—अन्तर्गता मनोगता प्रार्थना मालाग्रहणविषयिणी याच्ञा यस्य तथाभूतं, न तामनिच्छन्तमित्यर्थः; तत्रापि अन्तिकस्थं समीपवर्त्तिनं, न तु दूरस्थं, जयन्तं स्वपुत्रम् ("जयन्तः पाकशासनिः" इत्यमरः) उद्वीक्ष्य उत् अधिकं दृष्ट्वा, तदभिप्रायं ज्ञात्वाऽपि इत्यर्थः, कृतं स्मितम् ईषत् हास्यं येन तथाभूतेन सता; तस्य मनोगतप्रार्थनाऽनुमानेनैव स्मितोदयः इति भावः। [एतेन जयन्तादपि अधिकप्रियताऽत्र व्यज्यते]। हरिणा इन्द्रेण, आमृष्टः उत्सादितः, वक्षसः उरःस्थलस्य,

मात। किमिव न आयुष्मान् अमरेश्वरादर्हति? (८)
पश्य,—

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम्।

---

हरिचन्दनमेव अङ्कः चिह्नं यया तादृशी, अथवा—आमृष्टं स्पृष्टं यत् वचोहरिचन्दनं उरश्चन्दनानुलेपः तदेव अङ्कः चिह्नं यस्याः तादृशी; [अत्र अङ्कपदोपादानात् मालायाः तत्कालधारणत्वं, तस्या अपि तत्कालकृतं चन्दनानुलेपनत्वं च सूचयित्वा वासवस्यापि तद्धारणजनितसुखानवाप्तेः अत्यन्तत्वेन तस्याः समर्पणे राज्ञः भाग्यातिशयः ध्वन्यते; तेन च मालाया अपि तत्कण्ठधारणयोग्यत्वाम्लानत्वसौरभातिशयत्वमनोहरत्वादिकञ्च ध्वन्यते]। स्मेरःस्थलस्थितेति भावः; मन्दारमाला देवतरुविशेषपुष्पस्तक, न तु यस्य कस्यचित् मालामात्रं, पिनद्धा परिधापिता, न तु दत्ता, मत्कण्ठे इति शेषः। [पिनद्धा—अपि+णह+क्तः, अकारलोपश्च] पुत्रमपि अविगणय्य मत्सम्माननं कृतमिति भावः। [अत्र गौरवातिशयसम्पत्तिवर्णनात् उदात्तः, तथा साभिप्रायविशेषणप्राचुर्य्यात् परिकरश्च अलङ्कारः, अनयोः साङ्कर्य्यम्]। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥२॥

(८) इन्द्रपक्षमेव लक्ष्यीकुर्वन्नाह, किमिति।—अमरेश्वरात् सकलदेवानामधिपतेः [एतेन आशातीतवस्तुप्रदानेऽपि तत्सामर्थ्यम् अस्तीति ध्वनितम्]। किमिव नार्हति?—यदतीव रमणीयं प्रीतिकरञ्च वस्तु इहास्ति तत् वासवस्य प्राणसममपि भवान् तस्मात् लब्धुमर्हति, अन्यस्मिन् लब्धे किमु वक्तव्यम् इति भावः। [अनेन च वाक्येन सर्वशक्तिमतः देवराजस्य प्रसादेन दुष्मन्तहृदयतलान्तर्गोपायितापि शकुन्तला अचिरलभ्या इति सूच्यते। अत्र इवशब्दो वाक्यालङ्कारे]।

(९) सकलादानार्हत्वे कारणं दर्शयति, सुखपरस्येति।—सुखपरस्य सुखे परः, अथवा—सुखं परं यस्य तादृशस्य अतिसुखासक्तस्य, न किञ्चित् कठिनं कर्म्म कुर्वतः इति भावः, हरेरिन्द्रस्य त्रिदिवं त्रयः ब्रह्मादयः दीव्यन्ति अत्र, [इति घञर्थे आधारे कः] स्वर्गः, अधुना नतपर्वभिः आनतग्रन्थिभिः; नखपक्षे—अवनताङ्गुलिग्रन्थिभिः इत्यर्थः, तव विख्यातपौरुषातिशय्यवत इत्यर्थः; शरैः, दुर्जयदानवविजयादिति,भावः। तथा पुरा पूर्वं पुरुषकेशरिणः नृसिंहस्य नखैः, एतदुभयैः उद्धृता दानवाः कण्टका इव यस्मात् तथाभूतं निरुपद्रवमित्यर्थः, कृतम्; [अत्र उद्धृतपदेन

तव शरैरधुना नतपर्वभिः
पुरुषकेशरिणश्च पुरा नखैः (९) ॥२॥

राजा। तत्र खलु शतक्रतोरेव महिमा। पश्य,-

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावनागुणमवेहि तमीश्वराणाम्।

तेषां समूलोन्मूलनात् अत्यन्ताभावः ध्वन्यते; तेन च द्वयोः उत्कर्षातिशयोऽपि व्यज्यते। उपमासाधकमेतत्]। अत्र सुखपरस्य सिंहीविलासलोलुपस्य हरेः सिंहस्य त्रिदिवं सुखकरं स्थानं ("त्रिदिवं सुखे। स्वर्गे च" इति हैमः) उद्धृताः, दानवाः,— दानं मदजलं वान्ति वहन्ति इति तादृशाः, गजा इत्यर्थः, तएव कण्टकाः क्षुद्रशत्रवः यस्मात् तादृशं कृतम्। कैः? इत्याह, उभयैरिति।—पुरा पूर्वं नतपर्वभिः पुरुषकेशरिणः पूर्वपुरुषसम्भूतसिंहस्य नखैः, सम्प्रति तव शरैः इत्यर्थोऽपि व्यज्यते; नायं श्लेषः, उभयोरप्रस्तुतत्वात्; न वा समासोक्तिः, विशेष्यश्लेषात्; अपि तु ध्वनिरेव। [अत्र वासवं प्रति द्वयोरेव नृसिंह-दुष्मन्तयोरप्रस्तुतत्वेन नतपर्वत्वरूपसाधर्म्म्येण च तुल्ययोगिता, तया च नखैः शराणां, नृसिंहपदेन च राज्ञः औपम्यं सूचयित्वाऽस्य प्रकर्षातिशयः ध्वन्यते; तथा उद्धृतदानवकण्टका इत्यंशे उपमा च; न चात्र उद्धृतपदस्य उपमानोपमेययोः द्वयोरेव मुख्यत्वेनान्वयात् उपमारूपकयोः सन्देहसाङ्कर्य्यमिति वाच्यम्; अत्र दानवपदस्य प्रस्तुतत्वात् तत्रैव उद्धृतपदस्य मुख्यान्वयात् रूपके कण्टकस्य प्राधान्यात् नृसिंह-दुष्मन्तयोः उत्कर्षाबोधनाच्च। उपमायान्तु दानवस्यैव प्राधान्यात् तयोः उत्कर्षसिद्धेरप्रत्यूहत्वाच्च उपमैव मतं नः इति दिक्। तथा दण्डिमते— यथा कश्चित् पुरुषः मार्गम् उद्धृतकण्टकं करोति इति श्लेषालङ्कारोऽपि बोध्यः]। द्रुतविलम्बितं वृत्तम् ॥२॥

(१०) तदेव शतक्रतोः माहात्म्यं दृष्टान्तेन समर्थयते, सिध्यन्तीति।—नियोज्याः भृत्या महत्स्वपि कर्मसु यत् सिध्यन्ति कृतकार्य्या भवन्ति, तम् ईश्वराणां प्रभूणां सम्भावनागुणं—सम्भावना गौरवं तस्या गुणः तं, प्रभावमाहात्म्यम् इत्यर्थः, अवेहि जानीहि; तत्र प्रभुगुणेनैव कार्य्यसिद्धिः, भृत्यस्य को गुणः? कोऽपि नास्तीति भावः। अत्र दृष्टान्तमाह, किमिति।—अरुणः सूर्य्यसारथिः, तमसाम् अन्धकाराणां बधाय निराकरणाय

किं प्राभविष्यदरुणस्तमसां वधाय
तञ्चेत् सहस्रकिरणो धुरि नाकरिष्यत् ? (१०) ॥४॥

मात। सदृशं तवैतत्। (११) [स्तोकमन्तरमतीत्य।] (१२)

आयुष्मन्! इतः पश्य नाकपृष्ठप्रतिष्ठितस्य सौभाग्यम् (१३)

आत्मयशसः।—

विच्छित्तिशेषैः सुरसुन्दरीणां
वर्णैरमी कल्पलतांशुकेषु।

[समर्थार्थक्रियायोगे चतुर्थी] किं प्राभविष्यत् प्रभुरभविष्यत्? नैव इत्यर्थः। चेत् यदि सहस्रकिरणः सूर्य्यः तम् अरुणं धुरि अग्रे न अकरिष्यत्। [अत्र सूर्य्येण स्वसारथिररुणः धुरि कृतः, सोऽपि तमसां वधाय प्रभुर्जातः इति क्रियायाः अतिपत्तेरभावात् कथमत्र "लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ" (३।३।१३९ पा०) इति सूत्रेण लृङ्विभक्तिः? अत्रोच्यते,—तमोहननस्वभावक्रियायाः अतिपत्तौ सूर्य्यस्य धुरिकरणाभाव एव विवक्षितत्वात् तत्सिद्धेः। तथा च काशिकायाम्,—"लिङ्गिलिङ्गे बुद्धा तदतिपत्तिञ्च प्रमाणान्तरादवगम्य वक्ता वाक्यं प्रयुङ्क्ते" इति]। तमोनाशे यथा सहस्रकिरणप्रभावेण तत्सारथेः सिद्धिः, तथा अस्माकमपि शत्रुजये इन्द्रस्य एव माहात्म्येन सिद्धिरिति निष्कर्षः। [अत्र 'वासव-दुष्मन्तयोः' 'सूर्य्यारुणयोः' च परस्परं साधर्म्येण विम्बप्रतिविम्बभावात् दृष्टान्तालङ्कारः; तथा 'वासव-दुष्मन्तौ' इति विशेषे वक्तव्ये ईश्वरनियोज्यरूपसामान्येन कथनात् अप्रस्तुतप्रशंसा; तथा च स्वगतभृत्यत्वं वासवस्य च प्रभुत्वं सूचयित्वा स्वस्य विनयातिशयद्योतनात् उदात्तालङ्कारः व्यज्यते]। वसन्ततिलकं वृत्तम् ॥ ४ ॥

(११) सदृशं—युक्तं, तव एतत् कथनमिति शेषः।

(१२) स्तोकम्—अल्पम्, अन्तरम्—अवकाशं, कियद्दूरमित्यर्थः, अतीत्य—अतिक्रम्य। (इति कविवचनम्)।

(१३) मातलिः पुनरपि स्तुतिं कर्त्तुकाम आह, आयुष्मन्निति।—नाकपृष्ठप्रतिष्ठितस्य—कं सुखं, तस्य अभावः अकम् असुखं, न विद्यते अकं यत्र सः नाकः स्वर्गः, तस्य पृष्ठे स्वर्गोपरि प्रतिष्ठितस्य नियतस्थिरत्वेन प्रतिष्ठां प्राप्तस्य; सौभाग्यं—सुभगत्वं, रमणीयत्वम् इत्यर्थः।

(१४) तदेव दर्शयति, विच्छित्तिशेषैरिति।—अमी दिवौकसः देवाः,

सञ्चिन्त्य गीतिक्षममर्थबन्धं
दिवौकसस्त्वच्चरितं लिखन्ति (१४) ॥५॥

राजा। मातले ! असुरसम्प्रहारोत्सुकेन पूर्वेद्युः दिवमधिरोहता न लक्षितोऽयं प्रदेशो मया, तत् कतमस्मिन् पथि वर्त्तामहे मरुताम् ? (१५)

गीतिक्षमं सङ्गीतयोग्यम्, अर्थबन्धम् अभिधेयरचनाम् [ अत्र अर्थजातमिति पाठे—अर्थसमूहमित्यर्थः ] सञ्चिन्त्य विभाव्य तव चरितानि गीतनिबद्धानि कृत्वा इत्यर्थः ; कल्पलतांशुकेषु कल्पतरुसमुद्भूतवसनेषु [ एतेन एतदेव स्थानं तल्लिखनयोग्यमिति सूचयित्वा चरितस्य उत्कर्षातिशयः ध्वन्यते ] सुरसुन्दरीणां सुराणां सुन्दर्य्यः चारुतराः स्त्रियः तासां, (न तु केवलसुरस्त्रीणां) विच्छित्तिशेषैः अङ्गरागावशिष्टैः, वर्णैः वर्णकैः, रञ्जनसाधनैः यक्षकर्दमादिभिः रक्तपीतादिभिः इत्यर्थः, ("विच्छित्तिरङ्गरागेऽपि हारविच्छेदयोरपि" इति विश्वः ) स्वहस्तेन तासाम् अङ्गरागं विधाय अवशिष्टैः वर्णकैरित्यर्थः, [एतेन त्वच्चरितस्य अतिप्रियत्वं ध्वन्यते ] तव चरितं वृत्तं कर्म्म लिखन्ति चित्रयन्तीत्यर्थः । [अत्र चरितस्य लिखनासम्भवात् गीतिनिबद्धं कृत्वा इति सुष्ठु वर्णितम् ; तथाऽत्र दैवकर्त्तृकत्वात् कर्त्तृवैशिष्ट्य, करणवैशिष्ट्यम्, अधिकरणवैशिष्ट्यं तथा लिखितव्यविषयवैशिष्ट्यञ्च अलौकिकं वर्णयित्वा उदात्तालङ्कारः प्रदर्शितः ; तेन च देवानामपि शृङ्गाररसोपभोगोपयोगि-गीतादिकं भवदनुग्रहादेव इति वस्तु व्यज्यते । विच्छित्तिशेषस्य यक्षकर्दमादेः वर्णकत्वेन निरूपणात् प्रकृतोपयोगित्वाच्च परिणामः अलङ्कारः ; अनयोः साङ्कर्य्यम् । केचित्तु राज्ञः यशोविस्तारवर्णने प्रस्तुते गीतिरचनायाः अप्रस्तुतायाः कथनात् 'लिखन्ति' इति क्रियापदस्य अन्ते विनिवेशनात् प्राचीनमतेन अन्तदीपकं नाम दीपकालङ्कारभेदं कथयन्ति ] । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥ ५ ॥

(१५) मातलिमुखात् भूयो भूयः आत्मगुणप्रशंसामाकर्ण्य महापुरुषत्वात् अस्य स्वप्रशंसाऽऽकर्णनं लज्जाकरं, मातलिरपि ततो न विरमति इति विषयान्तरेण सञ्चारयन्नाह, मातले इति ।—असुरसम्प्रहारोत्सुकेन—असुरैः सह यः सम्प्रहारः युद्धं, तस्मिन् उत्सुकेन अभिनिवेशवतेत्यर्थः । पूर्वेद्युः,—पूर्वस्मिन् दिवसे । न लक्षितः,—न सम्यक् दृष्ट इत्यर्थः । मरुतां—वायूनां, कतमस्मिन् पथि—कस्मिन् मार्गे ? इह च सप्त वायवः आवहादयः, तन्मध्ये कतमस्मिन् वायोः मार्गे सम्प्रति वर्त्तामहे ? तत् कथय

मात। त्रिस्रोतसं वहति यो गगनप्रतिष्ठां,
ज्योतींषि वर्त्तयति चक्रविभक्तरश्मिः।
तस्य व्यपेतरजसः प्रवहस्य वायोः
मार्गो द्वितीयहरिविक्रमपूत एषः (१६) ॥६॥

इत्यर्थः। तथा च सिद्धान्तशिरोमणौ,—"भूवायुरावह इह प्रवहस्तदूर्द्ध्वं स्यादुद्वहस्तदनु संवहसंज्ञकश्च। अन्यस्ततोऽपि सुवहः प्रतिपूर्वकोऽस्मात् वाह्याः परावह इमे पवनाः प्रसिद्धाः॥" इति।

(१६) भूवायोरूर्द्ध्वस्थितस्य प्रवहवायोः मार्गं वर्णयति, त्रिस्रोतसमिति।—यः गगने अन्तरीक्षे प्रतिष्ठा स्थितिर्यस्याः तां, त्रिस्रोतसं मन्दाकिनीमित्यर्थः, वहति धारयति; तथा च वायुपुराणम्,—"विभज्यमानसलिला तैजसेनानिलेन सा। मेरोरन्तरकूटेषु निपपात चतुर्ष्वपि॥" इति। तथा चक्रेण आवर्त्तनेन [रथाङ्गेन इति ध्वनिः] विभक्ताः रश्मयः किरणाः [प्रग्रहा वा इति ध्वनिः] यत्र तथाभूतः सन्; नानाज्योतिषां नानारश्मित्वात् विभागेन व्यवस्थितिरिति बोध्यम्। ज्योतींषि ग्रहनक्षत्रादीनि, वर्त्तयति चालयति वहति वा। तथा च विष्णुपुराणे,—"सूर्य्याचन्द्रमसौ तारा नक्षत्राणि ग्रहैः सह। वातानीकमयैः बन्धैः ध्रुवैर्बद्धानि तानि वै॥" इति। [अनेन यथा कश्चित् सारथिः प्रग्रहं धृत्वा स्वरथं चालयति तद्वत् अत्र चक्रपदेन ग्रहनक्षत्रादिसमष्टिरूपभचक्रस्य रश्मिपदेन वातान्तररूपप्रग्रहस्य,तथा प्रवहस्य शीघ्र-मन्दोच्चपाताख्यदेवतानां परिग्रहः शब्दशक्तिमूलया व्यञ्जनया बोध्यः। तदुक्तं सूर्य्यसिद्धान्ते,—"अदृश्यरूपाः कालस्य मूर्त्तयो भगणाश्रिताः। शीघ्रमन्दोच्चपाताख्या ग्रहाणां गतिहेतवः। तद्वातरश्मिभिर्बद्धास्तैः सव्येतरपाणिभिः। प्राक् पश्चादपकृष्यन्ते यथासन्नं स्वदिङ्मुखम्॥" इति]। व्यपेतं विगतं रजः धूलिर्यतः तथाभूतस्य प्रवहस्य तदाख्यस्य वायोः, द्वितीयः यः हरेर्वामनरूपिणः विष्णोर्विक्रमः पदक्रमः, तेन पूतः पवित्रीकृतः, एष मार्गः पन्थाः। [अत्र द्वितीयपादे—"चक्रविभक्तरश्मिः" इत्यत्र "च प्रविभक्तरश्मि" इति पाठे—प्रविभक्ता रश्मयः अर्थात् वायुरूपा एव यत्र कर्मणि तद्यथा स्यात् तथा, ज्योतींषि ध्रुवादिनक्षत्रान्तानि वर्त्तयति परिभ्रमयति इत्येवार्थः; अपि च तृतीयपादे—"द्वितीयहरिविक्रमनिस्तमस्कम्" इति पाठे—द्वितीयविष्णु-

राजा । अतः खलु मे सवाह्यान्तःकरणोऽन्तरात्मा प्रसीदति । (१७) [ रथाङ्गमवलोक्य । ] शङ्के मेघपदवीमवतीर्णाः स्मः । (१८)

मात । आयुष्मन् ! कथम् अवगम्यते ? (१९)

---

पादप्रक्षेपेण निस्तमस्कं निरन्धकारं निष्पापं वा इत्यर्थः; तथा चतुर्थपादे च—"वायोरिमं परिवहस्य वदन्ति मार्गम्" इति पाठे—परिवहस्य तदाख्यस्य वायोः इमं पुरःस्थितं मार्गं कथयन्ति इत्यर्थः । 'पुरा किल भगवान् धृतवामनरूपः स्वर्गाधिपत्यं कुर्वन्तं बलिं छलयितुं त्रिपादमितभूमिं ययाचे, स्वीकृते च तस्मिन् प्रथमपादेन भूमिं, द्वितीयेन अन्तरीक्षम् आचक्राम' इति पुराणकथाऽत्रानुसन्धेया । तथा च वामनपुराणे,—"ततः सनाकं त्रिदशाधिवासं सोमार्कऋक्षैरभिमण्डितं नभः । देवो द्वितीयेन जगाम वेगात् क्रमेण देवप्रियमीप्सुरीश्वरः ॥" इति । अत्र अङ्गभूतमहापुरुषचरितवर्णनात् उदात्तालङ्कारः; तथा चतुर्थपादे वामनबलिचरितस्य अतीतस्य प्रत्यक्षायमाणत्वात् भाविकालङ्कारः, समुदाये च स्वभावोक्तिः] । वसन्ततिलकं वृत्तम् ॥ ६ ॥

(१७) अतः खलु—अत एव, प्रवहवायुमार्गसञ्चारादेव इत्यर्थः, तत्र गङ्गास्थितेः इति भावः । सवाह्यान्तःकरणः,—वाह्यैः हस्तपदादिभिः चक्षुरादिभिश्च अन्तःकरणैः अन्तरिन्द्रियैः मनःप्रभृतिभिः सहितः,—"मनो बुद्धिरहङ्कारश्चित्तं करणमान्तरम्" इति दर्शनात् । अन्तरात्मा—जीवात्मा । [अत्र 'सवाह्यकरणः' इति पाठे—वहिरिन्द्रियसहितः अन्तरात्मा अन्तःकरणं मनः इत्यर्थः ] ।

(१८) शङ्के—मन्ये । मेघपदवीं—मेघानां पदवीं गमनमार्गं प्रवहवायोरधः आवहवायुस्कन्धमित्यर्थः । स च आवहवायुः भूवायुरिति कथ्यते । तथा च सिद्धान्तशिरोमणौ,—"भूमेर्वहिर्द्वादश योजनानि भूवायुरत्राम्बुदविद्युदाद्यम् । तदूर्ध्वगो यः प्रवहः स नित्यं प्रत्यग्गतिः तस्य तु मध्यसंस्था ॥ नक्षत्रकक्षाः खचरैः समेता यस्मादतस्तेन समागतोऽयम् । भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन ॥" इति । अवतीर्णाः,—उपगताः, इत्यर्थः ।

(१९) मेघपदवीं सम्यक् लक्षयितुमशक्नुवन्नाह, आयुष्मन्निति ।—कथं—केन प्रकारेण, अवगम्यते—बोध्यते ? [ एतेन मातलिनाऽपि देवसारथेः अत्युत्कर्षम् अस्य बुद्धेः प्रदर्श्य सूचितः नायकोत्कर्षः ] ।

राजा। अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
र्हरिभिरचिरभासां तेजसा चानुलिप्तैः।
गतमुपरि घनानां वारिगर्भोदराणां
पिशुनयति रथस्ते शीकरक्लिन्ननेमिः (२०) ॥७॥

---

(२०) मातलिः सम्यक् अवगमार्थं मेघसञ्चारमार्गं वर्णयितुं युक्तिमवतारयति, अयमिति।—शीकरैः अम्बुकणैः क्लिन्ना आर्द्रीकृता नेमयः चक्रप्रान्तदेशा यस्य तथाभूतः, अयं ते तव रथः, ("चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमान्" इति च अमरः) एतेन नेमीनां वारिशीकरस्थितत्वात् वारिशीकरस्य च मेघादन्यतः असम्भवात् अयं खलु मेघसञ्चारमार्गः सुव्यक्त एव इति नृपाभिप्रायः। 'ननु जलशीकरक्लिन्ननेमित्वन्तु प्रवहपवनमार्गे सञ्चरणसमये मन्दाकिनीवारिशीकरेभ्य एव सम्भवति, कथमेतेन मेघपदवी अवगन्तुं शक्यते' इत्यत आह, अगेति।—अगविवरेभ्यः पर्वतगह्वरेभ्यः, निष्पतद्भिः निर्गच्छद्भिः, चातकैः पक्षिविशेषैः, तेषां घनाम्बुपायित्वात् जलदजललोभार्थं तव गमनसम्भवादिति भावः। [ अत्र "अरविवरेभ्यः" इति पाठे—"अरं शीघ्रे च चक्राङ्गे" इति विश्वोक्तेः अराणि चक्राङ्गानि नाभितः नेमिपर्य्यन्तसंलग्नशलाकाकृतिकाष्ठमयाङ्गविशेषाः, तेषां विवरेभ्यः रन्ध्रेभ्यः निर्गच्छद्भिरित्यर्थः; चातकाः खलु घनाम्बुपानार्थं तत्रोपगताः सहसा जवेन स्यन्दनापतनात् अन्यतो गन्तुमशक्नुवन्तः दिग्भ्रान्ताः अरविवरेभ्यः एव निर्गच्छन्ति इति भावः। [ अत्र केवलघनरसभक्षिणां चातकपक्षिणां समागमात् सुष्ठु अयं मेघपथः इति सूचितम् ]। ननु विहगाः किल वियति वृथाऽपि विचरन्ति, तत् कथमुन्नीयते मेघमार्गोऽयम्? इत्याह, हरिभिरिति।—हरिभिः रथयोजितैः वासवीयैः अश्वैश्च, अचिरभासां विद्युतां तेजसा अनुलिप्तैश्च सद्भिः, तथा च विद्युत्स्फुरणानि तत्प्रभावेण वाजिनामपि अनुलेपनानि, कृते मेघसञ्चारमार्गात् नान्यत्र कुत्रापि सम्भवन्ति, इति सुस्पष्टं मेघपदवीति भावः। वारिगर्भोदराणां वारि गर्भे येषां तादृशानि उदराणि येषां तेषां जलपूर्णानामित्यर्थः, [न चात्र गर्भोदरयोरन्यतरोपादानेन एव समीहितसिद्धेः द्वयोरुपादाने पौनरुक्त्यमिति वाच्यम्; एकस्योपादाने वैशिष्ट्यमात्रप्रतीतेः जलपूर्णत्वाऽप्रतीतेश्च।] अत एव घनानां मेघानाम् उपरि गतं गमनं [ भावे क्तप्रत्ययः, अत एव कर्त्तरि षष्ठी ] पिशुनयति सूचयति,—"पिशुनौ खलसूचकौ" इत्यमरः। [ काव्यलिङ्गमलङ्कारः ]। मालिनी वृत्तम् ॥७॥

मात। अथकिम् । क्षणाच्चायुष्मान् स्वाधिकारभूमौ वर्त्तिष्यते। (२१)

राजा। [अधोऽवलोक्य।] मातले ! वेगादवतरणात् आश्चर्य्यदर्शनः संलक्ष्यते मनुष्यलोकः। (२२) तथाहि,—

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।
सन्धानं तनुभागनष्टसलिलव्यक्त्या व्रजन्त्यापगाः,
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते (२३) ॥८॥

(२१) अथकिम्—इति स्वीकारार्थे अव्ययम्, तदेवेत्यर्थः। स्वेति।—स्वस्य अधिकारो यस्यां स्वाधिकारा सा चासौ भूमिश्चेति तस्यां, स्वराज्ये इत्यर्थः। वर्त्तिष्यते—उपस्थास्यति (पक्षे "वत्स्यति" इति पदम्)। [क्षणादित्यनेन रथस्य वेगातिशयः सूच्यते]।

(२२) वेगात्—जवेन, अवतरणात्—अवनमनात्, आश्चर्य्यदर्शनः,—विस्मयकररूपः, मनुष्यलोकः,—मर्त्त्यभूमिः। संलक्ष्यते—अनुभूयते।

(२३) आश्चर्य्यदर्शनतां युक्त्या प्रतिपादयति, शैलानामिति।—उन्मज्जताम् उत्पततां, प्रकटीभवतामित्यर्थः, [अत्र उन्मज्जत्-शब्देन लक्षणया प्राकट्यार्थः बोध्यते, तेन च तद्गतात्यल्पत्वं व्यज्यते; ईषत् संलक्ष्यमाणानामिति पर्य्यवसितार्थः।] शैलानां पर्वतानां शिखरात् शृङ्गात् [जातावेकवचनं] शिखरेभ्यः इत्यर्थः; मेदिनी अवरोहतीव अवनमतीव; पूर्वं खलु दूरतया सशैलवनकानना पृथिवी समतया अवन्धुरा अविभक्तेव आसीत्, सम्प्रति सान्निध्येन शैलादीनां क्रमशः प्रकटीभवनात् निम्नगामिनीव संलक्ष्यते इति भावः। पादपाः तरवः स्कन्धानां प्रकाण्डानाम् ("अस्त्री प्रकाण्डः स्कन्धः स्यात्" इत्यमरः) उदयात् प्रकाशात्, पर्णानां पत्राणाम् अभ्यन्तरेषु मध्येषु लीनतां तदाकारतामिति यावत्, विजहति त्यजन्ति; प्राक् पत्रैरलक्षिताः क्रमशः काण्डशाखादिविभागतः लक्ष्यन्ते इति भावः। आपगाः अपां समूहः आपः [अण्प्रत्ययः] समुद्रः तं गच्छन्ति याः ताः [आप+गम् ड:] नद्यः, तनुभागेषु अल्पपरिसरेषु, नष्टस्य अदर्शनं गतस्य इत्यर्थः, सलिलस्य व्यक्त्या प्रकाशेन, सन्धानं संयोगं, व्रजन्ति प्राप्नुवन्ति; नद्यः प्राक् दूरतः क्षीणत्वेन प्रतीयमानतया अदृष्टसलिला आसन्, सम्प्रति सान्निध्यात् स्पष्टाः लक्ष्यन्ते इति भावः। [अत्र "सन्तानैस्तनुभावनष्टसलिला व्यक्तिं व्रजन्त्यापगाः" इति पाठे—तनुभावेन तनुत्वेन, क्षीणत्वेन इत्यर्थः, नष्टम्

मात। आयुष्मन्! साधु दृष्टम्। [सबहुमानमालोक्य।] अहो! उदाररमणीया पृथिवी। (२४)

राजा। मातले! कतमोऽयं पूर्वापरसमुद्रावगाढ़ः कनकरसनिष्यन्दी सान्ध्य इव मेघः सानुमान् आलोक्यते? (२५)

मात। आयुष्मन्! एष खलु हेमकूटो नाम किम्पुरुषपर्वतः, परं तपस्विनां क्षेत्रम्। (२६)

---

अदृश्यत्वं गतं सलिलं यासां ताः आपगाः सन्तानैः विस्तारैः ("सन्तानौ विस्तृतौ देवद्रुमे चापत्यगोत्रयोः" इति धरणिः) व्यक्तिं प्रकाशं व्रजन्ति, गच्छन्ति इत्यर्थः]। अतः केनापि जनेन कुतुकिना उत्क्षिपतेव ऊर्द्धक्षेपणं कुर्वतेव, भुवनं जगत्, पृथ्वीत्यर्थः, मत्पार्श्वं मम समीपम्, आनीयते प्रापय्यते, पश्य अवलोकय। [ अत्र स्वभावोक्त्यनुप्राणितोत्प्रेक्षालङ्कारः। स्वभावोक्तिलक्षणमुक्तं दर्पणे,—"स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्" इति। अत्र प्रथमे पादे इवशब्दसत्त्वात् तथा तुरीये उत्क्षिपतेव इत्यत्रापि तत्सत्त्वात् वाच्योत्प्रेक्षाद्वयम्; 'मत्पार्श्वमानीयते' इत्यत्र च व्यञ्जकाभावात् गम्योत्प्रेक्षा एकैव, तथा चतुर्थचरणवाक्यार्थं प्रति पूर्ववाक्यत्रयगतार्थजातानां हेतुत्वात् काव्यलिङ्गम्; इत्येषां संसृष्टिः। पाठान्तरे—सन्तानपदस्य अपत्यविस्ताररूपोभयार्थबोधकत्वेऽपि अपत्ये प्रसिद्धतया विस्तारे निहतार्थता दोषः, तथा नष्टपदस्य अदृश्यार्थे अवाचकत्वं दोषः; अपरतश्च सन्धानपदस्य प्रागभिधानात् अस्थानस्थपदभावः दोषः कथञ्चित् पाठान्तरं परिकल्प्य परिहरणीयः ]। शार्दूलविक्रीड़ितं वृत्तम्॥ ८॥

(२४) उदाररमणीया—अतिरमणीया।

(२५) पूर्वापरसमुद्रावगाढ़ः,—पूर्वापरौ सागरौ अवगाह्य स्थित इत्यर्थः। कनकरसनिष्यन्दी—सुवर्णद्रवस्रावी। सान्ध्यः,—सन्ध्याकालीनः। ["मेघ इव" इत्युपमाऽलङ्कारः]। सानुमान्—पर्वतः। कतमः,—पर्वतानां मध्ये कः इत्यर्थः। [अत्र "मेघपरिघः" इति पाठे—मेघार्गल इत्यर्थः, मेघस्य परिघेण उपमा तु दीर्घतार्थं बोध्या]।

(२६) हेमकूटो नाम—हेम काञ्चनमयं इत्यर्थः, कूटः शृङ्गं यस्य तथाभूतः, तन्नाम्ना प्रसिद्ध इत्यर्थः। किम्पुरुषपर्वतः,—किंपुरुषवर्षपर्वतः इत्यर्थः। परं—महत्। तपस्विनां क्षेत्रं—प्रकृष्टतपस्यास्थानम् इत्यर्थः। तथा च पद्मपुराणे,—"दक्षिणे भारतं वर्षमुत्तरे लवणोदधेः। कूलादेव महाभाग! तस्य सीमा हिमालयः॥ ततः किंपुरुषवर्षं हेमकूटादधः स्थितम्। हरिवर्षं ततो ज्ञेयं निषधोऽवधि-

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति (२७) ॥९॥

राजा। [सादरम्।] तेन हि अनतिक्रमणीयानि श्रेयांसि, प्रदक्षिणीकृत्य भगवन्तं गन्तुम् इच्छामि। (२८)

मात। आयुष्मन्! प्रथमः कल्पः। (२९) [अवतरणं नाटयन्।](३०) एतौ (३१) अवतीर्णौ स्वः।

राजा। [सविस्मयम्।] मातले!—

उपोढशब्दा न रथाङ्गनेमयः,
प्रवर्त्तमानं न च दृश्यते रजः।

---

कथ्यते॥" इति। विष्णुपुराणेऽपि—"भारतं प्रथमं वर्षं ततः किंपुरुषं स्मृतम्। हरिवर्षं तथैवान्यत् मेरोः दक्षिणतो द्विज॥" इति। [अत्र "किंपुरुषपर्वतः तपःसंसिद्धिक्षेत्रम्" इति पाठान्तरं सुगममेव]।

(२७) स्वायम्भुवादिति।—स्वायम्भुवात् स्वयम्भूः ब्रह्मा, तस्य अपत्यं पुमान् स्वायम्भुवः, तस्मात्; मरीचेः यः प्रजापतिः विधाता प्रजास्रष्टा प्रबभूव प्रथमं जज्ञे, सुराणाम् असुराणाञ्च गुरुः पिता [अनेन राज्ञोऽपि अवश्यं नमस्करणीयत्वं सूचयित्वा तत्र गमनमपि ध्वनितम्] सः काश्यप इत्यर्थः, सपत्नीकः सभार्य्यः सन् [अनेन तत्र स्त्रीजनसत्त्वात् तत्राऽपि भार्य्यासमागमो भावीति सूचितम्।] अस्मिन् हेमकूटे तपस्यति तपश्चरति। पथ्यावक्त्रं वृत्तम्॥९॥

(२८) अनतिक्रमणीयानि—अनवज्ञेयानि। श्रेयांसि—मङ्गलानि। प्रदक्षिणीकृत्य—प्रगतं दक्षिणम् इति प्रदक्षिणम् [अव्ययीभावसमासः] अतथा तथा कृत्वा इति प्रदक्षिणीकृत्य, [अभूततद्भावे च्विप्रत्ययः] भ्रमणेन प्रकृष्टं दक्षिणं कृत्वा इत्यर्थः। गन्तुं—यातुम्; स्वराज्यमिति शेषः।

(२९) प्रथमः,—मुख्यः, कल्पः,—विधिः, अनुष्ठानमित्यर्थः।

(३०) नाटयन्—अभिनयन्।

(३१) एतौ—आवामिति शेषः।

(३२) अज्ञातरथावतरणो राजा सहसा तदवस्थावतरणमवलोक्य सविस्मयं तद्वर्णयन्नाह, उपोढेति।—अभूतलस्पर्शतया अस्पृष्टभूतलतयेत्यर्थः, भूमितलस्पर्शाभावेन

अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि न लक्ष्यते रथः ! (३२) ॥१०॥

मात। एतावानेव शतमन्योः (३३) आयुष्मतश्च रथस्य विशेषः।

राजा। मातले ! कतमस्मिन् प्रदेशे मारीचाश्रमः ? (३४)

मात। [ हस्तेन दर्शयन्। ] पश्य,—

वल्मीकार्द्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः,
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसम्पीड़ितः।

इति यावत्, रथाङ्गानां चक्राणां नेमयः प्रान्तभागाः, न उपोढ़ः सञ्जातः शब्दः येषां तथाभूताः, निःशब्दा इत्यर्थः ; अत एव रजश्च रेणुश्च नेमिसमुत्थितमिति शेषः, प्रवर्त्तमानम् उड्डयमानं न च दृश्यते। निर्नास्ति उद्धतिरौद्धत्यम् उच्चनीचस्पर्शजनितं चाञ्चल्यमिति यावत्, यस्य तथाभूतः तव रथः, अवतीर्णोऽपि न लक्ष्यते, अवतरतीति नानुमीयते इत्यर्थः ; अथवा—"न लक्ष्यते ?" इति काकुः, लक्ष्यते एव इत्यर्थः। [अत्र चतुर्थचरणवाक्यार्थं प्रति पूर्ववाक्यत्रयार्थस्य हेतुत्वात् काव्यलिङ्गम्। काका व्यञ्जितेऽर्थे च अवतरणानुभवस्य कार्य्यस्य नेम्यादिशब्दरूपकारणाभावात् विशेषोक्तिः अलङ्कारः द्रष्टव्यः ]। वंशस्थविलं वृत्तम् ॥१०॥

(३३) शतमन्योः,—शतं मन्यवः यज्ञा यस्य सः तस्य।—"मन्युर्दैन्ये क्रतौ क्रुधि" इत्यमरः। [शताश्वमेधरूपातिकष्टसाध्यकर्मकरणानन्तरम् इन्द्रत्वलाभे लोकातिशयानि विस्मयकराणि च एवंविधानि वस्तूनि लभ्यन्ते इति शतमन्युशब्देन व्यज्यते ]।

(३४) मारीचाश्रमः,—मरीचिः ब्रह्मात्मजः, तस्य अपत्यं मारीचः काश्यपः, तस्य आश्रमः तपश्चरणस्थानम्।

(३५) वल्मीकेति।—यत्र आश्रमे असौ मुनिः ( कश्चिदिति शेषः ) वल्मीकेषु तदाख्यकीटविशेषोत्थापितमृत्तिकास्वित्यर्थः, अर्द्धनिमग्ना मूर्त्तिर्यस्य तथाभूतः ; [ अत्र "वल्मीकाग्र" इति पाठे—वल्मीकस्य वामलूरमृत्तिकास्तूपस्य अग्रे प्रान्ते इत्यर्थः। दीर्घकालिकतपश्चरणाय एकस्थाने निश्चलतया स्थितत्वात् तथाभूतत्व, अनेन दीर्घकालं व्याप्य तपस्यानुष्ठानञ्च सूचितम्। ] उरगत्वक् भुजंगनिर्मोक एव ब्रह्मसूत्रान्तरम् अपरयज्ञोपवीतं, यज्ञोपवीतत्वेन प्रतीयमानमित्यर्थः, यस्य तादृशः, [ अत्र च "उरसा संदष्टसर्पत्वचा" इति पाठे—संदष्टाः संसक्ताः सर्पत्वचो यत्र तादृशेन, उरसा वक्षःस्थलेन उपलक्षितः इत्यर्थः। उपलक्षणे तृतीया अनेन

अंसव्यापि शकुन्तनीड़निचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कविम्बं स्थितः(३५)॥११॥

राजा। [विलोक्य।] नमोऽस्मै कष्टतपसे! (३६)

---

सर्वप्राणिसमभावत्वं वात्सल्यविलक्षणा च व्यज्यते।] कण्ठे गलदेशे [अवच्छेदे सप्तमी] जीर्णः परिणतः [अनेन लतायाः स्थूलत्वं बहुशाखत्वञ्च व्यज्यते] यः लताप्रतानः वल्लीप्रचयः स वलय इव कण्ठरोमाणि इव ("वलयः कण्ठरोगि स्यात् वलयं कङ्कणेऽपि च" इति विश्वः) तेन; अथवा—जीर्णं शुष्कं यत् लताप्रतानवलयं वल्लीप्रचयमण्डलं तेन। [केचिदत्र प्रतानशब्दस्य क्लीवत्वं वदन्ति, तन्न, घञन्तत्वात्। केचित् तु प्र-शब्दात् ट्युल् तुट च इति कृत्वा प्रतनशब्दं निष्पाद्य ततः स्वार्थे अण्प्रत्ययेन प्रतानशब्दं साधयन्ति, वलयशब्दस्य विशेषणमपि ददति च।] अत्यर्थम् अतिशयेन इत्यर्थः, सम्पीड़ितः सम्यक् क्लेशं प्रापितः इत्यर्थः, [अनेन अपकुर्वाणेऽपि आश्रयदानेन दयाप्रकाशसूचनात् अस्य सर्वेभ्यः प्रकर्षः ध्वन्यते] अंसव्यापि स्कन्धपर्य्यन्तलम्बि [अनेन नीड़स्य वृहत्तरत्वं सूच्यते] शकुन्तानां पक्षिणां नीड़ैः कुलायैः आवासैः इत्यर्थः, ("कुलायो नीड़मस्त्रियाम्" इत्यमरः) निचितं व्याप्तं जटामण्डलं जटासमूहं बिभ्रत् दधानः, [अनेन स्वदेहोऽपि परोपकारार्थः इति सर्वात्मना स्वार्थत्यागी ध्वन्यते। स्थाणुपक्षेऽपि—विशेषणान्येतानि योज्यानि। तत्र एतावान् विशेषः, यत्—लक्षणया कण्ठपदस्य उपकण्ठपरता, अंसपदस्य प्रकाण्डपरता, तथा जटापदस्य किशलयादिपरता च बोद्धव्या।] अत एव अचलः निश्चलः स्थाणुरिव शाखापत्रादिवर्जिततरुरिव; अथवा—हर इव, ("स्थाणुः कीले हरे पुमान्" इति मेदिनी) अभ्यर्कविम्बम्—अर्कस्य सूर्य्यस्य विम्बः (लक्षणया मण्डलोदयस्य प्राग्दर्शनं) यत्र सा अर्कविम्बा प्राचीदिगित्यर्थः; तामभिलक्षीकृत्य [इत्याभिमुख्येऽव्ययीभावः] स्थितः। लक्षणाबीजन्तु सूर्य्यास्तगमनसमये ऋषेः तदभिमुखपातित्वे तस्य स्थाणुवदचलावस्थितिविरोधः। [केचित् तु—"अभिरभागे"(१।४।९१पा०) इति सूत्रेण अभेः कर्म्मप्रवचनीयत्वादेव तद्योगे द्वितीयेति वदन्ति, तन्न;—"लक्षणादिष्वेव भागवर्जितेषु अभिः कर्म्मप्रवचनीयसंज्ञो भवति" इति काशिकायाम् अनुशिष्टतया अत्र तदर्थकत्वाभावात् इति विभाव्यम्। अत्र सार्थकविशेषणभूयस्त्वात् परिकरः, श्लेषानुप्राणितोपमा च अलङ्कारः]। शार्दूलविक्रीड़ितं वृत्तम्॥११॥

(३६) कष्टतपसे—कष्टं कठिनं तपो यस्य तथोक्ताय। अस्मै मुनिविशेषाय नमः [नमःशब्दयोगे चतुर्थी]।

मात। [संयतप्रग्रहं (३७) रथं कृत्वा।] एतावदितिपरिवर्द्धित-मन्दारवृक्षं प्रजापतेराश्रमं (३८) प्रविष्टौ स्वः।

राजा। अहो! स्वर्गात् इदमधिकतरं निर्वृतिस्थानम्, अमृतह्रदमिव अवगाढोऽस्मि। (३९)

मात। [रथं स्थापयित्वा।] अवतरतु आयुष्मान्।

राजा। [अवतीर्य्य।] (४०) भवान् किमिदानीम्? (४१)

मात। समययन्त्रित एवायमास्ते रथः, तद्वयमपि अवतरामः। (४२) [तथा कृत्वा।] इत इत आयुष्मन्! दृश्यन्ताम् अत्रभवताम् ऋषीणां तपोवनभूमयः।

---

(३७) संयतप्रग्रहं—धृतरश्मिम्।

(३८) अदितीति।—अदितिः,—देवजननी, तया परिवर्द्धिता जलसेकादिना वृद्धिमापादिता मन्दारवृक्षा देवतरुविशेषा यस्मिन् तथोक्तम्। प्रजापतेः,—कश्यपप्रजापतेः, आश्रमं—तपोवनम्।

(३९) निर्वृतिस्थानं—सुखस्थानम्। अमृतह्रदमिव—अमृतपूर्णजलाशयमिव [इत्युत्प्रेक्षा]। अवगाढः,—निमग्नः। [प्रियसमागमस्थानं हि जनस्य परं निर्वृतिकरं भवति, अत एव सर्वेषां निरतिशयसुखावहेऽपि स्वर्गे प्रियजनविरहिततया राज्ञः तथाविधसुखाद्यनधिगमः। आश्रमेऽस्मिन् अनुतापानलदग्धस्य पुत्रविरहितस्य राज्ञः अचिरेणैव जायासुतसम्मीलनरूपामृतह्रदावगाहनेन सन्तापनाशो भविष्यतीति भाव्यर्थसूचनाय अमृतेत्यादिपदोपादानम्]।

(४०) अवतीर्य्य—अवरुह्य।

(४१) अवतीर्णोऽपि राजा अपरिचितमार्गतया मातलिमपि तत्र नेतुमना मान्यं च देवसारथौ इतरभृत्यवत् आदेशानर्हत्वमाकलय्य असम्पूर्णवाक्येन पृच्छति, भवानिति।—किमिति।—प्रश्नसूचकम्, 'अवतरिष्यति?' इति वाक्यशेषः; भवदवतरणमपि ममाभिप्रेतमिति भावः।

(४२) समययन्त्रितः,—समयेन व्यवस्थया, "यावद्वयं न प्रत्यावर्त्तामहे, तावदत्रैव तिष्ठ" एवं नियमेन इति भावः, देवविमानस्य सचेतनत्वात्; यन्त्रितः,—निबद्धः। अथवा—समयेन सङ्केतविशेषेण यन्त्रितः अवरोधित एवेत्यर्थः। तत्—तस्मात्, वयमपि—अहमपि इत्यर्थः, [अस्मदः एकत्वेऽपि बहुत्वस्य विकल्पेन विवक्षितत्वात्]। अवतरामः,—अवरोहामः; तथा च ममापि अवतरणे नास्ति काचिद्धानिरित्यर्थः।

राजा। ननु विस्मयात् उभयमपि अवलोकयामि। (४३)—

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।
ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी(४४)॥१२॥

मात। उत्सर्पिणी खलु महतां प्रार्थना। (४५) [ परिक्रम्य

(४३) ननु—भोः, विस्मयात्—आश्चर्य्येण, उभयमपि—एकमेतत् तपस्याचेत्रम्, अपरञ्च तपःफलभोगस्थानमिदमित्युभयमित्यर्थः।

(४४) प्रागुक्तविस्मयस्य कारणं तपःफलभूतेऽपि स्थाने तपश्चरणरूपं दर्शयन्नाह, प्राणानामिति।—अन्ये मुनयः भूमिष्ठाः तापसाः तपोभिः यत् स्वर्गादिकं स्थानं वाञ्छन्ति अभिलषन्ति, अमी मुनयः तस्मिन् तपस्यन्ति तपश्चरन्ति ; [ "कर्म्मणो रोमन्थतपोभ्यां वर्त्तिचरोः" ( ३।१।१५ पा० ) इति क्यङ्, ततः "तपसः परस्मैपदं च" वा० इति परस्मैपदम् ]। तथाहि—सन्तः विद्यमानाः कल्पवृक्षाः अभीष्टफलदायिनः देवतरुविशेषाः यस्मिन् तादृशे वने, उचिता अवश्यकर्त्तव्या प्राणानां वृत्तिः जीवनयात्रा अनिलेन वायुना, न तु कल्पवृक्षप्रदत्तवाञ्छितसुरम्यवस्तुना ; तपःसञ्चितफलप्रसवकारिवृक्षसत्त्वेऽपि वायुभक्षणेन जीवन्तः तपस्यन्तीति भावः। काञ्चनपद्मरेणुभिः कपिशे पिङ्गले तोये सलिले पुण्याभिषेकक्रिया पुण्यार्थं धर्मार्थं, न तु भोगार्थम्, अभिषेकक्रिया अवगाहनव्यापारः, स्नानविधिरित्यर्थः, रत्नशिलागृहेषु मणिमयोपलमण्डितसद्मसु ध्यानं समाधिः ; यत्र कुत्रचित् ध्यानं कर्त्तव्यम् इति बुद्ध्या ध्यानमात्र, न तु विहारयोग्यस्थानत्वात् तत्र विहारादि। तथा विबुधस्त्रीणां सुरसुन्दरीणां सन्निधौ संयम इन्द्रियवशीकरणम्। संयमस्तु जनसञ्चारस्थान एव दुष्करः, तत्रापि स्त्रीसन्निधौ, तत्रापि च रमणीललामभूतानां देवाङ्गनानां सान्निध्ये, इत्यहो ! महदाश्चर्य्यकरम् एतत् स्थानम् इति भावः। [ अत्र कल्पवृक्षादीनां साधनानां विद्यमानत्वपि कार्य्यस्य अनुत्पत्त्या विशेषोक्तिः मालारूपा, तथा मुनीनां धैर्य्यातिशयः तपसोऽपि दुष्करत्वं व्यज्यते ; इत्यलङ्कारेण वस्तुध्वनिः ]। शार्दूलविक्रीड़ितं वृत्तम् ॥१२॥

(४५) उत्सर्पिणी—उत् ऊर्द्धम् उपर्य्युपरि सर्पति गच्छति या सा इति णिनिः, महोन्नतिमती इत्यर्थः, महतां—मनस्विनां, प्रार्थना—अभिलाषः ; महान्तः खलु

आकाशे।] वृद्धशाकल्य ! किंव्यापारः सम्प्रति भगवान् मारीचः ? (४६) [आकर्ण्य।] किं ब्रवीषि ?—"दाक्षायण्या पतिव्रतापुण्यम् अधिकृत्य पृष्टस्तदस्यै महर्षिपत्नीगणसहितायै कथयतीति," तत् प्रतिपाल्यावसरः खलु प्रस्तावः। (४७) [राजानमवलोक्य।] अस्यामशोकच्छायायां तावदास्ताम् आयुष्मान्, यावत् त्वामहम् इन्द्रगुरवे निवेदयामि। (४८)

राजा। यथा भवान् मन्यते।

[इति स्थितः। मातलिर्निष्क्रान्तः]। *

उत्तरोत्तरम् उन्नतिमेव प्रार्थयन्ते इत्यर्थः। [अनेन प्रागुक्तराजवाक्यसमर्थनात् सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः]।

(४६) वृद्धेति।—वृद्धशाकल्य इति कस्यचित् तापसस्य नामधेयम्। ["वृद्ध-साकल्य" इति पाठे—वृद्धसमुदाय इत्यर्थोऽपि कर्त्तुं शक्यते, तत्र च 'ब्रवीषि' इति मध्यमपुरुषैकवचनं कष्टेनोपपादनीयम्; वस्तुतस्तु साकल्यशब्दस्य समुदायवाचित्वे नपुंसकलिङ्गत्वापत्तिश्च इति चिन्तनीयम्]। किंव्यापारः—किमाचारः, कस्मिन् कार्य्ये रत इत्यर्थः।

(४७) दाक्षायण्या—दक्षस्य अपत्यं स्त्री दाक्षायणी, अदितिः, तया। पति-व्रतापुण्यं—पातिव्रत्यधर्म्मम्, अधिकृत्य—अवलम्ब्य, तत्—तस्मात्, प्रतिपाल्यावसरः,—प्रतिपाल्यः अपेक्षणीयः अवसरो यस्य तादृशः, प्रतीक्षणीयसमयः इत्यर्थः। प्रस्तावः,—प्रसङ्गः, साक्षात्करणेन प्रदक्षिणीकरणरूप इति यावत्।

(४८) अशोकच्छायायाम्—अशोकतरुतलस्थितानातपप्रदेशे [अनेन आत्मनोऽपि शोकाभावः भविष्यतीति सूच्यते। बाहुल्ये गम्यमाने एव छायान्तस्तत्पुरुषो नपुंसकलिङ्गो भवति; अत्र तदर्थकत्वाभावादेव न क्लीवत्वमिति विभाव्यम्]। इन्द्रगुरवे—इन्द्रस्य गुरुः पिता, तस्मै, कश्यपाय इत्यर्थः।

* इदमवावधातव्यं—यदितः सहसा मातलेर्निष्क्रामणं, राज्ञोऽपि तथाश्रमेऽनयनं, शकुन्तलायाम् अप्सरःसम्भवायां व्यभिचारशङ्कानिरासार्थञ्च पातिव्रत्यधर्माख्यानं, एतत् सर्वमत्र राज्ञः आयासुतसम्मीलनार्थम् उपनिबद्धं कविना इति]।

राजा । [ निमित्तं सूचयित्वा । ] (४९)—

मनोरथाय नाशंसे किं बाहो ! स्पन्दसे मुधा ?
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्त्तते (५०).॥१३॥

[ नेपथ्ये । ] मा क्खु चवलदं करेहि, जहिं तहिं ज्जेव अत्तणो पइदिं दंसेसि ? (क) (५१)

राजा । [ कर्णं दत्त्वा । ] अभूमिरियम् अविनयस्य, तत् को नु खलु एवं निषिध्यते ? (५२) [ शब्दानुसारेणावलोक्य सविस्मयम् । ]

(क) मा खलु चपलतां कुरु, यत्र तत्र एव आत्मनः प्रकृतिं दर्शयसि ?

(४९) निमित्त—सुलक्षणविशेषं, वामेतरभुजस्पन्दनमित्यर्थः, सूचयित्वा—अभिनीयेत्यर्थः ।

(५०) मनोरथायेति ।—हे बाहो ! किं कथं मुधा व्यर्थं स्पन्दसे स्फुरसि ? 'कुतो वृथास्पन्दनम् ?' इत्याह, मनोरथायेति ।—मनोरथाय मनोऽभिलषितायाः शकुन्तलायाः प्राप्तये, हृदयान्तर्निहितां तामिदानीं लब्धुम् इत्यर्थः, न आशंसे न आशां करोमि ; दूरमास्तां शकुन्तलालाभकथा, मम मनोरथाशंसापि नास्ति इति भावः । हि यतः, पूर्वम् अवधीरितम् अवज्ञातं, ( कर्त्तृ ) न तु परित्यक्तमित्यर्थः, श्रेयः मङ्गलं, दुःखं परिवर्त्तते दुःखरूपेण परिणमति इत्यर्थः । [ वामेतरबाहुस्फुरणरूपशकुन्तलालाभोपायात् भूतपूर्वाऽयथातत्तिरस्क्रियारूपापायशङ्कया च अनिर्द्धारिततल्लाभरूपश्रेयः-प्राप्तिः प्राप्त्याशानाम बीजादिपञ्चकेषु कार्य्यरूपसन्धिविशेषस्यावान्तरभेदोऽयमिति । तथा चोक्तं दर्पणे,—"उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः" इति । [ अत्र पूर्वार्द्धे शकुन्तला-लाभरूपं विषयं निगीर्य्य मनोरथरूपेणाध्यवसानात् अतिशयोक्तिः ; उत्तरार्द्धे च सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ; इत्यनयोः संसृष्टिः । ] पथ्यावक्त्रं वृत्तम् ॥१३॥

(५१) चपलतां—चाञ्चल्यं, मा कुरु—परिहर इत्यर्थः । [ अनेन "चपलतां परिहर, तव प्रियालाभः नूनं भविष्यति" इत्यपि शकुन्तलालाभसंशयाकुलस्य राज्ञः मनोरथायेत्यादिभाषणस्य प्रत्युत्तरीभूतेन नेपथ्यविहितेन निषेधवचसा सूचनात् तृतीयं पताकास्थानम् इदमिति केचिदाचक्षते ] । यत्र तत्र—यस्मिन् तस्मिन्, स्वस्मात् प्रबलेऽपि इत्यर्थः । प्रकृतिं—स्वभावम् ।

(५२) अभूमिः,—अयोग्यस्थानम् । अविनयस्य—अशिष्टाचारस्य । निषिध्यते—निवार्य्यते ।

अये! को नु खलु अयमवरुध्यमानः तापसीभ्यामबालसत्त्वो बालः (५३)—

अर्द्धपीतस्तनं मातुरामर्दक्लिष्टकेशरम्।
प्रक्रीड़ितुं सिंहशिशुं करेणैवावकर्षति? (५४) ॥१४॥

[ ततः प्रविशति यथानिर्दिष्टकर्मा तापसीभ्यां सह बालः ]। (५५)

बालः। जिम्भ (५६) ले सिंहसावआ जिम्भ, दन्ताइं दे गणइस्सं। (ख)

प्रथमा। अविणीद! किं णो अपच्चणिव्विसेसाइं सत्ताइं

(ख) जृम्भस्व रे सिंहशावक! जृम्भस्व, दन्तांस्ते गणयिष्यामि।

---

(५३) अवरुध्यमानः,—निरुध्यमानः। अबालसत्त्वः,—अबालस्य यून इत्यर्थः, सत्त्वमिव सत्त्वं बलं यस्य तथाभूतः, महाबल इत्यर्थः। बालः,—शिशुः। [ पदमेतत् श्लोकस्थावकर्षतीतिक्रियापदेनान्वेति ]।

(५४) अबालसत्त्वत्वं दर्शयति, अर्द्धपीतेति।—मातुः सिंह्याः अर्द्धं यथा तथा पीतौ स्तनौ येन तथोक्तम्, आमर्देन आकर्षणेन क्लिष्टाः खस्ताः केशराः जटा यस्य तादृशं, सिंहशिशुं, प्रक्रीड़ितुं मनोविनोदनार्थमिति भावः, करेण एव अवकर्षति आकर्षति। [ साधारणो बालः खलु कस्यापि आकर्षणमेव कर्त्तुं न शक्नोति, तत्र सिंहशिशुं, तत्रापि स्तन्यं पिबन्तं, तत्रापि दूरस्थः सन् केनचित् दण्डादिना न—अपि तु स्वकरेण, तत्रापि न रज्ज्वादिना बद्धा, अपि तु जटाः धृत्वा, तत्रापि च ततो नात्मत्राणार्थम्, अपि तु मनोविनोदनार्थम्, तत्रापि न बद्धा पलायते, अपि तु आकर्षति, इति अस्य सर्वेभ्यः प्रभावातिशयः प्रकर्षातिशयश्च व्यज्यते; एतेन अबालसत्त्वत्वमपि प्रदर्शितम्। अत्र च स्वभावोक्तिरलङ्कारः, महतां चरितवर्णनात् उदात्तालङ्कारश्च ]। पथ्यावक्त्रं वृत्तम् ॥१४॥

(५५) यथेति—मातुरन्तिकात् जटायां सिंहशावकमाकर्षन् इत्यर्थः। [तापसीभ्यामित्यत्र सहार्थे तृतीया ]।

(५६) जृम्भस्व—मुखं विस्तारयेत्यर्थः।

विप्पअरेसि ? हन्त वड्डइ विअ दे संरम्भो !. ट्ठाणे क्खु इसिजणेण सव्वदमणो त्ति किदणामहेओसि। (ग) (५७)

राजा। किं नु खलु बालेऽस्मिन् औरस इव पुत्रे स्निह्यति मे हृदयम्?(५८) [विचिन्त्य।] नूनम् अनपत्यता मां वत्सलयति। (५९)

द्वितीया। एसा तुमं केसरिणी लङ्घइस्सदि—जइ से पुत्तअं ण मुंचिस्सदि। (घ) (६०)

बालः। [सस्मितम्।] अम्महे! बलीअं क्खु भीदोह्मि। (ङ)(६१)

[इति अधरं दर्शयति]। (६२)

---

(ग) अविनीत! किं नोऽपत्यनिर्विशेषाणि सत्त्वानि विप्रकरोषि? हन्त वर्द्धत इव ते संरम्भः! स्थाने खलु ऋषिजनेन "सर्वदमनः" इति कृतनामधेयोऽसि।

(घ) एषा त्वां केशरिणी लङ्घयिष्यति—यद्यस्याः पुत्रकं न मोक्ष्यसि।

(ङ) अहो! बलीयः खलु भीतोऽस्मि!

---

(५७) अपत्यनिर्विशेषाणि—अपत्यात् तनयात् नास्ति विशेषः वैषम्यं येषु तानि, पुत्राऽभिन्नानि, सत्त्वानि—प्राणिनः। विप्रकरोषि—उत्पीड़यसि। हन्त—खेदे, संरम्भः,—क्रोधः। स्थाने—युक्तम् [अव्ययमेतत्]। सर्वदमनः—सर्वान् प्राणिनः दमयतीति तथोक्तः।

(५८) किंनु—वितर्के। औरसे इव—आत्मजे इव, तथा च मनुः,—"स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम्॥ तमौरसं विजानीयात् पुत्रं प्रथमकल्पिकम्॥" इति। स्निह्यति—स्नेहयुक्तं भवति।

(५९) अनपत्यता—अपुत्रता। वत्सलयति—स्नेहयति। 'यस्य हि यत् नास्ति, तत् स्वार्थसिद्धिकरं भवति चेत् तदा तस्य तद् ग्रहणे औत्सुक्याधिक्यं दृश्यते' इत्यादि-लौकिकव्यवहारमनुसृत्य राज्ञः नूनमित्याद्युक्तिर्विज्ञेया, इदानीं स्वपुत्रत्वेन प्रत्यभि-ज्ञानाभावात्; परन्तु "आत्मा वै जायते पुत्रः" इत्यादिश्रुत्या आत्मपुत्रयोरभेदप्रति-पादनात् स्वपुत्रेऽस्मिन् बाले राज्ञः तथाविध स्नेहाभिव्यक्तिर्भूतेति बोद्धव्यम्।

(६०) केशरिणी—सिंही, सिंहजननीत्यर्थः। लङ्घयिष्यति—आक्रमिष्यति।

(६१) बलीयः,—अत्यन्तमित्यर्थः [क्रियाविशेषणमेतत्]। भीतोऽस्मि—(सोत्प्रासवाक्यमेतत्) इतः का भीतिः? इति गूढ़ाभिप्रायः।

(६२) अधरं—निम्नोष्ठं, दर्शयति तापस्यै इति शेषः।

राजा। [ सविस्मयम् ]।—

महतस्तेजसो वीजं वालोऽयं प्रतिभाति मे।

स्फुलिङ्गावस्थया वह्निरेधोऽपेक्ष इव स्थितः (६३) ॥१५॥

प्रथमा। वच्छ ! एदं मुञ्च बालमइन्दअं, अवरं दे कीलणअं दाइस्सं। (च) (६४)

बालः। कहिं ? देहि णं। (छ)

[ इति हस्तं प्रसारयति ]।

राजा। [ बालस्य हस्तं दृष्ट्वा। ] कथं चक्रवर्त्तिलक्षणम् अपि अनेन धार्य्यते ? (६५)—

प्रलोभ्यवस्तुप्रणयप्रसारितो

विभाति जालग्रथिताङ्गुलिः करः।

(च) वत्स ! एतं मुञ्च बालमृगेन्द्रकम्, अपरं ते क्रीड़नकं दास्यामि।

(छ) कुत्र ? देहि एनत्।

(६३) महत इति।—अयं समीपवर्त्ती बालः शिशुः, स्फुलिङ्गावस्थया अग्निकणरूपेण स्थितः, एधोऽपेक्षः एधांसि इन्धनानि ("काष्ठं दार्विन्धनं त्वेध इध्ममेधः" इत्यमरः) अपेक्षते इति तथाभूतः, वह्निरिव, महतः अनल्पस्य तेजसः प्रभावस्य, वह्निपक्षे—ज्वलनस्य, वीजं कारणं, मे मम सम्बन्धे प्रतिभाति प्रकाशते। आ बाल्यादस्मिन् बालके महत् निगूढ़ं तेजः वर्त्तते इत्यर्थः। [अत्र उपमाऽलङ्कारः ]। पथ्यावक्त्रं वृत्तम् ॥१५॥

(६४) बालमृगेन्द्रकं—सिंहशावकं,—"सिंहो मृगेन्द्रः पञ्चास्यः" इत्यमरः। क्रीड़नकं—क्रीड्यते अनेन इति, [करणे ल्युट्, ततः स्वार्थे कन् ] क्रीड़ासाधनं द्रव्यम्। ते—तुभ्यम्।

(६५) चक्रवर्त्तिलक्षणं—चक्रवर्त्तिनः सम्राजः, लक्षणं—चिह्नम्। वीर्य्यातिशयस्य इत्यपरेऽर्थः।

(६६) प्रलोभ्येति।—प्रलोभ्यस्य लोभनीयस्य प्रकृष्टलोभसम्पादकस्य इत्यर्थः, वस्तुनः क्रीड़नकस्य इत्यर्थः, प्रणयेन प्रार्थनया, प्रीत्या वा, प्रसारितः विस्तारितः, जालं गवाक्षविवरमिव अङ्गुलिविवरं, तेन ग्रथिता संयुता इत्यर्थः, अथवा—जालाकारावर्त्तविशेषेण ग्रथिता युक्ता इत्यर्थः, अङ्गुलयो यत्र तादृशः, [ अनेन चक्रवर्त्तिलक्षणं प्रदर्शितम्। तथा च सामुद्रके,—'अतिरक्तः करो यस्य ग्रथिताङ्गुलिको मृदुः।

अलक्ष्यपत्रान्तरमिद्धरागया
नवोषया भिन्नमिवैकपङ्कजम् (६६) ॥१६॥

द्वितीया। सुव्वदे! मुंच णं, ण एसो सक्को वाआमेत्तेण समइदुं, ता गच्छ, मम केरए उड़ए संकोचणस्स इसिकुमारस्स वस्सचित्तिदो मट्टिआमोरओ चिट्ठदि, तं से उवहर। (ज) (६७)

(ज) सुव्रते ! मुञ्चैनं, नैष शक्यो वाङ्मात्रेण शमयितुं, तद्गच्छ, मदीये उटजे सङ्कोचनस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति, तमस्योपहर।

चापाङ्कुशाङ्कितः सोऽपि चक्रवर्त्ती भवेद्ध्रुवम् ॥" इति। यथा—जालेन समूहेन, संहत्या इति यावत्, ग्रथिता निर्म्मिता अङ्गुलयो यस्मिन् स तथोक्तः, संहताङ्गुलिरिति यावत्। ('जालं समूह आनाये' इत्यमरः) करः। इद्धरागया—इद्धः प्रदीप्तः रागः लौहित्यं यस्याः तया, आताम्रयेत्यर्थः, [अनेनास्या विकाशसामर्थ्यं व्यञ्जितम्]। नवोषया नवया ऊषया अभिनवेन प्रत्यूषेण, [नवत्वमस्याः अपरिणतत्वेन बोध्यम्। अत्र "नवोषसा" इति पाठे—"ऊषःप्रत्यूषसी अपि" इत्यमरोक्तस्य ऊषःशब्दस्य नियक्लीबत्वदर्शनात् विशेषणे च स्त्रीलिङ्गत्वदर्शनात् च्युतसंस्कारता दोषः सम्भवतीति उपेक्षितोऽस्माभिः; ऊषा-शब्दस्तु अत्र स्त्रीलिङ्ग एव।—"ऊषा रात्रौ तदन्ते स्यात् अबानन्यग्रमप्यूषा" इति विश्वोक्तेः।] भिन्नं भेदं प्राप्तं, न तु सम्यक् विकसितम्, अत एव अलक्ष्याणि अदृश्यानि सम्पूर्णालोकविरहादिति भावः; पत्रान्तराणि पत्राणां दलानामन्तराणि अवकाशाः यस्य तथाभूतम्, एकमद्वितीयम्, एकमात्रमित्यर्थः, (तस्य प्रथमविकाशित्वात् अद्वितीयत्वं बोध्यम्) पङ्कजमिव पद्ममिव विभाति राजते। यथा समुपस्थिते प्रत्यग्रे प्रत्यूषसि समग्रालोकसम्पर्काभावेन कस्यचित् पङ्कजस्य कतिपयदलमात्रं विकसितं परिलक्ष्यते, न तु तदन्तरसन्निभागः, तद्वत् क्रीड़नकार्थम् अस्य करप्रसारणसमये कतिपयाङ्गुलिमात्रं परिलक्ष्यते, न तु गर्भान्तरभागः, इत्युपमानोपमेययोः साधर्म्यमवधेयम्। [उपमाऽलङ्कारः काव्यलिङ्गञ्च। न चात्र उपमानोपमेययोः लिङ्गव्यत्यासेन अनौचित्यदोषप्रसङ्ग इति वाच्यम्; अत्र बिम्बानुबिम्बभावेन अन्योऽन्यसादृश्यप्रतीतेः सहृदयानामनुद्वेगकरतया अदोषत्वात्। यदाह दण्डी,—"न लिङ्गवचने भिन्ने न न्यूनाधिकताऽपि वा। उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥" इति]। वंशस्थविलं वृत्तम् ॥१६॥

(६७) सुव्रते इति।—इदन्तु प्रथमतापस्याः नाम, तत्सम्बोधने। वाङ्मात्रेण—

प्रथमा। तह। (झ)

[ इति निष्क्रान्ता ]।

बाल:। दाव इमिणा ज्जेव कीलिस्सं? (ञ)

तापसी। [ विलोक्य हसन्ती। ] णं मुञ्च णं। (ट)

राजा। स्पृहयामि खलु दुर्ललिताय अस्मै। (६८)

[ निश्वस्य ]—

आलक्ष्यदन्तमुकुलाननिमित्तहासै:
अव्यक्तवर्णरमणीयवच:प्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा कलुषीभवन्ति (६९) ॥१७॥

---

(झ) तथा।

(ञ) तावदनेनैव क्रीड़िष्यामि?

(ट) ननु मुञ्चैनम्।

केवलेन वाक्यप्रयोगेण, सङ्कोचनस्य—तन्नामधेयस्य। वर्णचित्रित:,—वर्णै: श्वेतपीतादिभि: चित्रित: शबलित:, मृत्तिकामयूर:,—मृत्तिकानिर्म्मित: मयूर: [ मध्यपदलोपी समास: ], अस्य—बालकस्य सम्बन्धे, उपहर—आनीय देहीत्यर्थ:।

(६८) दुर्ललिताय—दुर्विनीताय। अस्मै—बालकाय ["स्पृहेरीप्सित:" ( १।४।३६ पा०) इति सम्प्रदानात् चतुर्थी ]।

(६९) आलक्ष्येति।—अनिमित्ता आकस्मिका अकारणोत्पन्ना इत्यर्थ:, ये हासा हास्यानि तै:, आलक्ष्याणि ईषत् दृश्यानि दन्ता मुकुलानि अङ्कुरा इव येषां तान्, अव्यक्ता अस्फुटा ये वर्णा: तै: रमणीया वचसां वाक्यानां प्रवृत्ति: उच्चारणं येषां तथोक्तान्, अथवा—अव्यक्ता वर्णा यासु ता:, अत एव रमणीया वच:प्रवृत्तय: वाक्योच्चारणानि येषां तान्, तथा अङ्क: क्रोड़: तस्मिन् आश्रय: स्थानं तत्प्रणयिन: तत्प्रार्थिन: तनयान् पुत्रान् वहन्त: सन्त: ये जना: तेषां पुत्राणाम् अङ्गरजसा गात्ररेणुना कलुषीभवन्ति मलिनीभवन्ति ते एव धन्या: भाग्यवन्त:। [ अत्र परुषीभवन्तीति पाठे—स एवार्थ:। तथा "पुरुषीभवन्ति" "मलिनीभवन्ति" इत्यपि पाठद्वयं पुस्तकान्तरे दृश्यते; तत्र प्रथमस्य—अपुरुषा: पुरुषा भवन्ति, पुरुषपदवाच्या भवन्ति इत्यर्थ:।

तापसी। [साङ्गुलितर्जनम्।](७०)भो ! ण मं गणेसि ? [पार्श्वमवलोक्य।] **को एत्थ इसिकुमाराणं ? (७१) [राजानं दृष्ट्वा] भद्दमुह ! एहि दाव मोआवेहि इमिणा दुम्मोच्चहत्थग्गहेण डिम्भएण बाधीअमाणं बालमइन्दअं। (ठ) (७२)**

राजा। **तथा।** [इति उपगम्य सस्मितम्।] **अयि भो महर्षि-पुत्रक !—**

**एवमाश्रमविरुद्धवृत्तिना**
**संयमी किमिति जन्मदस्त्वया।**

(ठ) भो ! न मां गणयसि ? कोऽत्र ऋषिकुमाराणाम् ?—भद्रमुख ! एहि तावत्, मोचय अनेन दुर्मोच्यहस्तग्रहेण डिम्भकेन बाध्यमानं बालमृगेन्द्रकम्।

द्वितीयः पाठस्तु सुगमः। [सर्वत्र अभूततद्भावे च्विप्रत्ययः। अत्र एतद्बालकदर्शनादि-विशेषे प्रस्तुते तनयसामान्यपदेनाभिधानात् अप्रस्तुतप्रशंसा ; 'आलक्ष्यदन्तमुकुलान्' इत्यंशे उपमा, हासस्य उपमेये दन्ते मुख्यान्वयेन साधकत्वात् ; तथा बालकस्वभाव-वर्णनात् स्वभावोक्तिरलङ्कारश्च। अनेन स्वस्य तथावाप्तिः दुर्लभत्वादधन्यत्वं व्यज्यते ]। वसन्ततिलकं वृत्तम् ॥१७॥

(७०) साङ्गुलितर्जनम्—अङ्गुल्या तर्जनं कृत्वा इत्यर्थः।

(७१) ऋषिकुमाराणां—मुनिबालकानां [ निर्द्धारणे षष्ठी ]।

(७२) दुर्मोच्यहस्तग्रहेण—दुर्मोच्यः दुःखेन मोचनीयः, [ अत्र "दुर्मोचः" "दुर्मोकः" इति च पाठद्वयं दृश्यते, अर्थस्तु समानः। ] हस्तेन ग्रहः ग्रहणं यस्य तथोक्तेन। डिम्भकेन—कुत्सितबालकेन [ "कुत्सिते" (५।३।७४ पा०) इति कन्-प्रत्ययः। अत्र "डिम्भलीलया" इति पाठे—बालक्रीड़या इत्यर्थः ]—"पोतः पाकोऽर्भको डिम्भः" इत्यमरः। बाध्यमानं—पीड्यमानम्। बालमृगेन्द्रकं—क्षुद्रसिंहशावकम्।

(७३) एवमिति।—आश्रमस्य तपोवनस्य विरुद्धा विरोधिनी प्रतिकूलेत्यर्थः, वृत्तिर्व्यवहारो यस्य तादृशेन त्वया, संयमी तापसः जन्मदः जनकः पितेत्यर्थः, तवेति शेषः, सत्त्वसंश्रयगुणोऽपि—सत्त्वे आत्मनि संश्रयः यस्य, आत्माश्रित इत्यर्थः, गुणः इन्द्रियादिर्यस्य तादृशः, नियतेन्द्रियः इत्यर्थः, अपि ( "सत्त्वं द्रव्ये गुणान्तरे। पिशा-चादौ बले चित्ते स्वभावात्मत्वबुद्धिषु। आत्मनि" इति शब्दाब्धिः। तथा "गुणो ज्या-सूदतन्तुषु। रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीम इन्द्रिये" इति हैमः। ) कृष्णसर्प-

सत्त्वसंश्रयगुणोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः ? (७३) ॥१८॥

तापसी । भद्दमुह ! ण क्खु एसो इसिकुमारओ । (ड)

राजा । आकारसदृशं चेष्टितम् एवास्य कथयति, स्थान-प्रत्ययात् तु वयमेवं तर्किणः । (७४) [ यथाऽभ्यर्थितम् (७५) अनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य । स्वगतम् ] ।—

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रे सुखिता ममैवम् ।

---

(ड) भद्रमुख ! न खलु एष ऋषिकुमारः ।

शिशुना उग्रविषविषधरविशेषशावकेन चन्दन इव ( चन्दनतरुषु हि विषधराः सर्पाः तिष्ठन्तीति प्रसिद्धिः ) किमिति कथम् एवम् अनेन प्रकारेण प्राणिपीडनरूपतमोगुण-प्रकटनेनेति भावः, दूषितः क्रियते ? नोचितमिदं जीवहिंसावर्जितमहर्षिसुतस्य तवेति भावः । [अत्र द्वितीयपादे—"संयमः किमिति जन्मतस्त्वया" इति, तृतीये "सत्त्वसंश्रय-सुखोऽपि" इति, तथा चतुर्थे "चन्दनम्" इति च पाठान्तरं दृश्यते । तत्र सत्त्वसंश्रयः सत्त्वगुणाश्रितः, अत एव सुखः सुखकरः ; संयमः सम्यक् यमः अहिंसादिः जन्मतः जन्मारभ्य किमिति कथं कृष्णसर्पशिशुना चन्दनमिव "चन्दनोऽस्त्रियाम्" इति कोषात् क्लीवत्वं दृश्यते । पक्षे चात्र चन्दनपदस्य क्लीवत्वात् उपमानोपमेययोः विलिङ्गता दोषः विभावनीयः । न चात्र कृष्णसर्पस्य उपमानत्वात् उपमेयस्य च राजपुत्रस्य जात्याद्यैः प्रकृष्ट-त्वात् अनौचित्यं दोषः इति वाच्यं, तत्र आश्रमेत्यादिविशेषणविशिष्टस्यैव उपमेयत्वात् । उपमाऽलङ्कारः ] । रथोद्धता वृत्तम् ।—"रात् परैर्नरलगैः रथोद्धता" इति लक्षणात् । एकादशाक्षरच्छन्दसाम् एकोनसप्तशततमसङ्ख्यकप्रस्तारेऽन्तर्भवतीदं रथोद्धतावृत्तम् ॥१८॥

(७४) आकारसदृशम्—आकारेण अवयवेन सदृशं, चेष्टितं—कर्म । कथयति —नायम् ऋषिकुमार इति सूचयतीत्यर्थः । स्थानेति ।—स्थानस्य तपःक्षेत्रस्य, प्रत्ययात्—विश्वासात् । एवं तर्किणः,—अनुमायिनः ।

(७५) यथाऽभ्यर्थितं—यथा मृगेन्द्रशिशुमोचनार्थं साहाय्याय प्रार्थितं, तदनुसारेणेत्यर्थः ।

(७६) अनेनेति ।—कस्यापि अज्ञायमानस्य अथवा—वाचा वर्णयितुमशक्यस्य, कुलाङ्कुरेण वंशप्ररोहेण [ अत्र अङ्कुरपदं सद्योजातत्व मनोहरत्व कोमलत्वादि धर्मप्रत

कां निर्वृतिं चेतसि तस्य कुर्य्याद्
यस्यायमङ्गात् कृतिनः प्रसूतः ! (७६) ॥१९॥

तापसी। [ उभौ विलोक्य। ] अच्चरीअं अच्चरीअं !! (ढ)

राजा। आर्य्ये ! किमिव ?

तापसी। इमस्स बालअस्स असम्बद्धे वि भद्दमुहे संवादिणी आकिदि त्ति विह्मिदह्मि, अवि अ वामसीलो वि भविअ अपरिचिदस्सवि दे वअणेण पइदित्थो संवुत्तो। (ण) (७७)

राजा। [बालकमुपलालयन्।] (७८) आर्य्ये ! न चेत् मुनिकुमारोऽयं तत् कोऽस्य व्यपदेशः ? (७९)

तापसी। पोरवो त्ति। (त)

---

(ढ) आश्चर्य्यम् आश्चर्य्यम् !!

(ण) अस्य बालकस्य असम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मितास्मि, अपि च, वामशीलोऽपि भूत्वा अपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः ?

(त) पौरव इति।

---

व्यनक्ति। ] अनेन बालेन गात्रे करादिरूपे कतिपयावयवे, स्पृष्टस्य मम एवम् इत्थम् अनिर्वचनीया अनुभवैकगम्या सुखिता सुखित्वं भवतीति शेषः। यस्य कृतिनः पुण्यवतः अङ्गात् शरीरात् अयं शिशुः प्रसूतः उत्पन्नः [अत्र 'प्ररूढ़' इति पाठे—उत्पन्नः वृद्धिं प्राप्तश्च इत्यर्थः। ] तस्य चेतसि कां निर्वृतिं सुखं कुर्य्यात्, इति न ज्ञायते। [ अत्र 'कुलाङ्कुरेण' इत्यंशे व्यस्तरूपकम्। तथा प्रकरणलब्धेन स्वसुखानुभवेन अप्राकरणिकस्य तत्पित्रादेः सुखानुभवस्य अर्थादापतनात् अर्थापत्तिरलङ्कारः, तथा च दर्पणे,—"दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते" इति अनयोः संसृष्टिः ] । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥१९॥

(७७) असम्बद्धे—सम्बन्धरहिते। संवादिनी—सुसदृशी। वामशीलः,—प्रतिकूलस्वभावः, दुर्विनीत इत्यर्थः। प्रकृतिस्थः,—स्वस्थः।

(७८) उपलालयन्—हस्तेन परामृशन्नित्यर्थः।

(७९) अस्य—शिशोः, व्यपदेशः,—व्यपदिश्यते प्रख्यायते अनेन इति व्यपदेशः, कुलमित्यर्थः।

राजा। [स्वगतम्।] कथम् एकान्ववायोऽयम् अस्माकम्! अतः खलु मदनुकारिणम् एनम् अत्रभवती मन्यते। [प्रकाशम्।]— अस्ति एतत् पौरवाणामन्त्यं कुलव्रतम्। (८०)

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम्।
नियतैकयतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम् (८१) ॥२०॥

---

(८०) एकान्ववायः,—एकवंशः।—"वंशोऽन्ववायः" इत्यमरः। मदनुकारिणं—मत्सदृशम्, अन्त्यं—चरमं, वानप्रस्थाश्रमविषयकमित्यर्थः। कुलव्रतं—वंशाचारः।

(८१) कुलव्रतमेव व्यनक्ति भवनेष्विति।—पूर्वं यौवने ये पौरवा इति शेषः, सुधासितेषु सुधाभिः चूर्णप्रभृतिभिरालेपनद्रव्यैः सितेषु धवलेषु ("सुधाऽमृते स्नुहीमुर्वालेपगन्धेष्टकासु च" इति विश्वः।) अतीव रम्येषु इत्यर्थः। [अत्र "रसाधिकेषु" इति पाठे—रसाः रागाः—शृङ्गारादि-माधुर्य्यादि-स्वादाश्च, ते अधिका येषु ; यद्वा—तैरधिकानि उत्तमानि तेषु,—"रसो गन्धरसे स्वादे तिक्तादौ विषरागयोः। शृङ्गारादौ द्रवे वीर्य्ये देहधात्वम्बुपारदे॥" इति विश्वः।] भवनेषु क्षितिरक्षार्थं पृथिवीपालनार्थं निवासं स्थितिम् उशन्ति कामयन्ते, निवसन्तीत्यर्थः, यौवनेऽपि तेषां भवने अवस्थितिः केवलं पृथिवीपालनार्थं, न तु तत्त्वतः सुखानुभवार्थं इति भावः। पश्चात् चरमे वयसीत्यर्थः, तेषां पौरवाणां नियतैकयतिव्रतानि नियतं सततम् एकं केवलं यतिव्रतं तापसव्रतं येषु तथाविधानि [अत्र "नियतैकपतिव्रतानि" इति पाठान्तरे—नियता तपस्यादिनियमयुक्ता एका पतिव्रता साध्वी पत्नी येषु तानि "पुत्रेषु भार्य्यां निक्षिप्य वनं गच्छेत् सहैव वा" इति याज्ञवल्क्यवचनेन निवृत्तानिवृत्तरागाभ्यां विकल्पविधानात् अनिवृत्तरागाणान्तु पत्न्या सहैव वनगमनसम्भवाभिप्रायेण एतदुक्तमिति भावः।] तरुमूलानि गृहीभवन्ति गृहाणि भवन्ति, तत्र वानप्रस्थाश्रमं विधाय निवसन्ति इत्यर्थः। चरमे वयसि पौरवाः यतिव्रतमाश्रित्य तपोवनमधितिष्ठन्तीति निष्कर्षः। [अत्र "तरुमूलानि गृहीभवन्ति" इति असमस्तभावेन तादात्म्यारूपणात् व्यस्तरूपकम्]। औपच्छन्दसकं वृत्तम्। केचित् तु मालभारिणी नामार्द्धसमवृत्तमिदमिति वदन्ति।—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्" इति लक्षणात्॥२०॥

कथं पुनरात्मगत्या मानुषाणामेष विषयः? (८२)

तापसी। जधा भद्दमुही भणादि, किन्तु अच्छरासम्बन्धेण उण इमस्स बालअस्स जणणी इधज्जेव देवगुरुणो तवोवणे पसूदा। (थ) (८३)

राजा। [स्वगतम्।] हन्त! द्वितीयमिदम् आशाजननम्।(८४) [प्रकाशम्।] अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी? (८५)

तापसी। को तस्स धम्मदारपरिच्चाइणो णामं कीत्तइस्सदि? (द) (८६)

---

(थ) यथा भद्रमुखी भणति, किन्तु अप्सरःसम्बन्धेन पुनरस्य बालकस्य जननी इहैव देवगुरोस्तपोवने प्रसूता।

(द) कस्तस्य धर्मदारपरित्यागिनो नाम कीर्त्तयिष्यति?

---

(८२) ननु रागान्धितैः भार्य्यया सार्द्धमपि अन्यत्र यत्र क्वचित् वानप्रस्थावलम्बनं सम्भवति पौरवाणां, ततश्च सन्तानोत्पत्तिरपि सम्भाव्यते, परन्तु तत् अमानुषसञ्चारे अत्र सर्वथा असम्भाव्यमेव, इत्यतः पृच्छति,—कथमिति।—आत्मगत्या—पादचारेणेति यावत्, विमानं विना नात्रागन्तुं शक्यते इति भावः; अथवा—आत्मगत्या मानुषखदनेण इत्यर्थः; अहं पुनः देवानुग्रहेणैव आगत इति भावः। एष—प्रदेशः, विषयः,—गन्तव्य इत्यर्थः।

(८३) राज्ञः प्रश्नानुरूपम् उत्तरयति, यथा इति।—यथा भणति—आत्मगत्या अविषय एव मानुषाणामयं भूभागः इत्यर्थः। "तत् कथमयं मानवबालकः दृश्यते?" इत्याशङ्कामपनेतुमाह, किन्त्विति।—अप्सरःसम्बन्धेन—अप्सरसां जन्यत्वादिसम्पर्केण, पुनस्त्वर्थे, देवगुरोः,—कश्यपस्य, तपोवने—आश्रमे, प्रसूता—सन्तानम् उत्पादितवती; 'अप्सरःसम्बन्धैतद्बालकजननी' इति प्रत्युत्तरम्।

(८४) प्रथमं तावत् "पौरव इति" तापसीवाक्यमाकर्ण्य सञ्जाताशः सम्प्रति अप्सरः सम्भूतत्वमपि श्रुत्वाह, हन्त इति।—हर्षसूचकमव्ययमेतत्। इदम्—अप्सरःसम्बन्धेन इति यदुक्तं तत्, द्वितीयम्—अपरम्, आशाजननम्—आशंसाप्रदम्।

(८५) उत्कण्ठां वारयितुमशक्नुवन्नाह, अथेति।—अथ इति—प्रश्नसूचकमव्ययम्। किमाख्यस्य—का आख्या नाम यस्य, किंनामधेयस्य इत्यर्थः।

(८६) धर्मदारपरित्यागिनः,—यथाविधि परिणीतां पत्नीम् अवजानतः इत्यर्थः।

राजा। [स्वगतम्।] कथम् इयं कथा मामेव लक्षीकरोति! यावत् अस्य शिशोर्मातरं नामतः पृच्छेयम्। (८७) [विचिन्त्य।] अथवा अनार्य्यः खलु परदारपृच्छाव्यापारः। (८८)

[प्रविश्य मृन्मयूरहस्ता तापसी।] सव्वदमण! पेक्ख सउन्तलावण्णं। (ध) (८९)

बालः। [सदृष्टिक्षेपम्।] कहिं सा मे अम्बा? (न)

[उभे प्रहसतः।]

प्रथमा। णामसादिस्सेण उवच्छन्दिदो मादिवच्छलो।(प)(९०)

(ध) सर्वदमन! प्रेक्षस्व शकुन्तलावण्यम्?

(न) कुत्र सा मे अम्बा?

(प) नामसादृश्येन उपच्छन्दितो मातृवत्सलः।

नाम कीर्त्तयिष्यति—ग्रहीष्यति। [अत्र "सङ्कीर्त्तयितुं चिन्तयिष्यति" इति पाठे—नाम्नः ग्रहणार्थं हृदि चिन्तनेऽपि दोषस्पर्शसम्भावना, ग्रहणे तु किमु वक्तव्यम्? इति भावः। अनेन निर्वहणसन्धेः परिभाषणं नाम अङ्गमुपक्षिप्तम्। तथा च दर्पणे,—"वदन्ति परिभाषणम्। परिवादकृतं वाक्यम्"। इति]।

(८७) कृतापराधः खलु अन्यत्रापि तादृशदोषकथामनुस्मृत्य आत्मानमेव लक्ष्यत्वेन मन्यते, राजापि तथा मन्यमान आह,—कथमिति। शङ्कामपनेतुं सम्भावयति,—यावदिति। नामतः,—नाम्ना [प्रकृत्यादित्वात् तृतीया, सार्वविभक्तिकः तसिल्प्रत्ययः]। पृच्छेयम्—[सम्भावनायां लिङ्]।

(८८) अत्युत्कण्ठया तथा सम्भाव्यापि सहजधार्म्मिकतया प्रागुक्तमाक्षिपन्नाह,—अथवेति। अनार्य्यः,—अभद्रोचितः, अनुचित इत्यर्थः। परदारपृच्छाव्यापारः,—परस्त्रीप्रश्नप्रसङ्गः। [अनेन राज्ञः धर्म्मप्रवणता सूच्यते। अत्र "अस्येतन् पौरवाणाम्" इत्यादितः एतदन्तेन विबोधो नाम निर्वहणसन्धेरङ्गं प्रदर्शितम्; यदुक्तं दर्पणे,—"विबोधः कार्य्यमार्गणम्" इति]।

(८९) शकुन्तलावण्यं—पक्षिसौन्दर्य्यम्, अन्यत्र—शकुन्तलावर्णम् इति प्राकृतश्लेषः। अत एव तादृशश्लिष्टार्थमालोच्यैव बालकस्य "कुत्र सा मे अम्बा" इति प्रश्नः उपयुज्यते। [अत्र श्लेषमूला वक्रोक्तिः अलङ्कारः।—"अन्यस्यान्यर्थकं वाक्यमन्यथा योजयेत् यदि। अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिः ततो द्विधा॥" इति लक्षणात्]।

(९०) नामसादृश्येन—मातुर्नामसदृशं नाम श्रुत्वा इत्यर्थः। उपच्छन्दितः,—प्रलो-

द्वितीया। इमस्स मोरस्स रमणीअदं पेक्खत्ति भणि-दोसि। (फ)

राजा। [स्वगतम्।] किं शकुन्तलेत्यस्य मातुराख्या !! अथवा सन्ति पुनर्नामधेयसादृश्यानि ? अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते ? (८१)

बालः। अन्तिए ! रोअदि मे चडुलके एसे मउलके।(ब)(८२)

[इति क्रीड़नकमादत्ते]।

प्रथमा। [विलोक्य सावेगम्।] अम्मो ! रक्खाकाण्डओ से मणिबन्धे ण दीसदि !! (भ) (८३)

(फ) अस्य मयूरस्य रमणीयतां प्रेक्षस्वेति भणितोऽसि।

(ब) अन्तिके ! रोचते मे चटुलक एष मयूरः।

(भ) अहो ! रक्षाकाण्डोऽस्य मणिबन्धे न दृश्यते !!

भितः। [अत्र "वञ्चितः" इति पाठे—प्रतारित इत्यर्थः]। मातृवत्सलः,—मातरि-स्नेहवान्।—"स्निग्धस्तु वत्सलः" इत्यमरः।

(८१) राजाऽपि शकुन्तलेतिनामश्रवणकुतुकिनं मातुरागमनशङ्किनं बालकं दृष्ट्वा वितर्कयन्नाह, किमिति।—अस्य बालकस्य मातुः 'शकुन्तला' इति नाम किम् ? इति योजना। [अत्र "यावदस्य शिशोः" इत्यादिना एतदन्तेन 'शोभा' नाम नाटकलक्षणं प्रदर्शितम्; उक्तञ्च दर्पणे,—"सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते। श्लिष्टलक्षण-चित्रार्था सा शोभेत्यभिधीयते॥" इति]। तदपि अन्यथा सम्भाव्य आक्षिपन्नाह, अथवेति।—नामधेयसादृश्यानि—नामतुल्यनामानि। अपि—प्रश्ने, नाम—सम्भावना-याम्। नाममात्रप्रस्तावः,—केवलनामप्रसङ्गः, मृगतृष्णिकेव—मरीचिकावत्, विषादाय—दुःखाय ["क्लृपि सम्पाद्यमाने च" वा० इति चतुर्थी। उपमालङ्कृतिः]।

(८२) अन्तिके इति।—अन्तिका—ज्येष्ठा भगिनी।—"अन्तिका भगिनी ज्येष्ठा" इति नाट्योक्तौ अमरोक्तिः। चटुलकः,—चञ्चलः,—"चटुलश्चञ्चले प्रोक्तः" इति शब्दाब्धिः। (अत्र मृन्मयमयूरेऽपि चाञ्चल्यबुद्धिः बालस्वभावात्)। मे—मह्यम्। रोचते इति।—["रुच्यर्थानां प्रीयमाणः" (१।४।३३ पा०) इति सम्प्रदानात् चतुर्थी]।

(८३) अहो !—इति विस्मये। रक्षाकाण्डः,—रक्षणार्थमाबद्धः ओषधिनाड़ी-विशेषः;—"काण्डः स्कन्धे तरुस्कन्धे बाणेऽवसरनीरयोः। कुत्सिते दण्डभिन्नाड़ीवृन्दे रहसि

राजा। आर्य्ये! अलम् आवेगेन, ननु अयमस्य सिंहशावकस्य विमर्दात् परिभ्रष्टः,—"। (८४)

[ इति आदातुमिच्छति ]।

उभे। मा क्खु मा क्खु एदं। (८५) [विलोक्य।](८६) कधं गहिदो ज्जेव !! (म) (८७)

[ विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः]। (८८)

राजा। किमर्थं भवतीभ्यां प्रतिषिद्धोऽस्मि ?

प्रथमा। सुणादु महाभाओ, एसा महाप्पहावा अवराजिदा णाम सुरमहोसही, इमस्स दारअस्स जादकम्मसमए भअवदा मारीएण दिण्णा; एदं किल मादापिदरो अप्पाणञ्च वज्जिअ अवरो भूमिपदिदं ण गेह्लादि। (य) (८९)

---

(म) मा खलु मा खलु एतम्—"। कथं गृहीत एव !!

(य) शृणोतु महाभागः, एषा महाप्रभावा अपराजिता नाम सुरमहौषधी, अस्य दारकस्य जातकर्म्मसमये भगवता मारीचेन दत्ता; एतां किल मातापितरौ आत्मानञ्च वर्जयित्वा अपरो भूमिपतितां न गृह्णाति।

न स्त्रियाम्॥" इति मेदिनी। [ अत्र 'रक्षाकरण्ड' इति पाठे—रक्षावीटिका इत्यर्थः। —"करण्डो मधुकोषे स्यात् वीटिका-खड्गकोषयोः" इत्यमरः ]। मणिबन्धे—करमूले।

(८४) आवेगेन—सम्भ्रमेण, विमर्द्दात्—आकर्षणात्, परिभ्रष्टः,—च्युतः।

(८५) मा खलु मा खलु एतं—रक्षाकाण्डं न गृहाण इत्यर्थः।

(८६) विलोक्य—गृहीतमवलोक्य इति यावत्।

(८७) गृहीत एव!—आदत्त एव !! रक्षाकाण्ड इति शेषः।

(८८) उरोनिहितहस्ते—वक्षःस्थापितकरे, (स्त्रीस्वभावोऽयम्)। परस्परम्—अन्योऽन्यम्। [ अनेन इतःप्रभृति विस्मयरसः व्यज्यते। तस्य च निर्वहणे अवश्यकर्त्तव्यत्वात्, यदाह आदिभरते,—"निर्वहणे कर्त्तव्यो नित्यं हि रसोऽद्भुतः कविभिः" इति। अनेन उपगूहनं नाम निर्वहणसन्ध्यङ्गं प्रदर्शितम्। तथा च दर्पणे,—"तद्भवेदुपगूहनम्। यत् स्यादद्भुतसम्प्राप्तिः" इति ]।

(८९) रक्षाकाण्डं गृहीतमवलोक्य दुष्मन्तोऽयमिति दृढ़निश्चया आह, शृणोतु इति।—महाभागः,—महैश्वर्य्यशाली, ["महाराजः" इति पाठे तु सम्यक् सुव्यक्तम्]।

राजा । अथ गृह्णाति ?

प्रथमा । तदो सप्पो भविअ तं दंसइ । (र)

राजा । भवभवतीभ्यां कदाचित् अन्यत्र प्रत्यक्षीकृतम् इदम् ।

उभे । अणेअसो । (ल) (१००)

राजा । [ सहर्षमात्मगतम् । ] तत् किं खलु इदानीं पूर्णम् आत्मनो मनोरथं नाभिनन्दामि । (१)

[ इति बालकं परिष्वजते ] ।

द्वितीया । सुव्वदे ! एहि इमं वुत्तन्तं णिअमव्वावुडाए सउन्तलाए णिवेदेम्ह । (व) (२)

[ इति निष्क्रान्ते ] ।

---

(र) ततः सर्पो भूत्वा तं दशति ।

(ल) अनेकशः ।

(व) सुव्रते ! एहि इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयावः ।

जातकर्मसमये—नाड़ीच्छेदनात् प्रागनुष्ठीयमानसंस्कारकाले । तथा च मनुः,— प्राङ्नाभिवर्द्धनात् पुंसो जातकर्म विधीयते" इति । अत्र जातसंस्कारस्य पितृकर्त्तव्य-तयाऽपि पितुरसन्निधाने अन्यस्यापि अधिकारितया स च महर्षिणा अनुष्ठितः ।

(१००) अनेकशः,—बहुशः, बहुवारमित्यर्थः । [अत्र 'शृणोतु महाभागः' इत्यादिना एतदन्तेन पूर्ववाक्यं नाम निर्वहणाङ्गं प्रदर्शितम् ; तथा च दर्पणे,—"पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शनम् ।" इति ] ।

(१) अभीष्टप्राप्त्या प्रमदाधिक्यादाह, तत् किमिति ।—पूर्णं—सम्पूर्णं, फलो-न्मुखमित्यर्थः । मनोरथं—अभीष्टस्वरूपं, नाभिनन्दामि—नाद्रिये, तं प्राप्य न आन-न्दितो भवामि इति वा । [ अत्र विषयनिगरणेन बालके मनोरथाभेदाध्यवसायात् अतिशयोक्तिः । अनेन आनन्दोनाम निर्वहणाङ्गं प्रदर्शितम् ; तथा च दर्पणे,— "आनन्दोवाञ्छितागमः" इति, तथा प्रहर्षो नाम नाट्यालङ्कारश्च ।—"प्रहर्षः प्रमदाधिक्यम्" इति दर्पणलक्षणात् ] ।

(२) इमं वृत्तान्तं—क्षितिपृष्ठगतं गृह्णत्यपि राज्ञि एतस्य रक्षाकाण्डस्य सर्पभावेण अदंशनरूपम् ; नियमव्यापृतायै,—प्रोषितभर्तृव्रतनिरतायै इत्यर्थः । [अनेन अधुनाऽपि

बालः। मुञ्च मं मुञ्च मं, अम्बाए सआसं गमिस्सं। (अ)

राजा। पुत्र ! मया एव सह मातरमभिनन्दिष्यसि।

बालः। दुस्सन्तो मम तादो, ण क्खु तुमं। (ब) (३)

राजा। एष विवाद एव मां प्रत्याययति। (४)

[ततः प्रविशति एकवेणीधरा शकुन्तला]।

शकु। [सवितर्कम्।] विआरकाले वि पइदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसंसो अत्तणो भाअधेएसुं, अधवा जधा मिस्सकेसीए मे आचक्खिदं तधा सम्भावीअदि एदं। (स) (५)

[इति परिक्रामति]।

---

(अ) मुञ्च मां मुञ्च माम्, अम्बायाः सकाशं गमिष्यामि।

(ब) दुष्मन्तो मम तातो, न खलु त्वम्।

(स) विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्य औषधिं श्रुत्वा न मे आशंसा आत्मनो भागधेयेषु, अथवा यथा मिश्रकेश्या मे आख्यातं तथा सम्भाव्यत एतत्।

त्वप्राप्त्यर्थं कठोरनियममवलम्बते तपस्विनीति सूचयितुं नियमेत्यादिकमुपात्तम्]। निवेदयावः,—विज्ञापयावः [क्रियाग्रहणात् चतुर्थी]।

(३) 'पुत्र' इति राजसम्बोधनमाकर्ण्य सहजतेजस्वितया आह, दुष्मन्त इति। —न खलु त्वं—त्वं नैव पिता इत्यर्थः।

(४) एष विवादः,—बालकस्य 'दुष्मन्तः मम तातः' इत्येवं विसदृशवाक्यं, मां प्रत्याययति—विश्वासयति ; इतः पूर्वमपि मम विश्वासो नोत्पन्न इति भावः।

(५) विकारकाले—रक्षाकाण्डस्य वैपरीत्यसमये इत्यर्थः। अपिरत्र भिन्नक्रमे, तथा च औषधिं प्रकृतिस्थां श्रुत्वापि इत्यर्थः ; प्रकृतिस्थां—स्वभावस्थितां, न तु सर्पभूतामिति भावः। आत्मनः भागधेयेषु—भाग्येषु ; अत्र महाराजः समागतः पुनरपि मां ग्रहीष्यतीत्येवंरूपेषु, न आशंसा—न प्रत्याशा, यतः मम जन्मारभ्य प्रथमं मातापितृविच्छेदः, ततः वने प्रतिपालनम् ; अनन्तरं तादृशेन सर्वगुणाकरेण राज्ञा परिणीताया अपि पुनः प्रत्याख्यानम्, इत्येवं बहुषु दृष्टचरत्वादिति भावः। मिश्रकेश्या उक्तं राज्ञः स्मरणावलरसभूतं पश्चात्तापरूपमनुभवन्तो पूर्वोक्तमाचिख्याऽ,

राजा। [ शकुन्तलां विलोक्य सहर्षखेदम्। ](६) अये ! सा इयम् अत्र-भवती शकुन्तला !! (७)—

वसने परिधूसरे वसाना
नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्त्ति (८) ॥२१॥

---

अथवेति। एतत्—राज्ञा सह पुनर्म्मीलनं, सम्भाव्यते—भवितुमर्हति इत्यनुमीयते इत्यर्थः। [ अनेन समयीनाम निर्वहणाङ्गं प्रदर्शितम्; यदाह दर्पणे,—'समयो दुःखनिर्याणम्" इति ]।

(६) सहर्षखेदं--युगपद् हर्षं खेदञ्च अभिनीय इत्यर्थः। तत्र सहसा प्रियतमा-दर्शनात् हर्षः, तस्या विसदृशवेशमालोक्य च खेदोदयः इति मन्तव्यम्।

(७) अये !—इति विस्मये। सा—या खलु पूर्वं सौन्दर्य्यादिगुणेन मां प्रीणितवती सा इयम् !!

(८) वसने इति।—परिधूसरे अतिमलिने वसने अन्तरीयसंव्याने वसाना आच्छादयन्ती [ वस आच्छादने इत्यस्मात् शानच्प्रत्ययः] नियमेन व्रतेन पाति-व्रत्यरूपेण उपवासादिना क्षाममुखी शुष्कवदना, ( समाहृतमुख्याः केवलं मुखस्यैव दर्शनात् तस्य क्षामत्वोक्तिः )। [ अनेन स्वजनगृहस्थिताया अपि अतिशयलज्जालुत्वं ध्वन्यते। सम्प्रति मुखावरणापनयनन्तु केवलं राजदर्शनोत्कण्ठया इति नायिका-गतमनौचित्यं न सम्भावनीयम् ]। धृता एकवेणिर्यया तथोक्ता,—"एकवेणीधरं शिरः" इति प्रवासस्थपतिकाया नियमादिति भावः। यत एतादृशी अत एव शुद्धं निर्दोषं शीलं चरितं यस्यास्तथाभूता सती, अतिनिष्करुणस्य अतिनिर्दयस्य निरपराधायाः प्रत्याख्यानादिति भावः, मम दीर्घं विरहव्रतं बिभर्त्ति धारयति। विरहव्रतञ्च हारीते,—"आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा। मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥" दर्पणेऽपि प्रवासमधिकृत्य,—"प्रवासो भिन्नदेशित्वं कार्य्यात् शापाच्च सम्भ्रमात्। तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः॥ निश्वासोच्छ्वासरुदित-भूमिपातादि जायते ॥" इति। [ अत्र "राजा।—" इत्यादिना एतदन्तेन सन्धि-र्नामाङ्गमुपक्षिप्तम्; यदाह,—मुखबीजोपगमनं सन्धिरित्यभिधीयते" इति। दर्पण-लक्षणन्तु,—"बीजोपगमनं सन्धिः" इति। अत्र काव्यलिङ्गं, विरहव्रतमित्यंशे रूपकं, समुदाये च स्वभावोक्तिः ]। मालभारिणी वृत्तम् ॥२१॥

शकु। [ पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम्। ] (९) ण क्खु अज्ज-उत्तो अअं, ता को एसो किदरक्खामङ्गलं दारअं मे गत्त-संसग्गेण दूसेदि ? (छ) (१०)

बाल:। [ मातरमुपगम्य। ] अम्ब ! को एसो मं पुत्तकेत्ति ससिणेहं आलिङ्गदि ? (क)

राजा। प्रिये ! क्रौर्य्यम् अपि मे त्वयि प्रयुक्तम् अनुकूल-परिणामं संवृत्तम्। तत् अहमिदानीं त्वया प्रत्यभिज्ञातम् आत्मानमिच्छामि। (११)

शकु। [ स्वगतम्। ] हिअअ ! समस्सस समस्सस, पहरिअ परिच्चत्तमच्छरेण अणुकम्पिदह्मि देव्वेण, अज्जउत्तो ज्जेव एसो। (ख) (१२)

(छ) न खलु आर्य्यपुत्रोऽयं, तत्को एष कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति ?

(क) अम्ब ! क एष मां पुत्रक इति सस्नेहम् आलिङ्गति ?

(ख) हृदय ! समाश्वसिहि समाश्वसिहि, प्रहृत्य परित्यक्तमत्सरेण अनुकम्पिताऽस्मि दैवेन, आर्य्यपुत्र एवैष:।

---

(९) पश्चात्तापविवर्णं—पश्चात्तापेन शकुन्तलाप्रत्याख्यानजनितेन अनुतापेन, विवर्णं—मलिनम्। एतदेव मालिन्यं वितर्के हेतु:।

(१०) वितर्कमेव दर्शयति नेति।—अयं—पुर:स्थित:, आर्य्यपुत्रो नैव, तथा चेत् "कुत: तत् प्रख्यातशरीरसौन्दर्य्यम् ? कुतो वा लावण्यमङ्गसञ्चारि ?" इत्यभिप्राय:। कृतरक्षामङ्गलं—रक्षाकाण्डयुक्तं, दारकं—तनयं, गात्रसंसर्गेण—अङ्गस्पर्शेन, दूषयति—रक्षाकाण्डस्य शक्तिं ह्रसयित्वा दोषमुत्पादयति।

(११) क्रौर्य्यं—निष्ठुरता, प्रत्याख्यानरूपमित्यर्थ:। अनुकूलपरिणामम्—अनुकूल: सुखजनक: परिणाम: परिपाको यस्य तथाभूतम्; यदा त्वं पूर्वं ममान्तिके समागतासी: तदा त्वां प्रत्यभिज्ञातुमभिलषताऽपि मया न प्रत्यभिज्ञाता, मयि पुनरागते त्वया प्रत्यभिज्ञात: इत्यनुकूलपरिणामत्वं सुस्पष्टमेव। प्रत्यभिज्ञातं—परिचितम्।

(१२) प्रहृत्य—आहत्य, परित्यक्तमत्सरेण—त्यक्तक्रोधेन। अनुकम्पिता—अनु-

राजा । प्रिये !—

स्मृतिभिन्नमोहतमसो दिष्ट्या प्रमुखे स्थिताऽसि मे सुमुखि !
उपरागान्ते शशिनः समुपगता रोहिणी योगम् (१३) ॥२२॥

शकु । [ सहर्षम् । ] जअदु जअदु अज्जउत्तो—" । (ग)

[ इति अर्द्धोक्ते वाष्पसन्नकण्ठी (१४) विरमति ] ।

राजा । प्रिये !—

वाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया ।
यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम् (१५) ॥२३॥

(ग) जयति जयति आर्य्यपुत्रः—" ।

गृहीता । एष—समीपस्थितः आर्य्यपुत्र एव । [अनेनापि आनन्दो नाम निर्वहणाङ्गं प्रदर्शितम् ; यदाह दर्पणे,—"आनन्दो वाञ्छितागमः" इति ।

(१३) स्मृतीति ।—हे सुमुखि ! (साभिप्रायसम्बोधनमेतत् । सुमुखस्य एव अग्रे स्थापनयोग्यत्वात्, कुमुखस्य गोपनमेव सर्वत्र उचितमित्यभिप्रायः) त्वं दिष्ट्या भाग्येन स्मृत्या पूर्ववृत्तान्तस्मरणेन भिन्नं नाशितं मोह एव तमः अन्धकारः, अथवा—मोहः तमः राहुरिव,—"तमस्तु राहुः स्वर्भानुः" इत्यमरः, [अनेन प्रगाढ़त्वं मोहस्य व्यज्यते ] यस्य तादृशस्य मे मम प्रमुखे सम्मुखे स्थिता असि, इति यत् तत् शशिनश्चन्द्रस्य उपरागान्ते ग्रहावसाने ("उपरागः ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च" इत्यमरः ) रोहिणी चन्द्रस्य प्रियतमा योगं चन्द्रसम्बन्धं समुपगता भवतीति शेषः । स च योगः कार्त्तिकपूर्णिमायामेव सम्भवति इति बोध्यम् । [ दृष्टान्तालङ्कारः ; तथा यत्तद्भ्यां सोपस्कृताभ्याम् एकवाक्यत्वात् सम्भवद्वस्तुसम्बन्धरूपा निदर्शना ; सा च मोहतम इत्यत्र राहुरूपार्थे उपमासाधिका, तत्र तु मोहइव तमः इति समासः, प्रथमे च—अन्धकाररूपे अर्थे रूपकं ; राजपक्षे द्वितीयार्थेऽपि—मोहः तमइव इत्यपि समासः भवत्येव ; इति उभयोः रूपकोपमयोः साङ्कर्य्यम् । पराङ्गं च—दृष्टान्तनिदर्शनयोः अपि पूर्ववत् सन्दिग्धतया साङ्कर्य्यं, उभयत्रैव साधकबाधकप्रमाणाभावात् । आर्य्या जातिः ॥२२॥

(१४) वाष्पसन्नकण्ठी—नेत्रजलावरुद्धकण्ठी ।

(१५) वाष्पेणेति ।—वाष्पेण नयनजलेन [ अनेन अत्यन्तविरहकातरता व्यज्यते ] जयशब्दे प्रतिषिद्धेऽपि स्खलितेऽपि, मया जितम् । यत् यतः ते तव असंस्कारम् अलक्तकादिसंस्कारवर्जितम्, अथ च पाटलं श्वेतरक्तम्, अथवा—असंस्कारेण

बाल:। अम्ब ! को एसो ? (घ)

शकु। भाअधेआइं पुच्छ। (ङ) (१६)

[इति रोदिति]।

राजा।—

सुतनु ! हृदयात् प्रत्यादेशव्यलीकमपैतु ते,
किमपि मनसः सम्मोहो मे तदा बलवानभूत्।
प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः,
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया (१७)॥२४॥

[इति पादयोः पतति]।

(घ) अम्ब ! कः एषः ?

(ङ) भागधेयानि पृच्छ।

अलक्तकरसादिजनितसंस्कारविरहेण पाटलमित्यर्थः। [अत एव पातिव्रत्यधर्मस्य प्रोषिते पत्यौ शरीरसंस्काराभावादिरूपस्य, अनया च सम्यक्तथाऽनुष्ठानात् जयशब्दे रुद्धेऽपि जितमिति नृपोक्तिः सुतरां सङ्गच्छते ; तादृशविशिष्टमुखसन्दर्शनेन विरहापनयनादिति भावः] ओष्ठपुटं यस्य, तादृशं मुखं दृष्टम्। [अत्र जयशब्दे प्रतिरुद्धेऽपि जितमित्यंशे विरोधाभासः ; तथा पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थस्य हेतुत्वात् वाक्यार्थहेतुकं काव्यलिङ्गमपि]। पथ्यावक्त्रं वृत्तम् ॥२३॥

(१६) "राजतनयो भूत्वा स्वजनकमपि न जानाति, परन्तु तस्य नामधेयं पृच्छति" इति भृशं मर्मणि ताड़िता, दैवमेवात्र कारणं जानती आह,—भागधेयानीति। भागधेयानि—अदृष्टानि, पृच्छ—जिज्ञासस्व ; तथा च 'येनादृष्टेन ताततनययोरपि न परिचयः, तदेव पृच्छ, किं मां प्रति प्रश्नेन ?' इत्यभिप्रायः। [अनेन गुरोर्नामग्रहणप्रतिषेधात् तदग्रहणेन नायिकागतमौचित्यं कारुण्यातिशयश्च ध्वन्यते]।

(१७) सुतन्विति।—हे सुतनु ! शुभाङ्गि ! ते तव हृदयात् प्रत्यादेशव्यलीकं मत्कृतत्वन्निराकरणरूपाप्रियं ("व्यलीकं त्वप्रियेऽनृते" इत्यमरः) अप्रियस्य हृदयात् त्यागेऽर्थतः सिद्धेऽपि पुनः हृदयपदोपादानम्, 'अप्रियं मया त्यक्तम्' इति वाङ्मात्रेण न त्यागः, अपि तु तत्संस्कारोन्मूलनपूर्वकमेव त्यागः, इति ध्वनयति। ] अपैतु अपगच्छतु। "कथं वा पूर्वम् अप्रियमाचरितं, कथं वा तत्परिहारार्थं प्रार्थ्यते ?" इति तत्राह, किमपीति।—तदा त्वद्दर्शनसमये मे मम किमपि अनिर्वचनीय इति भावः, मनसः; यद्वा —किमपि ईषत् मनो यस्य इत्येकपदम् ; बलवान् अधिकः सम्मोहः अज्ञानता अभूत्, तेनैव सम्मोहेन मम मनः समूलोन्मूलनं जातं, तेन च विचिन्त्येन ज्ञातमप्रियं

शकु। उत्थेदु उत्थेदु अज्जउत्तो, णूणं मे सुहप्पडिवन्धअं पुराकिदं तेसु दिअएसु परिणामसुहं आसी—जेण साणुक्कोसो वि अज्जउत्तो मइ विरसो संवुत्तो । (च) (१८)

[ राजा उत्तिष्ठति ] ।

शकु। अध कधं अज्जउत्तेण सुमरिदो दुक्खभाइ अअं जणो ? (छ) (१६)

(च) उत्तिष्ठतु उत्तिष्ठतु आर्य्यपुत्रः, नूनं मे सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणामसुखमासीत्—येन सानुक्रोशोऽपि आर्य्यपुत्रो मयि विरसः संवृत्तः ।

(छ) अथ कथम् आर्य्यपुत्रेण स्मृतो दुःखभागी अयं जनः ?

---

त्वया चन्तव्यमित्यभिप्रायः। हि तथाहि, प्रबलतमसां प्रबलम् अधिकं तमः अज्ञानं येषां तेषां मोहान्धानाम् इत्यर्थः, शुभेषु मङ्गलेषु विषयेषु, एवंप्रायाः एवंविधाः शुभत्यागरूपाः वृत्तयः व्यवहारा भवन्तीति शेषः। तत्र दृष्टान्तमाह, स्रजमिति।—अन्धः विकलाक्षः जनः, शिरसि चिप्तां केनापि परिपातितां स्रजमपि मालामपि अहिशङ्कया सर्पभ्रमेण धुनोति परितः चिपति । [ सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः, तथा चतुर्थपादे दृष्टान्तः, उपमानोपमेयगतसाधर्म्यप्रतिबिम्बनात्, 'अहिशङ्कया' इत्यंशे भ्रान्तिमांश्च; इत्येषाम् अङ्गाङ्गित्वेन साङ्कर्य्यम् । न चात्र सम्मोहस्य मनोधर्मत्वात् आर्थपौनरुक्त्यमिति वाच्यं, दर्शनान्तरे तस्य आत्मधर्मत्वेन परिहारात् । अनेन नृपोक्तेन अनुनयो नाम नाटकलचणमुपन्यस्तम्; यदाह दर्पणे,—"वाक्यैः स्निग्धैः अनुनयः भवेदर्थस्य साधनम्" इति]। हरिणी वृत्तम् । लचणादिकन्तु पूर्वमुक्तम् ॥२४॥

(१८) नूनमिति ।—नूनं—निश्चितं, तेषु दिवसेषु—परस्परमेलनजन्यसुखोचितेषु इत्यर्थः, सुखप्रतिबन्धकं—सुखविघातकम्, अथ च परिणामसुखं—परिणामे भाविनि काले, अवसाने इत्यर्थः, सुखं सुखकरं भवदनुग्रहजन्येष्टप्राप्तसम्भाव्यमिलनात् इति भावः, पुराकृतं—पूर्वजन्मानुष्ठितं कर्मेति शेषः, आसीत् । ननु 'ममापराध एव तत्र कारणं, न तु पुराकृतं कर्म्म' इति नृपशङ्कामपनेतुमाह, येनेति ।—सानुक्रोशोऽपि—त्रिभुवनेषु सर्वत्र दयालुतया प्रसिद्धोऽपि ("अनुकम्पा स्यादनुक्रोशः" इत्यमरः ) । मयि—मन्दभाग्ये जने, विरसः,—विरक्तः, संवृत्तः ; अतः भवदपराधः नात्र कारणं, परन्तु ममैव प्राग्भवीयं कर्म्म इति भावः ।

(१६) दुःखभागी—जन्मारभ्य केवलं दुःखानुभवनशीलः, अयं जनः,—मन्दभाग्य इत्यर्थः, अत एव नामानुत्कीर्त्तनम् ।

राजा। उद्धृतविषादशल्यः कथयिष्यामि । (२०)—

मोहान्मया सुतनु ! पूर्वमुपेक्षितस्ते
यो वाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते ! प्रमृज्य विगतानुशयो भवामि (२१)॥२५॥

[ इति यथोक्तं करोति ] । (२२)

(२०) उद्धृतेति ।—उद्धृतम् अपनीतं विषादः शल्यमिव येन सः, अपनीतशोकशङ्कुः सन्नित्यर्थः, कथयिष्यामि—प्राक् शोकमपनीय पश्चात् वदिष्यामि इत्यर्थः । [अर्थोपमालङ्कृतिः ; वक्ष्यमाणश्लोके शोकप्रशमनकथनत्वेन तत्साधकत्वात् । अनेन खेदः व्यङ्ग्यः ] ।

(२१) विषादशल्योद्धरणप्रकारं कथयति, मोहादिति ।—हे सुतनु ! शुभाङ्गि ! मया [ पुरुवंशप्रभवेण धर्मभीरुणा प्राज्ञतमेन दुष्मन्तेनापि इत्यर्थान्तरसंक्रमितवाच्यम् ] मोहात् अज्ञानात् यः वाष्पबिन्दुः [जातावेकवचनं] बिन्दुसमूह इत्यर्थः, पूर्वं प्रत्याख्यानसमये उपेक्षितः अगणितः, न तु प्रमार्ज्जितः, अत एव ते तव अधरं परिबाधमानः पीड़यन् स्थित इति शेषः, [ अनेन वाष्पबिन्दूनाम् अनवरतपातित्व-स्थूलतरत्व-अत्युष्णत्वादिकं व्यज्यते ; शोकजनितवाष्पबिन्दूनां तथात्वसम्भवात् ; अत एव अधरपीडनं सम्भवति । "बाधमानः" इत्यनेन च अधरस्यापि कोमलत्वं व्यञ्जयता अस्या अपि सौन्दर्य्यातिशयः ध्वन्यते] । हे कान्ते ! आकुटिलेषु ईषद्वक्रेषु पक्ष्मसु नेत्रलोमसु विलग्नं, न तु अधरपर्य्यन्तपातिनम्, [ एतेन वाष्पस्य बिन्दुत्वाभावः अविरतपतनाभावः अत एव अधरपीड़नाभावश्च ध्वन्यते, आनन्दवाष्पाणां तथात्वसम्भवात् । ध्वन्यते च तस्य पक्ष्मविलग्नत्वकथनेन नेत्रलोम्नां घनसन्निविष्टत्वं, तेन च तस्याः सौन्दर्य्यातिशयः । ] तं वाष्पबिन्दुं तावत् साकल्येन प्रमृज्य अपनीय, ( यद्यपि बाधिताधरस्य वाष्पस्य अतीतत्वम्, अक्षिलोमगतस्य च वर्त्तमानत्वं, तथापि अस्यापि आनन्दजाश्रुणः पूर्वदुःखस्मरणजन्यतया तत्पदेन निर्द्देशः ।) अद्य सम्प्रति विगतानुशयः गतसन्तापः उद्धृतविषादशल्य इति यावत् भवामि ; अनुशयविशेषस्यैव विषादरूपत्वात् । यदुक्तं सुधाकरे,—"अपराधपरिज्ञानात् अनुतापस्तु यो भवेत् । स विषादः" इति । [ अत्र पूर्वार्द्धे प्रमार्ज्जनकारणे सत्यपि तदभावात् विशेषोक्तिः, सा च मोहादिति कारणस्योक्तत्वात् उक्तनिमित्ता ; तथा 'उपेक्षितः' अत एव 'बाधमान' इति पदार्थहेतुकं काव्यलिङ्गञ्च] । वसन्ततिलकं वृत्तम् ॥२५॥

(२२) यथोक्तम्—अश्रुमार्ज्जनं, करोति नाटयेन इति शेषः । [ अनेन प्रसादो नाम अङ्गं प्रदर्शितम् ; तथा च दर्पणे,—"शुश्रूषादिः प्रसादः स्यात्" इति ]।

शकु। [प्रहृष्टबाष्पा अङ्गुरीयकं विलोक्य।] अज्जउत्त! तं एदं अङ्गुलीअअं!! (ज) (२३)

राजा। अथ किम्। अस्मादद्भुतोपलम्भात् मया स्मृतिः उपलब्धा। (२४)

शकु। विसमं किदं क्खु इमिणा, जं तदा अज्जउत्तस्स पच्चाअणकाले दुल्लहं आसी। (झ) (२५)

राजा। तेन हि, ऋतुसमागमचिह्नं प्रतिपद्यतां लता कुसुमम्। (२६)

शकु। ण से विस्ससामि, अज्जउत्तो ज्जेव णं धारेदु। (ञ)(२७)

---

(ज) आर्य्यपुत्र! तदिदमङ्गुरीयकम्!!

(झ) विषमं कृतं खलु अनेन, यत्तदा आर्य्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत्।

(ञ) नास्य विश्वसिमि, आर्य्यपुत्र एवैनं धारयतु।

---

(२३) तत्—यत् खलु मामीदृशे दुःखसागरे न्यमज्जयदित्यर्थः। इदं—दृश्यमानम्।

(२४) अथ किमिति।—स्वीकारार्थे अव्ययम्। अद्भुतोपलम्भात्—अद्भुतः विस्मयजनकः, उपलम्भः लाभः, प्राप्तिरित्यन्तः इत्यर्थः, यस्य, तथाभूतात्। अस्मात्—अङ्गुरीयकात्। उपलब्धा—प्राप्ता।

(२५) विषमं—निष्ठुरं, नृशंसमिति यावत्। प्रत्यायनकाले—विश्वासोपगमनसमये। दुर्लभम्—अनुपस्थितम्।

(२६) तेन—पूर्वं प्रतार्य्यापि पश्चात् तव स्मृतिमुत्पाद्य अत्यन्तमुपकारसाधनाद्धेतोः, हि—निश्चितं, लता वल्ली (कर्त्री) ऋतुसमागमचिह्नम्—ऋतोः वसन्तस्य इत्यर्थः, यः समागमः सम्पर्कः, तस्य चिह्नम्, अनुमापकचिह्नस्वरूपं कुसुमं प्रतिपद्यतां प्राप्यताम्। [अत्र त्वया अङ्गुरीयकमिदं धारणीयमिति विशेषे प्रस्तुते सामान्यैः अप्रस्तुतैः लतादिभिरिव तथाऽभिधानात् अप्रस्तुतप्रशंसाऽलङ्कारः]।

(२७) पुनरपि स्वकरात् भ्रंशे अनिष्टपातं सम्भाव्य सहजभीरुतया पुनः स्वविरहमुत्प्रेक्षमाणा आह, नेति।—अस्य—अङ्गुरीयकस्य सम्बन्धे, न विश्वसिमि—पुनरपायसम्भवादिति भावः। आर्य्यपुत्र एव धारयतु, अङ्गुली इति शेषः। [अत्र "राजा। प्रिये!

[ ततः प्रविशति मातलिः ] । (२८)

मात । दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन च आयुष्मान् वर्द्धते ।

राजा । सुहृत्सम्पादितत्वात् साधुतरफलो मे मनोरथः । मातले ! न खलु विदितोऽयमाखण्डलस्य अर्थः । (२९)

मात । [ सस्मितम् । ] किमीश्वराणां परोक्षम् ? एहि, भगवान् मारीचस्ते दर्शनमिच्छति । (३०)

राजा । प्रिये ! अवलम्ब्यतां पुत्रः, त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि । (३१)

---

स्मृतिभिन्न—" इत्यादिना 'नास्य" इत्यन्तेन परिभाषणं नाम निर्वहणाङ्गं प्रदर्शितम् ; यथा दशरूपके,—"परिभाषा मिथो जल्पः" इति ] ।

(२८) अत्र च मातलिः प्रवेशेन 'ग्रथनं' नाम निर्वहणाङ्गम् उपक्षिप्तम् ; तथा च दर्पणे,—"उपन्यासस्तु कार्य्याणां ग्रथनम्" इति ।

(२९) सुहृत्सम्पादितत्वात्—सुहृदा त्वया सम्पादितत्वात् सङ्घटितत्वात्, साधुतरफलः,—साधुतरम् अतिशयेन साधु फलं स्वपत्नीपुत्रसमागमरूपं यस्य तादृशः, मनोरथः,—अभिलाषः ; तथा च मम पत्नीमेव लब्धुम् अभिलाषः आसीत्, तत्र यत्नातिशयेन तु पुत्रसहिताया एव तस्याः लाभः, इति साधुतरत्वं बोध्यम् । "वासवस्य परमसुहृत्तया तस्य वेदने परमानन्द एव सम्भवति", इति मत्वा आह, न खलु इति ।—अयम् अर्थः,—सपुत्रशकुन्तलासमागमरूपः विषयः, आखण्डलस्य इन्द्रस्य विदितः किम् ? [अत्र वर्त्तमाने क्तप्रत्ययात् कर्त्तरि षष्ठी] तस्य वेदनमेव मम सुखावहमिति भावः । [अत्रापि प्रहर्षो नाम नाट्यालङ्कारः प्रदर्शितः ; उक्तञ्च दर्पणे,— "प्रहर्षः प्रमदाधिक्यम्" इति ] ।

(३०) ईश्वराणाम्—ऐश्वर्य्यशालिनां, परोक्षम्—अप्रत्यक्षं, किम् ?—न किमपि इत्यर्थः ; सर्वान्तर्य्यामित्वादिति भावः । भगवान्—षडैश्वर्य्यशाली, मारीचः,—साक्षात् ब्रह्मणः पुत्रस्य महर्षेः मरीचेः तनयः । [अनेन तद्दर्शनस्य अत्यावश्यकत्वं सूच्यते ] । दर्शनमिच्छति—न तु त्वां गन्तुम् आदिशति । [ अनेन राज्ञोऽपि कश्यपादेशानर्हत्वकथनेन प्रभावातिशयः व्यज्यते ] ।

(३१) अवलम्ब्यतां—गृह्यतां, पुरस्कृत्य—अग्रे कृत्वा, भगवन्तं—कश्यपम् । [ अनेन तद्दर्शने अभ्युदयसम्भावना सूचिता ] ।

शकु। लज्जेमि क्खु अज्जउत्तेण सहं गुरुअणसमीवं गन्तुं। (ट) (३२)

राजा। आचरितव्यमेतत् अभ्युदयकालेषु, तदेहि तावत्।(३३)

[ इति सर्वे परिक्रामन्ति ]।

[ ततः प्रविशति अदित्या सह आसनोपविष्टो मारीचः। ]

मारीचः। [ राजानमवलोक्य। ] दाक्षायणि! (३४)—

पुत्रस्य ते रणशिरस्ययमग्रयायी
दुष्मन्त इत्यभिहितो भुवनस्य भर्त्ता।
चापेन यस्य विनिवर्त्तितकर्म जातं
तत् कोटिमत् कुलिशमाभरणं मघोनः (३५) ॥२६॥

(ट) लज्जे खलु आर्य्यपुत्रेण सार्द्धं गुरुजनसमीपं गन्तुम्।

(३२) आर्य्यपुत्रेण सार्द्धं—सह, गुरुजनसमीपं गन्तु "लज्जे" इति योजना। [ एतेन लज्जाऽतिशयप्रख्यापनेन नायिकागतमौचित्यं ध्वन्यते ]।

(३३) अभ्युदयकालेषु—अभ्युदीयते अनेन इति अभ्युदयः, इह परत्र च पुण्यजनकव्यापारः, तस्य कालेषु तदनुष्ठानसमयेषु, एतत्—पतिसाहचर्य्यम्, आचरितव्यं—कर्त्तव्यम्;—"सस्त्रीको धर्ममाचरेत्" इति स्मरणात्; लोकेऽपि उत्सवस्य समये तथा दर्शनादिति भावः।

(३४) दाक्षायणि!—दक्षसुते! अदिते! इत्यर्थः;—"आत्मनाम गुरोर्नाम नामातिकृपणस्य च। श्रेयस्कामी न गृह्णीयात् ज्येष्ठपुत्रकलत्रयोः॥" इति निषेधात् अदितिरिति-नामग्रहणं न कृतं मुनिना।

(३५) पुत्रस्येति।—अयं दुष्मन्त इति अभिहितः ('इति'शब्देन दुष्मन्तेति शब्दस्य परामर्शात् शब्दपरोऽयं निर्देशः, तेन दुष्मन्तनामधेय इत्यर्थः) भुवनस्य पृथिव्या भर्त्ता अधिपतिः, ते तव पुत्रस्य इन्द्रस्य, रणशिरसि संग्रामशिखरे अग्रयायी अग्रेसरः, [ इदमेव विधेयम्; तेन च अदितेश्चित्ताकर्षणं दुष्मन्तोपरि प्रतिपादितं मुनिना; स्त्रीजनसन्निधौ 'अयं तव पुत्रस्य उपकर्त्ता" इति कथने सर्वथैव मातुः चित्ताकर्षणदर्शनात् ]। यस्य दुष्मन्तस्य चापेन धनुषा विनिवर्त्तितं निष्पादितं कर्म्म शत्रुपराजयरूपं यस्य तथाभूतं, तत् प्रसिद्धं कोटिमत् बहुकोटि-

अदितिः। सम्भावणीअप्पहावा से आकिदी। (ठ) (३६)

मात। आयुष्मन्! एतौ पुत्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरौ आयुष्मन्तम् अवलोकयतः, तदुपसर्प। (३७)

राजा। मातले!—

प्राहुर्द्वादशधा स्थितस्य मुनयो यत् तेजसः कारणं,
भर्त्तारं भुवनत्रयस्य सुषुवे यद् यज्ञभागेश्वरम्।

(ठ) सम्भावनीयप्रभावाऽस्याकृतिः।

युक्तम् [ अनेन अकुण्ठत्वं सूचयता युद्धचमत्वं ध्वन्यते ] मघोनः इन्द्रस्य कुलिशं वज्रम् आभरणम् अलङ्करणं जातम्; कुलिशं हि वासवस्य केवलं करशोभां सम्पादयति, शत्रुपराजये नास्य प्रयोजनमिति भावः। [ अत्र लोकातिशयवीर्य्यसम्पत्तिवर्णनात् उदात्तालङ्कारः; तथा "कुलिशमाभरणं जातम्" इत्यंशे असमस्तपदयोः अभेदरूपणात् व्यस्तरूपकालङ्कारश्च ]। वसन्ततिलकं वृत्तम् ॥२६॥

(३६) सम्भावनीयप्रभावा—अनुमेयप्रभुशक्तिः। अस्य—दुष्मन्तस्य, आकृतिः,—मूर्त्तिः, तथा च आकृतिरेवास्य तादृशालौकिकप्रभावसाक्षिणी इत्यर्थः।

(३७) पुत्रप्रीतिपिशुनेन—पुत्रस्नेहसूचकेन।—"पिशुनौ खलसूचकौ" इत्यमरः। वासवः खलु अनयोः तनयः, त्वञ्च तस्य मित्रमिति त्वय्यपि पुत्रस्नेहः इति भावः। दिवौकसां—देवानां, पितरौ—जननीजनकौ, अदितिकश्यपौ इत्यर्थः। [अनेन तदभिसंवर्द्धनस्य अत्यर्थमौचित्यं सूच्यते ]। उपसर्प—समीपं गच्छ।

(३८) प्राहुरिति।—मुनयः व्यासप्रभृतयः द्वादशधा द्वादशप्रकारेण स्थितस्य विद्यमानस्य द्वादशमासेषु द्वादशमूर्त्तिधरस्य इत्यर्थः, तेजसः सूर्य्यस्येति यावत्, (उक्तञ्च विष्णुपुराणे,—"तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि। अर्य्यमा चैव धाता च त्वष्टा पूषा तथैव च॥ विवस्वान् सविता चैव मित्रो वरुण एव च। अंशुर्भगश्चादितिजा आदित्या द्वादश स्मृताः॥" इति; तथा "द्वादशात्मा दिवाकरः" इति शास्त्राच्च।) यत् द्वन्द्वं, कारणं प्रभवं प्राहुः कीर्त्तयन्ति। [ अनेन व्यासप्रभृतीनां मुनीनां वाक्यस्य वेदमूलकत्वेन प्रामाण्यात् विषये चात्र भ्रमप्रमादराहित्यं व्यज्यते, ध्वन्यते च जगत्त्रयविद्योतकस्य अशेषक्रियाकलापनिदानभूतस्य महामहिमतेजसः सूर्य्यस्यापि उत्पादकत्वेन अस्यापि द्वन्द्वस्य निरतिशयप्रभावशालित्वम् ]। यत् द्वन्द्वं भुवनत्रयस्य

यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं,
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम् (३८)॥२७॥

मात। अथ किम्।

राजा। [प्रणिपत्य।] उभाभ्यामपि वां वासवनियोज्यो दुष्मन्तः प्रणमति। (३९)

---

(न तु एकस्य लोकस्य) भर्त्तारं पोषकत्वेन धारणसमर्थम्, अधिपतिमिति यावत्, यज्ञभागेश्वरं यज्ञस्य भागा येषां ते यज्ञभागाः देवाः तेषाम् ईश्वरं, (न तु यस्य कस्यचित् एकस्य अतिपतिं) देवराजं सुषुवे जनयामास, [अनेनापि कोऽप्यतिशयः व्यज्यते] यस्मिन् द्वन्द्वे आत्मभुवः ब्रह्मणोऽपि, परः श्रेष्ठः, विष्णुरित्यर्थः,[अत्र "आत्मभवः" इति पाठे—आत्मना भवतीति आत्मभवः स्वयम्भुः परः परमः पुरुषः विष्णुरित्यर्थः ]। भवाय जन्मने आस्पदं स्थानम् आश्रयं चक्रे, वामनरूपेणेति भावः ; तथा च विष्णुपुराणे,—"मन्वन्तरे च सम्प्राप्ते तथा वैवस्वते द्विज!। वामनः कश्यपात् विष्णुरदित्यां सम्बभूव ह॥" इति। दक्षमरीचिसम्भवं—दक्षमरीचिभ्यां सम्भवः उत्पत्तिर्यस्य तथोक्तं, दक्षकन्या अदितिः, मरीचिपुत्रः कश्यप तदुभयरूपमित्यर्थः, स्रष्टुर्विधातुः ब्रह्मणः इत्यर्थः ; दक्षमरीच्योः तस्य मानसप्रभवत्वात्, एकान्तरम् एकपुरुषव्यवधानम् [अनेन ब्रह्मणः तुल्यप्रभावत्वं व्यज्यते] तत् प्रसिद्धम् इदं दृश्यमानं, द्वन्द्वम् अदितिमारीचरूपयुगलम्। [अत्र पादत्रये अङ्गभूतमहापुरुषत्रयचरितवर्णनात् मालारूपोदात्तालङ्कारः ; उदात्तलक्षणन्तु दर्पणे,—लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते। यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्॥" इति। "आत्मभुवः" इत्यत्र "आत्मभवः" इति पाठे—आत्मभवोऽपि भवाय आस्पदं चक्रे इति आपाततः विरुद्धवत् प्रतीयमानत्वात् विरोधाभासः ; तथा प्रथमे पादे "कारणं" द्वितीये "सुषुवे" तृतीये च "भवाय आस्पदं चक्रे" इति एकस्यैव कारणस्य पर्यायान्तरेण अभिधानात् पर्यायोक्तिश्च अलङ्कारः ]। शार्दूलविक्रीडितं वृत्तम्॥२७॥

(३९) उभाभ्यामपि वां—युवाभ्याम् अदितिकश्यपाभ्यामित्यर्थः। [उद्देश्यतामात्रविवक्षायां चतुर्थी] वासवनियोज्यः,—इन्द्रदासः। दुष्मन्तः,—तन्नामधेयः, प्रणमति—प्रह्वीभवति। [अत्र गुरुपत्न्याः पादग्रहणप्रतिषेधात् अभिवादनसमये नामग्रहणस्य च,कर्त्तव्यत्वात् पादग्रहणं अकृत्वैव प्रणिपातः कृतः, दुष्मन्त इति स्वनाम च उत्कीर्त्तितम् ; तथा च मनुः,—"गुरुपत्नी तु युवतिः नाभिवाद्या ह

मारीचः । वत्स ! चिरं जीवन् पृथिवीं पालय ।

अदितिः । अप्पदिरधो होहि । (ड) (४०)

[ शकुन्तला पुत्रसहिता पादयोः पतति । ]

मारीचः । वत्से !—

आखण्डलसमो भर्त्ता, जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योग्या, पौलोमीमङ्गला भव (४१) ॥२८॥

अदितिः । जादे ! भत्तुणो बहुमदा होहि, अअञ्च दीहाऊ उहअपक्खं अलङ्करेदु, एध, उवविसध । (ढ) (४२)

[ सर्वे प्रजापतिमभित उपविशन्ति । ]

---

(ड) अप्रतिरथो भव ।

(ढ) जाते ! भर्त्तुर्बहुमता भव, अयञ्च दीर्घायुरुभयपक्षम् अलङ्करोतु, एत, उपविशत ।

---

पादयोः । पूर्वाविंशतिवर्षेण गुणदोषौ विजानता ॥" इति—"अभिवन्दात् परो विप्रो ज्यायांसमभिवादयन् । असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत् ॥" इति च । स्त्रीषु नैष विधिरिति उत्तरत्र शकुन्तलायाः पादयोः पतनम् उपनिबद्धं कविना ] ।

(४०) अप्रतिरथः,—अप्रतिद्वन्द्वः ।

(४१) आखण्डलेति ।—भर्त्ता आखण्डलेन इन्द्रेण समः सदृशः, सुतः पुत्रः जयन्तप्रतिमः जयन्ततुल्यः ; अतः ते तव सम्बन्धे अन्या अपरा, वक्ष्यमाणेतरा इत्यर्थः ; सर्वस्या एव आशिषः इतो न्यूनत्वादिति भावः ; आशीः न योग्या न उचिता, त्वं पौलोमी शची तस्या मङ्गलमिव मङ्गलं सौभाग्यरूपं यस्यास्तादृशी भव ; यथा इन्द्राणी नियतमिन्द्रेणाविरहिता चिरमविधवा च तथा त्वं भूयाः इत्यर्थः । [ भव इति—आशिषि लोट् । अत्र उपमावयं काव्यलिङ्गञ्चालङ्कारः ] ॥ २८ ॥

(४२) जाते !—वत्से !, भर्त्तुः बहुमता—आदरिणी भव ; पुनरीदृशं दुःखं ते कदापि मा भूयादिति भावः । अयञ्च दीर्घायुः,—आयुष्मान् सर्वदमनः, उभयपक्षं— पितृपक्षं मातामहपक्षञ्च, अलङ्करोतु—शोभयतु ; अस्य खलु मातामहस्य कण्वस्य काश्यपकुलोत्पन्नत्वात् तत्पक्षालङ्करणे स्ववर्गस्यालङ्करणं फलबलादायातमित्यभिप्रायः । एत – आगच्छत, उपविशत—उपवेशनं कुरुत ।

मारीचः । [ एकैकं निर्दिशन् । ]—

**दिष्ट्या शकुन्तला साध्वी, सदपत्यमिदं, भवान् ।**
**श्रद्धा, वित्तं, विधिश्चेति त्रितयं तत् समागतम् (४३) ॥२९॥**

राजा । **भगवन् ! प्राक् अभिप्रेतसिद्धिः पश्चात् दर्शनमित्यपूर्वः (४४) खलु वोऽनुग्रहः ! कुतः ?—**

**उदेति पूर्वं कुसुमं, ततः फलं,**
**घनोदयः प्राक्, तदनन्तरं पयः ।**

(४३) दिष्ट्येति ।—दिष्ट्या भाग्येन साध्वी पतिव्रता शकुन्तला, सत् उत्कृष्टम् अपत्यं पुत्रं तथा भवान् [विविधगुणगणसम्पन्नो भवान् इत्यर्थान्तरसंक्रमितवाच्यम् ; तेन नास्ति विशेषणप्रक्रमभङ्गदोषावकाशः] । हस्तेन निर्दिशन्नो आह, श्रद्धेति ।—श्रद्धा आस्तिक्यबुद्धिः, वित्तं धनं, विधिश्च यागाद्यनुष्ठापकं प्रवर्त्तकवाक्यं यागाद्यनुष्ठानं वा, इति एतत् त्रितयं समागतं मिलितम् । यथा श्रद्धासहकारेण यागादौ सम्पादिते वित्तं जायमानं दृश्यते, तथा श्रद्धास्वरूपशकुन्तलासहकृतविधितुल्यस्य भवतः इदं सदपत्यं वित्तनिभं सम्प्रति समागतम् ; अथवा—यथा श्रद्धावित्तसहकृतयागाद्यनुष्ठापकं प्रवर्त्तकवाक्यं लोकमुपतिष्ठति तथा स्त्रीबालसम्बन्धात् त्वमपि मामुपागतः इति भावः । [अनेन त्रितयपदेन प्रत्येकं कटत्वं बोधयता स्त्रीबालौ इति नावज्ञेयौ इति सूच्यते । अत्र सम्भवद्वस्तुसम्बन्धैः श्रद्धावित्तविधिभिः शकुन्तलातदपत्य-दुष्मन्तानां बिम्बप्रतिबिम्बभावबोधनात् निदर्शना ; तथा आनुरूप्येण श्लाघाकरणात् समालङ्कारश्च ] ॥ २९ ॥

(४४) भगवन् !—महिमान्वित ।—“देवानामपि ये देवाः महात्मानो महर्षयः । भगवन्निति ते वाच्याः यास्तेषां योषितः तथा ॥” इति भरतोक्तेः भगवन्निति सम्बोधनम् । अभिप्रेतसिद्धिः,—इष्टलाभः । पश्चात्—अनन्तरं, दर्शनं—साक्षात्कारः, युष्माकमिति शेषः ; इति—हेतोः, वः,— युष्माकम्, अनुग्रहः,—प्रसादः, अपूर्वः,—आश्चर्यजनकः, अन्यविलक्षण इत्यर्थः ।

(४५) अनुग्रहस्य अपूर्वत्वं युक्त्या समर्थयते, उदेतीति ।—पूर्वं कुसुमम् उदेति विकसति, ततः फलं उदेति ; प्राक् पूर्वं घनस्य मेघस्य उदयः उद्गमः भवति, तदनन्तरं घनोदयानन्तरं, पयः वृष्टिः ; उदेति इति योजना । अयं निमित्तनैमित्तिकयोः कार्य्यकारणयोः क्रमः पौर्वापर्य्यनियमः ; सर्वत्र दृश्यते इति शेषः ।

निमित्तनैमित्तिकयोरयं क्रम-
स्तव प्रसादस्य पुरस्तु सम्पदः (४५) ॥३०॥

मात। आयुष्मन् ! एवं प्रसीदन्ति विश्वगुरवः । (४६)

राजा। भगवन् ! इमाम् आज्ञाकरीं वो गान्धर्वेण विवाह-विधिना उपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृति-शैथिल्यात् प्रत्यादिशन् अपराद्धोऽस्मि तत्रभवतो युष्मद्गोत्रस्य कण्वस्य, पश्चादेनाम् अङ्गुरीयकदर्शनादूढ़स्मृतिः ऊढ़पूर्वाम् अवगतोऽहं, तच्चित्रमिव मे प्रतिभाति । (४७)—

तव प्रसादस्य अनुग्रहस्य तु पुरः अग्रे सम्पदः सम्भूता इति शेषः ; आशिषोऽनन्तरं सम्पदो लाभस्यैव नियमः, भगवतस्तु आशिषि एतद् वैलक्षण्यं—यत् प्राक् शकुन्तला-रूपसम्पद् लब्धा परतः आशीःप्रकाश इति भावः। [अत्र पादादिस्थितेन एकेनैव उदेति क्रियापदेन काकाक्षिगोलकन्यायेन पादद्वयस्थितसकलवाक्यस्यान्वयोपपत्तेः आदिक्रियादीपकालङ्कारः। यदाह दण्डी,—"जातिक्रियागुणद्रव्यवाचिनैकत्रवर्त्तिना। सर्ववाक्योपकारश्चेत् तमाहुर्दीपकं यथा ॥" इति ; एवं कार्य्यकारणयोः पौर्वापर्य्य-व्यत्ययरूपातिशयोक्तिरलङ्कारः।—"सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते"। इत्युक्तेः ; तथा मम शकुन्तलापुत्रलाभः इति विशेषे प्रस्तुते अप्रस्तुतेन सम्पद्रूपसामान्येन प्रशंस-नात् अप्रस्तुतप्रशंसा च। दृष्टान्त इति केचित्। अनेन च प्रियोक्तिः नाम नाटकलक्षणं प्रदर्शितम् ; तथा च दर्पणे,—"स्यात् प्रमाणयितुं पूज्यप्रियोक्तिः हर्षभाषणम्" इति]। वंशस्थविलं वृत्तम् ॥३०॥

(४६) एवम्—इत्थं, अन्यविलक्षणभावेन इत्यर्थः। प्रसीदन्ति—अनुगृह्णन्ति, विश्व-गुरवः,—विश्वेषां निखिलानां, गुरवः, स्रष्टारः।—"कश्यपात् सकलं जगत्" इति स्मृतेः।

(४७) आज्ञाकरीं—दासीं, [इति विनयप्रदर्शनम्] गान्धर्वेण—मिथः समयपूर्वकेण, उपयम्य—परिणीय, कस्यचित् कालस्य—अवसाने इति शेषः ; बन्धुभिः,—स्वजनैः शिष्यादिभिः। स्मृतिशैथिल्यात्—स्मृतेरभिभवात्, न वस्तुतः स्मृतिलोपः, (तथात्वे स्थायिन्याः रतेः विच्छेदप्रसङ्गेन शृङ्गाररसस्य अपुष्टता प्रसज्येत इति तच्छैथिल्यमित्युक्तम्)। प्रत्यादिशन्—परित्यजन्। अपराद्धः,—कृतापराधः। कस्येत्याकाङ्क्षायामाह, तत्रभवत इति।—तत्रभवतः,—पूज्यस्य, युष्मद्गोत्रस्य—भवत्-

यथा गजो नेति समक्षरूपे
तस्मिन्नपक्रामति संशयः स्यात् ।
पदानि दृष्ट्वाऽथ भवेत् प्रतीतिः
तथाविधो मे मनसो विकारः (४८) ॥३१॥

मारीचः । वत्स ! अलम् आत्मापराधशङ्कया, सम्मोहोऽपि त्वयि उपपन्न एव, श्रूयताम् । (४९)

सन्ततेः; [अत्र "युष्मत्सगोत्रस्य" इति पाठे—युष्माभिः सह समानम् एकं गोत्रं कुलं यस्य तथोक्तस्य इत्यर्थः, कण्वस्य काश्यपवंशप्रसूतत्वात् ।

(४८) यथेति ।—साधु सम्यक् यथा तथा समक्षं प्रत्यक्षं रूपं यस्य तथोक्ते कस्मिन्नपि गजे अतिक्रामति चलति सति यथा संशयः गजोऽयं नवेति सन्देहः स्यात्, अथ अनन्तरं पदानि पदचिह्नानि दृष्ट्वा प्रतीतिः विश्वासः, 'अयं गज एव' इति दृढनिश्चयः अनुमित्यात्मकः इत्यर्थः, सन्देहनिराकरणमिति यावत्, भवेत्; मे मम मनसः तथाविधः तादृशः विकारः जात इति शेषः । [अत्र "यथा गजो नेति समक्षरूपे तस्मिन्नपक्रामति संशयः स्यात्" इति पाठे—समक्षरूपे समक्षम् इन्द्रियसन्निकृष्टं रूपं यस्य तस्मिन् सति गजपिण्डे 'गजो न' इति विपरीतनिश्चयः, तस्मिन् गजपिण्डे अपक्रामति गच्छति सति, संशयः 'अयं गजो न वा' इति सन्देहः, ततश्च पदानि भूमौ पदचिह्नानि दृष्ट्वा 'अयं गज एव' इति प्रतीतिः निश्चयबुद्धिर्भवति, तथाविधः तादृशः मे मम मनसः विकार आसीदिति शेषः । तथा च यदा शकुन्तला शिष्यादिभिः समानीता मम नयनसन्निकृष्टा, तदा 'नेयं परिणीता' इति विपरीतनिश्चयः, ततः अप्सरोभिः नीतायां तस्यां 'परिणीता न वा' इति सन्देहः, अत एव तदानीं "प्रत्याययतीव मे हृदयम्" इत्युक्तं; ततश्च अङ्गुरीयकं दृष्ट्वा 'परिणीतैव' इति निश्चयः इत्यसम्भवमिदमिति भावः । अत्र यथा 'गजो न' इति विपर्य्यासानन्तरं 'गजो न वा' इति संशयः, ततः पुनः निश्चयः असम्भवः, ममापि तादृशनिश्चयवत्त्वेन तत्सम्बन्धेन अनुपयोज्यमानेन बिम्बानुबिम्बभावबोधनात् असम्भवद्वस्तुसम्बन्धरूपो निदर्शनाऽलङ्कारः ] । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिः वृत्तम् ॥३१॥

(४९) आत्मापराधशङ्कया—स्वदोषभयेण, अलं—व्यर्थमेव [अलंशब्दयोगे तृतीया], सम्मोहः,—स्मृतिभ्रंशः । उपपन्नः,—युक्तः । सम्मोहस्य उपपन्नत्वे कारणं दर्शयति—श्रूयतामिति ।

राजा। अवहितोऽस्मि।

मारीचः। यदैव अप्सरस्तीर्थावतरणात् प्रत्याख्यानविक्लवां शकुन्तलामादाय दाक्षायणीम् उपगता मेनका, तदैव ध्यानात् अवगतवृत्तान्तोऽस्मि,—"दुर्वाससः शापात् इयं तपस्विनी सहधर्म्मचारिणा त्वया प्रत्यादिष्टा, स च अङ्गुरीयदर्शनावसानः शापः" इति। (५०)

राजा। [सोच्छ्रासमात्मगतम्।] एष वचनीयात् मुक्तोऽस्मि!(५१)

शकु। [स्वगतम्।] दिट्ठिआ अआरणपच्चादेसी ण अज्जउत्तो, ण उण सत्तं अत्ताणं सुमरेमि, अधवा ण स्सुदो सुण्णहिअआए मए अअं सावो, जदो सहीहिं अच्चाअरेण सन्दिट्ठह्मि, "सो राआ जइ तुमं ण सुमरेदि, तदा एदं अङ्गुलीअअं दंसेसि" त्ति। (ण) (५२)

---

(ण) दिष्ट्या अकारणप्रत्यादेशी न आर्य्यपुत्रः, न पुनः शप्तमात्मानं स्मरामि, अथवा न श्रुतः शून्यहृदयया मया अयं शापः, यतः सखीभ्याम् अत्यादरेण सन्दिष्टास्मि, "स राजा यदि त्वां न स्मरिष्यति, तदा एतत् अङ्गुरीयकं दर्शयिष्यसि" इति।

(५०) प्रत्याख्यानविक्लवां—निराकरणकातरां, दाक्षायणीम्—अदितिम्, उपगता—स्वयम् अन्यया वा कयाचित् आनीतां शकुन्तलां पुरस्कृत्य उपस्थिता। ध्यानात्—प्रणिधानात्, अवगतवृत्तान्तः,—ज्ञातसमाचारः, तपस्विनी—वराकी, प्रत्यादिष्टा—निराकृता, अङ्गुरीयदर्शनावसानः,—अङ्गुरीयदर्शनपर्य्यन्तः। [अनेन च निर्णयो नाम निर्वहणाङ्गं प्रदर्शितम्; उक्तञ्च दर्पणे,—"निर्णयः पुनः अनुभूतार्थकथनम्" इति]।

(५१) वचनीयात्—लोकापवादात्, अकारणपरित्यागरूपादिति भावः।

(५२) अकारणप्रत्यादेशी—अकारणत्यागी, शप्तम्—अभिसम्पातयुतम्। महर्षिवचनस्य याथार्थ्यमुपलभ्य पूर्वोक्तमाक्षिप्याह, अथवेति।—शून्यहृदयया—असन्निहितचित्तवृत्त्या। "ननु नाकर्णितः चेत् शापः, तत् कथमवधार्य्यते शापो दत्तः" इति, तत्राह, यत इति।—तथा च 'राज्ञे अङ्गुरीयकं दर्शयिष्यसि' इति इदानीं स्मृतात् सखीवाक्यादेव अवगतार्थाऽस्मीति भावः।

मारीचः। [ शकुन्तलां विलोक्य। ] वत्से! विदितार्थाऽसि, तदिदानीं सहधर्मचारिणं प्रति न त्वया मन्युः करणीयः। (५३) पश्य,—

शापादसि प्रतिहता स्मृतिलोपरूक्षे
भर्त्तर्य्यपेततमसि प्रभुता तवैव।
छाया न मूर्च्छति मलोपहतप्रसादे
शुद्धे तु दर्पणतले सुलभावकाशा (५४) ॥३२॥

राजा। यथाह भगवान्।

मारीचः। वत्स! कच्चिदभिनन्दितः त्वया अस्माभिः विधिवदनुष्ठितजातकर्मादिक्रियः पुत्र एष शाकुन्तलेयः? (५५)

---

(५३) विदितार्था—ज्ञातशापवृत्तान्ता [ अत्र "चरितार्थाऽसि" इति पाठ—कृतार्थाऽसि इत्यर्थः ]। सहधर्मचारिणं—भर्त्तारं, मन्युः,—कोपः, न करणीयः,—न कर्त्तव्यः ; तथा च अज्ञाते च वृत्तान्ते 'भर्त्तुरेवायमपराधः' इति मत्वा कोपे कथञ्चित् कृतेऽपि सम्प्रति ते विदितरहस्याया नायं धारयितुमुचित इति भावः।

(५४) शापादिति।—शापात् हेतोः दुर्वाससः इति शेषः, [ अनेन दोषाभावः तस्मिन् उक्तः ] प्रतिहता निराकृता असि, पूर्वं स्मृतिलोपेन स्मृतिभ्रंशेन रूक्षे नृशंसे स्नेहशून्ये सम्प्रति शापावसानात् अपेततमसि—अपेतं दूरीभूतं तमः शापजनितो मोहः यस्मात् तादृशे, भर्त्तरि स्वामिनि [ अत्र 'भर्त्तरि" इति पदेन भरणपोषणादेः करणशीले, न तु केवलं वैधव्यविरोधिचिह्नधारणोपकारके ; इति भृधातोः, शीलार्थतृणश्च सहृदयसंवेद्यम् अतिशयत्वं ध्वन्यते ] तवैव नान्यस्याः प्रभुता प्रभावः। सतीषु अपि बहुपत्नीषु त्वमेवास्य प्राणप्रियतमा भविष्यसि ; विनाऽपराधेन कष्टदानात् लज्जया राज्ञः पराजितत्वात् इति भावः। अत्र दृष्टान्तमाह, छायेति।—मलेन आगन्तुकेन मालिन्येन उपहतः विलुप्तः प्रसादः नैर्मल्यं यस्य तादृशे दर्पणतले आदर्शतले, छाया प्रतिबिम्बं न मूर्च्छति न पततीत्यर्थः, शुद्धे निर्मले तु सुलभः सुप्रवेशः अवकाशः यस्याः तथाविधा भवतीति शेषः। [ अत्र प्रभुत्वस्य भर्तृनिष्ठत्वेव प्रसिद्धत्वात् तस्य भार्य्यासम्बन्धस्य उक्तेः असम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः ; पराद्धे च साधर्म्यस्य बिम्बानुबिम्बभावबोधनात् दृष्टान्तालङ्कारः ]। वसन्ततिलकं वृत्तम् ॥३२॥

(५५) अस्माभिः,—मया इत्यर्थः, [बहुवचनेन वेदविदा विदितसकलसमन्त्रतन्त्रानुष्ठानेन दिवौकसामपि गुरुणा कश्यपेन इत्यादि धर्म्ममतं व्यज्यते], अत एव विधिवत्—

राजा । भगवन् ! अत्र खलु मे वंशप्रतिष्ठा । (५६)

[ इति बालकं हस्तेन गृह्णाति । ]

मारीचः । भाविनं चक्रवर्त्तिनम् एनम् अवगच्छतु भवान् । पश्यतु (५७)—

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः ।
इहायं सत्त्वानां प्रसभदमनात् 'सर्वदमनः'
पुनर्यास्यत्याख्यां 'भरत' इति लोकस्य भरणात्(५८)॥३३॥

यथाशास्त्रम् अनुष्ठिता जातकर्म्मादिक्रिया यस्य तादृशः, [अनेन अभिनन्दनस्य अन्यतम-कारणमतीव पवित्रता च व्यज्यते] पुत्रः,—पुन्नामनरकपरित्राता, एतदपि कारणान्त-रम् अभिनन्दने इति भाव्यम् । शाकुन्तलेयः,—शकुन्तलागर्भजातः, या खलु तव भार्य्यासु नितरां प्रियतमा, यदर्थमियान् क्लेशानुभवः, तस्याः जगत्त्रयरमणीललाम-भूतायाः पतिपरायणायाः तनयः इत्यर्थः, त्वया अभिनन्दितः कच्चित्?—"कच्चित् कामप्रवेदने" इत्यमरः । ईदृशः सर्वगुणसम्पन्नः सकलसंस्कारसंस्कृतः विशुद्धस्वभावः प्रागेव अभिनन्दनीय इति महर्षेरभिप्रायः, अत एव कच्चिदिति पदम् ।

(५६) भगवन्निति ।—अत्र—एतस्मिन्, खलु—एवार्थे, अस्मिन्नेव बालके इत्यर्थः, वंशप्रतिष्ठा—वंशस्य कुलस्य प्रतिष्ठा स्थितिः, गौरवं वा ; अतः 'कथं नाभिनन्दामि ?' इति नृपाभिप्रायः ।

(५७) एनं—पुत्रं, चक्रवर्त्तिनं—सार्वभौमं, भाविनं—भविष्यन्तम्, अवगच्छतु—चक्रवर्त्ती भविष्यतीति जानातु इत्यर्थः ।

(५८) रथेनेति ।—अयं ते पुत्रः अनुद्घातेन उद्घातरहितेन, भूतलस्पर्शाभावा-दस्खलनेनेति भावः, स्तिमिता निश्चला स्थिरेत्यर्थः गतिर्यस्य तादृशेन ; यद्वा—अनुद्घाता अस्खलिता जले स्खलनासम्भवात् इति भावः, अत एव स्तिमिता निश्चला गतिः सञ्चारः यस्य तादृशेन, रथेन, तीर्णः अतिक्रान्तः जलधिः समुद्रो येन तथाभूतः, तथा अप्रतिरथः प्रतिपक्षरहितः सन्, सप्तद्वीपां—सप्त सप्तसङ्ख्याकाः कुशक्रौञ्चादयः द्वीपाः यत्र तादृशीम् ; तथा च विष्णुपुराणे—"जम्बुप्लक्षाह्वयौ द्वीपौ शाल्मलिश्चापरो द्विज ! कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥" इति ; वसुधां पुरा जयति जेष्यतीत्यर्थः, ("निकटागामिके पुरा" इत्यमरः) । [अत्र "यावत्-पुरानिपातयोः लट्"(३।३।४ पा० ) इति पुरायोगे भविष्यदर्थे लट् ] । इह अस्मिन् आश्रमे, सत्त्वानां प्राणिनां सिंहादीनां

राजा। भगवत्कृतसंस्कारेऽस्मिन् सर्वमाशंसे। (५९)

अदितिः। इमाए दुहिदिमणोरहसम्पत्तीए कण्णो दाव सुदवित्थारो करीअदु, दुहिदिवच्छला मेणआ उण इध मं परिअरन्ती सणिहिदा ज्जेव। (त) (६०)

शकु। [आत्मगतम्।] मणोगदं मे वाहरिदं भअवदीए। (थ) (६१)

---

(त) अस्या दुहितृमनोरथसम्पत्तेः कण्वस्तावत् श्रुतविस्तारः क्रियताम्, दुहितृवत्सला मेनका पुनरिह मां परिचरन्ती सन्निहितैव।

(थ) मनोगतं मे व्याहृतं भगवत्या।

प्रसभेन बलेन, स्वशक्त्या इत्यर्थः, दमनात् शासनात् 'सर्वदमनः' इति आख्यां यातः इति शेषः, पुनः पश्चात् लोकस्य जगतः जनस्य वा, भरणात् प्रतिपालनात् पोषणाद्वा, 'भरत' इति आख्यां संज्ञां यास्यति प्राप्स्यति। [अत्र प्रथमार्द्धे भाविनः वसुधाजयस्य प्रत्यक्षायमाणत्वात् भाविकालङ्कारः; अत एव 'जेष्यति' इति वक्तव्ये पुरायोगे लट्-विधानम्; तथा अनुद्घात-स्तिमितेत्यत्र पदार्थहेतुकं काव्यलिङ्गम्]। शिखरिणी वृत्तम्॥३३॥

(५९) भगवत्कृतसंस्कारे—भगवता महामहिमशालिना कृतः संस्कारः जातकर्मादिः यस्य तादृशे, सर्वं—सकलम्, इतोऽन्यदपि इति भावः, आशंसे—आशां करोमि। [मारीचः। "वत्से! विदितार्थाऽसि" इत्यादिना—"आशंसे" इत्यन्तेन प्रसादः नाम निर्वहणाङ्गं प्रदर्शितम्; यदुक्तं दर्पणे,—"शुश्रूषादिः प्रसादः स्यात्" इति]।

(६०) 'दुहितुः पतिप्रियत्वादिरूपाभ्युदयः चेत् भवति तत्तदा कर्णामृतं पित्रोः' इति जानती सदयहृदया अदितिराह, अस्या इति।—दुहितृमनोरथसम्पत्तेः;—दुहितुः कन्यायाः मनोरथस्य प्रियसमागमरूपस्य सम्पत्तेः अभ्युदयस्य, श्रुतविस्तारः,—श्रुतः विस्तारः येन तथाविधः; यद्यपि तपःप्रभावेण कण्वः सर्वम् अज्ञासीत्, तथापि भवता श्राव्यतामित्यर्थः, एवं कृते पितुः सन्तोषः। मातुर्निमित्तं किमनुष्ठेयमित्याह,—दुहितृवत्सलेति।—दुहितृवत्सला—कन्याप्रिया, मां परिचरन्ती—मम शुश्रूषार्थमित्यर्थः, सन्निहिता एव—सा तु ज्ञातवृत्तान्ता एव, तदर्थं नास्ति प्रयास इति भावः।

(६१) मनोगतम्—अभिप्रेतं, व्याहृतम्—उक्तम्। [अनेन कृतिर्नाम निर्वहणाङ्गं प्रदर्शितम्; उक्तञ्च दर्पणे,—"लब्धार्थशमनं कृतिः" इति]।

मारीचः । तपःप्रभावात् सर्वमिदं प्रत्यक्षं तत्रभवतः कण्वस्य । (६२)

राजा । अतः खलु मम अनतिक्रुद्धो मुनिः । (६३)

मारीचः । तथापि असौ दुहितुः सपुत्रायाः पत्या परिग्रह-प्रियम् अस्माभिः श्रावयितव्यः । (६४) कः कोऽत्र भोः !

शिष्यः । [ प्रविश्य । ] भगवन् ! अयमस्मि ।

मारीचः । वत्स गालव ! मद्वचनात् इदानीमेव वैहायस्या गत्या तत्रभवते कण्वाय प्रियम् आवेदय,—"यथा पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुष्मन्तेन परि-गृहीता" इति । (६५)

शिष्यः । यथा आज्ञापयन्ति गुरवः ।

[ इति निष्क्रान्तः । ]

मारीचः । [ राजानं प्रति । ] वत्स ! त्वमपि सापत्यदारः सख्युराखण्डलस्य रथम् आरुह्य स्वां राजधानीं प्रतिष्ठस्व । (६६)

राजा । [ सप्रणामम् । ] यत् आज्ञापयति भगवान् ।

(६२) तपःप्रभावात्—तपःशक्तेः, इदं—दुष्मन्तसमागमादिरूपं, प्रत्यक्षम्—अनु-भूयमानम् ; तथा च तत्र वार्त्ताहरप्रेषणं निष्प्रयोजनमिति भावः ।

(६३) अतः खलु—तपःप्रभावेण विदितसकलवृत्तान्तत्वादेव, मम सम्बन्धे, मुनिः कण्वः, अनतिक्रुद्धः,—न अतिकुपितः, तस्यानुज्ञामन्तरेण शकुन्तलायाः परिग्रहणे किञ्चित् क्रुद्धोऽपि प्रत्याख्यानविषये मम अपराधाभावात् नातिक्रुद्धः इत्यर्थः ।

(६४) तथापि—तपःप्रभावेण विदितनिखिलवृत्तान्तोऽपि, पत्या परिग्रहप्रियं—भर्तृकर्तृकग्रहणरूपप्रियं, श्रावयितव्यः,—अवश्यं निवेदयितव्य इत्यर्थः ; विदित-वृत्तान्तेऽपि जने प्रियनिवेदनस्य लोकप्रसिद्धत्वादिति भावः ।

(६५) मद्वचनात्—"भगवान् कश्यपः इदं वक्ति" इत्युक्त्या इत्यर्थः, वैहायस्या—आकाशसम्बन्धिन्या ।

(६६) सापत्यदारः,—पुत्रकलत्रसहितः । स्वां—निजां, राजधानीं—हस्तिनापुरम् इत्यर्थः । प्रतिष्ठस्व—गच्छ । ["समवप्रविभ्यः स्थः" (१।३।२२ पा०) इत्यात्मनेपदम्] ।

मारीचः। सम्प्रति हि,—

तव भवतु बिड़ौजाः प्राज्यवृष्टिः प्रजासु,
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम्।
युगशतपरिवृत्तैरेवमन्योऽन्यकृत्यैः
जयतमुभयलोकानुग्रहश्लाघनीयैः (६७) ॥३४॥

राजा। भगवन्! यथाशक्ति श्रेयसे यतिष्ये।

मारीचः। वत्स! किं ते भूयः प्रियम् उपहरामि? (६८)

राजा। अतः परमपि प्रियमस्ति!! तथापि एतदस्तु। (६९)

(६७) तवेति।—बिड़ौजाः [ वेवेष्टि इति विष्धातोः क्विप् ] विट् व्यापकम् ओजः वीर्य्यं यस्य तादृशः, इन्द्रः इत्यर्थः, तव प्रजासु, प्राज्या प्रभूता वृष्टिर्यस्मात् तथाभूतः भवतु, सम्यक् वृष्टिवर्षणेन प्रजाः आप्याययतु। त्वमपि विततः विस्तृतः सम्यगनुष्ठित इत्यर्थः, यज्ञो येन तथोक्तः सन्, वज्रिणम् इन्द्रम् अलम् अत्यर्थं प्रीणय प्रीतं कुरु, यज्ञभागैरिति शेषः। युगशतपरिवृत्तैः युगशतं व्याप्य परिवृत्तैः जातविनिमयैः एवम् एवम्प्रकारैः, उभयलोकानुग्रहश्लाघनीयैः,—उभयोर्लोकयोः द्यावापृथिव्योरित्यर्थः, अनुग्रहेण हितचेष्टया श्लाघनीयैः प्रशंसनीयैः, अन्योऽन्यकृत्यैः,—परस्परकार्य्यैः, जयतं सर्वोत्कर्षेण वर्त्तेथां, त्वम् इन्द्रश्च युवामिति शेषः। [ अत्र पूर्वार्द्धे परिवृत्तिरलङ्कारः; तथा च दर्पणे,—"परिवृत्तिः विनिमयः समन्यूनाधिकैर्भवेत्" इति ]। मालिनी वृत्तम् ॥३४॥

(६८) भूयः,—पुनः, ते—तव, किं प्रियम्—किम् अभीष्टमित्यर्थः, उपहरामि—उपनयामि। [ अनेन काव्यसंहाररूपं निर्वहणाङ्गं प्रदर्शितम्; तथा च दर्पणे,—"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" इति ]।

(६९) अतः परमपि—पुत्रकलत्ररूपसकलाभीष्टलाभात् अन्यदपि, प्रियम्—अभीष्टम्, अस्ति!—वर्त्तते! नास्त्येव अन्यत् किमपि इति भावः। नृप-देशादि-कल्याणाशीर्गर्भां प्रशस्तिमवतारयितुमाह, तथापि इति।—एतत्—भरतवाक्यं, भरतेन नटेन अभिधीयमानं वाक्यं, वाक्यप्रतिपाद्यम्, अस्तु—भवतु। प्रस्तावनाऽवसाने नटस्योक्तेः अन्याय्यत्वात् नाट्यशास्त्रोपदेशकस्य भगवतो महर्षेः भरतस्य शर्मशंसनसूचनार्थञ्च नटपदमपहाय भरतपदेनोक्तम्। तथा च वक्ष्यमाणः श्लोकः नटेनैव पठनीयः इत्यर्थः।

भरतवाक्यम् ।—

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः,
सरस्वती श्रुतिमहती न हीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः (७०) ॥३५॥

[ निष्क्रान्ताः सर्वे । ]

इति सप्तमोऽङ्कः ॥ ७ ॥

---

(७०) प्रवर्त्ततामिति ।—पार्थिवः राजा प्रकृतीनां पौरश्रेणीनां हिताय शुभ-साधनाय प्रवर्त्ततां प्रवृत्तो भवतु । श्रुतिभिर्वेदैर्महती महनीयेत्यर्थः, यद्वा—श्रुतौ श्रवणे महती प्रशस्ता, श्रुतिमधुरा इत्यर्थः, सरस्वती वाणी—एकत्र देवी सरस्वती, अन्यत्र च—कवेः सरसोक्तिः, न हीयतां न त्यज्यतां, लोकैरिति शेषः ; सततं सेव्यतामिति भावः । परिगता शक्तिः महिमा येन तथा, अथवा—शक्तिः प्रकृतिर्येन तथाभूतः, सर्वशक्तिमानि-त्यर्थः ; [ अनेन तत्र तत्र प्रार्थिते शक्तिसद्भावः सूच्यते ] यद्वा—परिगता शरीरार्द्धं गता शक्तिः गौरी यस्य तादृशः, अर्द्धनारीश्वरः इत्यर्थः, ( "शक्तिरस्त्रान्तरे गौर्य्याम्" इति मेदिनी ) आत्मना स्वयं भवतीति आत्मभूः, स्वयमुत्पद्यमानः जन्मरहित इत्यर्थः ; [अनेनापि मम जन्मक्षपणे तस्य सामर्थ्यमस्ति इति सूच्यते ], नीललोहितः,—कण्ठे कालकूटसद्भावात् नीलः, भाले च वह्निनेत्रत्वात् लोहितः [ "वर्णो वर्णेन" (२।१।६९ पा०) इति समासः ] शम्भुः ममापि पुनर्भवं पुनर्जन्म, क्षपयतु संसारबन्धनात् मां मोचयतु इति निष्कर्षः । [अत्र द्वितीयपादे "श्रुतिमहतां महीयसाम्" इति पाठान्तरे—श्रुतौ वेदे महान्तः तेषां, अत एव महीयसां महामहिमशालिनाम् ; "श्रुतमहताम्" इति पाठे तु—श्रुतेन श्रवणेन महान्तः तेषां कवीनामित्यर्थः ; "सरस्वती प्रवर्त्तताम्" इति पूर्वानुषङ्गः । पाठे चात्र—प्रथमार्द्धे आदिक्रियादीपकमलङ्कारः, समुदाये— क्रिया-समुच्चयः श्लेषश्च अलङ्कारः । अनेन प्रशस्तिर्नाम निर्वहणशेषाङ्गं प्रदर्शितम् ; तथा च दर्पणे,—"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति ] । रुचिरा वृत्तं,—"जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात् ; त्रयोदशाक्षरपादवृत्तेषु रुचिरा द्वि षड्धिकाष्टाविंशतिशततमसंख्यकस्य प्रस्तारस्य अन्तर्भूता ॥३५॥

# सप्तमाङ्कस्य संक्षिप्त-विवृतिः ।

अस्मिन् सप्तमे—प्रथमं तावत् अनुष्ठितासुरविमर्दस्य राज्ञः दुष्मन्तस्य मातलि-सनाथेन आकाशमुपसर्पता स्यन्दनेन समागमः, तत्र स्थितस्य च तस्य वासवकृत-सत्कारातिशयवर्णनं, मातलिना च तत्समर्थनम् इति तयोः संलापः। ततश्च क्रमेण प्रवहस्य तदनु आवहस्य वायोः मार्गवर्णनं, राजकृतरथावतरणवेगवशविपर्य्यस्तमर्त्य-लोकविस्मयनीयावस्थावर्णना, मातलिकृतमारीचाध्युषितहेमकूटपर्वतवर्णनं, रथाव-तरणसमये राजकृता रथावतरणप्रशंसा, मातलिकृतकार्य्यस्वरूपनिर्देशः, तेन च देव-सूतेन आश्रमोऽयमिति अभिहिते दुष्मन्तेन कृतम् आश्रमस्य अन्यवैलक्षण्यप्रशंसनम् ।

तदनन्तरम् आकाशभाषितेन कश्यपान्तिके पतिव्रताधर्म्ममाकर्णयितुम् अदिति-प्रमुखाणाम् ऋषिपत्नीनां समागमसूचनम् ; तदनुज्ञालाभव्यपदेशेन मातलेरपि तत्र प्रस्थानं, दुष्मन्तस्य वामेतरभुजस्पन्दनात्मकशुभनिमित्तसूचना च ।

अत्रान्तरे तापसीद्वयपरिरक्षितस्य भुजाकृष्टकेशरिणीस्तनन्धयकेशरमाकृष्य क्रीडतः अबालसत्त्वस्य बालकस्य समागमः। दृष्ट्वा च तं, राज्ञः तस्मिन् वीर्य्यातिशयप्रशंसा, विविधवितर्कोदयश्च, पश्चात् तापस्या कयाचित् "पश्य शकुन्तलावण्यम्" इत्यभि-हितस्य बालकस्य स्वातृनामश्रवणसञ्जातोत्कण्ठस्य मातुरन्वेषणप्रदर्शनेन बालोऽयं शकुन्तलागर्भजातो ममैव प्रसूतिरिति अस्फुटप्रतीतिः। अथ पित्रोरन्यग्रहणसम्भाव्यसर्प-रूपां बालकाङ्गरक्षणसमुचितामादाय सुरमहौषधीं दुष्मन्तस्य बालकेऽत्र स्वतनयत्वेन प्रतीतिः। पुनश्च बालमुखविनिर्गतेन "दुष्मन्तो मम तातः, न खलु त्वम्" इति वाक्येन दृढं प्रतीत्य अवस्थिते च राज्ञि सञ्चारिण्या इव विरहदुःखानुभूतेः शकुन्तलायाः तत्रोपस्थानम्। उभयोः चिरविरहखेदखिद्यमानयोः विविधवाक्यालापश्च ; ततः प्रविष्टे मातलौ तेन सार्द्धं सपुत्रकलत्रस्य राज्ञः भगवददिति-कश्यपान्तिकगमनम् ।

अथ तत्र भगवतः सकलसुरासुरगुरोः मारीचस्य दम्पतिप्रश्रयाचालितहृदयस्य मुखात् दुर्वाससः शापेनैव इदं संवृत्तमिति मोहनिमित्तप्रकाशः, ततः कण्वसमीपे कश्यपस्य शिष्यद्वारा प्रेषणं पुत्रकलत्रसमागमादिरूपप्रियवृत्तान्तस्य राज्ञि च वासवानु-कूल्याशीर्वादः। ततः स्वराज्यं यातुमादिष्टं नृपं प्रति भूयोऽपि वरप्रदानोद्यते भगवति मारीचे नटकृतप्रशस्तिवर्णना च। इति ।

इत्यशेषशास्त्राटवीसञ्चारपञ्चानन-कुलपतिकल्प-"बि, ए" इत्युपनामक श्रीमज्जीवानन्द-विद्यासागरविरचितायां तदात्मजाभ्याञ्च श्रीमदाशुबोध-विद्याभूषण श्रीमन्नित्य-बोध विद्यारत्नाभ्यां परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-समाख्यायाम् अभिज्ञानशकुन्तलव्याख्यायां सप्तमोऽङ्कः ॥ ७ ॥

समाप्तश्चायं ग्रन्थः ॥